I-San-81-902546

SAIR 81 00144

Vāgbhaṭa, 7th cent.

[Aṣṭāṅgahṛdaya]

Aṣṭāṅgahṛdayam / Vāhaṭācāryapraṇītam ; Śrīdāsapaṇḍitaviracitayā Hṛdayabodhikākhyayā vyākhyayā samalaṅkṛtam ; Dhanvantaridāsa ityaparanāmnā prasiddhaiḥ Si. En. Nārāyaṇan Mūss Mahāśayaiḥ 'pariśodhya. — [Trivandrum] : Rājakīyamudrāśālā, 1115- [1940-

v. ; 25 cm. — (Śrīcitrāyurvedagranthamālā ; granthāṅkaḥ 4 )

Vol. 1 rec'd this month.

In Sanskrit.

Cover title.

O (Continued on next card)

I-San-81-902546

SAIR 81 00144

Vāgbhaṭa, 7th cent.

[Aṣṭāṅgahṛdaya] 1115- [1940- (Card 2)

Includes bibliographical references.

Preprogram imprint acquired for LC only.

(Verse work, with commentary, on ayurvedic system of Indic medicine)

14Je81 TOUR LC unb. BKB O LC-San-231 AACR 2

॥ श्रीः ॥

॥ श्रीचित्रायुर्वेदग्रन्थमाला ॥

ग्रन्थाङ्कः ४.

---

श्रीमद्वाहटाचार्यप्रणीतम्

# अष्टाङ्गहृदयम् ।

श्रीदासपण्डितविरचितया हृदयबोधिकाख्यया
व्याख्यया समलङ्कृतम् ।

---

प्रथमो भागः ।




राजकीयायुर्वेदकार्यालयप्रत्यवेक्षकैः धन्वन्तरिदास इत्यपरनाम्ना
प्रसिद्धैः श्रीरत्नमूत्त्नाभिजनैः

सि. एन्. नारायणन् मूस्स्

महाशयैः परिशोध्य

महामहिमोन्नतश्रीचित्रावतारवञ्चिमण्डलमहाराजाज्ञया
राजकीयमुद्राशालायां मुद्रयित्वा प्रकाशितम् ।

---

कोलम्बाब्दाः १११५.

# विषयानुक्रमणिका।

## सूत्रस्थाने

### आयुष्कामीयाध्यायः ॥ १ ॥

| विषयः. | पृष्ठम्. |
|---|---|

| विषयः. | पृष्ठम्. |
|---|---|

| विषयः. | पृष्ठम्. |
|---|---|

## रोगानुत्पादनीयाध्यायः ॥ ४ ॥

## अन्नस्वरूपविज्ञानीयाध्यायः ॥ ६ ॥

| विषयः. | पृष्ठम् . |
| --- | --- |

| विषयः | पृष्ठम् |
| --- | --- |

## मात्राशितीयोऽध्यायः ॥ ७ ॥

## द्रव्यादिविज्ञानीयोऽध्यायः ॥ ९ ॥

विषयः. पृष्ठम्.

## द्विविधोपक्रमणीयाध्यायः ॥ १४ ॥



## शोधनादिगणसंग्रहाध्यायः ॥ १५ ॥

---

॥ श्रीः ॥

श्रीगणेशाय नमः ।

श्रीमद्वाहटविरचितम्

# अष्टाङ्गहृदयं

## श्रीदासपण्डितविरचितया हृदयबोधिकाख्यया व्याख्यया समेतम् ।

---

### प्रथमं सूत्रस्थानम् ।

आयुर्वेदाचार्यान् ब्रह्मादीन् वासुदेवमाचार्यम् ।
नत्वा पण्डितनाम्ना व्याक्रियते हृदयबोधिका[1] टीका ॥

कुतः, इह खलु सर्वेषां प्रेक्षापूर्वकारिणां प्रयत्नस्य पुरुषार्थसिद्धिप्रवणत्वात् तस्य च पुरुषार्थस्य चतुर्विधस्य धर्मार्थकाममोक्षलक्षणस्यारोग्यमूलत्वात्, तस्य चारोग्यस्य चिकित्सानिबन्धनत्वात्, चिकित्सायाश्च आयुर्वेद(त)त्त्वावबोधाधीनत्वात्, तत्त्वावबोधस्य च तन्त्रार्थविशेषनिश्चयाय(त्तत्वात्) तद्विवरणे प्रयतितव्यम् । तस्य तु तन्त्रस्य युक्तयः षट्त्रिंशत् । वक्ष्यति च —

"इति तन्त्रगुणैर्युक्तं तन्त्रदोषैर्विवर्जितम् ।"

इति । गुणा युक्तयः । सङ्ग्रहे चोक्तम् —

अलङ्कृतं युक्तिपदैः सद्रत्नैरिव काञ्चनम् ।
षट्त्रिंशतार्थदुर्गेषु भिषजां सङ्क्रमैरिव ॥
तत्राधिकरणं योगो हेत्वर्थोऽर्थः पदस्य च ।
प्रदेशोद्देशनिर्देशवाक्यशेषाः प्रयोजनम् ॥
उपदेशापदेशातिदेशार्थापत्तिनिर्णयाः ।
प्रसङ्गैकान्तनैकान्ताः सापवर्गो विपर्ययः ॥

---

१. 'की', २. 'म्ना' ख. पाठः.

G. P. T. 4674. 500. 8-4-101. B

पूर्वपक्षविधानानुमतव्याख्यानसंशयाः ।
अतीतानागतावेक्षास्वसंज्ञोह्यसमुच्चयाः ॥
निदर्शनं निर्वचनं नियोगोऽथ विकल्पनम् ।
प्रत्युत्सारस्तथोद्धारः सम्भवस्तन्त्रयुक्तयः ॥

इति । युक्तिशब्दः खलूपायवाची । नह्येता युक्तीः प्रत्याख्याय शक्यते तन्त्रं प्रणेतुम् । तत्र काश्चिद् युक्तयः वाक्यप्रयोजना उद्देशनिर्देशादयः । काश्चिदर्थ-प्रयोजना अधिकरणपदार्थादयः । तत्राधिकरणं नाम यदधिकृत्य प्रवर्तते शास्त्रं स्थानमध्यायः प्रकरणं वाक्यं वा । तत्र शास्त्राधिकरणं यदधिकृत्य शास्त्रं प्रवर्तते । यथा अष्टावङ्गान्यधिकृत्य हृदयाख्यं सर्वशास्त्रं प्रवृत्तम् । यथोक्तं 'काय-बाले'त्यादि । स्थानाधिकरणं यथा—'अत्रार्थाः सूत्रिताः सूक्ष्माः प्रतन्यन्ते ही'त्यादि । एवमध्यायादिष्वपि वेद्यम् । योगो नाम योजना उद्देशनिर्देशयो-स्त(त्र ? न्त्र)भाष्ययोर्वा । 'अथातोऽङ्गविभागं शारीरमि'त्युद्दिश्याङ्गानि विभजते 'शिरोऽन्तराधिरि'त्यादिना । युक्तिर्वा योगः, प्रतिज्ञा हेतुर्दृष्टान्त उपनयो निग-मनमिति पञ्चवि(धम् ? धः) । यथाग्निः शरीरस्थितिमूलम् । (तं वि ? तद्धि)पक्के आहारे सति तत्स्थितेरिति हेतुः । 'आहारान्न ह्यपक्काद्रसादय' इति वचनात् । यथा शाल्यङ्कुरस्य बीजमिति दृष्टान्तः । उपनयो यथा चिकित्साशास्त्रस्य सप्रयोजनत्वसाधनाय बहुधा दृष्टान्तोपनयनं कृतवान् तन्त्रकृत्, 'कस्यासि-द्धोऽग्नितोयादिरि'त्यादयः । तस्मात् सप्रयोजनमेव चिकित्साशास्त्रं प्रत्यक्षफल-त्वादित्युपनयः । तस्मादारम्भणीयमिति प्रमाणफलोपदर्शनमुखेन निगमनम् । यथोक्तं[2] 'चतुष्पादूगुणसम्पन्ने'त्यादि चिकित्सायां संशयानुपपत्त्या प्रतिपादितया प्रमाणफलोपसंहारकरणम् । हेत्वर्थो नामान्यप्रस्तावोक्तमन्यत्रापि तथैवोपपद्यते । 'तत्रैकैकत्र शाखायामि'त्यादि । तथा 'अवेध्याः सङ्कीर्णा ग्रथिता' इत्यादि । तदेतेभ्यो विशेषवचनेभ्योऽनुमीयते शेषा वेध्या इति । अन्यथैतानि वचांसि निरर्थकानि स्युरिति । पदार्थो नाम पदेनार्थो गम्यते । यथा द्रव्यमिति पदं, तस्यार्थो भूजलादिः । गुणमिति पदं तस्यार्थो गुर्वादिः । प्रदेशो नाम येषामर्थाना-मतिबहुत्वात् साकल्येनाभिधातुमशक्यत्वात् स्तोकमात्रमुच्यते, यथोक्तम् 'इति द्रव्यैकदेश' इत्यादि । उद्देशो नाम संक्षेपाभिधानं, यथा 'वायुः पित्तमि'त्यादि-दोषसंक्षेपः । निर्देशो नाम तस्यैव विस्तरोक्तिः, यथोक्तं 'तत्र रूक्षो लघुरि'-

१. 'पेक्षेति' ग्रन्थान्तरे पाठो दृश्यते । २. 'क' ख. पाठः.

त्यादि । वाक्यशेषो नाम यस्मिन् सूत्रे लाघविकेनार्थाद् गम्यमानमनुक्तं पूरणार्थमध्याह्रियते, यथा 'तत्र खात् खानि देहेऽस्मिन्', 'सम्भवन्ती'ति वाक्यशेषः। 'आप्या जिह्वा रसक्लेदा' इत्युत्तरत्र भवार्थे तद्धितग्रहणात् । प्रयोजनं नाम यदर्थं शास्त्रादि प्रवर्तते। यथा 'आतङ्कपङ्कमग्नानां हस्तालम्बो भिषग्जितमि'ति । उपदेशो नामाप्तवचनम् । यथा 'स्नेहक्लिन्नाः कोष्ठगा' इत्यादि। अपदेशो नामाचार्यः कश्चिदर्थं प्रतिज्ञा(य) हेतुमुपदिशति। यथा 'जीवितं म्रियमाणानां सर्वेषामेव नौषधादि'ति प्रतिज्ञा । हेतुमाह — 'नह्युपायमपेक्षन्ते सर्वे रोगा' इति। अतिदेशो नामातीतेन देशः अतिदेशः यत् कश्चिदेवार्थमुक्त्वानुक्तार्थसाधनाय एवमन्यदपि प्रत्येतव्यमिति परिभाषायां ज्ञापयति । यथा 'महतः पञ्चमूलस्य काष्ठात् क्षौमेण वेष्टितात् । योज्यश्चैवं भद्रकाष्ठादि'त्यादि। अर्थापत्तिर्नाम येनार्थेनोक्तेन ततो(ऽन्यो)ऽप्यर्थो गदित इव ज्ञायते । यथा 'नैवाद्यान्निशि नैवोष्णमि'त्युक्तम् । न तूक्तं दिवा भुञ्जीतेति । एतच्चार्थापत्त्या गम्यते। निर्णयो नाम यदनिर्धारितस्यार्थस्य प्रतिष्ठापनम् । यथा 'दृश्यन्ते भगवन् केचिदि'त्यादिना चिकित्साशास्त्रं प्रति संशयकरणे पश्चान्निर्णयार्थमुत्तरं यथा 'न चिकित्साचिकित्सा च तुल्या भवितुमर्हती'त्यादि। प्रसङ्गो नाम पूर्वाभिहितस्य सतोऽर्थस्य केनचित् सम्बन्धान्तरेण पुनरभिधानम्। (यथा) सिराव्यधविधौ—'लोहितं प्र(भवं ? वदेत्) शुद्धं तनोस्तेनैव च स्थितिरि'त्युक्त्वा पुनः शारीरं शुद्धार्तवप्रसङ्गेनोक्तम्। नच पुनरुक्तिदोषः, यस्मात् सिराव्यधे शरीरप्रभवत्वमेव रक्तस्योक्तं, नतु क्रमो वर्णितः। शारीरे तु ययानुपूर्व्या शरीरहेतुः स्यात् तद् विस्तरेणोक्तमिति । एकान्तो नाम एकमेव पक्षमव्यभिचारेणाश्रयति ना(न्यत् ? न्यम्) । तद्यथा 'ये भूते'त्यादिना भूतादिजास्त्वागन्तव इति। नैकान्तो नामान्यतरपक्षानवधारणम् । यथा 'जीवितं म्रियमाणानां सर्वेषामेव नौषधादि'त्यादि । अपवर्गो नाम साकल्येनोत्सृष्टस्य यत् पुनस्तदेकदेशापकर्षणम्। यथा 'शीतोष्णस्निग्धरूक्षाद्यैरुपक्रान्ताश्च'त्यारभ्य 'तेषु स्रावयितुं रक्तमुद्रिक्तं व्य(थ ? ध)येत् सिरामि'त्युत्सर्गमभिधायैकदेशापवादं वक्ति 'नतूनषोडशे'त्यादिना । विपर्ययो नाम यथोपदिष्टविपर्ययेण लक्षणादिकरणम् । यथा 'वातानुलोम्यमि'त्यादि सम्यक्स्निग्धे लक्षणमुक्त्वा 'रूक्षे विपर्यय' इति । पूर्वपक्षो नाम प्रतिज्ञातार्थसन्दूषकं वाक्यम् । यथा हिताहितं प्रत्याचिख्यासन्नाह यथा 'दृश्यन्ते भगवन् केचिदि'त्यारभ्य 'हिताहिते(विभागस्य) फलं तस्मादनिश्चितमि'त्यादि। विधानं नाम यत् प्रकरणानुपूर्वं विधानमाचक्षते। अनुमतं नाम यथा

'उष्णं शीतं द्विधैवान्ये वीर्यमाचक्षतेऽपिच। नानात्मकमपी'त्यादिना ह्यनुमतं न तु विघातकृत्। व्याख्यानं नाम यन्माद्दशेभ्यो विशिष्टतरबुद्धिगम्यम्। यथा 'सप्ताहात् कललं भवेदि'त्यादि। नह्यस्य गर्भस्य भावाः शक्या विज्ञातुं योगदृष्टिं मुक्त्वा। संशयो नाम साकाङ्क्षितमनिश्चितवस्तुविज्ञानम्। यथा 'संशयप्राप्तमात्रे यो जीवितं तस्य मन्यत' इत्यादि। अतीतावेक्षणं नाम यदतिक्रान्तमवेक्ष्य प्रकृतस्य साधनमुच्यते। यथा 'रास्नाजीवके'त्यादौ 'महास्नेहं विपाचयेदि'ति। अत्र च न ज्ञायते कतमो महास्नेह इति। तदेतदतिक्रान्तमवेक्ष्य साध्यते 'द्वाभ्यां त्रिभिरि'त्यादि स्नेहविध्युक्तमवेक्ष्य व्याख्यायते। अनागतावेक्षणं नाम यत्रानागतं विधिमवेक्ष्य पूर्वोऽर्थः साध्यते। यथा 'मद्यैः कल्पोदितानि वा वमनानि प्रयुञ्जीते'ति। स्वसंज्ञा नाम या तन्त्रकारैः स्वतन्त्रव्यवहारार्थं प्रणीता परतन्त्रेषु न व्यव(हरति ? ह्रियते)। यथा 'शाखा रक्तादयस्त्वक्चे'ति। ऊह्यं नाम यदनुपनिबद्धं ग्रन्थेऽस्मिन् (यथा) 'वर्गास्तेषु त्वलाभतः। युञ्ज्यात् तद्विधमि'त्यादि। समुच्चयो नाम यथा पेयां विलेपीमकृतं कृतं चापि समुच्चिनोति। निदर्शनं नाम यन्निदर्शयितव्यं सूक्ष्ममप्यर्थं स्वधर्मसादृश्यात् स्पष्टीकरोत्यादर्श इव मुखम्। यथा 'कुसुम्भादियुता(त् तोयादि'त्यादि।)[1] निर्वचनं नाम निरुक्तम्। यथा 'जगद्विषादाद् विषमि'त्यादि। नियोगो नामावश्यानुष्ठेयम्। यथा 'उष्णोदकोपचारी स्यादि'त्यादि। विकल्पो नाम विविधं कल्पनम् इदं वा कार्यमिदं वेति। यथा 'प्राग्रूपेषु ज्वरादौ वा', लध्वशनमपतर्पणं वेति। प्रत्युत्सारो नाम यत्रोपपत्तिं दर्शयन्तः परस्परमतानि विवारयन्ति। तद्यथा — 'अस्थ्नां शतानि षष्ट्या चे'त्यादिग्रन्थेष्वपूर्वमतात् षष्टिं प्रत्युत्सारयति धन्वन्तरेरभिमतं दशोत्तरं सन्धिशतद्वयमिति, पुनर्वसुः प्रत्युत्सारयति सन्धिसहस्रद्वयं साधयन्। उद्धारो नाम शास्त्रारम्भप्रत्याख्यानादिचोद्यस्य समाधानम्। (यथा) 'दृश्यन्ते भगवन् केचिदि'त्यारभ्य 'हिताहितविभागस्य फलं तस्मादनिश्चितमि'ति कृते चोद्ये 'न चिकित्साचिकित्सा च तुल्या भवितुमर्हती'ति परिहारः। सम्भवो नाम उत्पत्तिः यद्यस्मिन्नुत्पद्यतेऽनुपदिष्टम्। यथा 'दुष्टरक्तापगमनात् सद्यो रागरुजां शमः' इत्युक्तम्। तदन्यत्रापि सम्भवत्येव श्रृङ्गजडायुकाप्रभृतिष्वपीति। अपरैश्च तन्त्रगुणैर्युक्तं पिण्डादिभिः पञ्चदशप्रकाराभिर्व्याख्याभिः गुणलेशेङ्गितादिभिः सप्तकल्पनाभिरादिलोपमध्यलोपान्तलोपऋषिक्रियादिभिराश्रयैः तथा सप्तदशविधैस्ताच्छील्यादिभिर्वाक्यन्यायप्रोक्तैर्युक्तम्। त(त्र?न्त्र)युक्तिप्रयोजनमप्युक्तं संग्रहे—

---

१. 'फं सं' ख. पाठः.

"अधीयानोऽपि तन्त्राणि तन्त्रयुक्त्यविचक्षणः ।
नाधिगच्छति तन्त्रार्थमर्थं भाग्यक्षये यथा ॥"

इत्यादि । तथा तन्त्रदोषैश्चतुर्दशभिरप्रसिद्धशब्दादिभिर्विवर्जितम् । यथा — अप्रसिद्धशब्दः दुष्प्रणीतमसङ्गतार्थमसुखारोहि परमविरुद्धमतिविस्तृतमतिसंक्षिप्तमप्रयोजनं भिन्नक्रमं सन्दिग्धं पुनरुक्तिर्निष्प्रमाणकमपार्थकं व्याहतमिति ।

अथ तन्त्रार्थं व्याकरिष्यामः । इह तावदादौ वाहटनामा तन्त्रकारो लोकहिताय शास्त्रमारिप्सुर्विघ्नोपशान्तये शिष्टाचारानुरोधादभिलषितार्थसम्पत्तिकारिणीमभिमतां देवतां नमस्करोति —

**रागादिरोगान् सततानुषक्तानशेषकायप्रसृतानशेषान् ।**
**औत्सुक्यमोहारतिदाञ्जघान योऽपूर्ववैद्याय नमोऽस्तु तस्मै ॥ १ ॥**

**रागादी**त्यादि । यो रागादिरोगान् जघान तस्मै अपूर्ववैद्याय नमोऽस्त्विति सम्बन्धः । राग आदिर्येषां ते रागादयः । आदिशब्देन द्वेषलोभमोहमदमात्सर्यडम्भाहङ्कारा गृह्यन्ते । एते चान्ये च क्रोधादय इति केचित् । राग इच्छातिशयः । इच्छेति का,

"इदं मे स्यादिदं मे स्यादिति भेदविकल्पिनी ।
मानसी साध्यविषया वृत्तिरिच्छेति कथ्यते ॥
प्रचिता सैव कुर्वा(णां ? णा) प्रवृत्तिं चोत्तरक्षणे ।
तदसिद्धौ विरोधेन तावती राग उच्यते ॥"

रा(गः) कामो वा ।

"स्त्रीषु जातो मनुष्याणां स्त्रीणां वा पुरुषाश्रयः ।
अबान्धवकृतः स्नेहः काम इत्यभिधीयते ॥
"य ऊष्मा हृदये जन्तोः समुत्तिष्ठति वैरकृत् ।
परानिष्टचिकीर्षार्थः स द्वेष इति कथ्यते ॥"

अथवा,

"हन्म्येनं छेत्स्यिष्यामि सर्वोपायैर्धनादिकम् ।
अस्येति तीव्रा या बुद्धिः स द्वेष इति कथ्यते ॥"
"परार्थान् परभोगांश्च परसामर्थ्यमेव वा ।
दृष्ट्वा श्रुत्वा च या तृष्णा जायते लोभ एव सः ॥
लोभो हि सम्मतः शिष्टैरर्थत्यागासहिष्णुता ।"

१. 'क्तिप्रमा' क. पाठः.

अथवा,

"अन्यायेन परद्रव्यादित्सा लोभस्तु कथ्यते ।"

इत्यादि भावविवेकादिषु द्रष्टव्यम् । अत्रादिशब्देन पुरुषार्थविरोधी अरिषड्वर्गः परिगृहीतो वा । उक्तञ्च शङ्कराचार्येण —

"योगाप्तिदूषणपरस्त्वथ कामकोप-
लोभाः समोहमदमत्स(र ? रि)तेति ष(ट्का ? ट्कः) ।
वैरी जयेत् सपदि योगविदेनमङ्गै-
र्योगस्य धीरमतिरष्टभिरिष्टदैश्च ॥"

इति । रागादयश्च ते रोगाश्च रागादिरोगाः रागादिवियुक्तस्य (*भास्ति ? ) किं पुनर्ज्वरादयः । उक्तञ्च —

"चित्तमेव हि संसारो रागादिक्लेशदूषितम् ।
तदेव तैर्विनिर्मुक्तं भवान्त इति कथ्यते ॥"

इति । रुजन्तीति रोगाः देहमनसी सन्तापयन्तीत्यर्थः । ननु मनसि स्थितत्वान्मन एव रागादयो रुजन्ति न देहम् । कुतः, एकत्रावस्थितानामितरत्राकारित्वानुदयात् । नैतदेवम् । देहमनोलक्षणयोर्वस्तुनोराधाराधेयभावेन स्थितत्वाद् द्वयोरपि सन्तापो युक्तः । उक्तञ्च—

"मनश्शरीरयोस्ता(पा ? पः) परस्परमभिव्रजेत् ।
आधाराधेयभावेन तप्ताज्यघटयोरिव ॥"

इति । रागादींश्च रोगांश्च जघानेत्यपरे । तथा सततानुषक्तान् सन्ततमन्वनुसक्तान् जन्मनः प्रभृति शरीरिणा सङ्गतान् सहजानित्यर्थः । अनुशब्दग्रहणाद्[1] देहान्तरप्राप्तौ च सम्बन्धः सूच्यते । रागादीनां कादाचित्कप्रवृत्तिदर्शनात् सततानुषक्तिरनुपपन्नेति चेत् । तन्न ।

यथा पत्रपुटच्छेदे युगपद् भिन्नमित्युत ।
व्यवहारः प्रदृश्येत तथात्रापि निरूप्यताम् ॥

अन्यपक्षे ज्वरादीनां कथं सततानुषक्तिरित्यत्रोच्यते । वातादीनां यथा नित्यसंश्लेषः शरीरे तथा वातकार्याणां ज्वरादीनामपि, यथा विद्युद्व्राता अपि सन्ततवर्तमाना अपि कदाचिदेव दृश्यन्ते, यथा वा तरङ्गबुद्बुदादयश्चाम्भसि । ज्वरादीनां नित्यसंश्लिष्टिः शास्त्रप्रदेशेष्वपि प्रसिद्धैव । अथवा कदाचिद् रागः,

---

१. 'दून' ख. पाठः.

---

* 'भव एव नास्ती'ति पाठः स्यात् ।

कदाचिद् द्वेषः, कदाचिल्लोभः, कदाचिज्ज्वरादीनामन्यतम इति सततानुषक्तिः । नैकस्यैव सर्वदा सम्बन्धोऽभिप्रेतः । अशेषकायप्रसृतान् अशेषश्चासौ कायश्चाशेषकायः तत्र प्रसृताननुगतान् आपादतलमस्तकं शरीरे व्याप्तान् । अथवा अशेषाणां प्राणिनां गजतुरगोरगादीनां काये प्रकर्षेण सृतान् गतान् । प्रशब्द आश्रयान्तरेऽपि कार्यमुखेन सम्बन्धं सूचयति । रजस्तमोदोषजनितानां मनसि वर्तमा(ना)नां रागादीनां काये गतिः कार्यद्वारेण । उक्तञ्च —

"मनश्शरीरयोस्तापः परस्परमभिव्रजेत् ।"

इति । वक्ष्यति च — 'ज्वरः स्यान्मनसस्तद्वत्' इति । तथाहि दृश्यन्ते रागादिषु प्रसृतेषु दृष्टिरागोरुकम्पस्वरविकृतिप्रस्वेदादयः । अथवा अशेषाश्च ते कायाश्चाशेषकायाः सर्वाणि शरीराणि देवतिर्यङ्मनुष्यादीनां सम्बन्धीनि (तत्र) प्रसृतान् । तथोक्तेऽपि रागादीनां प्राबल्यमेव प्रकटयति । अशेषे च काये च प्रसृतानिति वा । अशेषो मनःपर्यायः । तथाच निघण्टुः —

"अशेषो बुद्धिरात्मा च मनीषा धिषणा मतिः ।
चित्तमग्र्यं च सन्तानं शेमुषी स्वान्तमन्तरम् ॥"

इति । मनसि शरीरे च प्रसृतानित्यर्थः । अन्यपक्षे ज्वरादीनां देहमनोव्याप्तिः स्वशास्त्रप्रसिद्धैव । यथा ज्वरः शारीरो मानस इत्यादि । एवमेवातीसारादिष्वपि बोद्धव्यम् । रागादीनां मनसि सृतिः ज्वरादीनां काये इति वा । एकस्य पदस्यैक एवार्थो वक्तव्यः इति चेत् । तन्न, कर्तृमुखादगृहीतत्वात् पदानामनेकार्थत्वाच्च बहवोऽर्थाः परिकल्प्यन्ते वक्तृभिः । तत्र पुनः परीक्षकैर्योऽर्थो युक्तरूपः स ग्रहीतव्यः । उक्तञ्च —

"एकपदेऽपि च बह्व्यो व्याख्यास्तासामतीव या युक्ता ।
तामधितिष्ठेद् धीरः कर्ता कृत्वा व्यतिक्रान्तः ॥"

इति । अपिच लोके हि सर्वे न तुल्यमतयो भवन्ति, यथा कस्मैचिदम्लं रोचते तद्वदर्थेष्वपि प्रवृत्तिरिति कृत्वैकस्य बहूनामर्थानां वचनम् । तथा अशेषान् । न विद्यते शेषो येषां तेऽशेषाः सर्वे समूला इत्यर्थः । यस्य रागः प्राहतः परमेश्वरेण तस्य रागशेषो न विद्यते । येषां मूलमज्ञानं पाप्मा वा तेन सह जघानेत्यर्थः । अन्यपक्षे निश्शेषः प्रसिद्ध एव धातुहीनज्वरादिः । तथा औत्सुक्यमोहारतिदान् । औत्सुक्यमुत्कण्ठा (रा)गवि(शे ?)षयालाभजनिता वेदनेत्यर्थः ।

"अलब्धविषये रागे वेदना महती तु या ।
संशोषणी तु गात्राणां तामुत्कण्ठां विदुर्बुधाः ॥"

मोहः कार्यगत्यज्ञत्वम्। शयनासनचङ्क्रमणादिष्वेकत्रानवस्थितिररतिः। ता(न्?) ददतीति औत्सुक्यमोहारतिदाः। अत्र मोहस्य कार्यत्वं कारणत्वं च कथमिति चेत्। उच्यते। मिथ्याज्ञानलक्षणस्य मोहस्य कारणत्वं ज्ञानाभावलक्षणस्य मोहस्य कार्यत्वम्। अथवा रागादीत्यत्रादिशब्देन द्वेषलोभयोरेव ग्रहणम्। तथाच बुद्धागमे —

"रागो द्वेषश्च लोभश्च त्रय एते महाविषाः।
निर्विषो भगवान् बुद्धो रागाद्या येन नाशिताः॥"

इति। तदुपपन्नमिति मन्यन्ते केचित्, बुद्धभक्तत्वात्। अ(न्य?)स्याचार्यस्य बुद्धभक्तत्वं च स्वयमेव सङ्ग्रहे सूचितवान् — 'समधिगम्य गुरोरवलोकिता-दि'त्यादि। अथ मां प्रति भाति राग आदिर्येषां ते रागादयः। तद्गुणसंविज्ञानं चैतत्। अतो रागादिशब्देन सर्वामयगमितरागद्वेषमोहाः परिगृह्यन्ते प्रधानवृत्तित्वादेतेषाम्। कुतस्त्रयाणां प्राधान्यं, तेषामेव संसारचक्रप्रवर्तकत्वात्। तथाहि श्रूयते — 'त्रिमार्गभेदद्विनिमित्तैकमोहमि'ति। इतश्चैतदेवमिति निश्चीयतां यतो वक्ष्यति 'औत्सुक्यमोहारतिदानिति। औत्सुक्यादिकं त्रिकम् औपादानिकम्। रागादय एव रोगाः। रागो नाम सुखाभिज्ञस्य सुखानुस्मृतिपूर्वकः सुख(स्त? त)त्साधनाभिष्वङ्गलक्षणः, तस्य लोभप्रभृतयो भेदाः। (दो? द्वे)षश्च दुःखाभिज्ञस्य दुःखानुजन्मा दुःख(त)त्साधनप्रतिघातरूपः। स च मात्सर्यादिरूप(त्व? त्वाद्) बहु(विधः)। मोहः पुनरनित्या(च? )शुचिदुःखा(ना)त्मसु नित्यशुचि(दुः? सु)खात्मख्यातिलक्षणः। स चाज्ञानादिभेदैर्भिन्नः। तान् सततानुषक्तान् 'वासनानुशयरूपेणानवच्छिन्नानि'ति मनीषा। अनुशयो नाम रागादीनामेव पुनःपुनरुत्पत्तिनिर्वर्तनो वासनाविशेषः। तथाशेषाणां प्राणिनां गजतुरगोरगादीनामपि काये प्रसृतानभिव्याप्तान् अशेषान्। अनुशयसचिवान् अज्ञानसध्री(च? चो) वा। औत्सुक्यमुत्कण्ठाभावः। स च रागस्य बाह्येषु रूपादिषु विक्षिप्तता। तेष्वनवच्छिन्नमिच्छया निरूपणमिति यान्न्। मोहो वैचित्त्यम्। सोऽपि मोहमहिमा। अरतिः सर्वत्र मोक्षमार्गादावनभिरतिः। सा च द्वेषपोषः। तद्वान्। तानेवंविधान् यो भगवान् जघान हतवान्। य इति सर्वनाम, अस्य तस्मा इत्यनेन समन्वयः। रागादयः कस्य गता इति चेद्, ब्रूमः। अशेषाणां प्राणिनां काये प्रसृतानित्यनेन तेषामिति सिध्यति। हृद्याकारस्तु जगत इति ब्रूते सङ्ग्रहदर्शनात्। तथाहि —

१. 'वैमयाग' क. पाठः. २. 'हुत्वमो', ३. 'दा' ख. पाठः.

"रागादिरोगाः सहजाः समूला येनाशु सर्वे जगतोऽप्यपास्ताः ।
तमेकवैद्यं शिरसा नमामि वैद्यागमज्ञांश्च पितामहादीन् ॥"

इति । नन्वु अद्यापि रागादीनां विद्यमानत्वादशेषकायप्रसृतानशेषान् जघानेति कथमुपपद्यते । ब्रूमः । अनन्तेष्वात्मसु ये अनेनापास्तरागादिकाः ते बहवो मुक्ताः शुकादयः, अन्येषां चेदानीं सञ्चरतां प्राणिनां रागादिहननोपायोपदेशाद्धतप्राया एव । उपदिष्टानि हि रागादीनामुप(वर्त ? मर्द)नसाधनानि भगवता । अथवात्मभक्तानां हतवानिति वा । जगतो जघानेत्यस्मिन् पक्षेऽप्येवमेव व्याख्येयम् । प्रबन्धारम्भे जघानेत्यमङ्गलपदमनुपपन्नमिति चेत् । तन्न । मङ्गलफलत्वात् । पुरुषार्थविरोधिनां रागादीनां हननं मङ्गलमेव । यथा —

"जघान रावणं रामः शरैराशीविषोपमैः ।
इति जाम्बवतो वाक्याज्जगन्मङ्गलमश्नुते ॥"

इति । प्रकृतप्रधानानुभूतेषु तच्छब्दः, तस्मै प्रधानाय । अपूर्ववैद्याय अपूर्वश्चासौ वैद्यश्चेत्यपूर्ववैद्यः । अपूर्व आश्चर्यभूतः । आश्चर्यभूतत्वं (च ? चा)साध्यरूपाणामेषामपि साधकत्वात् । वैद्यः स ज्वरादीनप्यचिरोत्थितान् रोगानेतद्विशेषणैरपरामृष्टान्न तथा हन्तुं समर्थः, किमुत रागादीनसाध्यलक्षणलक्षितान् । तथाचासाध्यलक्षणम् —

"अनुपक्रम एव स्यात् स्थितोऽत्यन्तविपर्यये ।
औत्सुक्यमोहारतिकृत्"

इति । यदिवा न विद्यते पूर्वो यस्मादसावपूर्वः सर्वेभ्यः प्रथम इत्यर्थः । वेत्तीति वैद्यः सकलं जानातीत्यर्थः । स चेश्वरः, संसारार्तानां चिकित्सकत्वात् । ईशानविष्णुरुद्रादिनामसु ईश्वरवाचकेषु सत्सु अपूर्ववैद्य इत्यप्रसिद्धपदप्रयोगोऽसमीचीन इति चेत् । तन्न । ईश्वरवाचक एव वैद्यशब्दः प्रसिद्धः । तथाच स्कान्दे पुराणे —

"भवरोगातुरस्येह तव पादाब्जसंस्मृतिः ।
भेषजं भिषजां श्रेष्ठ ! नान्यत् किञ्चन विद्यते ॥"

इति । तथा शैवे पुराणे — 'संसारवैद्यः सर्वज्ञः परमात्मे'ति । 'अनादिमलसंसाररोगवैद्याये'ति च । अपूर्ववैद्यः सुगतो वा । तथाच हलायुधः —

*"सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः
समन्तभद्रो भगवान् मारजिल्लोकजिज्जिनः ॥"

* मुद्रितहलायुधकोशपाठस्त्वन्यथा दृश्यते ।

इति । नमो नाम मनोवाक्कायानां भक्त्या प्रह्वत्वशंसी निपातः । असुन्प्रत्ययान्तो वा । तदस्तु भवतु । तन्मननननमननवनैरभिनयामीत्यास्था । नम इत्येतावतैवालम् अस्तुशब्देन किमिति चेत् । ब्रूमः । मया यः प्रणामः क्रियते सोऽष्टाङ्गो भवत्विति द्योतनार्थमस्तुशब्दनिर्देशः ।

उरसा शिरसा पद्भ्यां मनसाञ्जलिना दृशा ।
(व ? वा)चांसाभ्यां सम्प्रयुक्तः प्रणामोऽष्टाङ्ग उच्यते ॥
नराणां वाङ्मनःकायैः स्तुतिस्मृत्यञ्जलिप्रदैः ।
दैवानुग्रहणी चेष्टा सर्वारम्भे नमस्कृतिः ॥

अत्र नमस्कार्यस्य भगवतः अपूर्ववैद्यशब्देनाभिधानाद् वस्तुनिर्देशं करोति, चिकित्साशास्त्रमारभ्यत इति । चिकित्साङ्गेषु च भिषजः प्राधान्यं शास्त्रे प्रसिद्धं 'भिषक् चिकित्साङ्गानामि'ति । वस्तुनः प्रतिपाद्यार्थस्यादिग्रन्थेन निर्देशो वस्तुनिर्देशः । स च श्रोतृसुखप्रतिपत्तये । नमोऽस्त्वित्यनेन नमस्क्रियामाशिषं च प्रयुक्तवान् । आशीरपि प्रबन्धारम्भे मङ्गलार्थं प्रयोज्या । उक्तञ्च —

"आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम् ।"

इति । वापीत्यनेन तेष्वेकत(रेणा ? मेना)प्यलमिति सूचितम् । रागादिरोगान् जघानेत्यनेन रोगशान्तिरस्य शास्त्रस्य प्रयोजनमिति प्रतिपादयति । तथाह चरकमुनिः —

"धातुसाम्यक्रिया चोक्ता तन्त्रस्यास्य प्रयोजनम् ।"

इति । प्रयोजनकथ(न ? नं) श्रोतृप्र(वृ)त्त्यङ्गम् । तदुक्तं —

"सर्वस्यैव हि शास्त्रस्य कर्मणो वापि कस्यचित् ।
यावत् प्रयोजनं नोक्तं तावत् तत् केन गृह्यते ॥"

इति ।

"प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ।"

इति च ॥ १ ॥

एवमविघ्ने(न) तन्त्रपरिसमाप्त्यर्थमिष्टदेवतां नमस्कृत्येदानीं तन्त्रकार आरिप्सितमेव तन्त्रं प्रस्तौति अथात इत्यादिना ।

**अथात आयुष्कामीयं नामाध्यायं व्याख्यास्यामः ।**
**इतिहस्माहुरात्रेयादयो महर्षयः ॥**

अथात आयुष्कामीयं नामाध्यायं व्याख्यास्याम इत्याचार्यसूत्रम् । इतिहस्माहुरात्रेयादयो महर्षय इति तन्त्रकारसूत्रम् । चतुर्विधं हि सूत्रं शिष्याचार्यतन्त्रकारैकीयकर्तृकत्वात् ।

"वक्तव्यं सर्वशास्त्रादौ सम्बन्धार्थप्रयोजनम् ।
तद्धीनतन्त्रे श्रोतारः प्रवर्तन्ते हि जातु न ॥"

तत्र सम्बन्ध आचार्यमयमानेत्यत्र सू(चितः) । ........................ वस्तुनिर्देश इति पर्यायाः । यद्यपि न सर्वत्र शिष्यैः[1] कृ(ता ? त)सूत्रोपलब्धिः तथापि सर्वत्रानुमीयताम् । यत्र शिष्यसूत्रं नोपलभ्यते तत्राचार्यसूत्रेण तदनुमीयते, नह्यपृष्टा गुरवः श्रेय उपदिशन्तीति । तत्र पूर्वं तावच्छिष्यसूत्र-शब्द(च्छा ? श्चा)सन्दिग्धाल्पग्रन्थमहार्थवाक्यवचनः । कस्मात्, नह्यपृष्टा अनभ्युपगता वा गुरवोऽर्थिभ्यः श्रेय उपदिशन्ति । तदनन्तरमाचार्यसूत्रम् । ततश्चानन्तरं तन्त्रकारसूत्रम् । तत् कस्मात्, श्रुतस्य हि प्रणयनमुपपद्यते नाश्रुतस्य । तस्मादपि जघन्यमेकीयसूत्रम् । अत्र शिष्यसूत्रम(नु)श्रूय ........... ....ना प्रार्थित इति । अथात आयुष्कामीयं नामाध्यायं व्याख्यास्याम इत्यष्टपदं वाक्यम् । अथ अतः आयुष्कामीयं नाम अध्यायं वि आ ख्यास्यामः । पदच्छेदोऽपि व्याख्याविशेषः । उक्तञ्च —

"आदौ कुर्यात् पदच्छेदं समासं तदनन्तरम् ।
समासे छेदिते पश्चादर्थं ब्रूयाद् विचक्षणः ॥"

इति । (अथात)श्शब्दौ निपातौ । निपातलक्षणमेतत् —

"यत्र यत्र च यो योऽर्थो घटते तत्र तत्र च ।
निपतन्ति विचित्रार्थैर्निपातास्तेन संज्ञिताः ॥"

इति । आयुष्कामीयमिति नाम । नाम्नः पुनर्लक्षणमेतत् —

"(त ? य)त्रिलिङ्गं त्रिवचनं सर्वासु च विभक्तिषु ।
नमत्यर्थेन सर्वार्थे[2] तन्नाम कवयो विदुः ॥"

नामेति निपातः । अध्यायमिति नाम । व्याङावुपसर्गौ । उपसर्गलक्षणमेतत् —

"अलिङ्गाख्याननेकार्थान् नामाख्यातविशेषणान् ।
उपसर्गानुदाहुस्तान् क्रियाणामुपसर्जनात् ॥"

(आ ?)ख्यास्याम इत्याख्यातम् । आख्यातलक्षणमेतत् —

"यत् त्रिकालं त्रिपुरुषं क्रियावाचि त्रिकारकम् ।
अत्रिलिङ्गं त्रिवचनं तदाख्यातं प्रचक्षते ॥"

१. 'ष्यैक्रियस्' क. पाठः. २. 'लिङ्गं च स' ख. पाठः.

इति। एवमस्य चतुर्विधस्य पदस्य प्रयोगादादावेव सर्वसम्पूर्णा वागुक्ता भवति। अस्य तन्त्रकारस्य रचनाकौशलं च प्रख्यातं भवति। उक्तं पदम्। इदानीमर्थः। किमयमथशब्दो गवाश्वादिशब्दवदर्थवान्, उत डित्थडवित्थादिवदनर्थकः। अर्थवत्त्वेऽपि दध्यक्षतादिपदवत् किं मङ्गलार्थवाची, किं वा क्षामनष्टहतदग्धादिपदवदमङ्गलार्थ इति संशयेऽर्थवान् मङ्गलार्थश्चेति ब्रूमः। अथशब्द आनन्तर्यवाची। कस्यानन्तरं, नमस्कारस्य।

तदनन्तरभावित्वादानन्तर्ये स्फुटे सति।
तत्पूर्वमितिकर्तव्यमित्यनेन नियम्यते॥
केषाञ्चिदादौ ग्रन्थानां वन्दनानुपलब्धितः।
अकर्तव्यमिति स्याच्चेत् कस्यचित् सा निवार्यते॥
कायिको मानसो वापि नमस्कारश्च तन्मुखे।
समाप्तिलिङ्गानुमितो नान्यथा तत्समापनम्॥

नमस्कारानन्तर्यार्थोऽप्यथशब्दः शिष्यवचनानन्तर्यमङ्गलाधिकारेषु प्रसज्यते। अन्योद्देशेन कृतस्यान्यत्रापि प्रयोजनकरत्वं प्रसङ्गः। अथ शिष्यवचनादनन्तरम्। उत्तरवचनश्रवणाच्छिष्यवचनश्रवणमीदृशमुन्नीयते — कश्चित् श्रुतशीलादिसम्पन्नः शिष्यो यथाशास्त्रं स्वधर्ममारिराधयिषुरारोग्यप्रेप्सयाचार्यगुणसमुदितं वाहटनामानमाचार्यमुपसङ्गम्य सोपचारः सप्रश्रयमुवाच — संसारेऽस्मिन्नमी प्राणिनो नानारोगाभिभूतास्त्रातारमलभमानाश्चतुर्वर्गावाप्त्यशक्ता दृश्यन्ते, तत् कोनुखलु भ(ग)वन्नत्रोपायः स्यादिति कृतप्रश्नो गुरुः प्रतिजज्ञे — अथात आयुष्कामीयं नामाध्यायं व्याख्यास्याम इति। उत्तराख्यश्चायमलङ्कारः। तस्य लक्षणम् —

"उत्तरवचनश्रवणादुन्नयनं यत्र पूर्ववचनानाम्।
क्रियते तदुत्तरं स्याद्"

इत्यादि। मङ्गं सुखं तल्लाति ददातीति मङ्गलम्। 'ला दान' इति धातुः। मङ्गलादीनां हि शास्त्राणामविघ्नेन परिसमाप्तिस्तदध्येतॄणां निष्प्रतिबन्धा प्रतिपत्तिश्च भवति।

"प्रारम्भे मङ्गलं ब्रूयात् समाप्तावपि मङ्गलम्।
मङ्गलात् सुखमाप्नोति"

इति। अथशब्दोऽपि मङ्गलम्। तदुक्तम् —

"ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥"

इति । प्रयोगनियमश्च —

"ओङ्कारश्चाथशब्दश्च मङ्गल्यौ ब्रह्मसम्भवौ ।
वेदादौ प्रथमो योज्यो द्वितीयः शास्त्रवेदयोः ॥"

इति । अधिकारार्थे आयुष्कामीयशब्दस्या शास्त्रपरिसमाप्तेरायुष्कामीयां दिनचर्यामायुष्कामीयं वाजीकरणमित्यन्वयः । अर्थाधिकारे वा आयुरारोग्यं प्राधान्येनाधिकृत्य तदितरत् सर्वं तदङ्गत्वेनेति । अ(थ)वा आयुष्कामीयं शास्त्रमधिक्रियते, यावद् अत ऊर्ध्वं प्रक्रम्यते आ तन्त्रपरिसमाप्तेः तत्सर्वमायुष्कामीयं वेदितव्यम् । अथवायुर्वेदोऽधिक्रियते, अधिकारः पुरस्कारः, अनेकार्थत्वादथशब्दस्य विवक्षावशात् प्रकरणानुसारेण बह्वर्थत्वमविरुद्धम् । दृश्यते चैकस्याप्यनेककार्यकरत्वं, सर्पिषः प्रज्ञावृद्ध्यर्थं प्रयुक्तस्य स्मृत्यादेर्गुणगणस्याभिवृद्धिहेतुत्वाद् वातादीनामुपशमकत्वाच्च । तथा केनाचिन्न(भ्र)दोषपरिहाराय वासः परिहितं मङ्गलशोभासौभाग्याय सम्पद्यते । निपातत्वादथशब्दस्यानेकार्थत्वम् । 'अनेकार्था धातवो निपाताश्चे'ति वैयाकरणाः पठन्ति । उक्तञ्च —

"यत्र यत्र च यो योऽर्थो घटते तत्र तत्र च ।
निपतन्ति विचित्रार्थैर्निपातास्तेन संज्ञिताः ॥"

इति । यत्र यत्र वाक्ये यो योऽर्थो घटते उपपद्यते तत्र तत्र च निपतन्ति सम्बध्नन्ति विचित्रैर्नानाविधैरर्थैः सह तत्र तत्र तस्य तस्योपपन्नस्य द्योतनं कुर्वन्तीत्यर्थः । अथातश्शब्दयोर्निपातत्वादर्थद्योतकत्वं न वाचकत्वम् । तदुक्तं —

"वाचकादर्थशून्याच्च निपातस्य विधर्मणः ।
द्योतकत्वमतः सिद्धम्"

इति ।

"उपसर्गनिपातानां केवलानां स्वभावतः ।
न स्वरूपादृतेऽर्थोऽस्ति द्योतकास्त्वन्यसन्निधौ ॥
दीपो यथान्धतमसे सञ्जातो युगपद् बहून् ।
अर्थानवद्योतयति (य ? त)था चाद्याः प्रसङ्गतः ॥"

इति । अथातश्शब्दयोर्निपातत्वादर्थद्योतकत्वमिति स्थितिः । अतःशब्दो हेतौ । यस्मादयं शिष्यः श्रुतशौचशीलकुलवृत्तसम्पन्नो वक्ता तितिक्षुरनहंकृतो मेधावी

वृद्धिमांश्च प्रार्थितवान्, यस्माच्च विविधदुःखप्रतीकारा(वा?)द्दतः, अतो व्याख्यास्याम इति। 'अथशब्दो मङ्गलार्थः, अत इत्यानन्तर्य' इतीन्दुः।

अन्ये त्वाहुः — अत्र वाक्योपादाने प्र(त्यु ? यु)क्तोऽथशब्दः शिष्यवचनानन्तरं तद्वाक्योपादानम् अथेत्युक्तमाचार्येणेति।

"शरीरेन्द्रियसत्त्वात्मसंयोगो धारि जीवितम्।
नित्यगं चानुबद्धं च पर्यायैरायुरुच्यते॥"

एतीत्यायुः। सततं गच्छतीत्यर्थः। एवं गत्वरस्वभावमपि हिताहारविहारादिभिरहितवर्जनेन च कथमेतत् स्थिरीभ(व:? वेदि)त्येवं कामयन्ते याचन्त इत्यायुष्कामाः। तेभ्यो हित आयुष्कामीयः। स पुनरायुर्वेदा(स ? ग)मादिप्रकरणसमुदायः आयुःकामयमानेनेत्यादिकः। 'तस्मै हितम्' (५-१-५) इति छः। आयुष्कामीयशब्दोऽध्यायविशेषणार्थः नीलोत्पलवत्, बहुष्वध्यायेषु सत्सु कतममध्यायं व्याख्यास्यामः आयुष्कामीयमिति। सकलायुर्वेदार्थानामत्र सूत्रणादायुष्कामहितोऽयमध्यायः। आयुष्कामशब्दोऽत्रास्त्यध्याय इत्यायुष्कामीय इत्यन्ये। नामशब्दः प्रसिद्धौ, संज्ञानुबन्धार्थो वा। अध्याय इति विशिष्टप्रकरणसमुदायस्य संज्ञा। अधीयतेऽनेनाभिप्रेतोऽर्थोऽस्मिन् वेत्यध्यायः। अथवाधिशब्द इहाधिकारे, अयनमायः आयो नाम गतिरर्थस्य। एतदुक्तं भवति — अर्थावगतिं पुरस्कृत्य यस्यकस्यचिदर्थस्यावगतिमुद्दिश्य प्रवृत्तो ग्रन्थोऽध्यायः। अथवा ईयते गम्यते इत्यायोऽर्थ उच्यते, अर्थमधिकृत्य प्रवृत्तो ग्रन्थोऽध्यायः इति। तेनार्थवशात् प्रायोऽध्यायसंज्ञेत्यर्थः। उक्तं च —

"अधिकृत्यायमध्यायनामसंज्ञा प्रतिष्ठिता।"

इति। सर्वस्य ग्रन्थस्यार्थमधिकृत्य प्रवृत्तत्वेऽपि ग्रन्थैकदेशस्य रूढ्या योगेन वा प्रवृत्तिरध्यायः। तत्र पदसमुदायो वाक्यम्। वाक्यसमुदायः प्रकरणम् प्रकरणसमुदायोऽध्यायः। अध्यायसमुदायः स्थानम्। स्थानसमुदायस्तन्त्रमिति। व्याख्यास्यामो वर्णयिष्यामः। अथवा विशब्दो नानार्थे। अर्थस्य नाना(त्व)मुपोद्घातादि। उक्तं च —

"उपोद्घातः पदं चैव पदार्थः पदविग्रहः।
चालना प्रत्यवस्थानं व्याख्या तन्त्रस्य षड्विधा॥"

इति। उपोद्घातः सम्बन्धोक्तिः। पदं पदच्छेदः। पदार्थस्तस्य पदस्यार्थकथनम्। इण् गतौ औणादिके उसि प्रत्यये 'एतेर्णिच्च' (उ० २. ११८) इति णिद्भावे वृद्धिरायादेशः रुत्वविसर्गौ आयुरिति एतीत्यर्थः। पदस्य विग्रहः, विग्रहः

समासविवरणम् । तद्यथा — आयुरिति द्वितीयान्तं पदं तेन कामशब्दस्य समासः । अत्र 'इणुसोः सामर्थ्ये' (८-३-४४) इति षत्वम् । चालना चोद्यम् । चोदनेति वा पाठः । तद्यथा — इदं शास्त्रमधर्मसाधनत्वान्नाध्येतव्यम् । गवाश्वसृगालादीनां मांसं भक्ष्यत्वेन वर्ण्यते । तेषां हिंसा चा(त्य ?)र्थप्राप्ता । सा च श्रुतिविरुद्धा 'न हिंस्याद् भूतानी'ति । तस्मान्नाध्येतव्यमिति । प्रत्यवस्थानं परिहारः । गवाश्वसृगालादीनां मांसवर्णनं न भक्ष्यत्वविधानार्थं, किन्तु शास्त्रव्याप्त्यर्थम् । अथवा शकबर्बरादीनां भक्ष्यत्वेन वर्ण्यते । हिंसा च शरीररक्षार्थं विधीयमाना न निषेधविष(या ? यः) अपि(च ? तु) ज्योतिष्टोमादिहिंसावद् धर्मसाधनमेवेति । अथवा विशब्दः कृत्स्नवाची । यत्तन्त्रे विस्तरेणोपदिष्टोऽर्थस्तमपि न्यक्षेणोदाहरिष्याम इति । अथवा विशब्दोऽतिशये । अतिशयोऽर्थगौरवम् । आङभिविधौ मर्यादायां वा आ शिष्यबोधोत्पत्तेरिति । अतिसंक्षेपातिविस्तरवर्जितं व्याख्यास्याम इत्युक्तं भवति । व्याङोरुपसर्गत्वादर्थद्योतकत्वम् । 'उपसर्गाः क्रियायोगे' (१-४-५९), 'ते प्राग् धातोः' (१-४-८०) इति प्राक् प्रयोगः । व्याख्यास्यामो वर्णयिष्यामः प्रथयिष्यामः । एवं त्रयाणां पदानामर्थवैशेष्यं वर्णयन्त्याचार्याः । कथं पुनरेकस्यैव तन्त्रकारस्य व्याख्यास्याम इति बहुवचनं युज्यते । ब्रूमः । 'अस्मदो द्वयोश्च' (१-२-५९) इति एकत्वेऽपि बहुवचनविधानाद् युक्तमेवात्रैकस्मिन्नपि बहुवचनम् । प्रकथनार्थस्य ख्यातेः परस्मैपदिनः परिग्रहादारम्भस्य परहितत्वं द्योतयति । वक्ष्यति च —

"दृष्ट्वा यच्छुभमाप्तं शुभमस्तु परं ततो जगतः ।"

इति । एवमुपक्रमोपसंहारैकरूप्येणास्य तन्त्रस्य परहितत्वमवगम्यते । अथ मां प्रति भाति । अथशब्दो मङ्गले । मङ्गलेन च प्रतिलम्भः शास्त्रप्रतिष्ठायाः । यदभिहितमाचार्यहरिश्चन्द्रेण — 'मङ्गलादीनि हि शास्त्राणि प्रथन्ते आयुष्मद्दूर्जे(यि ? स्वि)पुरुषाणि च भवन्ती'ति । अभिमतं चैतदनृषेस्तन्त्रकारस्य फलं यदुत स्वकृतिमनुखो............र्यप्राये जगतीति । नमस्कारोत्पन्नेन तु मङ्गलेन च नमस्कृतेरात्मलाभ एवाभिलिप्सित इति पौनरुक्त्यमाशङ्कमानैरुपस्थातव्यम् । इतश्चैतदनुग्राह्यमिति गृह्यतां, यदाचार्येण प्रयस्यतापि स्वशास्त्रप्रतिष्ठापनमापादनीयं............वक्ष्यति — 'युगानुरूपसन्दर्भ' इति । अत इति । अतश्शब्दो हि हेतौ । हेतुश्च शास्त्रस्य प्रतिष्ठापयिता । कथमिति, उच्यते । अद्यतनहितत्वात्, आर्षाणि खलु तन्त्राणि नोचितान्यद्यतनीनां शिष्यशेमुषीणाम् ।

१. 'ष्मत् पु', २. 'वा', ३. 'या' ख. पाठः.

ये तु पुनर्दिव्यदृशो महर्षयः ................ त्रापः इङ्गिताभिधानादिकमपि पारयिष्णवोऽङ्गीकर्तुमतिनिर्मलमेधसस्तेषामेव हि (क्षं ? क्ष)मा(ण्या ? ण्यव)गमयितुं, नत्वस्मादृशामुपदिष्टमात्रमप्यनुधावितुमपेशलानाम् । तत् कस्मात्, अव्याप्तिनैरुक्त्यक्काचित्कविशेषणवचनसंक्षेपानादरास्थानादरानुपयुक्ताभिधानभावाभावेत्यगूढार्थव्याकरणविरोधाक्षेपादेश्च(?)। अत इदं व्याख्यास्या(मः), ...ो धान्वन्तरीयादीनामेकैकं तन्त्रमशेषामयविमोक्षणायापर्याप्तम् । कुतः, एकाङ्गप्राधान्यात् । शल्यचिकित्साप्रधाने हि त(न्त्र ? न्त्रे) न कायचिकित्सोक्तमौषधविशेषमनुपश्यामः, नान्येषु चान्योक्तम् । अतस्तदभिहितोऽर्थस्तेनैव ज्ञातेन ज्ञातव्य इति । यतश्च स एवार्थस्तन्त्रकारैः पुनः पुनरुक्तः, यतश्च क्वचित् तन्त्रे कश्चिदर्थो विशेषतोऽभिहितः, तज्ज्ञानं च तेन विना दुरुपपादं, यतश्च तेऽर्थादरेण बहुभाषिणोऽस्थाने स्थाने च स्वल्पभाषिणः, यतश्च तेऽनुपयुक्तमपि चिकित्सायामभिदधत्यर्थजातम् । अथच (सं ? त)त्तन्त्राभियोगस्य नावकाशो मादृशेषु, स्वल्पं खल्विदमायुर्मनुष्याणां, यदुत वर्षशतं, तदपि जराव्याधिबहुलमिति । अतोऽवश्यमेतैर्दोषैर्विवर्जितम् अपिच तात्पर्यमात्रनिबन्धनमन्यतन्त्रेषु गूढार्थप्रदेशव्याको(श?च)नपरमितरेतरविरोधविनिवर्तनकरं च किमपि तन्त्रान्तरमभ्यन्तरीकर्तव्यमिदानीन्तनेभ्य इति । अस्मिन् खल्वस्मदभिप्रायेण प्रतिपादितोऽयमतश्शब्दार्थः स्वाभिप्रायतया सूचित इति स्वयमुद्घाटित एवाग्रे तन्त्रकृता । तद्यथा—

"तेषामेकैकमव्यापि समस्तव्याधिसाधने ।
प्रतितन्त्राभियोगे तु पुरुषायुषसंक्ष(ये ? यः) ॥
भवत्यध्ययनेनैव यस्मात् प्रोक्तः पुनः पुनः ।
तन्त्रकारैः स एवार्थः क्वचित् कश्चिद् विशेषतः ॥
ते+प्रत्यायनपरा वचनेषु च नादृताः ।
सर्वतन्त्राण्यतः प्रायः संहृत्याष्टाङ्गसङ्ग्रहः ॥
अस्थानविस्तराक्षेपपुनरुक्त्यादिवर्जितः ।
हेतुलिङ्गौषधस्कन्धत्रयमात्रनिबन्धनः ॥
विनिगूढार्थतत्त्वानां प्रदेशानां प्रकाशकः ।
स्वान्यतन्त्रविरोधानां भूयिष्ठं विनिवर्तकः ॥
युगानुरूपसन्दर्भो विभागेन करिष्यते ।"

इति । आह युक्तमिदम् । किन्त्विदं पुनरयुक्तमिवापद्यते । कथम् । उच्यते ।

यदभिहितमनेन तन्त्रकृता स्वयं तन्त्रकरणे हेतुरेवायमतश्शब्देनाभिद्योतित इति। तदुचितमनुमन्यामहेतराम्। न युज्यते हृदयादौ, कुतः चरितार्थत्वात्। सङ्ग्रहेणैव खलु कृतार्थीकृतोऽयमर्थ इति नेह पुनराकर्षणक्षमोऽयमभिव्याहारः। कुत्र तर्हि योक्ष्यते, ननु तस्यैव सङ्ग्रहस्याग्र इति ब्रूमः। अत्र ब्रूमहे। स्याच्चेदेतावानिह नो दोषः। फलितमस्माकं तर्हि मनोरथैः। तत्रैवायमर्थोऽभिधीयताम्। तत्रोपयुज्यते। अत्र पुनः कथमिममुपक्रमिष्यामहे। अथशब्दोऽयमानन्तर्ये। अथ सङ्ग्रहादनन्तरमिदं व्याख्यास्याम इति। कुत इति चेद्, अतः यतस्त्रिविधबुद्धयो भवन्ति पुरुषाः उत्तमाधममध्यमभावात्। एतर्ह्यपि खलु काले य उत्तममतयस्तेषामेव सङ्ग्रहेऽधिकारः सर्वार्थसङ्ग्रहणात्। यौ पुनरितरौ सूत्रपाठादिपुरस्सरमर्थावधारणं प्रतिपन्नौ यश्चोत्तममतिस्सङ्ग्रहाभियुक्तः पाठग्रहणायाभिलष्यति ग्रन्थलाघवं तेषामिहाधिकारो हृदये। कुतः, सारतरोच्चयत्वादस्य। इममेवार्थमस्मिन्नथातश्शब्दावभिप्रेत इति प्रमाणम् 'एतत्पठन् सङ्ग्रहबोधसक्त' इत्यादिवचस्तन्त्रकारस्य। अयं संक्षेपः सङ्ग्रहकरणादनन्तरमेव मन्दमध्यमबुद्धिव्यवहारार्थमष्टाङ्गहृदयं व्याख्यास्याम इति। तथा व्याख्यास्याम इति निर्देशेन नेतःपूर्वं कैश्चित् व्याख्या(ता ? तः) ख्यायते वा। किंत्वस्माभिर्व्याख्यातव्य इति दर्शयति। एता(वा)निह लोकोपकारं प्रति प्रयासस्तन्त्रकृतोऽस्य करुणामहतः, यतोऽयमीदृशमतिरात्मनः कुशलान्यपि कर्माणि लोकं प्रत्युपकृतवान्। तथाचोक्तं—

"हृदयमिव हृदयमेतत् सर्वायुर्वेदवाङ्मयपयोधेः।
दृष्ट्वा यच्छुभमाप्तं शुभमस्तु परं ततो जगतः॥"

इति। एवमवयवार्थो निर्लोठितः प्रथमसूत्रस्य। अथ पिण्डार्थः— महान्ति खलु कार्याण्यारभमाणाः प्रतिज्ञापूर्वकमेवारभन्ते महान्त इत्याह। इतः सन्धानमितो वेधः अष्टाङ्गहृदयं प्रतिजिज्ञासितम्। आयुष्कामीयोऽध्यायः प्रतिज्ञायत इति। नैष दोषः वस्तुग्रहणात्। यावान् खल्वर्थसमुदायः सकलेनापि तन्त्रेण प्रतिपाद्यते तावन्तमयमशेषेणाध्यायः समुच्चिनोति। तस्मादस्य प्रतिज्ञानमर्थबलात्तस्यैवापद्यत इति। बीजवत्. यथाहि वटादिबीजेषु सन्निहिताः शाखापत्रलताप्रतानादयस्तन्मात्रग्रहणेनैव गृहीता भवन्ति तदुपममिहापीति। अथवा तन्त्राभिधानाददोषः। तन्त्राभिधानं ह्येतदायुष्कामीयमध्यायं व्याख्यास्याम इति। तत्र प्राथमिकेन सूत्रेण तन्त्रस्यैव प्रतिज्ञा विधीयते। कथमि(त ? ति)

अथ सङ्ग्रहादनन्तरं अतः मन्दमध्यमबुद्ध्योर्व्युत्पादनार्थमायुष्कामीयमायुष्कामेभ्यो हितमध्यायमधीयत इति व्युत्पत्त्या तन्त्रं व्याख्यास्यामः वर्णयिष्याम इति। द्वितीयवा(क्यो? क्ये), न तु प्रकरणविशेषस्यैव प्रतिज्ञा अथ तन्त्रप्रतिज्ञानादनन्तरम् अतस्तन्त्रादौ सुखग्रहणार्थमशेषार्थसमुद्देशस्य विवक्षितत्वादायुष्कामीयमध्यायं प्रकरणविशेषं व्याख्यास्यामः वर्णयिष्याम इति। अयमेवार्थक्रमो द्वितीयाध्यायादिषु अथातश्शब्दयोरनुसारयितुं पार्यत इत्यङ्गीकृतोऽस्माभिः। नन्वायुष्कामीयमध्यायं व्याख्यास्याम इतीयं प्रतिज्ञा न कार्या। प्रतिज्ञामन्तरेणाप्यर्थक्रियादर्शनात्। यथा चैत्रो गच्छन्नश्नन् वा न प्रतिजानीते गमिष्याम्यशिष्यामि वेति अथ चासौ साधयत्येव समीहितम्। एवमिहापि प्रतिज्ञयापि व्याचिरव्यासित एवार्थो व्याख्यातव्यः। न चास्याः प्रतिज्ञायाः साधनमर्थो हेतुरभिधीयते। अत्रोच्यते। अल्पायासप्रयोजनस्य गमनभोजनादेः प्रतिज्ञामन्तरेणापि सिद्धौ सत्यां महाप्रयोजनस्य महायाससाध्यस्य च कार्यस्य न प्रतिज्ञामन्तरेण सा दृश्यते चास्याः सामर्थ्यमभिप्रेतार्थग्रहणे। यदुक्तं हेतुरत्र नोपदिष्ट इति तन्न। प्रतिज्ञासूत्र एवास्मिन्नतश्शब्देन हेतोरुपदिष्टत्वात्। तस्मादुपपन्नेयं प्रतिज्ञा यथाशब्दमेवानेन निर्वर्तयिष्यत इति। शिष्याणां गौरवातिशयसंप्रत्ययसिद्ध्यर्थं करिष्यमाणसङ्कीर्तनं वाक्यं न प्रतिज्ञावाक्यं हि हेत्वादेरनभिधानादिति हृद्याकार इत्यलमेतावता॥

इदानीं पृच्छ्यते तन्त्रकारः। यद(स्मि)स्तन्त्रे किञ्चिदुच्यतेऽत्र भवद्भिस्तत्त्वबुद्धिपरिकल्पितमुत नेत्याह — इतिहेत्यादि। इतिशब्द एवमर्थे। हशब्दोऽनुकम्पायाम्। अनुकम्पमाना आत्रेयादय इति। अथवा इतिहेत्येकोऽयं निपातः सम्प्रदायद्योतकः। आह हलायुधः 'इतिह स्यात् सम्प्रदाये' इति। इतिहेति निपातसमुदायोऽतीतवस्तुविषय इतीन्दुः। स्मशब्दोऽतिक्रान्तकालवाची। आहुः ब्रुवन्ति। स्मशब्दयोगाल्लटोऽपि भूतकालवाचित्वम्। 'लट् स्मे' इति भूते लट्प्रयोगः। आहुः स्माब्रुवन्नित्यर्थः। अत्रेरपत्यमात्रेयः पुनर्वसुः। एवमस्य वंशशुद्धिरुक्ता भवति। आत्रेय आदिर्येषां धन्वन्तरिभरद्वाजादीनां त एवम्।

आत्रेयश्च भरद्वाजो निमिः काश्यप एव च।
अगस्त्यो नग्नजिच्चैव तथा लम्बायनादयः॥
असंख्येया गणास्त्वेते शुक्रशिष्या महर्षयः।

महान्तश्च ते ऋषयश्च महर्षयः । महत्त्वं तु ज्ञानाद्यतिशययोगात् पूज्यता अथवा महत्त्वं नाम कृतकृत्यता । उक्तं च —

"अवाप्तव्यान्यवाप्तानि यस्य सर्वाणि देहिनः ।
परोपकारव्यसनी स महानभिधीयते ॥"

इति । अनुष्ठितसकलकृत्याः परहितसम्पादनेनैवायुःशेषं क्षपयाम इति कृतव्यवसाया महान्त इत्यर्थः । ऋषणादृषयः सर्वतत्त्वानां यथार्थदर्शनात् । 'ऋषु दर्शने' इति धातुः । ज्ञानातिशययोगिन ऋषयः । तदुक्तं —

"देशकालव्यवहितं प्रमेयं येन गृह्यते ।"
मनसातिस्फुटाभासा स ऋषि ख्यायते बुधैः ॥

इति । 'ऋषिस्त्रिकालदर्शी स्यादि'ति च । ऋषणात् क्लेशानां हिंसनादृषय इति वा । महर्षिग्रहणादेषां पुण्यकर्मत्वं दर्शयति । तेनायमर्थः । अनेन प्रकारेणानुकम्पया नतु फलकाङ्क्षया भगवन्त आत्रेयादयो महर्षयोऽब्रुवन् । नास्माभिः स्वमति परिकल्पितं किञ्चिदप्यत्रोक्तम् । केवलं दूतसन्देशन्यायेन युगानुरूपं क्रममात्रोऽन्यथाकृत इत्यर्थः । तथाचास्यैव सङ्ग्र(हे) —

"न मात्रा[1]मात्रमप्यत्र किञ्चिदागमवर्जितम् ।
तेऽर्थाः स ग्रन्थ[2]सन्दर्भः संक्षेपाय क्रमोऽन्यथा ॥"

इतिकृतः । तदेवमागमप्रामाण्यमस्य तन्त्रस्योक्तं भवति । 'एतस्मिञ्छास्त्रे सन्देहे समुत्पन्ने आत्रेयादीनां शास्त्रदर्शनेन संशयव्युदासः कर्तव्य' इति पिण्डितार्थ' इति ह्याकारः ॥ १ ॥

आत्मन आगमपर[3]तन्त्रतां दर्शयित्वायुः कामयमानेनेत्यादिना सम्बन्धादिप्रतिपादनपरेण सूत्रेणायुर्वेदाधिगमप्रवृत्त्यर्थं शिष्यगणं प्रोत्साहयति । अथवा ते किमाहुरित्याह —

**आयुः कामयमानेन धर्मार्थसुखसाधनम् ।**
**आयुर्वेदोपदेशेषु विधेयः परमादरः ॥ २ ॥**

आयुरित्यादि । आयुः कामयमानेन यथोचितं जीवितमिच्छता पुरुषेणायुर्वेदोपदेशेषु आयुरस्मिन् विन्दन्त्यने(नै ? न)वायुर्विद्यते ज्ञायते प्रकृतिज्ञानरसायनदूतारिष्टाद्युपदेशादित्यायुर्वेदः । आयुर्वेदार्था एभिरुपदिश्यन्ते उच्यन्त इत्यायुर्वेदोपदेशाः आयुर्वेदतन्त्रा(णां ? णि) तेषु परमादरो विधेयः । परमश्चासावादरश्च परमादरः । परमतिशयेनादरो वा । आदरः सम्माननम् ।

---

१. मात्रा अक्षरकला. २. 'ग्रन्थबन्धश्च' इति मुद्रितसंग्रहे. ३. 'यन्तता' ख. पाठः.

पाठावबोधानुष्ठानात्मक उत्कृष्टो यत्नः कर्तव्यः। बह्वायुर्वेदतन्त्रावलोकनाद्धि चिकित्सायां वैद्यस्य मनागपि सन्देहो न जायत इति द्योतनार्थं बहुवचनम्। एतस्मिंस्तन्त्रे कायचिकित्सा विशेषेणोच्यते, अन्यस्मिञ्छल्यचिकित्सा, अपरस्मिन्नन्या। तस्माद्बहुषु यत्नः कार्य इत्यनेनोक्तं भवति।

किंभूतमायुः धर्मार्थसुखसाधनम्। तेन हि प्राधान्येन धर्मादयः साध्यन्ते ध्रियन्ते लोका अनेनेति धर्मः। स च प्रतिसमयं प्रतिवर्णं प्रत्याश्र(यं?)मं च भिन्नः। स चाप्रत्यक्षः कार्यदर्शनात्त्वनुमीयते। संक्षेपतो वाङ्मनःकायकर्मणामशुभानां परित्यागाद्धितानां चानुष्ठानादभिनिष्पद्यते। अर्थ्यत इष्यत इत्यर्थः। यद्वा अर्थ्यते प्राप्यते सर्वैरादरेणेत्यर्थः। धनधान्यादिः। अत्र च सु(ख)शब्देन सुखद्वयं गृह्यते। सुखं द्विविधं तादात्विकमात्यन्तिकं च। तादात्विकं कामः, आत्यन्तिकं मोक्षः। तथा च मुनिः—

"तदात्वसुखसंज्ञेषु भावेष्वज्ञोऽनुरज्यते।
आत्यन्तिकं सुखं मोक्षः स दुष्प्रापोऽयतात्मभिः॥"

इति। ते(षामुपाधा? षां साध)नमुपायः। धर्मार्थकाममोक्षाणामारोग्ययुक्तमायुः साधनमित्यर्थः। अत्र सम्बन्धादयः कथमुत्पद्यन्त इति चेद्, उच्यते। तत्र तावदुपा(योपे)यभावलक्षणः सम्बन्धोऽस्यशास्त्रस्यायुर्वेदोपदेशत्वादुपायत्वम्। तत्साध्यत्वादायुष उपेयत्वम्। अभिधेयमायुर्वेदः प्रयोजनमायुः। प्रयोजनप्रयोजनं धर्मार्थकाममोक्षा इति। अस्यचादावेषामभिधाने किं सामर्थ्यम्। विवक्षितार्थाभिव्यक्तिः। सम्बन्धादिप्रयोजनशून्यानां तन्त्राणां प(क्र? त्रा)दिव्यवहितहिरण्यादिवद्विवक्षितार्थानभिव्यक्तिदर्शनात्। तथाचानुपलभ्यमानोत्तमाङ्गः प्रतीयमानकरचरणाद्यवयव इव पुरुषः सम्बन्धादिरहितः केवलः श्रूयमाणोऽर्थः सन्देहमावहति किमेवं भवेदुतान्यथेति। शेषेषु चापिहितेषु सम्बन्धादिषु सन्देहो निवर्तते उत्तमाङ्ग इव दृष्टे देवदत्तस्य। तस्मात् सम्बन्धादित्रयं तन्त्रारम्भे वर्णनीयम्। उक्तं हि—

"यथापि(हि)तगात्रोऽपि शिरसि प्रावृते नरः।
नाभिव्यक्तिं व्रजत्येवं शास्त्रमुद्घातवर्जितम्॥"

इति। अभिव्यक्तेश्च फलं श्रोतृप्रवृत्तिः। उक्तं च—

"यथा गन्धवशात् फुल्लमलिनो यान्ति शाखिनम्।
तथोद्घातवशाच्छास्त्रमुपगच्छन्ति साधवः॥"

---

१. 'पादेय', २. 'धा विगलग' ख. पाठः.

इति । अन्यत्रापि

"आदौ सम्बन्धकथनमभिधेयस्य कीर्तनम् ।
प्रयोजनोक्तिस्त्रितयं प्रवृत्त्यङ्गमुदाहृतम् ॥"

इति । अन्ये त्वेवमाहुः — सम्बन्धनं सम्बन्धः सम्बध्यते वानेनार्थ इति सम्बन्धो द्विविधः प्रयोजनेन सहैकः शिष्यप्रश्नेन सहानन्तर्यलक्षणोऽपरः । प्रयोजनं च द्विविधं परमप्रयोजनमवान्तरप्रयोजनं चेति । तत्र परमप्रयोजनं धर्मादिपुरुषार्थचतुष्टयावाप्तिः । अवान्तरप्रयोजनमारोग्यार्था क्रिया । उक्तं च—

धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम् । इति । उत्तमं प्रधानं मूलं कारणम् ।

"धातुसाम्यक्रिया चोक्ता तन्त्रस्यास्य प्रयोजनम्"

इति च । प्रयोजनसम्बन्धोऽपि द्विविधः । तन्त्रसम्बन्धोऽभिधेयसम्बन्धश्चेति । तत्र तन्त्रस्य प्रयोजनेन सहोपायोपेयलक्षणः सम्बन्धः । अभिधेयस्य तु प्रयोजनेन सह जन्यजनकलक्षणः । तत्र प्रधानमभिधेयमौषधम् । तदर्थतयाभिधेये हेतुलिङ्गे । शिष्यप्रश्नानन्तर्यलक्षणस्तु तन्त्रसम्बन्ध उक्तः । अनेनैव तन्त्रसम्बन्धप्रसङ्गेन तन्त्रावयवानां स्थानाध्यायप्रकरणसूत्राणामपि सम्बन्धो वाच्यः । तत्र स्थानसम्बन्धः प्राधान्यात् सूत्रस्थानमेवादावारब्धम् । प्राधान्यं चास्य सर्वार्थसञ्चयात् । अध्यायसम्बन्धः पुनः कृत्स्नार्थसंक्षेपादितराध्यायेभ्यः प्रधान आयुष्कामीय इत्यादावुपहितः । प्रकरणसम्बन्धः पुनः प्रकरणमिदमायुर्वेदागमविशुद्धिप्रदर्शनार्थमभिहितम् । अत्र प्रदर्शिते हि पारम्पर्यक्रमे जातादराः प्रतीतमनसोऽध्ययनायोत्थास्यन्ते । तदनुशिष्टं चार्थमसम्मूढा अनुष्ठास्यन्तीत्यतः प्रकरणबाहुल्येऽपि पुरायुर्वेदागमप्रकरणमुपगृह्यते । सूत्रसम्बन्ध उक्तः ॥ २ ॥

अथोक्तानुष्ठानसिद्ध्यर्थं ब्रह्मेत्यादिनास्यायुर्वेदस्य गौरवोत्पादनायागमशुद्धिं दर्शयति —

**ब्रह्मा स्मृत्वायुषो वेदं प्रजापतिमजिग्रहत् ।**
**सोऽश्विनौ तौ सहस्राक्षं सोऽत्रिपुत्रादिकान्मुनीन् ॥ ३ ॥**
**तेऽग्निवेशादिकांस्ते तु पृथक् तन्त्राणि तेनिरे ।**

ब्रह्मेत्यादि । ब्रह्मा पद्मयोनिः आयुषो वेदं स्मृत्वा बुद्ध्वा प्रजापतिं दक्षप्रजापतिमजिग्रहत् अवाबोधयत् । स्मृत्वेत्यनेनैतद्गमयति ब्रह्मणोऽपि स्मर्तृत्वमेव न कर्तृत्वं नित्यत्वादायुर्वेदस्य पूर्वमनुभूतस्य सतः स्मरणं भवतीति । तथा

चागमः—'शाश्वत आयुर्वेदः अनादिमत्त्वात् । न ह्यायुर्वेदस्याभूत्वोत्पत्तिरुपलभ्यते अन्यत्रावबोधोपदेशादि'ति । अवबोधो नाम स्मृतिरिति (प ? च)र(को ? के) चो(क्ता ? क्तं) नि(ह्यो ? त्यो) ह्ययमायुर्वेद इति । ग्रहेर्ण्यन्तस्यात्र बुद्ध्यर्थत्वात् । प्रजापतिशब्दस्य 'गतिबुद्धी'त्यादिना कर्मसंज्ञा । आयुषो वेदमिति । अयं च वेदशब्दः सर्वेषां वेदानां सामा(न्यम् ? न्यः) । तत्र सामान्यगतो विशेषार्थिना विशे(षो ? षे)ऽभिप्रयुज्यते सामा(दिः ? दौ) । तद्यथा — सामवेदो धनुर्वेद आयुर्वेद इति । आयुश्शब्दस्यानाश्रयणाद्वेदशब्दस्य सामान्यवाचित्वात् सर्ववेदप्रसङ्गादनिष्टप्रसङ्ग इति मत्वायुष इति विशेषं कृतवान् । असमासकरणं संज्ञाद्वैविध्यद्योतनार्थं वेद आयुर्वेद इति । कथं खल्वायुर्वेदस्य वेदसंज्ञोपलभ्यत इति चेद् एकयोनित्वादधिष्ठानसामान्यात्तुल्यफलत्वाच्च । तत्रैकयोनित्वं वेदायुर्वेदयोर्हि ब्रह्मा योनिः । अधिष्ठानसामान्यम् उभयोर्हि ब्राह्मणक्षत्रियवैश्या अधिष्ठानम् । तुल्यफलत्वं, फलं ह्युभयोर्लोकद्वयहितावाप्तिरि ति । एवमेभिर्हेतुभिर्वेद इवायुर्वेद इति कृत्वायुर्वेदस्यापि वेदसंज्ञा विद्यत इति ख्यापनार्थं वेदमिति पृथक्कृतवान् । मुनिरपि 'वेदं वर्धनमायुष' इति प्रोक्तवान् । किं वेदसंज्ञायाः प्रयोजनमिति चेत् शास्त्रगौरवम् । यथा वेदो गौरवेणानुपाल्यते तथायमायुर्वेदो गौरवेणानुपाल्यत इति । उक्तं च सुश्रुते —

"इदं वेदोपवेदत्वाच्छास्त्रं वर्णैस्त्रिभिः शुभैः ।
अध्येतव्यं त्वपतितैः ब्राह्मणैस्तु विशेषतः ॥"

इति । आयुषो वेदमित्यसमासकरणेनायुर्वेदस्य शास्त्रत्वप्राप्तिरभिधीयत इति व्याख्याकारः । तथाहि —

"आयुरारोग्यरक्षार्था पुरायुर्वेदसंज्ञिता ।
अथर्वशाखा पठिता दक्षेण ब्रह्मणो मुखात् ॥
तां वेदशाखामश्विभ्यां ददौ दक्षप्रजापतिः ।
अश्विनोर्जगृहे वेदं भगवान् बलसूदनः ॥
इन्द्राज्जगृहिरे वेदं पुनरत्रिसुतादयः ।
ते गृहीत्वा तमाम्नायं बुद्ध्वा निरवशेषतः ॥
समुद्धृतैरर्थजालैः सम्पूर्णानि महान्ति च ।
स्वनामाङ्कानि तन्त्राणि साष्टाङ्गानि प्रचक्रिरे ॥
ततः प्रभृति वेदोऽयमुपवेद इति स्मृतः ।
वेदार्थैः सम्भृतत्वेन सन्दर्भाणां च भेदतः ॥
उपवेदत्वमाख्यातं मुनिभिस्तत्त्वदर्शिभिः ॥"

इति । ब्रह्मायुर्वेदं प्रजापतिं ग्राहयित्वा कृतकृत्योऽभवत् । स प्रजापतिरश्विनौ देवभिषजावाजिग्रहत् । सोऽपि ताभ्यां व्याख्याय कृता(र्था ? र्थोऽभूत्) तौ सहस्राक्षमजिग्रहतामिति वचनविपरिणामेन सम्बन्धः । तौ च तस्मै प्रतिपाद्य कृतार्थावभूताम् । इन्द्रस्तु कस्मिंश्चिदपि शिष्ये असंक्रमितविद्यत्वादनवसितप्रयोजनकतया शास्त्रप्रतिपादनेऽर्थितस्तस्मात्तमेव जग्मुरिति भावः । श्रुतिश्चास्मिन्नर्थे—'यो हि गुरुभ्यः सम्यगादाय विद्यामन्येभ्यो नोपदिशत्यन्तेवासिभ्यः स खल्वृणी गुरुजनस्य महदेनो विन्दती'ति । अत्रिपुत्रः पुनर्वसुः आदिर्येषां धन्वन्तरिभरद्वाजादीनां, त एवं तद्गुणसंविज्ञानं चैतत् । ते चात्रेयादयोऽग्निवेशादीनजिग्रह(त् । ? न्) आचार्यपरम्परयागता विद्या निरपवा(दा ? दाः) प्रतिष्ठां लभन्ते महाजनपरिगृहीताश्च गु(णावृत्ता ? णवत्यो) यशस्विन्यो भवन्तीति ज्ञापनार्थं ब्रह्मादिगुरुपरम्परोपन्यासः । अग्निवेशादिकानिति

अग्निवेशश्च भेळश्च जा(रू ? तू)कर्णः पराशरः ।
हारीतः क्षारपाणिश्च षडेते ब्रह्मचारिणः ॥

एते हि कायचिकित्साप्रधानाः । तस्मादत्रैतेषां ग्रहणम् । तुशब्दो विशेषे । ते त्वग्निवेशादयः षट् पृथक् प्रत्येकं स्वनामानुगतानि तन्त्राणि तेनिरे चक्रुः आयुर्वेदो मान्तर्धादिति मन्यमानाः । अत्र तुशब्दादेतद् द्योतयति —पूर्वं वेदवत् पठितं शास्त्रं स्वनामानुगतानि (म ? त)न्त्राणि कृत्वा गुरुभ्यो न्यवेदयन् । पुनर्भूमौ सर्वत्र प्रकाशितवन्तश्चेति । अपि चाग्निवेशादिकृतान्येव तन्त्राणि अत्र मूलानि गृह्यन्ते । यतस्तेषु कायचिकित्सा विशेषेणाङ्गीकृता दौपधेनपौरभ्रपौष्कलावतसौश्रुतादयः किञ्चिदपि गृह्यन्त इति च । मुनिरपि तान्येव मूलानि कृतवान् ।

अग्निवेशश्च भेळश्च जा(रू ? तू)कर्णः पराशरः ।
हारीतः क्षारपाणिश्च जगृहुस्तन्मुनेर्वचः ॥

इति । अयमपि कायचिकित्साप्रधानत्वात्तेभ्यः सारतरोच्चय इति प्रोक्तवान् । तुशब्देनात्रेयादयः समुच्चीयन्त इत्यन्ये । तथा सङ्घाते प्रत्येकमेकाङ्गप्रधानानि तन्त्राणि चक्रुरित्यर्थः । तंतमर्थं त्रायत इति तन्त्रं शास्त्रम् । अथवा त(त्य ? न्त्य)न्ते धार्यन्ते आयुर्वेदार्था एभिरिति तन्त्राणि । अथ 'तन्त्रिकुडुम्बधारणे' तस्मिन् तन्त्रमिति रूपं भवति । कुडुम्बं शरीरं तद्धारय(ती ? ति) हितो(पदेशा)हितनिवारणद्वारेणेति ॥

आगमशुद्धिं दर्शयित्वा स्वयं तन्त्रकरणे हेतुमा(ह)—

**तेभ्योऽतिविप्रकीर्णेभ्यः प्रायः सारतरोच्चयः ॥ ४ ॥**

क्रियतेऽष्टाङ्गहृदयं नातिसंक्षेपविस्तरम् ।

**तेभ्य** इत्यादि । तेभ्योऽग्निवेशादिप्रणी(ते)भ्यस्तन्त्रेभ्यः अतिविप्रकीर्णेभ्यः इतस्ततो विक्षिप्तार्थजालेभ्यः । ननु यद्यग्निवेशादिभिर्युगानुरूपैः सन्दर्भैः सङ्गृहीतानि तन्त्राणि । तत् किमिदानीमनेन तन्त्रेण कृतेनेत्यत्र चोद्ये परिहाररूपमतिविप्रकीर्णेभ्यः इति । इतस्ततो विक्षिप्तार्थजालत्वात् कश्चिदेवार्थः कस्माच्चिदेव तन्त्रात् ज्ञायते यथा कायचिकित्साग्निवेश्यादवगम्यते न सौश्रुतात् तस्माच्छल्यचिकित्सा वैदेहादूर्ध्वाङ्गचिकित्सा । तस्मात्तैस्तन्त्रैः कलौ युगे मन्दबुद्धीनां जनानां सर्वचिकित्सापरिपाटिर्न भवेत् । सङ्ग्रहे चोक्तं —

"तेषामेकैकमव्यापि समस्तव्याधिसाधने ।"

इत्यादि । अत एतेन तन्त्रेण सकलतन्त्रार्थज्ञानार्थं प्रायो बाहुल्येन सारतरोच्चयः क्रियते मयेति शेषः । उच्चीयन्ते संहन्यन्ते विक्षिप्ताः पदार्था अनेनेत्युच्चयः एकत्र राशीकृत्य स्थापनमुच्चयः । तमब्ग्रहणेनैतद् द्योतयति— संग्रहेणैव साराणामुच्चयः कृतः अनेन सारतराणां प्रधानतराणां प्रदेशानामुच्चयः क्रियत इति । प्रायःशब्देनैतद् द्योतयति क्वचित्तद्ग्रन्थोक्तिरेव, क्वचिद्दतुचर्यादोषोपक्रमणादिषु, तेभ्योऽपि विस्तरः, क्वचिद्व्रणप्रतिषेधादौ पौष्कलावतादिग्रन्थसारः, क्वचिच्च तिमिरप्रतिषेधादौ वैदेहादिग्रन्थसारश्चात्र समुच्चीयत इति । प्रायश्शब्दो विशेषार्थो वा । किं नाम क्रियमाणमित्याह— अष्टाङ्गहृदयमिति । एतच्चास्या(र्थो ? र्था)नुगतं नाम । यथा शरीरस्य सर्वा(व)यवेभ्यः प्रधानदेशो हृदयं तथेदमष्टाङ्गायुर्वेदस्य प्रधानभूतत्वात् । हृदयमिव हृ[illegible]म् । तथा च तन्त्रान्ते वक्ष्यति — 'हृदयमिव हृदयमेतत्' (इति) । अष्टाङ्गानां प्रत्येकं सारतः सङ्ग्रहणादृधृ(त ? द)यम् । अनेनैतद् द्योतयति — यथा चरके कायचिकित्सा प्राधान्येनोक्ता यथाच सौश्रुते शल्यचिकित्सा तथा नात्र केवलमष्टाङ्गायुर्वेद एवेति । संज्ञादीनां तन्त्रादौ वक्तव्यानामुपलक्षणमेतन्नामकथनं संज्ञादीनि हि तन्त्रादौ वक्तव्यानि । उक्तं च —

"संज्ञां निमित्तं कर्त्तारं परिमाणं प्रयोजनम् ।
प्रागुक्त्वा सर्वतन्त्राणां पश्चाद्व्याख्यानुवर्णये(त्) ॥"

(इ)ति । तत्रास्य शास्त्रस्याष्टाङ्गहृदयमित्येनां संज्ञां तिरोधाय वाहटमिति च संज्ञान्तरं प्रसरति । यथेन्दोरुक्तिः —

"दुर्व्याख्याविषसुप्तस्य वाहटस्यास्मदुक्त(या ? यः) ।
सन्तु संविचिदायिन्यः सदागमपरिष्कृताः ॥"

इति । अतिविप्रकीर्ण इत्यनेन निमित्तमुक्तम् । अस्य कर्ता वाहटः । कथं पु(न)रेतद् गम्यत इति चेत् पारम्पर्यात् । अथवा सङ्ग्रहशैल्या तत्क्रमापेक्षितत्वात् 'सङ्ग्रहबोधसक्त' इति परप्रोक्तशास्त्रान्तराणि परित्यज्य तद्बहुमानाच्च । तस्मिंस्तु स्वयमेव प्रोक्तवान् —

"भिषग्वरो वाहट इत्यभून्मे पितामहो नामधरोऽस्मि यस्य ।
सुतोऽभवत्तस्य च सङ्घगुप्तः तस्याप्यहं सिन्धुषु लब्धजन्मा ॥"

इति ।

अन्ये त्वाहुः — रागादिरोगानित्यस्य पद्यस्योभयार्थौ विद्यते । कर्तृद्योतनार्थम् । ........ स्य कर्ता वाहटः । कथमेतद्गम्यत इति "भिषग्वरो वाहट इत्यभून्म" इत्यादिना पद्येन । ........ स्य देशं नाम चोक्तवानाचार्यः । पुनरिदानीमष्टाङ्गहृदयकरणे स्वसिद्धान्तं बुद्धभक्तत्वं गृहाश्रमित्वं च सूचयन्नेवाह — तस्मै अपूर्ववैद्याय नमोऽस्त्विति । अपूर्ववैद्यो यः शाक्यपर्यायः तस्मै बुद्धमुनये नमोऽस्त्वित्यर्थमाच्छाद्य तस्मै परमपुरुषाय नम इत्युक्तवानिति । परिमाणं ग्रन्थानामष्टसहस्रम् । कथं पुनरिहैतद्गम्यत इति चेत् पारम्पर्यात् । प्रत्यक्षतो गणनातः ।

"द्वात्रिंशदक्षरो ग्रन्थः छन्दोविद्भिः प्रकीर्त्यते ।"

प्रयोजनमुक्तम् । संज्ञावचनं संव्यवहारार्थम् । निमित्तवचनं शास्त्राभिव्यक्त्यर्थम् । कर्तृवचनं कर्तृप्रामाण्याच्छास्त्रप्रामाण्यज्ञापनार्थम् ।

शास्त्रं प्रमाणं पुरुषप्रमाणात् तेऽपि प्रमाणं प्रणयन्त ये तद् ।
आचार्यमाहुश्च पुनर्द्वितीयं धर्मः स चाप्याचरितृप्रमाणम् ॥

परिमाणवचनं शिष्यस्य प्रतिपत्त्यर्थम् । प्रयोजनवचनमात्मेच्छानुरूपग्रहणार्थम् । तेभ्योऽष्टाङ्गहृदयं क्रियत इति वान्वयः । कीदृशमष्टाङ्गहृदयं नातिसंक्षेपविस्तरं संक्षेपश्च विस्तरश्च संक्षेपविस्तरौ अतिशयेन संक्षेपविस्तरौ यत्र तदतिसंक्षेपविस्तरम् । अतिशब्दस्यात्र प्रत्येकं सम्बन्धः । अतिसंक्षेपं किञ्चित्तन्त्रं यथा सिद्धसारादि किञ्चिच्चातिविस्तरं यथा सङ्ग्रहादि । इदं तन्त्रं नातिसंक्षेपविस्तरम् अतिसंक्षिप्तं हि स्वल्पधियां नोपकृतये । तेषां हि यथोक्तमात्रमेव श्रेयो न तु वाक्यार्थैदम्पर्यालोचनात् अधिकः परामर्शः । अतिविस्त(रं तु ? रस्तु) पाठावबोधानुष्ठाने तेषां दुःश(क्यः ? कः) स्यात् । तस्मान्मन्दमध्योत्कृष्टबुद्धिशिष्यहितार्थमेवमुक्तम् । एतच्च सर्वदोषाभावस्योपलक्षणार्थम् । नातिसंक्षिप्तविस्तृतमिति वा पाठः । सारतरोच्चयः अष्टाङ्गहृदयमिति भिन्नलिङ्गत्वेऽपि नियतलिङ्गत्वात्सामानाधिकरण्यम् ॥

अङ्गप्रसङ्गात् कानि पुनस्तान्यष्टा(ङ्गहृदया ? ङ्गा)नीत्याह —

**कायबालग्रहोर्ध्वाङ्गशल्यदंष्ट्राजरावृषान् ॥ ५ ॥**
**अष्टावङ्गानि तस्याहुश्चिकित्सा येषु संश्रिता ।**

**कायेत्यादि** । कायश्च बालश्चेत्यादिनेतरेतरयोगे द्वन्द्वः । एतान् कायादीन् तस्यायुर्वेदस्याष्टावङ्गान्याहुः वदन्ति । ब्रह्मात्रेयादय इति वाक्यशेषः । तस्य सारतरोच्चयस्येति केचित् । कायचिकित्सा कायशब्देनोच्यते । एवं बालादिष्वपि योज्यम् । वृषचिकित्सा वाजीकरणचिकि(त्सा) वृषो वाजीकरणम् । कायः शरीरं तस्य चिकित्सा कायचिकित्सा । ननु सर्वस्याश्चिकित्सायाः कायाश्रितत्वात् कायशब्दोऽर्था(त् ?) क्षिप्त एव । तत् किमर्थं कायशब्द उपादीयते । ब्रूमः । प्रकर्षार्थम् । यथाभिरूपाय कन्या देयेत्यत्राभिरूपग्रहणादभिरूपत(रे तं ?) मायेति प्रतिपाद्यते तथेहापि प्रकृष्टो यः कायः सम्पूर्णसर्वधातुः प्रकृष्टचयावस्थायुक्तः तत्सङ्ग्रहार्थं कायशब्द उपात्तः । तथाच चिञ् चयने इत्यस्माद्धातोः व्युत्पादितः कायशब्दः । तदेवं सर्वशरीरोपतापकानामामपक्काशयादिस्थानोद्भवानां ज्वररक्तपित्तातीसारादीनां रोगाणां यत्रोपशमनोपायो निगद्यते तत् कायचिकित्सा नामाङ्गम् । ननु बालदेहस्यापि कायत्वाद् बालचिकित्सायाः पृथगुपादानम(न)र्थकम् । अत्रोच्यते । बालस्य त्वसम्पूर्णसर्वधातुत्वात् प्रकृष्टचयावस्थाया अभावात्तच्चिकित्साङ्गं पृथङ्निर्दिष्टम् । तथा बा(लो ? लौ)पयिकभेषजधात्रीदुग्धलक्षणदुष्टदुग्धोद्भवव्याधिप्रशमनादिनिर्देशाच्च । नन्वेवं वृद्धस्य प्रकृष्टचयावस्थाया अभावात् तद्देहे कथं कायचिकित्सेति व्यपदेशः स्यात् । अत्र ब्रूमः । भूतपूर्वगत्या वृद्धदेहे नहि प्रकृष्टचयावस्थापूर्वमनुभूता ततो भूतपूर्वगत्या तत्र कायचिकित्सेति व्यपदेशो युक्त एव । ग्रहचिकित्सा नाम यत्र देवादिग्रहगृहीतानां प्राणिनां शान्तिकर्म विधीयते । यत्रोर्ध्वज(त्रू ? त्रु)गदानां नेत्रकर्णादिसंश्रितानामुपशमोपायो वर्ण्यते तदूर्ध्वाङ्गचिकित्सा नामाङ्गम् । अथवा कायोऽग्निस्तस्य चिकित्सा कायचिकित्सा । उक्तञ्च —

"जाठरः प्राणिनामग्निः काय इत्यभिधीयते ।
यस्तं चिकित्सेत् सीदन्तं विषमं वापि देहिनाम् ॥
आयुर्वेदाभियोगेन स वै कायचिकित्सकः ॥"

इति । अत्राप्यग्नीनां सञ्चयात्मकत्वात् जाठराग्नेः कायशब्दवाच्यत्वम् । अत्र जन्मनः प्रभृत्युपचारोपदेशस्य प्राप्तत्वाद् बालचिकित्सैव प्राग्वक्तुं युक्ता किन्तु

कायचिकित्सा, प्राधान्यात् प्रागुपन्यस्ता । प्राधान्यं च सम्पूर्णधातुत्वात् प्रकृत्यवयावस्थायुक्तत्वात् । इतश्च प्राधान्यं सर्वाङ्गव्यापित्वात् । तथाच द्रव्यरसादिमात्राशितान्नस्वरूपस्नेहाद्युपयोगासङ्गिकरोगचिकित्सादिवमनविरेचनादि - समानामप्याङ्गानां कायचिकित्सितमेवेति । अस्याश्च नान्याङ्गापेक्षा । अभीष्टाङ्गतया चास्याः प्रामाण्यम् । कायचिकित्साप्रधानोऽयमाचार्यः । अतः कायचिकित्सा प्रागुपन्यस्ता । ततोऽनन्तरं पूर्वोक्तन्यायाद्बालचिकित्सा । बालस्य च ग्रहसम्बन्धात् ग्रहचिकित्सा ततः शरीरस्य मूलरक्षणार्थमूर्ध्वाङ्गचिकित्सा शालाक्यं नाम । अथवा

"ग्रहे मर्मरुजा मर्ममुख्यमूर्ध्वाङ्गमुच्यते ।"

तत ऊर्ध्वाङ्गस्य शस्त्रसाधनसामान्येन शल्यचिकित्सा । पडि:करणसमानत्वाद् । दंष्ट्राचिकित्सा । अथवा

"विषरूषितशल्यानां प्रस्तावाद्विषभे(ष)ज(न ?)म् ।"

दंष्ट्रा विषात्मिका विषेणाशु सम्भाव्यमाने (मरणे) रसायनोपयोगो युक्त इति रसायनचिकित्सा । अथवा विषस्यापि रसायनत्वाद्रसायनकथनप्रसङ्गः । ततोऽनन्तरं वाजीकर(ण)स्य गणनयैव प्रस्तावः । अथवा रसायनसिद्धानां विषयैषिणां वाजीकरणं युक्तमिति । तथाचाधी(य ?)ते ग्रन्थकृत् —

"वाजीकरणमन्विच्छेत् सततं विषयी पुमान् ।"

इति । अनु रसायनस्य पश्चादित्यर्थः । यत्राल्पदुष्टरेतसां त(द ? दा)प्यायनप्रसादोपज(ज ? )नररूपा चिकित्सा क्रियते तद् वाजीकरणमित्युक्तः सम्बन्धः । अपि च तत्र तत्र तत्तदारम्भे वक्ष्यते च । येषु कायादिषु चिकित्सा संश्रिता व्यवस्थिता कथ्यत इति यावत् ।

"चतुर्णां भिषगादीनां शस्तानां धातुवैकृते ।
प्रवृत्तिर्धातुसाम्यार्था चिकित्सेत्यभिधीयते ॥"

इति मुनिरिव लक्षणं नेह तन्त्रकृद्व्यधत्त । चिकित्साशब्दादेवार्थस्य लब्धत्वात् । यथासंख्यं निन्दाक्षमाव्याधिप्रतीकारेषु 'गुप्तिज्किद्भ्यः सन्नि'ति सनो विधानात् कितेर्धातोर्व्याधिप्रतीकार-एव सम्भवति । चिकित्सा व्याधिप्रतीकारः ।

अन्येत्याहुः — तस्य शास्त्रस्याष्टावङ्गान्याहुर्मुनयः । कानि तान्यङ्गानि कायेत्यादि । कायादिवृषान्तास्तस्याङ्गानि भवन्ति चिकित्सा येषु संश्रिता सम्ब(न्धा ? द्धा) । चिकित्सेति, चिकित्साशब्द उच्यते । चिकित्साशब्दसंयुक्ताः कायादय इत्यर्थः । कायचिकित्सा बालचिकित्सा ग्रहचिकित्सेत्यादि द्रष्टव्यम् ।

अस्यां परिकल्पनायामष्टावङ्गानीति द्वितीयान्तयोः पदयोः प्रथमान्तयोश्च द्विरावृत्तिः स्यात् । आहुरित्यन्वये द्वितीयान्तता । भवन्तीत्यत्र प्रथमान्तता । तथा-सति वाक्यं भिद्यते । नियतलिङ्गानां भिन्नलिङ्गत्वेऽपि सामानाधिकरण्यं भवति मित्रं मे राजेतिवत् ॥

तन्त्रस्यारम्भणीयतां दर्शयित्वेदानीं तन्त्रमारभते वायुरित्यादिना ।

**वायुः पित्तं कफश्चेति त्रयो दोषाः समासतः ॥ ६ ॥**

**वायुरित्यादि** । इदं तन्त्रमायुषः पालनं तच्च शरीरे सम्बद्धम् । शरीरं च दोषधातुमलसमुदायः तेषां च धात्वादीनां दोषा एव प्रधानं यतो दोषेभ्य एव धात्वादीनां प्रवृत्तिः । तथा च धातुपोषाय रसस्य वहनपाकस्नेहकाठिन्यादयो दोषप्रसादलभ्या एवात(स ? स्त) एव पूर्वमु(प ? पा)न्यस्यन्त । हृद्याकारस्त्वेवं सम्बन्धं ब्रूते—

"इत्यङ्गान्यभिधायास्य सर्वाङ्गेषु प्रधानतः ।
चिकित्स्यान् वक्ति वातादीन् वायुरित्यादिनात्र तु ॥"

कायस्य दोषधातुमलसमुदायत्वात् तानेव दोषादीन् निर्दिदिक्षुरिदमाह — वायुरित्यादीत्यरुणदत्तः (च) शब्दः समुच्चये । वायुश्च पित्तं च कफश्च इत्यनेन प्रकारेण समासतः संक्षेपात् त्रयो दोषाः । वायोः प्राधान्यात् प्रथमग्रहणम् । प्राधान्यं च शारीरे वक्ष्यते ।

"विभुत्वादाशुकारित्वाद् बलित्वादन्यकोपनात् ।
स्वातन्त्र्याद् बहुरोगत्वाद् दोषाणां प्रवरोऽनिलः ॥"

इति । बहुरोगत्वमन्यत्राप्युक्तम् —

"अशीतिर्वातजा रोगाश्चत्वारिंशच्च पित्तजाः ।
विंशतिः श्लेष्मजाः ॥"

इति । अत एव वायोरनन्तरं पित्तस्य प्राधान्यं तदनु श्लेष्मणः । सङ्ग्रहे चोक्तं—

"क्रमान्मरुत्पित्तकफान्, सर्वत्र सदृशे बले ।
वातादीनां यथापूर्वं यतः स्वाभाविकं बलम् ॥"

इति । आह — वातप्रकृतीनामल्पबलत्वादिनिर्देशाद्वायोरप्राधान्यम् । उच्यते । न । प्रकृतितो हीनत्वेऽपि पूर्वोक्तैः कारणैर्बहुभिः प्राधान्यनिश्चयात् । ननु प्रशस्तत्वादिह धातुसंज्ञै ? (ज्ञयै)व वातादयो निर्देष्टुं न्याय्याः न दोषसंज्ञया । अ(स्त्वे ? स्त्ये)वैतत् किन्तु रसादिदूषणपूर्वकमेवैषां विकारकरणसामर्थ्यमिति प्रदर्शनार्थं दोषसंज्ञया निर्दिष्टाः न धातुसंज्ञया । न ह्येते धातुरूपा जातुचिद्वि-

कारं कुर्वते देहधारणस्वभावत्वात्। अत एव मुनिनापि पूर्वं दोषसंज्ञयैव निर्दिष्टाः। तथाच तद्ग्रन्थः—

"वायुः पित्तं कफश्चोक्तः शारीरो दोषसङ्ग्रहः"

इति।

"वातपित्तकफा दोषास्त्रय एव समासतः।"

इत्येव निर्देशे कर्तव्येऽसमासनिर्देशेन वाताद्यधिष्ठानानां दूष्याणामपि विशिष्टव्याधिहेतुत्वं सूचयति। असमासकरणं पृथक् पृथक् प्राधान्याख्यापनार्थम्। इतिशब्दो भेदान्तर्भावपरः। उद्देशादेवाधिगते त्रित्वे पुनस्त्रिग्रहणं नियमार्थं त्रय एव न चतुर्थोऽस्तीति। धान्वन्तरीया रक्तं चतुर्थं दोषमाहुः। तेषां ह्ययमभिप्रायः—(त ? य)थैव वातादीनां पृथक् स्थानल(र ?)क्षणकार्यहेतुविकारचिकित्सादोषसंज्ञाव्युपदेशस्तथा रक्तस्यापि। वातादीनामपि हि स्थानादिभेदकृतो भेदः तदेकत्वे तेषामप्येकत्वं स्यात्। एते च स्थानादयो रक्तस्यापि भेदकाः पृथङ्निर्दिश्यन्ते। तत्र स्थानं सर्वदेहव्यापित्वेऽपि प्लीहयकृती। उक्तं च—'रक्तवहानां तु स्रोतसां यकृन्मूलं प्लीहा चे'ति। लक्षणं—

"पद्मेन्द्रगोपहेमाविशशलोहितलोहितम्।"

इति। कार्यं देहस्योत्पत्तिस्थिती। हेतुः 'काले चानवसेचन'मित्यादि। विकाराः रक्तार्शःप्रदररक्तगुल्मशोणितातिसारविसर्पप्लीहादयः। चिकित्सा सिराव्यधादिकर्म। तथा दोषसंज्ञा कुष्ठचिकित्सितादौ दृश्यते। चरकेऽप्युक्तं—

"कफवाते जितप्राये कुष्ठं शोणितमेव वा।
यदि कुप्यति वातस्य क्रियमाणे चिकित्सिते॥
यथोल्बणस्य दोषस्य तत्र कार्यं भिषग्जितम्॥"

इति। तदेतदसारम्। स्थानादयो ह्यस्य दूष्यस्य सतः कथं दोषत्वं कर्तुं पारयन्ति। तथाच रक्तस्येवेतरेषामपि षण्णां धातूनां मलानां च स्थानादयो दृश्यन्ते। प्राधान्यादन्वर्थनामत्वाच्च वातादीनामेव दोषत्वं, न रसादीनाम्। वातादयो हि स्वातन्त्र्यात् प्रधानाः। दूषयन्तीति दोषा इति यथा चैषानुगतार्था संज्ञा वातादिषु। रसादयस्तु पारतन्त्र्यादप्रधानाः ते वातादिभिर्दूष्यन्ते इति दूष्याः। तस्माद्रक्तस्य दूष्यत्वं न दोषत्वम्। यद्येवं वातादीनामप्यन्योन्यदूषणाद्दूष्यत्वं स्यात्। पित्तेन हि श्लेष्मा दूष्यत इति दृश्यते च। तथाच पाण्डुरोगनिदाने 'पित्तप्रधाना' इत्यारभ्य यावत् 'श्लेष्मत्वक्रक्तमांसानि प्रदूष्ये'त्यादि। तदत्र

श्लेष्मा पित्तेन दूष्यते। तस्माच्छ्लेष्मवद्रक्तस्यापि दोषत्वप्रसङ्ग इति यो मन्येत तं प्रति ब्रूमः। विषमोऽयमुपन्यासः वातादयो हि सर्वदैव रसादीन् दूषयन्ति न तु रसादयः कदाचिदपि वातादीन् दूषयन्ति। वातादीनां तु मध्ये यः कश्चिद्दूष्यते स तेषामेवान्यतमेन। किञ्च प्रकृतिरोगानुपदेशाच्च न रक्तस्य दोषत्वम्। यदि रक्तमपि दोषान्तरं स्यात्तर्हि वातादिदोषान्तरप्रकृतिवद्रक्तप्रकृतिरपि तन्त्रे कश्चित्पुरुष उपदिश्यते। नहि वातादीनां रक्तस्य च दोषत्वे समाने वातादीनामेव प्रकृत्यारम्भो न रक्तस्येति कश्चिन्नियमहेतुरस्ति। तथा तन्त्रकारैर्ज्वरादयो वातादिविशेषणविशिष्टा एवोक्ताः। यथा वातज्वरोऽयं, पित्तज्वरोऽयं, श्लेष्मज्वरोऽयमिति। रक्तज्वरोऽयमिति न निर्दिष्टः। येऽपि रक्तजाविकाराः रक्तार्शःप्रदररक्तगुल्मविसर्पादयस्तेष्वपि घृतदग्धन्यायेनौपचारिको व्यपदेशो बोध्यः। तथा तदुपक्रमनिर्देशोऽपि। उक्तं च सङ्ग्रहे—

"रसादिस्थेषु दोषेषु व्याधयः सम्भवन्ति ये।
तज्जा इत्युपचारेण तानाहुर्घृतदाहवत्॥"

इति। घृतसङ्क्रान्तावयवेनाग्निना दग्धे घृतदग्धव्यपदेशवद्रक्तस्थैर्वातादिभिर्दोषैर्जातो रक्तजोऽयमित्युच्यते। यत्र कचिद्रक्तस्य दोषसंज्ञा 'स्वयं प्रवृत्तं तद्दोषमुपेक्षेते'त्येवमादिषु दृश्यते सा संज्ञामात्रेणैव नासावनुगतार्था। पुरीषादीनामपि संज्ञामात्रेण व्यवहारो दृश्यते। यथा—

"न भृतं बहुदोषाय देयं यन्न विरेचनम्।"

इत्यादि। अत्र पुरीषस्य दोषत्वमुक्तम्। तथोदरचिकित्सिते उदकस्य ज्वरचिकित्सिते चामस्य।

"दोषेण भस्मने वाग्नौ छन्नेऽन्नं न विपच्यते।
तस्मादादोषपचनाज्ज्वरितानुपवासयेत्॥"

इति।

"न चैनं त्वरमाणोऽन्तः सदोषमवरोहयेत्।"

इत्यत्र पूयस्य। अथवा रक्तपुरीषादिषु दोषव्यपदेशो दोषसाधर्म्यात्। दोषा हि पीडाकराः। तथा रक्तादयोऽपि पीडाकराः। तेष्वौपचारिको दोषशब्दः न मुख्यः। तथान्येषामप्यतदात्मनां तद्धर्मवतामुप(च ? चा)रतस्तच्छब्दवाच्यत्वं तन्त्रयुक्तौ प्रदर्शितम्। अथवा यद्यपि रसादयो धातवः परस्परं दूष्या दूषकाश्च तथापि दूषकत्वमात्रेण गौणस्तेषु दोषशब्दः न मुख्यः नियमेन

दोषैर्दूष्यत्वाद् दूष्यसंज्ञैव मुख्या । वातादीनामेव नियमेन दूषकत्वान्मुख्यं दोषत्वम् । ननु वातादयोऽपि स्वैः स्वैर्निदानैर्दूष्यन्ते तन्निदानानि तु नान्यै-रिति तेषामेव मुख्यं दोषत्वम् । ब्रूमः । निदा(नो ? नं) हि रूक्षादि कस्यचि-च्छमकं कस्यचिद्दूषकम् । वातादयस्तु दूषका एवेति । तदेवं स्थानादिभे-देऽपि यथा रसादीनां धातूनां मलानां च न दोषत्वं तथा रक्तस्यापीत्यङ्गी-कर्तव्यम् । उत्सृज्यतामनेन कारणेनास्य दोषपक्षपाताभिनिवेशः । (यः ? यत्) पुनस्तीर्थान्तरीयाणां दोषत्वप्रसि(द्ध ? द्धे)र्दोषत्वं रक्तस्याङ्गीकार्यमिति तन्न । नहि यद्यत्तन्त्रान्तरीयैः प्रमाणविरुद्धमप्यङ्गीकृतं यथा सप्तकर्माणि द्वौ विपाकैः द्रव्यरसगुणवीर्यविपाककर्मप्रभावाः (त ? सप्तप )दार्थाः षडिन्द्रियाणि पञ्च रसा इत्येवमादि तदपि सर्वमस्माभिः प्रामाणिकैरप्यङ्गीकर्तव्यम् । तीर्थान्तरीयाणामपि केषाचिद्रक्तं न दोषः । तदेवं वातादयस्त्रय एव दोषाः न रक्तमिति स्थित-मेतत् । समासतस्त्रय एव विस्तरतस्तु संसर्गसन्निपाततारतम्यादिना आनन्त्यं यान्तीति ॥ ६ ॥

दोषानुक्त्वा तेषां वृत्तिमाह —

**विकृताऽविकृता देहं घ्नन्ति ते वर्तयन्ति च ।**

**विकृतेत्यादि** । विकृताश्चाविकृताश्च विकृताविकृताः । विकृतिर्नाम प्रा-गवस्थापरित्यागेनावस्थान्तरगमनम् । ते वातादयः विकृताः स्वरूपाच्चलिता देहं घ्नन्ति नानाविधैर्विकारैः शरीरमुपतपन्ति नानुयन्ति वा आगमो हि यदा ह्यस्मिन् शरीरे धातवो वैषम्यमापद्यन्ते तदा क्लेशं विनाशं वा प्राप्नोति इति धातवो दोषाः । देहग्रहणमत्र जीवितोपलक्षणार्थं वा । अविकृताः समाः देहं वर्तयन्ति । विकृतानां दोषाणां प्रागुपन्यासस्तेषां प्रकृत्यवस्थापनं प्रति भिषजा यत्नवता भ-वितव्यमिति सूचनार्थम् । अन्यथा महान् प्रत्यवायः स्यात् । स्वस्थानस्थिति-रविकृतिः । स्वस्थानमुल्लङ्घ्य गमनं विकृतिः ॥

तज्ज्ञानार्थं स्थानमाह —

**ते व्यापिनोऽपि हृन्नाभ्योरधोमध्योर्ध्वसंश्रयाः ॥ ७ ॥**

**ते व्यापिनोऽपीत्यादि** । अधश्च मध्यं चोर्ध्वं चाधोमध्योर्ध्वानि तानि संश्रय आश्रयो येषां त एवम् । हृच्च नाभिश्च हृन्नाभी तयोः । ते वातादयः सकलशरीरचरा अपि हृन्नाभ्योरधोमध्योर्ध्वसंश्रयाः । विशेषेणेति वाक्यशेषः ।

यस्मिन् खलु पदेऽनुच्चार्यमाणेऽर्थगतिं पश्यन्त्याचार्यास्तच्छेषयन्त्युच्चारणकाले । तेन विनाप्यभिधेयासिद्धेः । व्याख्याकाले तु मन्दबुद्धिप्रतिपत्तये व्याचक्षते । स वाक्यशेषः । तत्र नाभेरधो वायोः स्थानम् । हृन्नाभ्योर्मध्यं पित्तस्य । हृदयादूर्ध्वं श्लेष्मणः । हृन्नाभ्योर्मध्यं पित्तस्य स्थानमिति वक्तुकामेन हृन्नाभ्योर-(ध ऊ? धो मध्यो)र्ध्व(मि? संश्रया इ)त्युक्तं ग्रन्थलाघवापेक्षया ।

नाभ्यधो नाभिवक्षस्था विशेषाद्व्यापिनोऽपि ते ।

इति वक्तव्ये एवमुक्तिरधोमध्योर्ध्वसकलभागानां विशेषस्थानत्वप्रकाशनाय ॥

सकलदेहव्यापिनां तेषां नियतदेशत्वमुक्त्वा सकलकालव्यापिनामपि तेषां नियतकालत्वं दर्शयति —

**वयोऽहोरात्रिभुक्तानां तेऽन्तमध्यादिगाः क्रमात् ।**

**वय** इत्यादि । ते वातादयः क्रमादन्तमध्यादिगाः । कस्येति । वयसः पुरुषायुषस्यान्तः पश्चिमो भागो वायोः कोपकालः, मध्यो भागः (पित्तस्य, आद्यो भागः) कफस्य । एवमह्नो रात्रेश्च योज्यम् । भुक्तस्य च भुक्तं निगीर्य आहारः पथ्याहार इत्यर्थः । नहि वातप्रकोपनादीनामाहाराणामेवं (अ? क्र)मस्सम्भवतीति तस्यान्तो जीर्णावस्था मध्यं विदाहावस्था आद्यावस्था भुक्तमात्रावस्था यस्यां मधुरीभाव आहारस्य । यद्यपि चाहारस्य जठराग्निसंयोगवशाद् बह्व्योऽपि सूक्ष्मा अवस्थाः सम्भाव्यन्ते, तथाप्येतासामेव सुतरामुपयोगित्वादिह निर्देशः । तथा चैता एव तिस्रोऽवस्थाः स्वकर्म दर्शयन्ति । वक्ष्यति हि— 'आदौ षड्रसमप्यन्नं मधुरीभूतम्' । इत्यादि ।

"वयसोऽह्नो निशायाश्च भुक्तेरन्ते समीरणः ।
मध्ये पित्तं कफस्त्वादौ विवर्धन्ते मनागमी" ॥

दोषानुक्त्वा दोषकार्याणां प्रधानत्वाद्विशिष्टदोषात्मकत्वाद्दोषसाम्यवैषम्यात् शरीरोपकारापकारहेतुत्वादग्निमाह —

**तैर्भवेद्विषमस्तीक्ष्णो मन्दश्चाग्निः समैः समः ॥ ८ ॥**

**तैर्भवेदि**त्यादि । तै(वश्चा? श्च वा)तादिभिः पुरुषस्य यथाक्रमेणाग्निर्विषमस्तीक्ष्णो मन्दश्च भवेत् । न ह्ये(ते? के)नापि दोषेण हीना वातादयः शरीरजनने समर्थाः । अवश्यं सर्वैरेव भवितव्यम् । यश्चैषामप्येकव्यपदेशः स उ(त्क? त्क)र्षकृतः । वातो(त्क? त्क)र्षेण विषमः पित्तोत्कर्षेण तीक्ष्णः श्लेष्मोत्कर्षेण मन्दः । समैर्हान्युत्कर्षवर्जितैः समः । लक्षणं चैषामङ्गविभागे वक्ष्यति—'यः पचेत् सम्य-

गेवान्न'मित्यादि । यत्र तु द्वयोर्दोषयोरुत्कर्षस्तत्र सद्वैद्येन स्वबुद्धया कल्प्यम् । यथा वातपित्तयोरुत्कर्षेण वायोर्योगवाहित्वात्तीक्ष्णतरः एवं वातकफयोरुत्कर्षेण मन्दतरः कफपित्तयोस्तूत्कर्षेणाहारविशेषात् कदाचित्तीक्ष्णः कदाचिन्मन्द इति । एवमेव प्रकृत्यारम्भकैरुत्तरकालमाहारादिजनितैश्च दोषैः प्राकृत(वैकृत)भेदेन द्वैविद्ध्यम् । नन्वेवं तर्हि वैकृतिकोऽप्यग्निः स्यात् तदा प्राकृताग्नेर्नाशेन प्रकृतिहान्या रिष्टोत्पत्तिः स्यात् । उच्यते । नहि पूर्वस्योत्तरेण विनाशः क्रियते अपितु अभिभ(व? वः)समाग्निविपरीतान् प्रकृत्यग्नीन् विकृत्यग्नींश्च समाग्निं कुर्वीतेत्युत्तरत्र वचनात् । चशब्देन संसर्गः समुच्चीयत इति द्व्याकारः वह्निः स्वयं भूतादुत्पद्यते ॥ ८ ॥

अग्निचातुर्विध्यमुक्त्वा तदाश्रयस्य कोष्ठस्य चातुर्विध्यं दर्शयति । अग्न्यनन्तरं ज्ञेयेषु कोष्ठस्यैव प्राधान्याद्दोषकार्यत्वाच्च —

**कोष्ठः क्रूरो मृदुर्मध्यो मध्यः स्यात्तैः समैरपि ।**

**कोष्ठ** इत्यादि । तैर्वातादिभिः यथाक्रमं कोष्ठः क्रूरो मृदुर्मध्यश्च स्यात् । वातोत्कर्षेण क्रूरः पित्तोत्कर्षेण मृदुः श्लेष्मोत्कर्षेण मध्यः समैरपि हान्युत्कर्षवर्जितैर्दोषैर्मध्य एव । क्रूरादीनां च लक्षणं वमनविरेचन(विधौ) वक्ष्यति । ननु समैर्वातादिभिः कथं मध्यकोष्ठता स्यादिति । ब्रूमः । समानां वतादीनां मध्ये द्वयोर्वातपित्तयोः स्वं स्वं क्रूरकोष्ठत्वमृदुकोष्ठत्वलक्षणाख्यं विरुद्धकर्म युगपत् कर्तुं न घटते । तृतीयस्तु कफ एव । सोऽनयोर्मध्ये मध्यमां वृत्तिमाश्रित्य स्थितो नैकेनापि सह विरुध्यते अत (ए)व तत्कार्यं मध्यकोष्ठतालक्षणं ते वातपित्ते निषेद्धुं नैव घटेते । एवं च तेनावश्यमात्मीयं मध्यकोष्ठतालक्षणं कर्म कर्तव्यम् । यन्न वातकर्मणः क्रूरकोष्ठतालक्षणस्य विरुद्धं, न च पित्तकर्मणः मृदुकोष्ठतालक्षणस्य । अतो मध्यकोष्ठतैव समैर्वातादिभिर्न्याय्या । उभयोर्मध्यकोष्ठयोः कथं भेदो लक्ष्यत इति चेत् पूर्वो मध्यकोष्ठः स्वप्रमाणाधिकेन श्लेष्मणा जन्यते। द्वितीयस्तु मध्यकोष्ठः 'तैः समैरपी'ति समग्रहणात् समदोषमध्यस्थितेन समेनैव स्वप्रमाणस्थेन श्लेष्मणा भवतीत्यनयोर्भेदः । लक्षणभेदोऽपि दृश्यते यथा —

"अधिकश्लेष्मणा मध्यो वमने व्यक्तिमेष्यति ।
समदोषस्तु यो मध्यो विरेके स सुखो भवेत् ॥"

इति ।

"श्लेष्मोत्तरं छर्दयते ह्यदुःखं विरिच्यते मन्दकफस्तु सम्यक् ।" -

इति च ।

"बीजद्वये सम्मिलिते तस्य यत् कोष्ठतां व्रजेत् ।
अङ्गं तत्राधिकैर्दोषैर्बीजगैः कोष्ठसम्भवः ॥"

दोषकार्येषु परिदृष्टां प्रकृतिमाह —

**शुक्रार्तवस्थैर्जन्मादौ विषेणेव विषक्रमेः ॥ ९ ॥**
**तैश्च तिस्रः प्रकृतयो हीनमध्योत्तमाः पृथक् ।**
**समधातुः समस्तासु श्रेष्ठा निन्द्या द्विदोषजाः ॥ १० ॥**

शुक्रार्तवस्थैरित्यादि । प्रकृतिस्वरूपप्रतिपादकोऽयं ग्रन्थो व्याचिख्यासुं मां दुर्बोधतया व्यामोहयति तथापि (अ)त्र यदस्मा(कं) बुद्धिगम्यं तदिदानीं श्रीमद्गुरूपदेशशरणेनारुणदत्तादिवचनसारसध्रीचा मया व्या(ख्या)यते । स्यादित्येकवचनान्तस्याप्यनुवर्तमानस्येहार्थाद् बहुवचनान्तत्वम् । चस्समुच्चये भिन्नक्रमः । पृथक् तैः वातादिभिस्तिस्रः प्रकृतयश्च स्युः मिश्रदोषाणां तूद्देशकथने पृथग्ग्रहणमेव लिङ्गम् । वातादीनां पृथक्त्वं मिश्रीभावश्च सप्तप्रकृतिहेतुरित्युक्तं भवति । वातपित्तकफेभ्यस्तिस्रः प्रकृतय इति वचनं कारणत्रैविध्यापेक्षं भवति । यदा पुनः कारणभूतानां त्रयाणां दोषाणां भेदः परिकल्प्यते तदा सप्तप्रकृतयो भवन्ति । स्वरूपमेतासामङ्गविभागे वक्ष्यति । किंभूतैर्दोषैः शुक्लार्तवस्थैः शुक्लं पुंबीजं द्वित्रबिन्दुकावस्थम्, ऋतौ भवमार्तवं रक्तं स्त्री(ज़ी ? बीजं)द्वित्रबिन्दुकावस्थं शुक्लं चार्तवं च शुक्लार्तवे तत्रस्थैः पिण्डीभूतशुक्लार्तवस्थैरिति । यद्यपि च सर्वशरीरव्यापित्वात्ते सदैव शुक्लार्तवस्थाः स्युस्तथापीह शुक्लार्तवस्थैरिति कृतं विशेषार्थं गर्भस्य । पित्रोरानन्दावस्थायां अन्त्यधातुनिषेककाले विशेषेण यदा शुक्लार्तवस्थास्ते स्युरि(त्यर्थः ? ति) । यदा ते प्रकृतयः स्युर्निषिच्यन्ते स्त्रीपुरुषस्थाः । एवं निषिक्तेषु वातादिषु यो दोषः स्वगुणत उद्रिक्तो भवेदितरदोषगुणाभ्यां तेन प्रकृतिः । उक्तं च (शुक्लशोणित इत्याह ?) जन्मादौ शुक्लशोणितसंयोगसमये यदा जीवः शुक्लशोणिते विशति तदाधिकैर्दोषैः प्रकृतयो जायन्ते । इह स्त्रीपुरुषयोः समदोषयोः संयोगे शुक्लशोणिताभ्यां वातपित्तश्लेष्मांशा निषिच्यन्ते स्त्रीपुरुषस्थाः । एवं निषिक्तेषु वातादिषु यो दोषः स्वगुणत उद्रिक्तो भवेदितरदोषगुणाभ्यां तेन प्रकृतिः । उक्तञ्च —

"शुक्रशोणितसंयोगे यो दोषस्तूत्कटो भवेत् ।
तेन प्रकृतिः ॥"

इति । अन्यत्रापि —

"शुक्रासृग्योगमारभ्य दशमं मासमाश्रितः ।
गर्भे समुत्कटो दोषः प्रकृतित्वं प्रपद्यते ॥"

इति । अयमप्याचार्यो वक्ष्यति —

"शुक्रासृग्गर्भिणीभोज्यचेष्टागर्भाशयर्तुषु ।
यः स्याद्दोषोऽधिकस्तेन प्रकृतिः सप्तधोदिता ॥"

इति । तस्मादत्रापि शुक्रार्तवस्थैरित्युक्ते शुक्रार्तवयोर्योदोषोऽधिकस्तेन प्रकृतिरित्यर्थादुक्तं भवति । तस्मादेको दोषो द्वौ वा दोषौ त्रयो वा दोषा अधिकाः प्राकृतास्तद्व्यपदेश्यायाः प्रकृतेः कारणम् ।

"दोषोद्रेकस्तु भूतोत्थो नापथ्याभ्याससम्भवः ।
कषायभावितं किट्टमयसस्तद्गुणोत्कटम् ॥
यथा तथा दोषवासाद्बीजं तद्गुणवद् भवेत् ॥"

इति । जन्मादावित्यनभिव्यक्तशरीरकालस्यादावित्यरुणदत्तः । गर्भाधानकाल इतीन्दुः । प्रकृतिनाम अर्थादुक्तं भवति । तस्मादेको दोषो द्वौ वा दोषौ त्रयो वा दोषा अधिकाः । शरीरस्वरूपतज्जन्ममरणान्तरालभाविनी गर्भावक्रान्तिसमये स्वकारणोद्रेकजनिता निर्विकाररूपा कापि दोषस्थितिः । आजीवितं रूपेन्द्रियस्वरच्छायाद्यात्मकः स्वभावो यः स प्रकृतिशब्दवाच्य इत्यरुणदत्तः । ननु 'विकृताः घ्नन्ती'ति पू( र्वो ? र्वमु )क्तम् । विकृतैः कथं प्रकृतिः । ब्रूमः । वातादीनां दूषणस्वभावानामपि शुक्रार्तवस्थावस्थायां प्रकृतिनिष्पादनं प्रत्यनुपहन्तृत्वमस्तीति दृष्टान्तेन दर्शयति — विषेणेवेति — अचिन्त्यप्रभावत्वाद्धेतुफलभावस्य यथा विषेणान्यमारणस्वभावेनापि विषकृमेः विषयोनेः कीटस्य वृश्चिकादेः जन्म प्रकृतिसम्भवश्च दृश्यते तद्वदिहापीति । उक्तञ्च — (अश्ववैद्यके)

"सर्वप्राणभृदो ह( स्ति ? न्ति ) यथा कायगतं विषम् ।
तस्मिन्नेव समुत्पन्ना दृश्यन्ते कृमयो यथा ॥
तथा विषसमो दोषः प्रकृतिं न विबाधते ।
विषजन्तुरिव ज्ञेया प्रकृतिर्निर्विकारिणी ॥"

इति समधातुविषयम् । ननु अधिकेन दोषेण कथं प्रकृतिजन्म अधिकदोषाधिष्ठितयोः शुक्रार्तवयोर्गर्भे प्रत्यसामर्थ्यात् । वक्ष्यति च —

"वातादिकुणपग्रन्थिपूयक्षीणमलाह्वयम् ।
बीजासमर्थं रेतोऽस्रम् ॥"

इतीत्याशङ्कायामत्यन्ताधिक्यं नेति दृष्टान्तेनैव (स्त ? सू)चयति — यथा मारणेनापि विषेण विषकृमेरुत्पत्तिरिति । सर्पादिसविषप्राणिदेहे विषवासनामात्रमेव तस्मात्तज्जातानामपि वृश्चिकादीनां सविषत्वं तत्राप्यधिकेन विषेण प्राण्युपघात एव दृश्यत इत्याद्यत्रत्यमेतदर्थजातं स्वयमेव प्रकटीकुर्वन्नाह सङ्ग्रहे विचित्रकथने —

"सर्वाङ्गव्यापि तेषां च शुक्लवत् संश्रितं विषम् ।
तन्मांसमुपयोगाय मांसवर्गे च पठ्यते ॥"

इत्यनेन विषस्य वासनामात्रमेवेति प्रोक्तवान्

"सर्पादिशवकोथेभ्यो वृश्चिकानां समुद्भवः ।"

शवकोथे विषवासनैव विद्यते ।

"ते तैरेव पुनर्दष्टाः सद्यो जहति जीवितम् ।"

इत्यनेनाधिकेनोपघातं प्रोक्तवान् । दोषैकदेशसंयुक्तबीजजातानां प्रकृतीनां दोषेभ्योऽपि तीक्ष्णता । यथा लवणनिक्षिप्तं फलं कालान्तरेण लवणादपि तीक्ष्णतरं भवतीत्येतद(नु ? नू)दितमिन्दुना ते सर्पादयस्तैरेव शतपदीवृश्चिकादिभिर्विषवासनासंयुक्तशवकोथजातैर्दष्टाः सद्य एव जीवितं त्यजन्तीति व्याख्यानं ब्रुवता । तथा प्रकृतिरपि दोषस्वभा(व्यं ? वं) बाधितुं समर्थेत्यर्थः । अन्ये तैरेवेत्यत्र सर्पादिभिरिति वदन्ति । बीजे दोषस्य वासनैव विद्यते इति तन्त्रान्तरेऽप्युक्तम् ।

"पुष्पाधिवासतो यद्वदुदके गन्धसम्भवम् ।
तद्वद्दोषगुणाश्लेषाद्देहे चित्ते च संस्कृतिः ॥"

इति । जलेऽपि पाटलादिपुष्पेणाधिकसंयुक्तेन विकृतिरेव तथा बीजेऽपीत्यर्थः ।

"शाकादौ हिङ्गुमरिचलवणादेस्तु दृश्यते ।
समत्वमधिकत्वं च तथा दोषस्य बीजयोः ॥"

इति च ।

"इयती समतादोषस्येयत्यधिकतेति च ।
न शक्यते विर्निर्देष्टुं तथाह्यस्यैव सा भिदा ॥"

इति च ।

तस्माद्दोषस्यात्यन्ताधिक्यं नेति स्थितम्। 'वातादिकुणपग्रन्थी'त्यादिना कुपितदोषाश्रययोः शुक्र(न्तसो? क्तयो)र्गर्भे प्रत्यसामर्थ्यं वक्ष्यते न त्वधिकमात्रदोषाधिष्ठानयोः। तस्माद्दोषैर्बीजवासनारूपेण स्थितैः प्रकृतयो भवेयुरिति तत्प्रकृतिभावितस्य कायस्य तद्दोषोद्रेकात्तद्युक्तचिकित्साकरणार्थं प्रकृत्यपेक्षणम्। उक्तञ्च—

"वातप्रशमनाहारा वातप्रकृतयो मताः।
प्राप्नुवन्ति हि तान् रोगान् वाततः सम्भवन्ति ये॥"

इत्यादि। ननु स्वभावशब्द एवात्र प्रकटतरार्थः कस्मान्न कृतः। अधिकार्थद्योतनाय। प्रकृतिशब्दस्य द्वावर्थौ धातुसाम्यं स्वभावश्च तत्र चरकमुनिप्रभृतयो धातुसाम्यं (स?) प्रकृतिशब्दवाच्यमाहुः। यथा—

"विकारो धातुवैषम्यं साम्यं प्रकृतिरुच्यते।"

इति। खरनादादयस्तु—स्वभावं, 'स्वभावः प्रकृतिर्मता' इति तस्मान्नानामुनिसङ्ग्रहार्थं प्रकृतिशब्द उभयार्थोऽत्र निर्दिष्टः। ननूत्कटदोषजत्वे प्रकृतेर्विकारत्वप्रसङ्ग इति। सत्यम्। विकार एव प्रकृतिः। तर्हि प्रकृतिविकृतिपदयोः पर्यायत्वप्रसङ्गः। न। पारिभाषिकत्वात् प्रकृतिपदस्य। गुणमिश्रिते विकारे प्रकृतिरिति व्यवहारः। उक्तञ्च—

"अभावः प्रकृतेरत्र सर्वेषामपि सम्भवात्।
उच्छ्रयाच्चेन्न साम्यं तद्विकारः प्रकृतिर्न सा॥
प्रकृतौ यात्र रोगोक्तिरुक्ता साम्ये कथं भवेत्।
एष्टव्या प्रकृतिस्तस्माद्विकारो गुणमिश्रितः॥"

इति। विकारः प्रकृतिरिति वातप्रकृत्यादिपरं समधातुर्निर्विकारिणीति। ननु च वक्ष्यति—'रोगस्तु दोषवैषम्य'मिति तत्कथं प्रकृतेर्दोषाधिकभवेऽपि रोगव्यवहाराभावः। ब्रूमः। औपचारिको नित्यसात्म्यत्वात् पीडाल्पत्वाच्च खलतिपलिताद्य(हि? भि)भूतवत्। खलतिपलितादयोऽभिभवन्ति न च तैरभि(भवो? भूतो) व्याधित इत्युच्यते अपितु ज्वरादिभिरेव। तद्वत् प्रकृतावपि भविष्यतीति। किञ्च जन्मप्रभृति भावितत्वादुल्बणा अपि प्रकृत्यारम्भका दोषा न कदाचिद् व्याधीन् जनयन्ति। उत्तरकालमाहारादिवशाद्यथासम्भवं च वातादयो वैकृताः सम्भवन्ति। तथाचोक्तं सङ्ग्रहे—द्विविधा वातादयः प्राकृता वैकृताश्च। तत्र प्राकृताः सप्तविधायाः प्रकृतेर्हेतुभूताः शरीरैकजन्मानः। ते शरीरधारणाद्धातुसंज्ञाः। दोषाख्यानां विकृतानां बीजभूता न मुमूर्षोः स्वरूपाच्चलन्ति। वैकृतास्तु

गर्भादभिनिस्सृतस्याहारस्य मलाः सम्भवन्ति प्राकृतेष्ववरोहन्ति । ते कालादिवशेन स्वप्रमाणवृद्धिक्षययोगाद्देहमनुगृह्णन्ति दूषयन्ति चेति । हीनमध्योत्तमा इति । वातेन प्रकृति(ही ? र्हीं)ना पित्तेन मध्या श्लेष्मणोत्तमा समस्ता(स्त ? सु)प्रकृतिषु मध्ये समधातुः प्रकृतिः श्रेष्ठा समधातुः समदोषा समत्वमविषमत्वम् । यद्यपि वातादीनामञ्जलिमानतः परस्परं न साम्यं भवति वातस्य पदरूपत्वेनाकाशादेरिवाञ्जलिमानस्य कर्तुमशक्यत्वात् । पित्तश्लेष्मणोश्च क्रमेण पञ्चषडञ्जलित्वात् । तथापि स्वप्रमाणावस्थितिलक्षणस्य साम्यस्य वातादीनां यथाक्रममुत्साहोच्छ्वासपक्त्यूष्मस्थिरत्वस्निग्धत्वादिभिरविकृतैः स्वकार्यलिङ्गैरनुमितस्य सम्भव इति । समधातुशब्दो दोषवाची । वचनं हि —

"धातूनां दूषणाद्दोषाः मलिनीकरणान्मलाः ।
वातपित्तकफाः प्रोक्ताः धातवो देहधारणात् ॥"

इति । समशब्दोपादाने(न) च त्रिदोषजत्वं सर्वासां प्रकृतीनां ज्ञापयत्याचार्यः । अन्यथा 'त्रिदोषप्रकृतिः श्रेष्ठे'ति ब्रूयात् । तस्मात् सर्वाः प्रकृतयस्त्रिदोषारब्धाः । भूयसा तु व्यपदेशः । अत्र धातुशब्दोपादानात् त्रिदोषजनितायाः पकृतेर्द्वैविध्यं सूचयति समत्रिदोषैका उत्कटत्रिदोषान्या । उक्तञ्च —

"पृथक् तिस्रो द्विकैस्तिस्र एका सर्वसमुच्छ्रयात् ।
इति सप्तप्रकृतयोस्त्रिभिर्दोषैर्भवन्ति या ॥"

इति । अन्यत्रापि—पितृभ्यां समदोषाभ्यां यो दोषांशो निषिच्यते ।
बीजे तेनाधिवसता समेन समधातुता ।
अधिकेन प्रकृतयो वातिकाद्या भवन्ति च ॥

इति । तर्हि कथं सप्तेतिग्रहणं, रोगलक्षणायाः प्रकृतेरवधारणार्थम् । अन्या श्रेष्ठारोग्यलक्षणा, समदोषारब्धां पकृतिं विना वाताद्यारब्धानां प्रकृतीनां रोगानुबन्धित्वं दोषवैषम्यात् । विकृतत्वेऽप्यागमः प्रकृतित्वस्य हेतुः । तथाच मुनिः —

"समपित्तानिलकफाः केचिद् गर्भादि[1] मानवाः ।
दृश्यन्ते वातळाः केचित् पित्तळाः श्लेष्मळास्तथा ॥"
तेषामनातुराः पूर्वे वातळाद्याः सदातुराः ।
दोषानुशयिताप्येषां देहे[2] प्रकृतिरुच्यते ॥"

इति ।

१. 'गर्भादि गर्भाधानादि शुक्रशोणितजीवसंमूर्च्छनादिति' यावत् । २. 'दोषप्रकृतिरिति' ग्रन्थान्तरे.

अस्यार्थः — समपित्तानिलकफा इति पुरुषविवक्षया बहुवचनम् । प्रकृतिरेकैव सा समधातुरित्यत्रोक्ता । तथेति द्वन्द्वजास्तिस्रस्सान्निपातजा एका गृह्यन्ते । तेषामनातुरा इति रोगव्यवहारयोगिनी न भवति सा प्रकृतिः । तत्रापि बहुवचनं पुरुषविषयम् । वातलाद्याः सप्तप्रकृतयो रोगलक्षणाः वातलादिप्रकृतिमन्तः पुरुषा उच्यन्ते । प्रकृतीनां रोगत्वे तद्योगिनामातुरत्वमुपपद्यते । तदेवोपपादयति — दोषेति । अनुशयः संस्कारः अनुशयो यस्यास्ति सोऽनुशयी तस्य भावोऽनुशयिता अनुवृत्तिरित्यर्थः । एषां वातलादीनां दोषानुशयिता दोषसंस्कारवृत्तिर्दोषप्रकृतिः । उच्यत इत्यनेनोपचारादुच्यत इति यावत् । कथं देहस्य दोषानुशयित्वात् । ननूत्तमा श्लेष्मप्रकृतिरुक्ता समदोषा च श्रेष्ठा उत्तमेति कथमेतत् स्यात् । ब्रूमः । वातपित्तप्रकृतिभ्यां श्लेष्मप्रकृतिरुत्तमा प्रशस्याप्रधाना समधातुस्तु कफप्रकृतेरप्युत्तमा श्रेष्ठा । तथाचा'तिशायने तमबिष्ठनावि'त्यतिशायनार्थे इष्ठनि 'प्रशस्यस्य श्र' इति श्रादेशं कृत्वा श्रेष्ठशब्दो व्युत्पादितः । तस्मात् समधातुः प्रशस्यतमेत्यर्थोऽवतिष्ठते । तस्यास्तूभयथा प्रकृतित्वं विकृत्यनागमनादे(रा)रोग्यरूपत्वाच्च श्रेष्ठत्वमेव च प्रतिपादयितुं धातुशब्दो वातादीनां वाचकोऽत्र निर्दिष्टो न दोषशब्दः । समा धातवो धारणस्वभावा यस्यां न दूषणस्वभावा इत्यर्थः । उल्बणद्विदोषजातास्तिस्रः प्रकृतयो निन्द्याः, तत्प्रकृतिः पुरुषस्य बहुव्याधित्वात् । अत एव दोषशब्दोऽत्र निर्दिष्टो न धातुशब्दः । ननु शुक्लासृगित्यादिना सर्वासां प्रकृतीनामधिकदोषारब्धत्ववचनात् कथं समदोषप्रकृतेरनातुरत्वमसमदोषारब्धप्रकृतेरातुरत्वमित्यागमाभिप्रायेण विरुद्धत्वादधिकशब्दस्य बाहुल्येन व्यपदेश इति । ह्याकारस्त्वाह—तैश्च तिस्र इत्यत्र चशब्देन गुणाः समुच्चीयन्ते रजस्तमस्सत्त्वानि । तैरपि वातादिवत् सप्त प्रकृतयः स्युः । समधातुः समदोषा समगुणा च इति । उक्तञ्च —

"गुणदोषाधिवासाभ्यां जन्मादौ शुक्लशोणिते ।
संस्कारः स्यात् स्वभावाख्यः चित्ते स प्रकृतिस्तनौ ॥"

इति ॥ १० ॥

दोषाणां संख्यास्थानकर्माण्युक्त्वा यैर्गुणैर्वातादयो यथावज्ज्ञायन्ते तदुत्थाश्च विकाराः तान् विवक्षुरिदमाह तत्र रूक्षेत्यादिना—

**तत्र रूक्षो लघुः शीतः खरः सूक्ष्मश्चलोऽनिलः ।**

वातादीनां प्रकृत्यादिकारणत्वमुक्तं तेषां स्वरूपं न ज्ञातमतस्तद्विज्ञानार्थमाह — तत्रेत्यादि । 'स्वरूपज्ञानाद्दोषासमानसमानज्ञानजनितरोगज्ञानं च

स्या'दिति हाटकः। 'प्रकृतिविशेषज्ञापनार्थं दोषगुणानाहे'ति हृद्याकारः। तत्रेति निर्धारणे सप्तमी तेषु वातादिषु मध्येऽनिलो रूक्षः रूक्षगुणयोगात् गुणगुणिनोश्चाभेदोपचारात्। एवं लघ्वादयो बोद्धव्याः। रूक्षः रौक्ष्ययुक्तः लघुर्लाघवयुक्तः गुरुविशेष एव लघुरिति केचित्। तथा शीतः। खरः परुषः। सूक्ष्मः सूक्ष्मस्रोतोगामित्वात्। चलः चञ्चलः नैकत्र स्थितिशीलः। नन्वमूर्तस्य वायोः किं रूक्षादिगुणकथनेन। उच्यते। रूक्षादय एव वायोर्व्यञ्जकाः। तथाहि यत्राङ्गेऽङ्गावयवे वा विकृतिमभ्युपेत्यावतिष्ठते तत्राप्येत एव गुणास्तस्य प्रकाशकाः। रूक्षादीनामसमासकरणं दारुणादिगुणान्तरप्रापणार्थम्। सत्स्वपि बहुषु गुणेषु रूक्षादीनामभिधानं तेषां प्राधान्यप्रदर्शनार्थम्। रूक्षगुणस्य प्रागुपादानं प्राधान्यात्। तथाहि रूक्षेण गुणेनैकान्तिकं दोषनिरूपणं भवति न शैत्यादिना तस्य साधारणत्वात्। कफेऽपि हि शैत्यमस्ति लाघवमपि च पित्ते रूक्षादिगु(णं? णत्वं) वायोरनुमानगम्यमेव। यत्र वायोः कोपस्तत्र रूक्षता भवति अथवा रूक्षलघ्वादिना वृद्धिश्च। ननु वायोर्योगवाहित्वात् कथं शीतगुणत्वमुपपद्यते वक्ष्यति हि —

"पवने योगवाहित्वाच्छीतं श्लेष्मयुते भवेत्।
दाहः पित्तयुते॥"

इति। 'शीतकृत् सोमसंश्रयादि'ति योगवाहित्वम्। तदेवं शीतेन गुणेन युक्तः शीतं करोत्युष्णेन युक्तो दाहं करोति। अतः स्वयमनुष्णोऽशीत इत्यर्थादुक्तं भवति। अपिच वैशेषिकैरप्यनुष्णाशीतो वायुरिष्टः त(दे? दा) वायोः शीतगुणता नोपपद्यते। अत्र संचक्ष्महे। यद्यपि वायोर्योगवाहित्वाच्छैत्यं, तथापि स्वाभाविकमपि किञ्चिच्छैत्यमस्ति कुपितस्य शीतकार्यकरत्वात्। हेत्वौषधयोः शीतोष्णपाठाच्च॥

**पित्तं सस्नेहतीक्ष्णोष्णं लघु विस्रं सरं द्रवम्॥ ११॥**

पित्तमित्यादि। तत्र दोषेषु पित्तं सस्नेहादिगुणयुक्तं सशब्द ईषदर्थे तस्य स्नेहपदेनैव सम्बन्धः न तीक्ष्णोष्णाभ्यां तयोः पित्तस्य मुख्यगुणत्वात्। स्नेह(न्तु? स्तु) किञ्चिदेवास्मिन्। कथमेतज्ज्ञायत इति चेत् पित्तप्रतीकारे सर्पिष्पानोपदेशात्। वक्ष्यति हि — 'पित्तस्य सर्पिषः पान'मिति। 'तथा तैलं घृतं मध्वि'ति च। सशब्दश्चायमप्रधानार्थवृत्तोऽस्मिन्नल्पत्वमु(त्ता? त्था)पयति। दृष्टश्चायमीषदर्थे प्रदेशान्तरेऽपि। यथा 'काकमाची वृष्या सोष्णा रसायना-

मि'ति । अत्र हि किञ्चिदुष्णेति गम्यते । तथाचोवाच मुनिः—

'काकमाचीरसायनं नात्युष्णशीता स्वर्या च' ।

इति । सस्नेहं च तीक्ष्णं चोष्णं च तीक्ष्णं शीघ्रकारि विस्रं दुर्गन्धि 'विस्रं स्यादामगन्धी'त्यमरः । सरं व्यासिशीलं पुरीषविस्रंसनं वा द्रवमकठिनम् ॥ ११ ॥

**स्निग्धः शीतो गुरुर्मन्दः श्लक्ष्णो मृत्स्नः स्थिरः कफः ।**

**स्निग्ध** इत्यादि । कफः स्नि(ग्धं ? ग्धः) स्निग्धगुणयोगात् । मन्दश्चिरकारी । श्लक्ष्णः अपरुषः मृत्स्नः कचकचायमानः पिच्छिलविशेषः । स्थिरः अव्यापनशीलः । अव्यापन्नश्चिरं तिष्ठतीति वा । एवं हि दोषाणां स्वरूपे ज्ञाते वातादिहेतुकस्य रोगग्रामस्य स्वरूपं च ज्ञातं भवति । कपिलबलस्त्वेषां लक्षणानि रसतो निर्दिशति—

"कट्वम्ललवणं पित्तं स्वाद्वम्ललवणः कफः ।
कषायतिक्तकटुको वायुर्दृष्टोऽनुमानतः ॥"

इति । अतः समानरसानां द्रव्याणां वृद्धिकरत्वम् एषु विपरीतानां विपर्ययकरत्वमिति ॥

एषां दोषाणां मिश्रीभूतानां तन्त्रव्यवहारार्थमायुर्वेदप्रसिद्धं संज्ञाद्वयं चिकीर्षुरिदमाह—

**संसर्गः सन्निपातश्च तद्द्वित्रिक्षयकोपतः ॥ १२ ॥**

**संसर्ग** इत्यादि । द्वौ च त्रयश्च द्वित्रयः क्षयश्च कोपश्च क्षयकोपं द्वित्रयाणां क्षयकोपं द्वित्रिक्षयकोपं तेषां दोषाणां द्वित्रिक्षयकोपः (द्वित्रिक्षयकोपं ?) ततस्तद्द्वित्रिक्षयकोपतः तेषां दोषाणां मध्ये द्वयोर्दोषयोः क्षयकोपात् संयोगः संसर्गाख्यः । त्रयाणां दोषाणां क्षयकोपात् संयोगः सन्निपाताख्यः । हृद्याकारस्त्वाह—तेषां वातादीनां द्विक्षयकोपौ संसर्गसंज्ञौ । त्रयाणां कोपः क्षयश्च सन्निपातसंज्ञौ । क्षयकोपत इति प्रथमार्थे सार्वविभक्तिकस्तसिल् । इति (तसिल्) दोषधातुमलसमुदायो हि देह इति ॥ १२ ॥

दोषानुक्त्वा धातुमलानाह—

**रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः ।**
**सप्त दूष्याः**

**रसे**त्यादि । धातवः सप्त । रसश्चासृक्मांसञ्च मेदश्चास्थि च मज्जा च

शुक्रश्चेति। एते शरीरधारणाद्धातुसंज्ञाः। उच्चारणादेव सिद्धायां संख्यायां पुनः सप्तवचनमवधारणार्थं सप्तैवेति। यद्यपि देहधारणाद्धातुत्वं दोषमलानामप्यस्ति यस्मात्तैरपि विना शरीरं शीर्यते तथाप्यमी सप्तैव मुख्या धातुशब्दवाच्याः एषां मुख्या धातुसंज्ञेत्यर्थः। (एव?) ते च धातवो दूष्या वातादिभिर्दूषणीयाः न कदाचिदपि दोषाः। रक्तजो व्याधिरित्यादिव्यवहार उपचारात्। सप्तग्रहणमोजसः कदाचिदपि दूष्यत्वं नेति सूचयितुमिति पाठ्यकारः॥

अत्र मला उच्यन्ते—

**मला मूत्रशकृत्स्वेदादयोऽपि च॥ १३॥**

मूत्रशकृत्स्वेदादयो मलाः मलिनीकरणान्मलसंज्ञाः। अपिशब्दात्तेऽपि दूष्याः। तथाच प्रमेहे मूत्रक्लेदयोरपि कफेन दूषणमुक्तम्। चशब्दाद्धातवः। मूत्रशकृदादीनामपि देहधारकत्वाद्धातुसंज्ञा विद्यते। अनयोर्धातुमलशब्दौ मुख्यौ दोषाणां भाक्तौ। आदिशब्देन कर्णमललसिकादीनां परिग्रहः॥ १३॥

दोषानुक्त्वा तेषां वृद्धिहानिकारणपादप्रसङ्गेन सर्वभावानां वृद्धिहानिकारणमाह —

**वृद्धिः समानैः सर्वेषां विपरीतैर्विपर्ययः।**

**वृद्धिरित्यादि**। अथवा दोषादीनुक्त्वा पश्चादाहारपरिज्ञानार्थमाहेति सम्बन्धः। समानैः सदृशैः सर्वेषां भावानां दोषादीनां वृद्धिराप्यायनं विपरीतैर्विसदृशैस्तेषामेव विपर्ययः। कस्य विपरीतैः प्रकृतत्वात् समानानां विपरीतैर्विपर्ययोऽपि प्रकृतत्वाद् वृद्धेः। एवं समाना भावाः परस्परं वृद्धिकारणम्। समानविपरीतयोर्लक्षणमप्यनेन प्रतिपाद्यते —

"येन वृद्धिर्भवेद्यस्य तत्तस्य सदृशं मतम्।
यद्वा क्षयकरं तस्य विपरीतं तदुच्यते॥"

तच्च समानं त्रिविधम्। द्रव्यसमानं गुणसमानं कर्मसमानं च। समानैरिति बहुवचननिर्देशस्त्रयाणामपि सङ्ग्रहार्थः। अन्यथात्र समानेन वृद्धिर्विपरीतेन संक्षय इत्यवगन्तव्यम्। तत्र समानं यज्जात्या समानमेकजातीयं तद्यथा—वायुरन्येन वायुना वर्धते रक्तं रक्तेन मांसं मांसेन मेदो मेदसा अस्थि तरुणास्थ्ना मज्जा मज्ज्ञा शुक्रं शुक्रेन आमगर्भेण गर्भ इत्यादि। गुणसमाने पञ्चमहाभूतात्मकस्य रसादिभावेन परिणतस्य ये यदात्मकाः महाभूतावयवस्वभावाः ते तदात्मकानेव शरीरगतान् भावान् विशेषेणाभिवर्धयन्ति न तथा-

न्यान् । न जातिः समाना गुणा एव समानाः । तत्तु (वि ? द्वि)विधं समानगुणोद्भूतं समानगुणभूयिष्ठोद्भूतं च । तत्र समानगुणोद्भूतं यथा गोक्षीरद्रव्यमोजोद्रव्यस्यासमानजातीयमपि समानगुणत्वाद्वृद्धिकारणम् । ये यावन्त ओजसो गुणास्त एव तावन्तश्च दुग्धेऽपि । तथाह मुनिः —

"स्वादु शीतं मृदु स्निग्धं बहलश्लक्ष्णपिच्छिलम् ।
गुरु मन्दं प्रसन्नं च गव्यं दशगुणं पयः ॥
तदेवं गुणमेवौजः सामान्यादभिवर्धयेत् ॥

इति । समानगुणभूयिष्ठोद्भूतं यथा — ओजसो जीवनीयगुणो वर्धनहेतुः । ओजसो हि ये गुणाः स्वाद्वादयः ते सर्वे जीवनीयगुणे न सन्ति किन्तु कतिपय एव विद्यन्ते । तस्माद्भूयिष्ठगुणसामान्याज्जीवन्त्यादय ओजोवृद्धये किञ्चिदेव जायन्ते नतु क्षीरवदतिशयेन । कर्मसमानं तद्यथा — धावनादिका क्रिया वायोर्वृद्धिकरी क्रोधादिका पित्तस्य आस्यादिवास्वप्नादिका श्लेष्मण इत्यादि । ननु कर्मसामान्यं नोपपद्यते नहि वातादीनां (न ?) धावनादिकं कर्माभ्यन्तरेऽस्ति तदभावाच्च बाह्यं कर्म धावनादि न समानमिति नास्ति कर्मसामान्यम् । अत्राचक्ष्महे । सत्यं द्रव्यगुणसामान्यवत् कर्मसामान्यं मुख्यं नास्ति किन्तु शरीरसमवेतं हि धावनप्लवनादि वायुसमवेतं कर्माभिवर्धयति तदाधारस्यापि वायोरुपचयमादधाति यथा मरिचगतं रौक्ष्यलाघवादि । अथवा धावनादेः कर्मणो वातादिभिः समानक्रियतामात्रमेव सामान्यमभिप्रेतम् । आगमश्चात्र — कर्मापि यद्यस्य धातोः समानक्रियत्वेन वृद्धिकरं तत्तदासेव्यमिति । तस्माद्वायोर्धावनादिभिर्धात्वपचयादिकार्यकरत्वेन समानक्रियया वृद्धिराधीयते । एवं पित्तश्लेष्मणोरपि द्रष्टव्यम् । उतवा वृद्धिः समानैरिति सामान्यवद्भिरित्यर्थः । तेन धावनादीनि च स्वसामान्याभिसम्बन्धाद्वातादेर्वृद्धिमावहन्ति । नचास्मिन्नर्थे सामान्यस्योभयत्रावस्थितिरपेक्षणीया । अन्यथा मन्दकफाणितादीनि द्रव्याण्येकसामान्याभावे न वातादीनामभिवृद्धये कल्पेरन् । कल्पन्ते तु । तस्माद्यत्र यत्र द्रव्ये गुणे कर्मणि वा वातादिभिरेकसामान्यस्यासम्भवः सम्भवश्च कार्यस्य तत्र तत्र प्रभावापरपर्यायस्य स्वसामान्यमात्रस्याभिवृद्धिकारणत्वमङ्गीकर्तव्यं तथा दृष्टत्वादिति । अरुणदत्तस्त्वाह—धावनादिका क्रिया शरीरगतसौम्यधात्वपचयकृत् तदपचयाच्च समनन्तरं चलनलक्षणक्रियावतो वायुद्रव्यस्य वृद्धिं दृष्ट्वा क्रियामात्रमस्य वर्धनहेतुरित्युपचर्यते । एवं

क्रोधादिसन्तापादिक्रियातः समनन्तरं पित्तस्य वृद्धिं दृष्ट्वा, तथा स्वप्नादि-क्रियातः समनन्तरं कफस्य वृद्धिं दृष्ट्वा क्रियामात्रमस्य वर्धनहेतुरित्युपचर्यते। किञ्च यद्यप्येषां वातपित्तकफानां स्वहेतोर्वृद्धिः तथापि क्रियातः समनन्तरं वृद्धिं दृष्ट्वा क्रिया कृतेत्युपचर्यते। तथाच (स (? सु)सुप्तस्य शारीराः क्रियाः श्लेष्मक्षयकारिण्यः सर्वा निवर्तन्ते। ततोऽपचयहेत्वभावादनारतं वहता रसमलेनाभिवर्धितः कफः स्वप्नेन वर्धित उच्यते। अतएव हेतोरास्यादिभिर्न स्वप्नवत् कफवृद्धिरुपलभ्यते। नहि तेषु शारीराणां क्रियाणां सर्वथा निवर्त्तनं यथा स्वप्नावस्थायाम्। तस्मात् कफस्योपचारात् स्वप्नेन वृद्धिः। एतदेवोररीकृत्य मुनिनैवमस्य लक्षणमभ्यधायि। 'कर्मापि यद्यस्य धातोर्वृद्धिकरं तस्य वृद्धिमभिलषता तत्तदासेव्य'मिति न पुनः कर्मापि यद्यस्य कर्मणः समान-क्रियतया वृद्धिकरमिति। तदेवमुपचारात् कर्मसामान्यस्यास्तित्वं निश्चीयते। न केवलं समानैरेव वृद्धिः विपरीतैर्विपर्ययोऽपि। विपरीतं च त्रिविधं द्रव्य-गुणकर्मभेदात्। अत्रापि बहुवचननिर्देशस्त्रयाणां परिग्रहार्थः। तत्र द्रव्या-(ख्यः ? ख्यं) विपरीतं यथा गवेधुकादिद्रव्यं मांसादेः। तद्धि गवेधुकादिद्रव्य-मुपचितमांसादेः पुंसः कार्श्यमावहति मांसादिस्निग्धद्रव्यविपरीतत्वात्। धातु-पुष्टये न सम्पद्यते। गुणाख्यं विपरीतं यथा — ओजसो मद्यम्। ओजोद्रव्यं हि गुरुशीतादिदशगुणं मद्यमपि लघूष्णादिदशगुणम्।

"गुरुत्वं लाघवाच्छैत्यमौष्ण्यादम्लस्वभावतः।
माधुर्यं मार्दवं तेऽक्षात् प्रसादं चाशुभावनात्॥
रौक्ष्यात् स्नेहं व्यवायित्वात् स्थिरत्वं श्लक्ष्णतां तथा।
विकाषिभावात् पैच्छिल्यं वैशद्यात् सान्द्रतां तथा॥
सौक्ष्म्यान्मद्यं निहन्त्येवमोजसः स्वगुणैर्गुणान्॥"

इति। तथा शीध्वारनाले श्लेष्मणः। ताभ्यां हि आप्यत्वादस्याभिवृद्धिक-राभ्यां भवितव्यम्। अथ तु गुणैः प्रतिलोमैः रूक्षोष्णादिभिः क्षपयत इति। ननु द्रव्यविपरीतमुदाहर्तुं कथं 'गवेधुकान्नं कर्शनीयाना'मिति। तस्मादुपचितमांसादे-र्गवेधुकाद्यभ्यवहारेण कार्श्यदर्शनाद् द्रव्यविपरीतोदाहरणमेवन्याय्यम्। एवं समानैर्वृद्धिरित्युक्तम्। कर्माख्यं विपरीतं यथा—आस्याशयनादि वायोरपचय-हेतुः। हर्षादि पित्तस्य। व्याया(मा)दि श्लेष्मणः। एवमन्यत्रापि द्रष्टव्यम्। एव ननु शारीरस्य मांसस्य ग्राह्यं छागादिकं मांसं मांसत्वेन द्रव्यत्वेन च समानं सत्त्वयापि

समानम् । अत एकस्मिन्नपि द्रव्येऽनेकसामान्यसम्भवात् कतमत् सामान्यं वृद्धिकारणं गृह्णीमः । ब्रूमः । सजातिसामान्यं गृह्यते । द्रव्यत्वसामान्ये तु गृह्यमाणे गवेधुकादिद्रव्यमपि द्रव्यत्वसामान्यान्मांसवृद्धये स्यात् । सत्तासमानत्वे तु गृह्यमाणे सर्वेणैव सर्वस्य वृद्धि स्यात् । ततश्च तैलाद्यपि वातादेर्वृद्धये स्यान्नोपशमाय । तथा विपरीतैर्विपर्यय इत्येतदनवका(श ? शं) स्यात् । तस्मात् सजातीयमेव सामान्यं युक्तं ग्रहीतुम् । हाटकोऽप्येवमेवाह — एतत् समानमसमानं च सामान्यविशेषरूपं मांसत्वादिकमपेक्ष्य कल्पनीयं नतु द्रव्यत्वसत्तादिकं महाविषयं सामान्यम् । नहि महासामान्यापेक्षायां कस्यचिदपि वस्तुनो वस्त्वन्तरेण समानत्वव्यभिचारः विपरीतत्वसम्भवो वा । यतश्चैकस्यैव वस्तुनो दध्यादेः केनचित् कफादिना सादृश्यमन्येन वातादिना वैसादृश्यम् । अतस्तस्य सकृदेवोभयत्रोभयस्य वृद्धिहानिलक्षणस्य कार्यस्य प्रवृत्तिर्न विरुध्यते । कथमेको विरुद्धकार्यकर इति वेद् । ब्रूमः । विरुद्धयोः कारणभूतयोर्द्रव्ययोरेकस्मिन् द्रव्ये समावेशात् । नहि विरुद्धयोर्जलतेजसोरेकत्र द्रव्ये न सम्भवः पञ्चभूतात्मकत्वाद् द्रव्याणाम् । अथैवमुच्यते यथा सुरया द्रव्यत्वेन सामान्ये स्तन्यस्य वृद्धिः क्रियते तथैव कथमम्लत्वादुष्णत्वाच्च विपरीतत्वे तस्यैव न क्षय(मि ? इ)ति । एतदपि न, तथाविधस्वभावात् । नहि स्वभावः पर्यनुयोक्तव्य इति । उक्तञ्च —

"कटुपाकरसस्निग्धगुरुत्वैः कफवातजित् ।
लशुनो वातकफकृन्न च तैरेव यद् गुणैः ॥"

इति । ननु यदि सजातिसामान्यं गृह्यते गुणवैपरीत्यमित्योजसो मद्यं ह्रासकरमुदाहृतं याव(का ? ता) द्रव्यवैपरीत्यादेवैतत् क्षयकरं युक्तम् ओजसो हि मद्यं विजातीयत्वाद्विपरीतम् । अत्रापि ब्रूमहे । गुणैरप्यस्य विपरीतत्वाद् गुणवैपरीत्यादेव मद्यमोजसो ह्रासकरं (स ? न)द्रव्यवैपरीत्यात् । सत्यपि द्रव्यवैपरीत्ये तस्य ह्यन्यान्यपि द्रव्याणि विपरीतानि काञ्चिकादीनि विद्यन्ते नच तानि मद्यवदत्यन्तं समानानि अत एतानि न तथोजःक्षयकराणि । तस्मादो(ष ? ज)सो मद्यं गुणवैपरीत्यात् क्षयहेतुरिति न्याय्यमेव । प(री ? रं)यो यावता चांशेन यस्य समानस्तेनैव तावता वांशेन स तस्य वृद्धिकारणम् । एवं विपरीतोऽपि क्षयकारणम् । सङ्ग्रहे तूक्तम् — धातवः खलु शारीराः समानैः समानगुणभूयिष्ठैरप्याहारविहारैरभ्यस्यमानैर्वृद्धिमाप्नुवन्ति विपरीतैर्विपरीतगुणभूयिष्ठैर्वा क्षयमाप्नुवन्ति । तथा हि देहधातवो ये गुरवस्ते गुरुभिरैक्यकारित-

योपचीयन्ते लघवश्च लघुभिः । तद्विपरीतैस्तु पृथ(त्वरा ? क्त्वका)रिभिरपचीयन्ते । तस्मादन्येभ्योऽपि द्रव्येभ्यः सुतरां रक्तमाप्यायते रक्तेन मांसं मांसेन मेदः मेदसा अस्थि तरुणास्थ्ना मज्ज्ञा मज्जा शुक्रं शुक्रेनामगर्भेण गर्भः । यत्र त्वेवंलक्षणेन सामान्येन सामान्यवतामाहारविहाराणामसान्निध्यं स्यात् सन्निहितानां चाभ्यवहरणमशक्यं विरुद्धत्वाद् घृणित्वादन्यस्माद्वा कारणान्तरात् तत्र समानगुणभूयिष्ठानामन्यप्रकृतीनामाहारविहाराणामभ्यवहारः श्रेया(न्) । तद्यथा शुक्रक्षये क्षीरसर्पिषोरु(प्र ? प)योगः मधुरस्निग्धशीतानामपरेषां च द्रव्याणाम् । कर्मापि यद्यस्य धातोः समानक्रि(या ? यत्वा)द् वृद्धिकरं तस्य वृद्धिमभिलषता तत्तदासेव्यम् । तथैव चातुल्यक्रियतया ह्रासकरं तदर्थिनेति । सर्वं चैतदाध्यात्मिकान् भावानधिकृत्योक्तं न बाह्यम् । तेनोष्णवीर्याणां सर्षपातस्यादीनां शीतकाले जन्माभिवृद्धी न विरुद्धे । कृष्णात्रेयस्तु गुणसामान्यमेवेच्छति । तद्ग्रन्थो हि —

"एषां तुल्यगुणैर्वृद्धिर्विपरीतैः क्षयो भवेत् ।"

इति ॥

वातादीनामाध्यात्मिकानां बाह्येन द्रव्येण सादृश्यमसादृश्यं च द्रव्यं च महाभूतकार्यं रसवीर्यविपाकप्रभावैः कार्यकरमतस्ते रसादय उच्यन्ते —

**रसाः स्वाद्वम्ललवणतिक्तोषणकषायकाः ॥ १४ ॥**

**षड् द्रव्यमाश्रितास्ते तु यथापूर्वं बलावहाः ।**

**रसा** इत्यादि । अथवा दोषादीनां समानासमानाभ्यां वृद्धिक्षयावभिधायेदानीं समानासमानात्मकान् रसादीनाह — स्वाद्वादयः षड्रसाः । रसनेन्द्रियग्राह्यत्वाद्रसाः । स्वादुरग्रेऽभिहितः प्राधान्यात् । द्रव्यं हरीतक्यादि पञ्चभूतात्मकमाश्रिताः तत्र स्थिता इत्यर्थः । एतेन च विशेषणेन युक्त्या द्रव्यस्यापि लक्षणं तन्त्रकृतोक्तं भवति रसादीनामाश्रयो द्रव्यमिति ।

"यत्राश्रिताः कर्मगुणाः कारणं समवायि यत् ।
तद् द्रव्यम्"

इति चरके । ते च रसाः यथापूर्वं पूर्वानतिक्रमेण स्वभावविशेषाद्बलावहाः । यो यः पूर्वो यथापूर्वम् । मधुरः सर्वेभ्यो बलकरः, तस्मात् किञ्चिद्धीनोऽम्लः, ततोऽपि लवणः, सर्वजघन्यः कषायः । पाठादेव षट्त्वे लब्धे षड्ग्रहणं परमते क्षेपार्थम् । न्यूनाधिकं च वर्णयन्त्याचार्याः । रसानां गृह्यत्वादेक एव रस इत्युवाच द्रव्यकाव्यः, यं तं पञ्चानामिन्द्रियार्थानामन्यतमं जिह्वावैषयिकं

भावमाचक्षते कुशलाः । स पुनरुदकादनन्य इति निमिः । मधुराम्ललवणातक्त-कटुककषायक्षाराः सप्त रसा इति । अपरिसंख्येया रसा इति काङ्कायनः आश्रयगुणकर्मसंस्वादविशेषाणामपरिसंख्येयत्वात् । एवमादयः पक्षाः षड्रस-वादिना भगवतात्रेयेण निराकृताः । कथं तेषां षण्णां रसानां योनिरुदकं योनिः कारणम् । अपरिसंख्येया रसा इति यदुक्तं तन्न षड्रसाश्रयाणां द्रव्याणां परम्परसंसर्गेण गुणकर्मसंस्वादविशेषाणामपरिसंख्येय(त्व)सिद्धेरिति । क्षरणात् क्षारः नासौ रसः द्रव्यं तत् । तथाच (मु)निः — 'क्षरणात् क्षारो नासौ रसो द्रव्यं तदि'त्यादि । क्षरणं नाम क्रिया । 'क्षर सञ्चलन' इति धातुः । अतो न रसः गुणानां क्रिया (त्वा)भावात् । नच वह्निावप्राप्तपाकानां क्षारसंज्ञा । तस्मात् षडेव रसाः । संसर्गतोऽनुरसतस्तारतम्यपरिकल्पनया च भिद्यन्ते । तथापि षट्त्वं नातिक्राम(ती ? न्ती)ति ॥

अत्र केचित् चोदयन्ति द्रव्यं पूर्वं वक्तव्यं द्रव्याश्रयत्वाद्रसानामिति । नैतद्युक्तम् । आश्रयाश्रयिसम्बन्ध(व्या ? स्या)विवक्षितत्वाद् विवक्षितस्य च प्रधानकारणत्वादाहारमूलस्य रसस्य । उक्तञ्च क्षारपाणिना — आहारस्य मूलं रसास्तच्चिकित्साधिष्ठानमिति । वैतरणेनाप्युक्तं —

"प्राणिनां मूलमाहारः शरीरोपचयस्य च ।
स रसेषु सदायत्तो रसा द्रव्याश्रिताः स्मृताः ॥"

इति । अथवा विपरीतैर्विपर्यय इति प्रकृतस्य व्याधिनिग्रहहेतोराधिकरणप्रदर्शनार्थं रसेत्यादिना संशोधनसङ्गमनाहारसंज्ञितं चिकित्सितं रसायत्तमिति ब्रवीति । अत्रैवमारम्भाच्चिकित्सायां रसप्राधान्यमुपदिष्टं भवति । उक्तञ्च क्षारपाणिना — स्नेहनस्वेदनवमनविरेचनास्थापनानुवासनशिरोविरेचनप्रदेहाभ्यङ्गोच्छादनोपनंह-नसाङ्ग्राहिकाग्निदीपनसंशमनलेखनबृंहणरसायनवाजीकरणोष्णशीतप्रवृत्तयो हिताहिते च षट्सु रसेष्वायत्तमिति । निमिनाप्युक्तं —

"रसमूला चिकित्सेयं चतुष्पादा षडाश्रया ।
भिषगुत्तमसम्पन्ना प्राप्नोति महतीं क्रियाम् ॥"

इति चिकित्सा भूयसा रसमुखेनैव । एवं व्याधिनिग्रहहेतोराधारत्वं रसानामुपदिश्य तदधिकरणप्रदर्शनार्थं द्रव्यमाश्रिता इत्युक्तवान् । द्रव्यस्य हि प्राधान्यमाधारत्वेन ॥

रसानुक्त्वा तेषां दोषप्रशमनप्रकोपनविभागं दर्शयति—

**तत्राद्या मारुतं घ्नन्ति त्रयस्तिक्तादयः कफम् ॥ १५ ॥**
**कषायतिक्तमधुराः पित्तमन्ये तु कुर्वते ।**

तत्रेत्यादि । अन्ये तु कुर्वत इत्येतद् घ्नन्तीत्यनेन मधुरादिभिः प्रत्येकं सम्बध्यते । तेषु रसेषु मध्ये आद्यास्त्रयः स्वाद्वम्ललवणा मारुतं घ्नन्ति । ततोऽन्ये ये त्रयः तिक्तोषणकषायास्ते तमेव मारुतं कुर्वते । तिक्तादयस्त्रयस्तिक्तोषणकषायाः कफं घ्नन्ति । अन्ये तु त्रयः स्वाद्वम्ललवणास्तमेव कफं कुर्वते । कषायतिक्तमधुराः पित्तं घ्नन्ति, अन्ये तु त्रयोऽम्ललवणोषणास्तदेव पित्तं कुर्वते । अन्ये तु कुर्वत इत्यनेन मुनिप्रोक्तान्यवाक्यस्य वैचित्र्येणार्थनिर्णयः । तथाच मुनिः —

"स्वाद्वम्ललवणा वायुं कषायस्वादुतिक्तकाः ।
जयन्ति पित्तं श्लेष्माणं कषायकटुतिक्तकाः ॥
*कफं स्वाद्वम्ललवणाः कषायकटुतिक्तकाः ।
जयन्त्य(था)निलं पित्तं कट्वम्ललवणा रसाः ॥"

इति । तच्चोत्सर्गरूपं वाक्यम् । अस्य ह्यपवादो वक्ष्यते —

"मधुरं श्लेष्मळं प्रायो जीर्णाच्छालियवादृते ।"

इत्यादि । अयञ्चापवादः सर्वत्र स्मरणीयः । यद्यपि वायोर्नीरसत्वात् स्वाद्वादीनां रसतो न वैपरीत्यं तथाप्येतेषां रूक्षादिवायुगुणविपरीतैः स्नेहादिगुणैर्नियतसहचरितत्वाद्विपरीतगुणत्वेन वातप्रशमनत्वमुपपद्यते । तथास्य जनकेष्वप्ययमेव प्रकारः । तथा श्लेष्मणो विपरीतगुणत्वादम्ललवणयोः शमकत्वेऽपि वृद्धिकरत्वं तद्गुणैर्गुर्वादिभिर्नियतसहचरितत्वात् । तिक्तकषाययोश्च कटुकविपाकित्वेऽपि शीतवीर्यत्वाद्रूक्षत्वाच्च पित्तहन्तृत्वं युक्तम् । वक्ष्यति हि —

"रसं विपाकस्तौ वीर्यं प्रभावस्तान् व्यपोहति ।
बलसाम्ये रसादीनामिति नैसर्गिकं बलम् ॥"

इति । बाहुल्योपयोगित्वाच्च मधुरादीनां पूर्वमुपन्यासः । तथाहि यथाऽहारविधौ बाहुल्येन मधुरादीनामुपयोगो न तथा तिक्तादीनाम् । स्वादुरग्रेभिहितः प्राधान्यात् ॥

---

* मुद्रितचरके न दृश्यते ।

एषां च रसानामाश्रयो द्रव्यं यद्रसादीननपेक्ष्य प्रभावादेव किञ्चित् करोति । तच्च त्रिप्रकारमित्याह —

**शमनं कोपनं स्वस्थहितं द्रव्यमिति त्रिधा ॥ १६ ॥**

**शमनमि**त्यादि । इह यत् किञ्चिद् द्रव्यं कैश्चिद्रसादिभिर्युक्तं कुपितान् वातादीन् विशोध्य वाविशोध्य वा शमयति तच्छमनं नाशकरमित्यर्थः । तद्यथा गुळूच्यादि । अन्यत्तु यद्द्रव्यमन्यै रसादिभिरुपेतं समान् वातादीन् कोपयति तत् कोपनं यथा मत्स्यादि । इतरच्च द्रव्यमितरैरुपहितं स्वस्थहितं स्वस्थेभ्यो हितम् । यन्न कुपितस्य समीकरणे समर्थं नापि समस्य कोपने केवलं यथास्थितमेव संवाहयति तद् । यथा शाल्यादि । स्वेदनस्तम्भनादिद्रव्याणां शमनादिष्वन्तर्भावार्थम् इतिग्रहणम् । शमनादीनामवान्तरभेदसङ्ग्रहाय संख्याग्रहणम् । एकमेव द्रव्यमर्थात् (इति ? त्रि)प्रकारमित्येके । तदयुक्तं, त्रिधा नियतस्वरूपत्वाद् द्रव्याणाम् । तथाहि —

"बला शतावरी छिन्ना पञ्चमूल्यः सवारिदाः ।
शमना दोषरोगाणां तेषां न व्यभिचारिता ॥
आस्फोतपाटलव्रीहियवकाः सचिलीचिमाः ।
सोषराम्बु (? किलाटादि) कपोताः सर्वदोषळाः ॥
शालयः षष्टिकाः सर्पिः क्षीरदिव्योदकं पलम् ।
जाङ्गलं सैन्धवं तैलं पटोलीमुद्गशर्कराः ॥
डाडिमं त्रिफला क्षौद्रमिति स्वास्थ्यानुवृत्तिदाः ।
आयुर्वेदावतारेऽपि द्रव्यं त्रिविधमुक्तवान् ॥
मत्स्यादि दोषकोपाय गुळूच्याद्युपशान्तये ।
स्वस्थवृत्ते तु शाल्यादि त्रिधैवं द्रव्यमुच्यते ॥"

इति । शमनस्वस्थहितानां दोषकारित्वशङ्कायां तन्नाशनसंयोगे यथोक्तस्वभावता न कोपनानां सा भवतीति वृद्धानां सिद्धान्तः । तस्मात् त्रिधा नियतत्वं द्रव्याणाम् ।

नन्विह त्रिधा द्रव्यं प्रतिज्ञातं, 'शोधनं शमनं चे'त्यत्र द्विधा, 'स्वास्थ्यानुवृत्तिकृद्यच्चे'त्यादौ च द्विधा । तत्र कः प्रकारोऽवलम्ब्यतां द्विश्शमनशब्दोपादाने च किं तात्पर्यम् । अत्र सञ्चक्ष्महे । इह तावत् त्रिप्रकारो नियम्यते शमनकोपनस्वस्थहितरूपं त्रिधैव द्रव्यमिति । शोधनं शमनं चेत्यत्रौषध-

नियमः द्विधैवौषधमिति । द्रव्यौषधयोश्च स्पष्टो भेदः । तथाहि द्रव्यमद्रव्यं चौषधं भवति तथा अद्रव्यमौषधमुच्यते । यथा —

"धीधैर्यात्मादिविज्ञानं मनोदोषौषधं परम् ।"

इति । धीधैर्यादयो हि गुणाः । स्वास्थ्यानुवृत्तिकृदित्यादिना चा(भ्य ? व्य)व-(ह ? हि)तो नियम्यते । ननु यदेतदुक्तं शमनादिद्रव्यं तदयुक्तं नियमाभावात् । तथाहि सन्तर्पणसाध्यस्य वायोर्गुळूच्यादि प्रयुक्तं कोपनमे(व) न शमनं तस्यैवं-विधस्य मत्स्यादि शमनमेव भवति न कोपनम् । शाल्यादि चार्त्तविषयेऽपि शरीरयात्रासम्पाद(नां ? नार्थं) प्रयुज्यत एव । तस्माद्द्रव्याणामनियतस्वभावत्वाच्छमनमित्यादि न वाच्यम् । अत्र ब्रूमः । यदि नाम शरीरमात्राकाल(नीया ? नियम)देशवैगुण्यादन्यथात्वं द्रव्यस्य भवति तथापि द्रव्याणि स्वं स्वं भावं न जहति यथाग्निरुष्णस्वभावोऽपि मन्त्रादिवशादनुष्णरूपत्वं भजते न ता(वद)य-मनुष्णः । अपिच यदि पथ्यापथ्ये नियते न स्यातां तत् कथमिदमुच्येत —

"मिश्रं पथ्यमपथ्यं च भुक्तं समशनं मतम् ।"

इति । तथा स्वास्थ्यानुवृत्तिकृदिति । तस्माद्युक्तमुक्तं—

"शमनं कोपनं स्वस्थहितं द्रव्यमिति त्रिधा ।"

इति । शमनद्रव्यं त्रिधा यथैकं पारिभाषिकं 'न शोधयति यद्दोषानि'त्यादिना कृतलक्षणम् । अन्यच्च क्रियानिमित्तं घृतं पित्तशमनमिति । तथा वाताद्यन्य-तमदोषहरशक्त्युत्कर्षवशाद् द्रव्यं तादृशव्यपदेशमासादयति । पित्तादिदोषान्तर-कर्तृशक्तिं हीनां निहितामपि स्वीयामभिभूय । यथा तैलं वातशमनात् वातहरं घृतं पित्तशमनात् पित्तहरं मधु श्लेष्महरं श्लेष्मशमनात् । तैलस्य हि पित्त-कर्तृत्वेऽपि न तैलं पित्तळमुपदिश्यते । तथा घृतस्य श्लेष्मकर्तृत्वेऽपि न श्ले-ष्मळं घृतमित्युच्यते । मधुनः पित्तशमनत्वेऽपि न मधु पित्तशमनमित्युच्यते । एवं कोपनद्रव्यविषयेऽपि । यथा 'कळायश्चातिवातळ' इति । कळायस्य पित्तश्लेष्मघ्नस्यापि वातकोपनत्वमेव प्रसिद्धम् । अन्यच्च शक्तिविशेषोत्कर्षवशात् शमनमेव यथा 'शाकं पाठाशटी'त्यारभ्य यावत् 'त्रिदोषघ्नमि'त्यादि । न चतुर्थो दोषो वातादिभ्योऽन्यो नास्त्येव । तस्माच्छमनमेव पाठादिद्रव्यमिति पाटलबीह्यादिकोपनमेव वातादिभ्यस्त्रिभ्योऽन्यस्य दोषान्तरस्याभावात् कोपन-संज्ञा(मेव ? एवं) शमनसंज्ञा(म् ?) । ननु त्रिदोषशमनं य(त्त)द्द्रव्यमेकमपि दोषं शमयत्येव । ततश्च कथमुक्तं मुनिना —

"सन्निपातप्रशमनाच्छमनान्मारुतस्य च ।"

इति । सन्निपातो हि त्रिदोषकृत एव तस्माच्छमनान्मारुतस्य चेत्यनर्थकम् । ब्रूमः — अधिकमारुतस्य सन्निपातस्य चटकाः शमना इत्यर्थः । अथवा त्रिदोषशमनं यद्द्रव्यं तन्न तथैकं कुपितं दोषं शमयति यथैकदोषशमनद्रव्यम् । तथाच रक्तशालिस्त्रिदोषहरः कथितः स वायुं कुपितं न तथा शमयति यथा तैलं घृतं वा । एवं क्षीरं पित्तं शमयति न तथा शालिः । तथा मरिचं कफं यथा शमयति न तथा शालिः । तस्मात् त्रिदोषशमनं द्रव्यं कुपितैकदोषविषये भिषजा न प्रयोज्यमिति ज्ञापयितुं

'सन्निपातप्रशमनाच्छमनान्मारुतस्य च'

इत्युक्तम् । हाटकस्त्वेवमाह — द्रव्यं त्रिधा शमनं कोपनं स्वस्थहितमिति । नन्वपरीक्षिताभिधानमिदं जात्यन्तरासम्भवात् । यदि हि नामैतानि दोषशमनादीनि जात्यन्तरोपहितानि स्युस्तेन दुरालभादि दोषशमनमिति कृत्वा सत्यपि प्रकृतिशरीरावस्थादोषदेशकालबलमा(त्र ? त्रा)संयोगादिविशेषे शमायैव कल्पेत न तु कल्पते । तथा कोपकमपि मन्दकादि यदि नियतं स्यात् तेन सर्वदा कोपकमेव दृश्येत प्रकृत्यादिभेदेन त्वन्यथाभावं पश्यामः । तथा स्वस्थवृत्तस्यापि नियमात् स्वस्थादन्यत्र न भवेत् प्रयो(गं ? गः) भवति तु प्रयोगः शालिषष्टिकादीनां ज्वरादिषु यवा(ग्वौ ? ग्वो)दनादिविधौ । तस्मान्नामूनि जात्यन्तरमिति पश्यामः न पश्यन्ति भवन्तः कथमिति । ब्रूमहे । तत एव सिद्धेः यदवोचन् भवन्तः । प्रकृत्यादिविकल्पे सति शमनादीन्यन्यथा दृश्यन्त इति । नन्वेवं तत एवैतदापद्यते यदुत स्वव्यवस्थितस्वभावानि शमनादीनि तेषां स्वभावक्रियाप्रतिबन्धः प्रकृत्यादिवैगुण्यादुत्पद्यत इति । अपिंच विरेचनादीनि द्रव्याणि कोष्ठाबिवशान्न कार्ये प्रवर्तन्त इत्येतत्स्वभावानि कल्पितानि भवद्भिः । अतोऽत्रापि स्वभावत एव कानिचिच्छमनानि कानिचित् कोपनानि कानिचित् स्वस्थहितान्येव विरोध्याहाराचारदेशकालादिप्रतिबन्धादेषां क्वचित् क्वचित् कार्यानभिनिर्वर्तनमिति कल्पनीयम् । तर्हि प्रतिबन्धकसन्निधाने वह्नेरपि सुखस्पर्शत्वं दृष्टमित्युपस्थातव्यम् अग्निरनुष्ण इति । यत्तूक्तं स्वस्थहितानामपि शाल्यादीनामस्त्येव दोषशमनायैवोपयोग इति सत्यमस्त्येव दोषशमनायैवोपयोगः यथा मनुषे । अथ नास्त्येव यथा मन्महे तन्मात्रस्यानुवर्तनात् खलु लङ्घनादिभिरस्य लब्धं तन्मात्रस्य हि स्वास्थ्यानुवर्तनमेव विधित्सता तत्र लाजौदनसविधानं ननु ज्वरादीनामधिकमौषधमसम्मिश्रच तैरुपयुज्यते तदेव स्वकार्यकरणे प्रयतत इति स्वस्थहिताभाव इति चेत् अत्रोत्तिष्ठेरन् भवन्तः स्यातां चेच्छमनकोपने एव ननु तृतीयमा-

श्रयासिद्धेः। (य)द्याश्रयभूतं स्वास्थ्यमेव तत्रभवतां सम्भवेत् सम्भवेदपि तदनुवृत्तिकरं, न तु सम्भवति । कथमिति, पूर्वाह्णादिषु दोषाणां वृद्धिहानिदर्शनान्नित्यं च विरुद्धरसवीर्यविपाकप्रभावानां द्रव्याणामुपयोगेन विकारोपपत्तेरिति । अत्र सन्दध्महे — इहहि प्रतिद्वन्द्विभ्यामृतुविधानोक्ताभ्यां पथ्याहारविहाराभ्यामुद्रिक्ता अपि वातादयो न विकारमारभन्ते यद्यप्यारभन्ते तथाप्यल्पत्वाद्दोषाणां नित्यभावितया साम्योपशमाच्च न पीडायैव कल्पते । परस्परविरुद्धान्यपि खलु द्रव्याण्यन्योन्यप्रतिबन्धान्न विरुद्धं कार्यमुत्पा(द)यितुं शक्नुवन्ति । अतश्च न विकारसम्भवप्राप्तिः । स्वस्थहितानामेष हि स्वभावः यद्विरुद्धकार्यप्रतिबन्धेन साम्यानुवर्तनमिति । आह संव्यतीहाराच्छमनकोपनयोः इह हि कानिचिद्द्रव्याण्येकं दोषं शमयन्ति द्वौ तु कोपयन्ति कानिचिद्द्वौ शमयन्ति एकं कोपयन्ति अतः शमनकोपनयोरविवेकापत्तिः । न । भूयोग्रहणात् । इह यदेकदोषकोपनं द्विदोषकशमनं तच्छमन एवावरोधः तत्कार्यबाहुल्यात् । अतः कफवातशमनं तैलं पित्तळमपि शमनमेव व्यवहर्तव्यम् । एवमन्यत्रापि ॥ १६ ॥

द्रव्यमुक्त्वा तद्वीर्यमाचष्टे —

**उष्णशीतगुणोत्कर्षात्तत्र वीर्यं द्विधा स्मृतम् ।**

**उष्णे**त्यादि । उष्णश्च शीतश्चोष्णशीतौ तौ गुणौ तयोरुत्कर्षः अतिशयः उत्कृष्यत उ(ष्णे ?)त्कर्षः गुणोत्कर्षः गुणव्यतिरिक्तोऽतिशयः शक्तिः तत्र तस्मिन् द्रव्ये वीर्यं द्विधा स्मृतं मुनिभिरुष्णशीतगुणाधिक्यात् । यद्यपि सर्वं द्रव्यं पञ्चभूतात्मकं तथाप्यग्नीषोमात्मकत्वात् सर्वभावानां किञ्चिदुष्णगुणोत्कर्षात् तन्मुखेनैव कार्यकरणादुष्णवीर्यमित्युच्यते । एवं शीतगुणोत्कर्षाच्छीतवीर्यम् । गुण एव समुद्भूतशक्तिर्वीर्यसंज्ञां लभते । शक्तिः कार्यकरणहेतुः तरतमयोगी गुण इति लक्षणाद् गुणोत्कर्षः शक्यते वक्तुम् । गुणवीर्ययोः स्पष्टो भेदः । उष्णशीतगुणौ नित्यप्रत्यक्षौ नित्यानुमेयं वीर्यम् । नह्येकस्यैव नित्यप्रत्यक्षत्वाप्रत्यक्षत्वे सम्भवतः । 'उत्कर्षादिति ल्यब्लोपे पञ्चमी उत्कर्षमनुभूये'ति हृद्याकारः ॥

वीर्यविपाकयोरतीन्द्रियत्वसामान्याद्वीर्यानन्तरं विपाकमाह —

**त्रिधा विपाको द्रव्यस्य स्वाद्वम्लकटुकात्मकः ॥ १७ ॥**

**त्रिधे**त्यादि । द्रव्यस्य त्रिधैव मधुराम्लकटुकस्वभावो विपाको भवति।

रसषट्त्वेऽपि विपाकस्वभावस्यैवंरूपत्वात्। तल्लक्षणं च जठराग्निसम्बन्धाद् द्रव्यस्य स्वरूपान्तरप्रादुर्भावः। वक्ष्यति च—

"जाठरेणाग्निना योगाद्यदुदेति रसान्तरम्।
रसानां परिणामान्ते स विपाक इति स्मृतः॥"

इति। विशिष्टः पाको विपाकः द्रव्यपाकादन्यः रसपाकाच्चान्यः न पाकमात्रः। अतएव मुनिनोक्तं—

"रसो निपाते द्रव्याणां विपाकः कर्मनिष्ठया।
वीर्यं यावदधीवासान्निपाताच्चोपलभ्यते॥"

इति। स्वादुविपाकः अम्लविपाकः कटुविपाकः। आत्मग्रहणाद्रसादस्य भेदः सूत्रितः। संख्या नियमार्था।

"यथा रसं जगुः पाकान् षट् केचित्तदसाम्प्रतम्।
यत्स्वादुर्व्रीहिरम्लत्वं न चाम्लमपि डाडिमम्॥
याति तैलं च कटुतां कटुकापि न पिप्पली।
यथा रसत्वे पाकानां नस्यादेवं विपर्ययः॥"

इति। वीर्यविपाकयोर्गुणाद्रसाच्च भेदे कल्प्यमाने गुणरसाभ्यां व्यवहारः कथमिति चेद्, उच्यते। प्रसिद्धेनाप्रसिद्धस्य व्यवहार इति न्याय्यस्ताभ्यां व्यपदेशः। मधुरो विपाकः श्लेष्मणो वर्धनः न पित्तवातयोः। अम्लः पित्तकफयोर्न वातस्य। कटुर्वातपित्तयोर्न श्लेष्मणः। इति विपाकस्य त्रित्वमङ्गीक्रियते। नन्वेवं तर्हि बालानां मधुरविपाकं क्षीरमेवोपयुञ्जानानां त्रयोऽपि दोषाः कुप्यन्ति तस्मादेकेन विपाकेन त्रिदोषकोपः। अत्र प्रतिविधीयते

"एकश्च दोषः कुपितः सर्वानेव प्रकोपयेत्।"

इत्यागमात्। किञ्च मधुरविपाकं क्षीरं धात्र्याः स्वापथ्याहारैर्दूषितमम्लविपाकं कटुकविपाकं वा भवति। तस्माद्धि धात्र्याश्चिकित्सोक्तिः। इह विपाककाले रसो व्यतिष्ठत एवेति बोद्धव्यं रसं विषाक इत्यादिवाक्यार्थस्यान्यथानुपपत्तेः॥ १७॥

अधुना द्रव्यस्य गुणानाह—

**गुरुमन्दहिमस्निग्धश्लक्ष्णसान्द्रमृदुस्थिराः।**
**गुणाः ससूक्ष्मविशदा विंशतिः सविपर्ययाः॥ १८॥**

**गुर्वित्यादि**। जीवनधारणादयोऽन्येऽपि गुणाः सन्त्येव किंतु गुर्वादयोऽमी यथा विंशतिव्यवहारोपयोगिनो न तथान्य इत्येव निर्दिष्टाः। गुर्वा-

दीनामितरेतरद्वन्द्वः ते सूक्ष्मविशदाभ्यां सह दशगुणाः एते च सविपर्यया विपरीतगुणसहिता विंशतिः स्युः । तद्वे(व ? वं) द्रव्यमाश्रिता विंशतिर्गुणा गुर्वादयः । गुरुर्लघुर्मन्दस्तीक्ष्णो हिम उष्णः स्निग्धो रूक्षः श्लक्ष्णः परुषः सान्द्रो द्रवो मृदुः कठिनः स्थिरः सरः सूक्ष्मस्थूलो विशदः पिच्छिलश्चेति । खरादयस्त्वेतद्भेदा एव । अत्र रचनावैषम्येण गुणसंख्यास्वरूपयोर्विप्रतिपत्तिं सूचयति । तथाहि दशगुणा इत्याह बालुकाव्यदः —

"शीतोष्णौ स्निग्धरूक्षौ च तथा विशदपिच्छिलौ ।
मृदुतीक्ष्णौ गुरुलघू चेति ज्ञेया गुणा दश ॥
मृदुर्गुरूष्णौ स्निग्धश्च पिच्छिलश्चानिलापहाः ।
पित्तघ्नास्तु गुरुस्निग्धमृदुशीतळपिच्छिलाः ॥
तीक्ष्णोष्णलघुरूक्षाश्च विशदश्च कफे हिताः ।"

इति । सुश्रुतोक्ताश्चैत एव दश गुणाः । दशगुणवादिनामयमभिप्रायः विपाकात्मकौ गुरुलघू अष्टावन्ये वीर्याश्रया इति दशानां मुख्यत्वं मुख्यत्वादेव ग्रहणम् । अन्येषामसमत्वं नाभिप्रेतं गुणान्तराणां तच्छास्त्रसङ्कीर्तनदर्शनात् । अस्याचार्यस्य विंशतिर्गुणाः प्रधाना एवेत्याशयः । सरप्रकर्षत्वात्तीक्ष्णप्रकर्षत्वाच्च व्यवायिवि(ता ? का)षिसंज्ञौ गुणौ पृथङ् नोक्तौ सर्वदेहं व्याप्य च पाकं याति स व्यवायी सरस्यैव प्रकर्षः । यो धातून् हिंसन्नुपलेपादिकं नाशयति स विकाषी स तीक्ष्णस्य प्रकर्षः । अथवा न चेयन्त एव गुणा इत्यनेन नियम्यते सङ्ग्रहेऽन्येषामप्युक्तेः —

"इन्द्रियार्थो व्यवायी च विकाषी चापरे गुणाः ।
व्यावायी देहमखिलं व्याप्य पाकाय कल्पते ॥"

पाकं याति ।

"विकाषी विकषन् धातून् सन्धिबन्धान् विमुञ्चति ।"

सन्धिबन्धमुपलेपादि तं नाशयति ।

"सरतीक्ष्णप्रकर्षौ तु कैश्चित्तौ परिकल्पितौ ।
सत्वं रजस्तमश्चेति त्रयः प्रोक्ता महागुणाः ॥"

इति । तेषां विनियोगं शास्त्रे प्रदर्शयिष्यामः । तत्र रूक्ष इत्यादि षड्गुणा वायौ, स्निग्धतीक्ष्णोष्णादयः पित्ते, स्निग्धशीतगुर्वादयः कफे । 'स्थिरकठिनगण्डलाना'मिति स्थिरकठिनयोरर्थभेदः कथ्यते —

"कठिना वृष्टिपयसां गुळिका न स्थिरात्मिका ।
कठिनः स्पर्शनग्राह्यः स्थिरः स्थायित्वलक्षणः ॥"

इति । स्थूलान्त्रबद्ध इत्यादि । मृदुभूतानीति । नात्यच्छसान्द्रतावस्तेरिति । वैशद्यं जनयतीति । पिच्छिलं चोपवेश्यत इति । श्लक्ष्णशुष्कघन इति । श्लक्ष्णः स्थिरः (स्या? स्त्या)न इत्यादि च । तत्र तीक्ष्णोष्णावाग्नेयौ, शीतपिच्छिलौ (वा? चा)प्यौ, स्नेहो भौ(र्यापः? माप्यः,) रौक्ष्यं वायव्यं, क्षितिस(मि? मी)रजं वैशद्यं, मृदुस्तोयाकाशाभ्यां, गुरुर्भूमितोयाभ्यां, लघुर्नभोनभस्वतोः, स्थिरकठिनौ पार्थिवौ, परुषचलौ वायव्यौ, श्लक्ष्णः पृथिवीतेजसोः, सूक्ष्मो नभसः, सान्द्र आप्यः, अच्छस्तैजसः, मन्दस्थूलौ पार्थिवौ । तत्र शीतोष्णगुरुलघुमृदुकठिन-कर्कशश्लक्ष्णस्पर्शभेदाः स्पार्शनाः । गुरुलघू अन्नपा(क? कापा)कानुमेयौ, मन्द-तीक्ष्णौ चिराचिरकार्यानुमेयौ, रूक्षस्नेहौ चक्षुर्ग्राह्यौ च । अव्याप्तिशीलः स्थिरः, व्याप्तिशीलः सरः, अवशिष्टाः सर्वे स्पर्शनग्राह्याः । हृद्याकारस्त्वाह — सान्द्रो घनः सान्द्रविपरीतोऽच्छः, द्रवः सान्द्रान्तर्भूतः, स्थिरविपरीतश्चल इति । ननु चलत्वं क्रिया कथं गुणेषु पाठ इति । उच्यते—वायुद्रव्यवर्त्ति चलत्वं सर्वदोपल-भ्यते अतएव तस्य चल इति नाम । नच सर्वदा द्रव्यानुवर्तनी क्रियोपलभ्यते । तस्याश्चिरस्थायिकत्वाभावादिति । कर्मणां गुणेष्वन्तर्भावमिच्छन्ति केचित् । तत्पक्षे चलात्मिका क्रिया गुण इति गुणेषु पाठो युज्यते ॥ १८ ॥

दोषाणां वृद्धिक्षयकर्मापि वक्तव्यं तत्समानत्वात् । कालेन्द्रियार्थावपि ततः क्रमा-दाह—

**कालार्थकर्मणां योगो हीनमिथ्यातिमात्रकः ।**
**सम्यग्योगश्च विज्ञेयो रोगारोग्यैककारणम् ॥ १९ ॥**

**कालार्थे**त्यादि । अथवा दोषादीनां सदृशेन वृद्ध्या विसदृशेन च हान्या रोगकारणत्वमुक्तं, कालादीनां त्वयोगादयोऽपि दोषवृद्धिक्षयमुखेनैव रोगकारणत्वेनोच्यन्ते । अथवा षट्पदार्थान्तर्भावात् कर्मापि सूत्रयति । अस्य हि शास्त्रस्य द्रव्यादयः षड्पदार्थाः उक्तश्च —

"द्रव्यं रसाश्चैव गुणाः सवीर्या विपाककर्माणि च षट् पदार्थाः ।"

इति । कालः शीतोष्णवर्षलक्षणस्त्रिविधो वक्ष्यते । अर्थाः आदिपदलोपादि-न्द्रियार्थाः शब्दस्पर्शरूपरसगन्धाः, कर्म कायस्य वाङ्मनसोश्च क्रिया । तत्र का(य? ल)स्य पूर्वग्रहणं गरीयस्त्वात् । गरीयस्त्वं चापरिहार्यत्वात् तदपि

च नित्यानुषक्तत्वात् । कालश्चार्थाश्चार्थौ वा कर्म चेति द्वन्द्वः तेषां योगः सम्बन्धः कीदृशः अतिमात्र एवातिमात्रकः हीनश्च मिथ्या चातिमात्रक(: ? श्च हीनमिथ्यातिमात्रकाः) । तथा तेषामेव कालादीनां सम्यग्योगश्च । सम्यगित्यस्य च पृथङ्निर्देशाद्यथासंख्येनात्र सम्बन्धः । तेन हीनमिथ्यातिमात्रकरूपा ये कालादीनां योगास्ते रोगैककारणं विज्ञेयाः तेषामेव यः सम्यग्योगः स आरोग्यैककारणम् । तत्र कालस्य स्वरूपस्य हानिर्हीनयोगः यथा शीतकालस्य शीतहानिः । स्वरूपाद्वैपरीत्यं मिथ्यायोगः यथा तस्यैवोष्णत्वम् । स्वरूपातिशयोऽतियोगः यथा तस्यैवातिशैत्यम् । अर्थानां शब्दादीनां यथास्वमिन्द्रियेणाल्पः सम्बन्धः सम्बन्धाभावश्च हीनयोगः अत्यन्तसम्बन्धोऽतियोगः पुरुषानभिमतादिरूपस्यार्थजातस्येन्द्रियेण सम्बन्धो मिथ्यायोगः । कायादिकर्मणो हीना प्रवृत्तिर्हीनयोगः अतिप्रवृत्तिरतियोगः वेगोदीरणधारणादिकं कर्म वक्ष्यमाणं मिथ्यायोगः सर्वेषां समा प्रवृत्तिः समयोगः । एवं हीनादियोगास्त्रयो रोगकारणम् । कालादीनामृत्वादिप्रकारैरनन्तत्वेऽपि हीनयोगादित्रैविध्यं नातिवर्तते । सम्यग्योगश्चारोग्यकारणम् । अत्रैकशब्दोऽसहायत्वे प्राधान्ये च वर्तते । एकमद्वितीयमस्मान्नास्त्येव किञ्चिद्द्वितीयमीदृशं निदानम् । एकं प्रधानं कारणं प्राधान्यं च कारणकारणत्वात् । कारणं हि दोषा इत्येकशब्दः प्रधानवाचीति । हाटको ह्याकारश्च । रोगाणां पुरोग्रहणं चिकित्सा झटिति कर्तव्येति ज्ञापनाय । अन्यथारोग्यस्यैव ज्यायस्त्वात् प्राङ् निर्देशो युक्तः स्यात् । अरोगस्य भाव आरोग्यं स्वास्थ्यं विपक्षे नञिति ह्याकारः । ननु वाय्वादय एव रोगग्रामनिमित्तमुक्तास्तथाच पठिष्यति —

"दोषा एव हि सर्वेषां रोगाणामेककारणम् ।"

इति । नैव, दोषः कारणकारणमपि हि कारणमुच्यते यथा सुखस्य (स ?)कारणं धर्मः नचासौ साक्षात् सुखहेतुः किन्तर्हि धर्मात् स्वर्गापवर्गवित्तैश्वर्याणि तेभ्यः सुखं तस्मात् सन्निकर्षमात्रमत्र भिद्यते कारणत्वं तुल्यमेव भवति । कारणं हि विप्रकृष्टमितरदासन्नमिति । नन्वत्र देशस्यापि हीनादयो योगा वाच्याः सत्वात् । उक्तं हि खरनादेन —

"हीनातिमिथ्यायोगांस्तु देशादीनां पृथक् शृणु ।
उचितात् स्वगुणान्न्यूने देशे वासोऽत्र पूर्वकः ॥
मिथ्यायोगो विपर्यस्तेऽतियोगस्तद्गुणाधिके ।
दुष्टे दुष्टानिलजलः स्वान्यचक्रेण पीडितः ॥"

तथाच

"मृगा पथ्यव्यालसरीसृपः। (?)

अपथ्यान्नोऽथ दुर्भिक्षस्त्यक्तधर्मजनश्च यः।

देशस्तेषु निवासो यो मिथ्यायोगः स देशजः॥"

इति उच्यते तथाविधदेशवासस्यापि प्रतिषिद्धत्वात् तस्य मिथ्यायोगेऽन्तर्भावः। तथाच सङ्ग्रहः—

"नैकाहमप्यधिवसेद्ग्रास्तु तच्छास्त्रगर्हितम्।

न देशं व्याधिबहुलं नावैद्यं नाप्यनायकम्॥

नाधर्मजनभूयिष्ठं नोपसृष्टं न पर्वतम्।"

इति। सम्यग् योगश्च विज्ञेयाविति पाठः॥ १९॥

के ते रोगारोग्य इत्याह—

**रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता।**

**रोगस्त्वित्यादि**। वातादीनां दोषाणां यद्वैषम्यं हीनाधिकभावः स्वकर्मानुमेयः स एव रोगः। तुशब्द एवार्थे। हीनदोषा हेत्वन्तरनिरपेक्षा बाधन्ते, वृद्धाः पुनर्हेत्वन्तरसापेक्षा एव। स्वकर्महानिरेव हि क्षीणानां दोषाणां विकाराः। ननु कथं दोषाणां वैषम्यं रोग इत्युच्यते तत्कार्यं हि रोगः। ब्रूमः। सम्प्राप्तिवशेन मुख्योक्तिर्हेतुत्वेनौपचारिकी। विशिष्टसम्प्राप्तयो हि दोषा एव रोगस्तत्कार्यं वेत्यपेक्षाद्वयं तेन व्याधिविशेषमनुत्पादयद् दोषवैषम्यमपि रोगश्चिकित्स्यश्चेति दर्शितं भवति। हेतुत्वेन कार्यकारणयोरभेदादेवमुक्तम्। उक्तञ्च—'वातपित्तश्लेष्मणां तु स्थानसंस्थानप्रकृतिविशेषानभिसमीक्ष्य तदात्मकानपि सर्वविकारांस्तानेवोपदिशन्ति बुद्धिमन्त' इति। नन्वागन्तुरोगेष्विदं लक्षणमव्याप्तमिति चेत्। न। यद्यपि तेषु प्रहारादिभिः पूर्वं रुजासम्बन्धस्तथापि दोषवैषम्यमासाद्यैव सम्पूर्णा भवन्ति। तस्यापि दोषवैषम्यत्वमुपपन्नमेव। वातादीनां शास्त्रे यन्मानमधीतं स्वकर्मानुमेयं तत्साम्यमन्यूनाधिकभावपर्यायं तच्चारोगता तदेवारोग्यमारोग्यहेतुश्चेत्यपेक्षाद्वयम्। केचिदित्थं प्रतिजानते—आरोग्यं रोगाभाव इति। तदेतदसत् यद्यारोग्यं रोगाभावमात्रं स्यात् को दोष इति चेत्तल्लक्षणसाधनफलानां वैयर्थ्यं प्रसज्येत अभावस्यावस्तुनो लक्षणादेरसम्भवात् तस्य तुच्छत्वादिति भावः। आरोग्यं हि सुखाख्यं भावरूपम्।

आगमो हि—

"सुखसंज्ञकमारोग्यं विकारो दुःखमेव च।"

इति॥

**निजागन्तुविभागेन तत्र रोगा द्विधा स्मृताः ॥ २० ॥**

**निजेत्यादि** । तत्र रोगारोग्ययोर्मध्ये रोगा निजागन्तुविभागेन द्विप्रकारा मताः । मिथ्याहारविहारेण यो दोषकोपस्तत्कृ(तः ? ता) पीडा निजो रोगः, अभिघातभूतादिना दोषकोपजः स आगन्तुरोगः । निजागन्तूनां विभागपृथक्त्वं निजागन्तुकारणानां बहुत्वेऽपि निजागन्तुभेदेन द्वित्वमेवेति संख्या ज्ञापयति । अथवा केचिदेवं व्याचक्षते — रोगास्त्रिविधाः आगन्तवः शारीराः स्वाभाविकाश्चेति । स्वाभाविका जरामृत्युक्षुत्प्रभृतय इति । केचित् पुनः शारीरागन्तुमानसविभागेन त्रैविध्यमाहुः । तत्र स्वाभाविकमान(स)योरपि निजागन्तुरोगयोरेवावरोध इति दर्शनाद् द्विग्रहणम् ॥ २० ॥

**तेषां कायमनोभेदादधिष्ठानमपि द्विधा ।**

**तेषामित्यादि** । तेषां रोगाणां कायमनोभेदेनाधिष्ठानमाश्रयो द्विधा द्विप्रकारम् । तत्र ज्वररक्तपित्तादीनां कायः स्थानं रागादीनां मन इति । कायः शरीरं तस्यादौ ग्रहणं प्राधान्यात् । शरीरचिकित्साप्रधानं चेदं तन्त्रम् । अन्यत्र व्याधिचातुर्विध्यमुक्तं —

"शारीरा ज्वरकुष्ठाद्या रागाद्या (म ? मा)नसा स्मृताः ।
आगन्तवोऽभिघातोत्थाः सहजाः क्षुज्जरादयः ॥"

इति । तदधिष्ठानभेदे कारणभेदे चान्तर्भवति । आगन्तूनां शरीरे मनसि सम्भवः । क्षुज्जरादीनामपि शरीरमाश्रयः ॥

ननु रोगाणां वातादयः कारणत्वेनोक्ताः ते च कायिकानामेव सम्भवन्ति न मानसानामिति तत्कारणदोषस्थापनार्थमाह —

**रजस्तमश्च मनसो द्वौ च दोषावुदाहृतौ ॥ २१ ॥**

**रज इत्यादि** । मनसः रजस्तमसी द्वौ दोषावुपप्लवावविद्यासम्भूतावुदाहृतौ । तत्त्वविद्भिरिति शेषः । प्राधान्यादत्र रजसः पूर्वमुपन्यासः । तथाचाह चरकमुनिः — 'नाष्वरजस्कं तम' इति । असमासनिर्देशेन शारीरमानसानां दोषाणामन्योन्यानुबन्धित्वं सूचयति — शारीरो मानसं मानसश्च शारीरं शारीरः शारीरं मानसो मानसं चेति । आगमो हि —

"आगन्तुरन्वेति निजं विकारं
निजस्तथागन्तुमपि प्रवृद्धः ॥"

इति । द्वयोरपि दोषत्वसमुच्चयार्थ एकश्चकारः । द्वौ चेति द्वितीयश्चशब्दो वातादीनामपि मनोदोषत्वमस्तीति सूचयति यस्मात्तेऽपि मनः संश्रित्य विकुर्वते । तथाच वक्ष्यति —

"उन्मादाः षट् पृथग्दोषनिचयाधिविषोद्भवाः ।
उन्मादो नाम मनसो दोषैरुन्मार्गगैर्मदः ॥"

इति । 'द्वितीयश्चशब्दः शारीरमानसानां दोषाणामन्योन्यानुबन्धित्वं सूचयती'ति हाटकः । संख्ययैव द्वित्वोपलब्धेर्द्विग्रहणं सत्त्वं न कथञ्चन दोष इति व्यक्तीकर्तुं, सत्वस्योद्रेकावस्थायामपि न दोषत्वम् । तथाहि (त ? स)त्वस्य विकारो न सम्भवति रागादयोऽपि रोगा रजस्तमसोरेव दृश्यन्ते चिकित्सापि धीर्धैर्यात्मादिविज्ञानलक्षणा तयोरेव दृश्यते, न सत्वस्य । तस्मात् सत्वं न दोषः । ननु यदि रजस्तमसोर्दोषसंज्ञेह विहिता तर्हि कथं वक्ष्यति —

"प्रकृतीर्द्वयसर्वोत्था द्वन्द्वसर्वगुणोदये ।
शौचास्तिक्यादिभिश्चैवं गुणैर्गुणमयीर्वदेत् ॥"

इति । यतो दोषगुणसंज्ञयोरेकत्र विरुद्धयोः समावेशानुपपत्तिः । अत्रोच्यते । विषयभेदाद् विरोधः रजस्तमसोरुद्रिक्तयोर्दोषत्वं समयोर्गुणत्वमिति । यदा रजः स्वप्रमाणाधिकं भवति तमोऽप्येवंविधं तदा रजो रागद्वेषादीन् तमश्च मोहादीन् विदधद् दोषसंज्ञां समासादयतः । यदा तु ते स्वप्रमाणस्थे तदा रजः शरीरावष्टम्भनचलनकर्माणि कुर्वत् तमश्च शरीरगौरवादि विदधत् (गुण)संज्ञां प्राप्नुवतः शारीरा अपि वातादयो दूषणाद्दोषा धारणाद्धातव इति च संज्ञां लभन्ते तद्वदेते रजस्तमसी ॥ २१ ॥

रोगस्य प्रसङ्गाद्रोगवत्पुरुषपरीक्षार्थमाह —

## दर्शनस्पर्शनप्रश्नैः परीक्षेताथ रोगिणम् ।

दर्शनेत्यादि । रोगिणं रोगमात्रसम्बन्धिनं दर्शनादिभिः परीक्षेत बुध्येत । तत्र दर्शनेन वर्णसंस्थानादिकं स्पर्शनेन तापकाठिन्यादिकं प्रश्नेन शूलारोचकादिकं ज्ञायते । चशब्दाद् द्वाभ्यां त्रिभिश्च यथायोगं परीक्षेतेति । तदेवं किञ्चिद्दर्शनेन, किञ्चित् स्पर्शनेन किञ्चित् प्रश्नेन किञ्चिद्दर्शनस्पर्शनाभ्यां किञ्चिद्दर्शनप्रश्नाभ्यां किञ्चित् स्पर्शनप्रश्नाभ्यां किञ्चिद्दर्शनस्पर्शनप्रश्नैः परीक्षेत । अत्र च घ्राणरसनविषययोर्गन्धरसयोः परिचारकातुरान्यतरज्ञेयत्वात् प्रष्टव्यावरोधः ॥

एवं सामान्येन शरीरस्य रोगसम्बन्धमात्रे ज्ञाते रोगविशेषाधिगमोपायानाह —

**रोगं निदानप्राग्रूपलक्षणोपशयाप्तिभिः ॥ २२ ॥**

**रोगमित्यादि** । परीक्षेतेत्यनुवर्तते । रोगं निदानादिभिः पञ्चाभिर्लक्षणैर्बुध्येत । निदानं हेतुः एवंविधमर्थजातमेवंविधस्य रोगस्य हेतुत्वेनोक्तम् एवंविधं चोत्पन्नमिति निदानाज्ज्ञायते । प्राग्रूपं भविष्यतो व्याधेरप्रकाशितदोषविशेषाधिष्ठानस्याव्यक्तलक्षणम् । लक्षणं तु पुनरुत्पन्नस्य स्पष्टं चिन्हम्, उपशयः सुखानुबन्धी आहाराद्युपयोगः एवंविधेनाहारादिना न ह्यस्य पीडाभूत् एवंविधेनास्याभूदित्युपशयाज्ज्ञायते । आप्तिः सम्प्राप्तिः । एवं दुष्टेनैवं स्थानस्थितेनैवं मार्गेण दोषेणेति परिकल्पनम् । (आ? अ)त आप्त्या ज्ञायतेऽयं रोग इति । निदानप्राग्रूपलक्षणानां क्रमभावित्त्वात्तत्क्रमेण वचनम् । लक्षणेनापि दुर्लक्ष्यस्य व्याधेरुपशयेन ज्ञानमिति लक्षणानन्तरमुपशयोक्तिः निदानादिचतुष्टयपरिपा(दि? टि)रूपत्वात् सम्प्राप्तेरन्तेऽभिधानम् ॥ २२ ॥

देशकालावपि निदानादिभावं भजेते अतस्तावपि सूत्रयति । अथवा एवं रोगविशेषे ज्ञाते भिषजा पूर्वं देशः परीक्ष्यः । तथाचोक्तं सङ्ग्रहे — 'भेषजमवचारयन् प्रागेव तावदेवमातुरं परीक्षेत कस्मिन्नयं देशे जातः संवृद्धो व्याधितश्चे'ति । अतस्तमेव देशं दर्शयति —

**भूमिदेहप्रभेदेन देशमाहुरिह द्विधा ।**

**भूमीत्यादि** । इहास्मिन्नायुर्वेदे द्विधा द्विप्रकारं देशमाहुः । आचार्या इति शेषः । भूमिभेदेन देहभेदेन च । तत्र देहदेशाः शिरःपाण्यादयः प्रसिद्धाः शारीरे विस्तरेण वक्ष्यन्ते । लौकिकाः पुनर्देशशब्देन भूदेशानाहुः, आयुर्वेदविदस्त्वेतदुभयम् । देश इति सावयवस्य वस्तुनः आख्या । शोधनलेखनदाहप्रच्छानसेकादिकर्म प्रायः शरीरभूम्योरिति देहदेशपरिभाषा ॥

भूमिदेशभेदानाह —

**जाङ्गलं वातभूयिष्ठमानूपं तु कफोल्बणम् ॥ २३ ॥**
**साधारणं सममलं त्रिधा भूदेशमादिशेत् ।**

**जाङ्गलमित्यादि** । जाङ्गलोऽल्पजलवृक्षादिर्वक्ष्यमाणलक्षणः स च वातभूयिष्ठो वातप्रधानः । पित्तस्यापि तत्राधिक्यम् । उक्तञ्च क्रियासिद्धौ —

"वृक्षोदकादिरहितो मरुत्पित्ताधिकः समः ।
देशो जाङ्गल इत्युक्तः तज्जाता मृगपक्षिणः ॥
ओषध्यः पुरुषास्त्वापो मरुत्पित्ताधिका मताः ।"

इति । आनूपस्तस्माद्विपरीतलक्षणः स च कफोल्बणः कफाधिकः । तुशब्देन वात(स्य ? स्या)(म)प्याधिक्यमाह । तदुक्तं —

"महामहीरुहच्छन्नसानुकुञ्जमहीधरा ।
आनूपाख्या मही ज्ञेया जलमग्ना स(रा ? मा)रुता ॥"

इति । साधारण उभयलक्षणः स च सममलः समवातादिदोषः एवं त्रिधा भूदेशमादिशेत् साधारणस्य सममलत्वात् स्वास्थ्यानुवर्तनमेव न रोगकारणत्वमिति । साधारणस्य सममलत्वेन प्राधान्येऽप्युभयलक्षणयोगित्वात्तयोरन्ते वचनम् । जाङ्गलस्य प्रागभिधानं त(त्रा ? त्रत्या)नामन्नपानानां लाघवनाभिष्यन्दादिभिर्गुणैः पथ्यत्वात् । तथाचागमः—"मरुभूमिरारोग्यदेशानामानूपभूमिरहितदेशानामि"ति । पञ्चविधो देश इति द्रमिळकवयो वर्णयन्ति । कुरुपाञ्चालादिभेदेनानेकविध इत्यन्ये । तदन्तर्भावाय संख्या ॥

देशमुक्त्वा कालमाह—

**क्षणादिर्व्याध्यवस्था च कालो भेषजयोगकृत् ॥ २४ ॥**

**क्षणादि**रित्यादि । कालो द्विविधः क्षणादिर्व्याध्यवस्था चेति व्यवहारार्थमुपयुज्यते तन्त्रे । स च कालो भेषजयोगकृत् । क्षण आदिर्यस्य स क्षणादिः क्षणलवमुहूर्तादिः । स चादित्यगतिविशिष्टः । व्याधेरवस्था कालकृता दशा पुराणनवतादिः । व्याध्यवस्था यथा — आमज्वरस्यैकप्रकारा चिकित्सा जीर्णज्वरस्यान्यप्रकारा । पदार्थान्तरान्यथाभावोपलक्षितः काल एवावस्थाशब्देनोच्यते । भेषजस्य पुरुषेण योगं सम्बन्धं करोतीति भेषजयोगकृत् । अथवा भेषजस्य योगः सम्यग्भावः तदर्थसम्पादनसौमर्थ्यमित्यर्थः । उभयमप्युदाहरणैः प्रदर्शयिष्यामः ।

"सोमराजीं तु संसेव्य क्षणं घर्मं भजेत् ।"

इति ।

"किञ्चित्कालं स्थितो यश्च सपुरीषो निवर्तते ।"

इति ।

"प्राङ्मुखं पाययेत् पीते मुहूर्तमनुपालयेत ।"

इति ।

"अहोरात्रादपि स्नेहः प्रत्यागच्छन्न दुष्यति ।"

इति ।

"पक्षात् पक्षाच्छर्दनान्यभ्युपेयात् ।"

इत्यादि ।

"मासादूर्ध्वं सर्वथा स्वैरवृत्तिः ।"

इत्यादि ।

"वर्षेणैवं योगमेवोपयुञ्ज्यात् ।"

इत्यादि ।

"कर्कन्धुपत्रमादाय सतक्रं क्षणमातपे ।
व्यशोफमार्लि वा (?) ............... ॥"

इत्यादि ।

"आपोथ्य वा नवे कुम्भे प्लावयेदिक्षुगण्डिकाः ।
स्थितं तद्रुसमाकाशे रात्रिं प्रातस्स्रुतं जलम् ॥"

इत्यादि ।

"पक्षात् स शीलितोऽरिष्टः करोत्यग्निं निहन्ति च ।"

इत्यादि ।

"जातगन्धं जातरसं मासादूर्ध्वं पिबेन्नरः ।"

इत्यादि । व्याध्यवस्थाया भेषजयो(पे ? गे)त्विदमुदाहरणम् —

"आश्च्योतनमभिष्यन्दे योज्यमूर्ध्वं दिनत्रयात् ।
अञ्जनं पक्वदोषस्य प्रतिश्याये च नावनम् ॥
नातिप्रवृद्धे तिमिरे सिरामोक्षो विधीयते ।"

अस्मिंश्च परस्ताद्वक्ष्यति —

"केचिल्लध्वन्नभुक्तस्य योज्यमामोल्बणे न तु ।"

इति ।

"कषायपानपथ्यान्नैर्दशाह इति लङ्घिते ।"

इति । क्षणादिर्व्याध्यवस्था च भेषजयोगकृत् काल इति वान्वयः ॥ २४ ॥

कालो भेषजयोगकृदित्युक्तम् । भेषजमौषधमतस्तद्विज्ञानार्थमाह —

**शोधनं शमनं चेति समासादौषधं द्विधा ।**

**शोधनमित्यादि** । यद् द्रव्यमद्रव्यं वा भयातपादि दोषविना(शमा ? शना)र्थमुपयुज्यते तदौषधम् । संक्षेपेण द्विविधमौषधं विस्तरतस्तु निरूहपानकाथतैलादिकं बहुविधम् । अथवा स्वेदनस्तम्भनादीनां शमनान्तर्भावाय समासादिति पदम् । शोधनं तु तत्कुपितान् दोषान् बहिर्निस्सार्य रोगोपशमं

करोति। शमनं तु स्वस्थानस्थितानामेव दोषाणां साम्यहेतुः शोधनस्य प्राधान्यात् प्रथमोपादानम्। तथा च वक्ष्यति—

"ये तु संशोधनैः शुद्धा न तेषां पुनरुद्भवः।"

इति। द्वयोः समुच्चयार्थश्चकारः। इतिः प्रकारार्थे। द्रव्यादिरूपेण वर्त्तमाने बहुत्वं स्यादिति शोधनशमनानां बहुत्वं निराकरोति सङ्ग्रहः। औषधमिति उष दाह इति धातुः उषो वह्निस्तं धारयतीत्यौषधं तं वह्निं जाठरं क्षीरादिकं पाययतीति वा धेट् पाने तस्मिन् धमिति प्रोक्तं, यदग्नेर्बलमापादयतीत्यर्थः। नैरुक्तोऽत्र विधिरधिगन्तव्यः। औषधमोषधमोषधिरिति पर्यायाः। तदग्नेः स्थापनमेव दोषशमनमित्यर्थः। तदुक्तं—

"तदौषधमिति प्रोक्तं यदग्नेः साम्यकारणम्।
तत्स्थिते दोषशमनं रोगाणां च विनाशनम्॥"

इति। शोधनस्यापि शमनत्वं, द्रव्यस्य सर्वस्याप्यौषधत्वं, नौषधस्य सर्वस्य द्रव्यत्वमद्रव्यस्याप्यौषधत्वात्। द्रव्यशब्द औषधपर्यायोऽप्यस्ति। द्रव्याणीत्युद्दिश्य निर्देशे द्रव्यस्थाने औषधमिति वचनात्॥

इदानीं वातादीनां शोधने शमने च प्रधानं सङ्गृह्णाति—

**शरीरजानां दोषाणां क्रमेण परमौषधम्॥ २५॥**
**वस्तिर्विरेको वमनं तथा तैलं घृतं मधु।**

**शरीरजानामित्यादि**। शरीरजानां दोषाणां वातादीनां क्रमेण यथासंख्यं परं प्रधानमौषधम्। किं तदित्याह— वस्तिर्गुदे प्रणिधेयः स्नेहक्वाथादिर्वातस्य परमौषधं, विरेको मुखपीतं गुदमार्गेणान्तःस्थितस्य दोषस्य निस्सारणं पित्तस्य, वमनं मुखेन पीतं तेनैव दोषस्य निस्सारणं श्लेष्मण इति शोधनरूपेण तद्दोषाणामौषधम्। तैलादि तु शमनरूपेणेत्याह— तथेत्यादि। तैलं वातस्य, घृतं पित्तस्य, मधु श्लेष्मणः सञ्चयपूर्वं कुपितानां शोधनमन्येषां शमनमित्यर्थः॥

(आ)नसयोर्दोषयोः किं परमौषधमित्याह—

**धीधैर्यात्मादिविज्ञानं मनोदोषौषधं परम्॥ २६॥**

**धीत्यादि**। धीर्बुद्धिः वस्तुग्रहणशक्तिः, धैर्यं मनसः स्थिरत्वं यदा निषिद्धेषु कर्मसु न प्रवर्तते विहितेषु न विषीदति, आत्मा क्षेत्रज्ञः परमात्मादि-

भेदभिन्नः आत्मा आदिर्येषां प्रकृतिम(हा? हृदा)दीनां तेषां विज्ञानं विशिष्टज्ञानमात्मादिविज्ञानं धीश्च धैर्यं चात्मादिविज्ञानं च तन्मनोदोषयो रजस्तमसोरेव परमौषधम् । परशब्देनैतद् द्योतयति—रम्यं शब्दाद्यर्थपञ्चकमपि रजस्तमसोरौषधं यत्सौमनस्योपादानेन सत्त्ववृद्ध्या रजस्तमसी परिभवति । धीधैर्यादि तु तयोः परमौषधम् । तथाच सुश्रुतोक्तिः—

"मानसानां तु शब्दादिरिष्टो वर्गः सुखावहः ।"

इति । कालविशेषमाश्रित्य सर्वमेव योग्यम् । हृद्याकारस्तु—परमित्यनेन वमनादिशुद्धिरपि तयोरौषधमेवेति कथयतीत्याह । आत्मादीत्यत्रादिशब्देन देशकालादयो गृह्यन्त इत्यन्ये ॥ २६ ॥

एवं युक्त्या सकलमपि चिकित्सितमभिधायौषध(वो? वा)दप्रसङ्गेन तस्यैव भिषगादिपादचतुष्टयं वक्ति—

**भिषग् द्रव्याण्युपस्थाता रोगी पादचतुष्टयम् ।**
**चिकित्सितस्य निर्दिष्टं प्रत्येकं तच्चतुर्गुणम् ॥ २७ ॥**

**भिषगित्यादि** । अथवा शारीरमानसदोषभेषजं षोडशकलांशमिति द्योतयितुमिदमाह । 'औषधप्रसं(गा)त्तत्प्रयोगाङ्गान्याहे'ति हृद्याकारः । चिकित्सितस्य चिकित्सायाः रोगोपशमनलक्षणा(यः? याः) भिष(ग्रूपा? ग् द्रव्या)ण्युपस्थातारो(गि? गी)त्येत(द्वात? त् पाद)चतुष्टयमङ्गचतुष्टयमुक्तम् । न यत्किञ्चिदिति भावः । भिषगादीनां चतुर्णां पाठादेव चतुष्ट्वे गम्यमाने पुनश्चतुष्टयग्रहणं नियमार्थम् । भिषगादीनामुक्ता दक्षत्वादयो गुणा वक्ष्यमाणाश्च 'शौर्यमाशुक्रिये'त्यादय आरोग्यहेतव एतच्चतुष्कं नातिलङ्घयन्ति तेष्वेवान्तर्भावादिति । एकस्य चतुर्धा विभक्तस्यैकोंऽशः पादः । यथैकस्मिन्नप्यूने पादे श्लोको न निष्पद्यते यथा च पादेभ्योऽनन्यः एवं भिषगादीनामन्यत(र? म)वैकल्ये चिकित्सा न निष्पद्यते तेभ्यश्चानन्ये(ति) दर्शयितुमेषां पादसंज्ञा । ननु 'प्रवृत्तिर्धातुसाम्यार्था चिकित्से'त्यागमात् कथमेषामेव चिकित्सितत्वम् । उच्यते । धातुसाम्यार्थप्रवृत्तिसध्रीचां भिषगा(दीना)मभिधानात् तत्तद्धर्मोऽपि प्रवृत्तिः तेष्वेवान्तर्भवतीति न्यासे इति हाटकः । भिषग् द्रव्याण्युपस्थाता रोगीत्युक्तं यथापूर्वं प्राधान्यख्यापनार्थम् । तत्र भिषजः प्रथमग्रहणं पादेषु भिषजः प्राधान्यमिति सूचयितुम् । तथाच सङ्ग्रहे—

"यद्वैद्ये विगुणे पादा गुणवन्तोऽप्यनर्थकाः ।
स पादहीनानप्यार्त्तान् गुणवान् यश्च यापयेत् ॥

चिकित्सायास्तमेवातः प्रधानं कारणं विदुः ।"

इति। आगमश्चात्र—

"योक्ता प्रयोक्ता शास्ता च प्रधानो भिषगत्र तु ।
पक्तये करणं पक्तुर्यथा पात्रेन्धनानिलाः ॥
विजेतुर्विजये भूमिश्चमूः प्रहरणानि च ।
आतुराद्यास्तथा पादाः सिद्धौ कारणसंज्ञिकाः[1] ॥
मृद्दण्डचक्र(स्तत्रा? सूत्रा)द्याः कुम्भकाराहते यथा ।
नावहन्ति[2] गुणान् वैद्याहते पादत्रयं तथा ॥"

इति। द्रव्याणि हरीतक्यादीनि। औषधस्य प्रायेण द्रव्यात्मकत्वाद् द्रव्यप्राधान्याच्च द्रव्यशब्देनाभिधानम्। उपस्थाता परिचारकः रोगी व्याधि(तं? तः)। तच्च पादचतुष्टयं प्रत्येकमेकमेकं प्रति चतुर्गुणं चतुष्प्रकारम्। चत्वारो गुणा यस्य तच्चतुर्गुणम्। उक्तञ्च— 'चतुष्पादं षोडशकलं भेषजं विद्यादि'ति। गुणशब्दः प्रकारवाची ॥ २७ ॥

भिषगाख्यस्य पादस्य गुणानाह—

**दक्षस्तीर्थात्तशास्त्रार्थो दृष्टकर्मा शुचिर्भिषक् ।**

दक्ष इत्यादि। दक्षश्चतुरः ऊहापोहपटुरित्यर्थः। उत्थानशील इति हाटकः। तीर्थात्तशास्त्रार्थः तीर्थादाचार्यादात्तो गृहीतः शास्त्रार्थो येन स एवम्। तीर्थं सम्प्रदाय इति ह्याकारः। उपाद्ध्यायात् प्राप्तशास्त्रस्वरूप इति हाटकः। वमनादीनि कर्माणि दृष्टानि येन स दृष्टकर्मा। आचार्येण क्रियमाणानां कर्मणां दर्शने सत्येव क्रियमाणे सन्देहो निवर्तत इत्यर्थः। तदुक्तं— 'दृष्टकर्मता निस्संशयकराणा'मिति। शास्त्रार्थतत्त्वग्रहणं दृष्टकर्मता च सद्वैद्यत्वकारणमित्यर्थः। उक्तवांश्च—

"बहुश्रुतः कालवेदी जितग्रन्थोऽर्थतत्ववित् ।
गुरुणा समनुज्ञातः स भिषक्शब्दमश्नुते ॥
यस्तु केवलशास्त्रज्ञः कर्मस्वपरिनिष्ठितः ।
स मुह्यत्यातुरं प्राप्य प्राप्य भीरुरिवाहवम् ॥
यः पुनः कुरुते कर्म धाष्टर्याच्छास्त्रार्थवर्जितः ।
स सत्सु गर्हामाप्नोति वधं चेच्छति राजतः ॥
हेतौ लिङ्गे प्रशमने रोगाणामपुनर्भवे ।
ज्ञानं चतुर्विधं यस्य स राजार्हो भिषक्तमः ॥"

1. 'कारणसंज्ञिताः' इति मुद्रितचरके। 2. 'न वहन्ति' इति पाठभेदः।

इति । अथ बहुशो दृष्टमभ्यस्तं येन स दृष्टकर्मा बहुशश्चिकित्सितरोग इति हाटकः । तथा शुचिः शुद्धः कर्मवाङ्मनोव्यापारैर्मलीमसैरपरामृष्टः । अवञ्चक इत्यन्ये । भिषग्गुणानां मध्ये दक्षत्वस्यादौ ग्रहणं प्राधान्यात् । प्राधान्यं च तदधीनत्वाच्छास्त्रावबोधादेः । एवमितरेषामपि गुणानां यथापूर्वं प्राधान्यं वेदितव्यम् । एवमौषधादीनामपि व्याख्येयम् ॥

अथ द्रव्यगुणानाह—

**बहुकल्पं बहुगुणं सम्पन्नं योग्यमौषधम् ॥ २८ ॥**

बह्वित्यादि । औषधमपि चतुर्विधम् । बहुकल्पं बहवः कल्पा वमनाद्युपयोगिस्वरसादिभाण्टान्ताः कल्पना यस्य तदेवम् । अनेककल्पनासहमिति यावत् । यथा द्राक्षादि द्रव्यं नतु लवणवदेककल्पनं तस्य हि कल्करूपमेव कल्पनम् । नानारुचयो हि सत्वाः । स्वरसे कस्यचिद्रुचिर्जायते कस्यचित् कषाये (पू? चू)र्णे चान्यस्य । तस्माद् बहुकल्पं यथाकथञ्चिदुपयोक्तुं शक्यते द्रव्यं, तथाहि कल्पनादिबाहुल्ये सत्यभक्तप्रा(? ग्)भक्तादिभिर्बहुभिरुपचरणादिभिः सुखतरमुपयोक्तुं शक्यते भेषजम् । तथा बहवो गुणा गुरुमन्दादयो यस्य तद्बहुगुणं तथा सम्पन्नं सम्पत् सम्पत्तिः आमगन्धादिरहितत्वं पाकसंस्कारादियुक्तत्वं च कीटादि(जडं? जं) पूतिगन्धं सव्रणं सगदं चौषधं दुष्टं, तद्विपरीतं सम्पन्नम् । सम्पन्नाम गुणः । तथा योग्यं रोगस्य रोगिणश्च देशकालाद्यपेक्षया योगाय प्रभवति । 'योगाद्यच्चे'ति यत् । अथवा योग्यं स्वभावतः पथ्यं घृतडाडिमादि ॥ २८ ॥

उपस्थातृगुणानाह—

**अनुरक्तः शुचिर्दक्षो बुद्धिमान् परिचारकः ।**

अनुरक्त इत्यादि । परिचारकोऽपि चतुर्विधः । अनुरक्तः आतुरे भक्तः अथवा स्नेहवान् वैद्यातुरयोः ।

"भूयादनेन सफलं कृतमेतस्य भेषजम् ।
इति वैद्यातुरस्नेही सदा स्यात् परिचारकः ॥"

शुचिर्व्याख्यातः । दक्षः सर्वचेष्टासु चतुरः बुद्धिमान् प्राज्ञः वैद्यैः प्रमादेनानुक्तानुक्तानर्थानपि स्वया मनीषया कल्पयितुं क्षमः स्यात् परिचारकः ॥

रोगिगुणानाह—

**आढ्यो रोगी भिषग्वश्यो ज्ञापकः सत्त्ववानपि ॥ २९ ॥**

आढ्य इत्यादि । रोग्यपि चतुर्विधः आढ्यो धनवान् सर्वचिकित्साङ्गसम्पादनविधिप्रभुः भिषग्वश्यो वैद्यविधेयः ज्ञापकः वैद्यं रोगाहारादीनामन्वयव्यतिरेकं बोधयितुं समर्थः । सत्ववानभीरुरग्निशस्त्रादिरूपेषु भेषजेषु । अपि

शब्दः समुच्चये। तेन कदाचिदसत्त्ववत्त्वमपि गुण इति दर्शयति। तथाहि — रोगारम्भे भीरुत्वात् त्वरया परिहरति उन्मादे च भयोत्पादनमपि चिकित्सितमुक्तमिति। सत्त्वं तु सर्वदा गुण इति साक्षादधीतम्। अथवापिशब्देन षोडशगुणान्ते चिकित्सायां भिषजः प्राधान्यमेव दर्शयति। अपिशब्दात् परिचारकगुणवानित्यन्ये॥ २९॥

अथ पादचतुष्टयप्रवृत्तिविषयाणां व्याधीनां सुख(स्य? साध्या)दीन् भेदानाह —

**सर्वौषधक्षमे देहे यूनः पुंसो जितात्मनः।**
**अमर्मगोऽल्पहेत्वग्ररूपरूपोऽनुपद्रवः॥ ३०॥**
**अतुल्यदूष्यदेशर्तुप्रकृतिः पादसंपदि।**
**ग्रहेष्वनुगुणेष्वेकदोषमार्गो नवः सुखः॥ ३१॥**

सर्वेत्यादि। किञ्चित् षोडशांशया चिकित्सयापि साध्यलक्षणलक्षिता एव साध्यन्ते नान्यथेति सूचयितुमिदमाह। अथवा चिकित्सा या प्रकृता सा च व्याधेर्नाशिनमतस्तद्भेदानाह। सर्वाणि च तान्यौषधानि तीक्ष्णमृदुमध्यरूपाणि यथावस्थं यथास्वं व्याधियोग्यानि तेषां क्ष(से? मे)(हे?)तानि सोढुं समर्थे देहे शरीरे उत्पन्नो व्याधिः सुखः सुखसाध्यः। तथा यश्च यूनस्तरुणस्योत्पन्नः सोऽपि सुखः, न बालवृद्धयोः। तथा पुंसः पुंग्रहणं स्त्रीनपुंसकनिवृत्त्यर्थं तयोरल्पसत्वत्वात्। सत्वं नामाभीरुता सहिष्णुत्वं च तत्र सत्त्ववति हि तीक्ष्णापि क्रिया क्रियते इति। तथा जितात्मनो जितेन्द्रियस्योत्पन्नः (सुखः) अजितेन्द्रियस्य ह्यस्य (देहे उत्पन्नः सुखः?) पथ्यलोलुपता। तथा अमर्मगः शिरोहृदयादिमर्माप्राप्तः मर्मपीडाकरणेऽसमर्थः। हेतुर्निदानं यथा तिक्तोष्णादि वायोः अग्ररूपं पूर्वरूपम् अग्रं च तद्रूपं चाग्ररूपं यथा ज्वरस्यालस्यादि, रूपम् उत्पन्नस्य स्पष्टलक्षणं यथा वातज्वर आगमापगमेत्यादि, अल्पानि हेत्वग्ररूपरूपाणि यस्य सोऽल्पहेत्वग्ररूपरूपो गदः सुखः। कारणैरपरिपूर्णे कार्यस्याप्यपरिपूर्णतेति सुखसाध्यत्वम्। नन्वल्पहेतुरित्येतावदेव युक्तं वक्तुं, यतोऽल्पहेतोर्गदस्यावश्यं पूर्वरूपरूपेऽल्पे एव भवतः। अल्पाद्धि कारणात् कार्यं स्वल्पं दृश्यते महतो महत्। अस्त्येवैतत् किंत्वल्पेनैव हेतुना प्राक्तनाशुभकर्मणैव कश्चिद्व्याधिर्महान् जातो दृश्यते तत्र प्राग्रूपरूपे महती एव भवतः तयोर्व्याध्यायत्तत्वात्। तथाच वक्ष्यति — 'दृष्टापचारज' इत्यादिना। तस्मादल्पहेत्वग्ररूपरूप इति युक्तम्। तथा अनुपद्रवः उपद्रवरहितः सुखः। उत्पन्ने व्याधा-

धुत्पन्नं तदुपक्रमाविरोधि व्याध्यन्तरमुपद्रवः । वक्ष्यति च — 'जाताः पश्चादुपद्रवा' इति । तथाचागमः —

"व्याधेरुपरि यो व्याधिर्भवत्युत्तरकालजः ।
उपक्रमविरोधी च स ह्युपद्रव उच्यते ॥"

इति । अथवा नञीषदर्थे । अनुपद्रवोऽल्पोपद्रवः । अतुल्यदूष्यदेशर्तुप्रकृतिर्यः सोऽपि सुखः । अतुल्या दूष्यादयो यस्य स एवं नञ्प्रतिषेधेऽतुल्यदूष्यः यस्मिन् व्याधौ विसदृशेन दोषेण दूषितो दूष्यः यथा श्लेष्मणा शीतेन रक्तमुष्णं दूषितम् । अतुल्यदेशो व्याधिर्यथा — आनूपे पित्तसम्भूतः । अतुल्यर्तुर्यथा — शरदि कफोद्भवः । अतुल्यप्रकृतिर्यथा — पित्तप्रकृतेः श्लेष्मसम्भवः । दूष्यादीनामतुल्यत्वं व्याधेर्बलमान्द्यात् सुखसाध्यत्वम् ।

"ज्वरे तुल्यर्तुदूष्यत्वं प्रमेहे तुल्यदूष्यता ।
रक्तगुल्मे पुराणत्वं सुखसाध्यत्वहेतवः ॥"

इति । यद्वचनं तदस्यापवादः तथाविधस्वभावत्वात्तेषां व्याधीनाम् । तथा पादानां भिषगादीनां सम्पत् सम्पत्तिः परिपूर्णता यथोक्तगुणवैद्यौषधोपस्थातृरोगिसद्भावः तस्यां सत्यां यथोक्तसुखसाध्यलक्षणो गदः सुखसाध्यः । सुखसाध्यलक्षणोऽपि हि गदः पादसम्पदमन्तरेण कृच्छ्रसाध्यतामसाध्यतां वा याति । उक्तंच —

"नासाध्यः साध्यतां याति साध्यो यति त्वसाध्यताम् ।
पादापचारा(द्दे ? द्दै)वाच्च यान्त्यवस्थान्तरं गदाः ॥"

इति । यथा ग्रहेषु सूर्यादिषु नवस्वनुगुणेष्वनुकूलराशिस्थितेषु । उक्तञ्च —

"भानुर्निशाकृद्भूपुत्रो बुधो जीवो भृगुः शनिः ।
ग्रहाः सप्त शुभस्थाना नराणां शुभसूचकाः ॥"

इति । तथा एकदोषमार्गः । एतेन वातादीनामन्यतमेन दोषेण यो जातः (सं-के ? स एक)दोषः । तथैकमार्गः अन्तर्मार्ग एव वा बहिर्मार्ग एव वा । मार्गश्च शाखारक्तादय इत्यादिर्वक्ष्यमाणलक्षणः तथा नवः अचिरोत्थितः अनतीतसंवत्सरः सुखसाध्यः परिसंवत्सरस्य याप्यत्वात् । साध्यो द्विविधः सुखसाध्यः कृच्छ्रसाध्यः ।

"सुखसाध्यः सुखोपायः कालेनाल्पेन साध्यते ।
कृच्छ्रैरुपायैः कृच्छ्रस्तु महद्भिश्च चिरेण च ॥"

इति सङ्ग्रहे ।

"अनुपक्रम" इति सङ्ग्रहेऽप्युक्तम् । साध्योऽसाध्य इति व्याधिः द्विधा तौ पुनर्द्विधा — सुसाध्यः कृच्छ्रसाध्यश्च, याप्यो यश्च (अप्रतिक्रियः) । असाध्यो द्विविधः याप्यः प्रत्याख्येय इति । तदुक्तं—

"कृच्छ्रोपायः सुखोपायो द्विविधः साध्य उच्यते ।
असाध्यो द्विविधः प्रोक्तो याप्यो यश्चाप्रतिक्रियः ॥"

इति । सङ्ग्रहेऽप्युक्तं —

"साध्योऽसाध्य इति व्याधिर्द्विधा तौ तु पुनर्द्विधा ।
सुसाध्यः कृच्छ्रसाध्यश्च याप्यो य(श्च ? श्चानुपक्रमः)" ॥ ३०, ३१ ॥

(शस्त्रादिकं साधनं यस्य स शस्त्रादिसाधनः । अथवा सुदुष्करैरत्र ?) सुखसाध्यमुक्त्वेदानीं कृच्छ्रसाध्यादीन् क्रमेणाह —

**शस्त्रादिसाधनः कृच्छ्रः सङ्करे च ततो गदः ।**

शस्त्रेत्यादि । शस्त्रादिभिः साध्यते यो गदः स शस्त्रादिसाधनः कृच्छ्रः कृच्छ्रैरुपायैः साध्यते स कृच्छ्रसा(ध्यं ? ध्यः) यत्नेन साधनीय इत्यर्थः । आदिशब्देन क्षाराग्न्यादिपरिग्रहः । किमेतावदेव कृच्छ्रलक्षणं नेत्याह — सङ्करे च ततः चस्समुच्चये भिन्नक्रमः ततः सङ्करे स्थितश्च कृच्छ्र इत्यन्वय इत्यस्मद्गुरवः । त(त) इत्यनेन सुखसाध्यलक्षणः परामृश्यते तस्मात् सुखसाध्यलक्ष(णा ? ण)विपरीतैः कतिपयलक्षणैः सङ्करो मिश्रीभावः तस्मिन् सति यो गदो जातः स च कृच्छ्रसाध्यः न केवलं शस्त्रादिसाधन एव । यथा सर्वौषधक्षमे देहे यो व्याधिर्वृद्धस्य न यूनः, कदाचिद्यूनो न सर्वौषधक्षमे देहे जातः, स्त्रियो वा जातो न पुंसः, पुंसो वा जातो न सर्वौषधक्षमे देहे, यूनः पुंसो न जितात्मनः, जितात्मनो वा न सर्वौषधक्षमे देहे नापि यूनः, स एवं सुखसाध्यलक्षणस्य ए(ते ? के)न (द्वि)त्रैर्वा विपर्ययः सङ्करः । सुखसाध्यलक्षणस्याल्पहेत्वादिकत्वस्य तद्विपर्ययस्य प्रबलहेत्वादिकत्वस्य च मध्यपाति मध्यबलहेत्वादिकत्वमपि सङ्करशब्देन लक्ष्यत इति वेद्यम् । तथाच मुनिः —

"निमित्तपूर्वरूपाणां रूपाणां मध्यमे बले ।
कालप्रकृतिदूष्याणां सामान्येऽन्यतमस्य च ॥
गर्भिणीबालवृद्धानां नात्युपद्रवपीडितम् ।
शस्त्रक्षाराग्निकृत्या(ना)मनवं कृच्छ्रदेशजम् ॥

विद्यान्नातिसुखं रोगं नातिपूर्णचतुष्पदम् ।
द्विपथं नातिकालं वा कृच्छ्रसाध्यं द्विदोषजम् ॥"

इति । व्याख्याकारस्त्वाह — तत इति सुखसाध्यलक्षणपरामर्शो न युक्तः व्यवहितत्वान्निष्क्रष्टुमशक्यमिति तदयमर्थः— तच्छब्देन सुखसाध्यकृच्छ्रसाध्ययोः परिग्रहः । तयोर्लक्षणसङ्करे मिश्रीभावे यो गदः स च कृच्छ्रसाध्य इति ॥

साध्यस्य द्वैविध्यमुक्त्वासाध्यस्य द्वैविध्यं वक्तुमाह —

**शेषत्वादायुषो याप्यः पथ्याभ्यासाद्विपर्यये ॥ ३२ ॥**

शेषत्वादित्यादि । विपर्यये वैपरीत्ये, कस्य वैपरीत्ये सुखसाध्यलक्षणस्य सर्वौषधक्षमे देहे इत्यादेः, नतु कृच्छ्रसाध्यलक्षणस्य । तस्यानन्तरप्रस्तुतत्वेऽपि तद्विपर्ययस्य सुखसाध्यलक्षणरूपत्वाद्याप्यलक्षणत्वानुपपत्तेः । प्रायश्शब्दोऽध्याहार्यः अत्यन्तविपर्यय इति वक्ष्यमाणत्वात् । तथा च सङ्ग्रहे —

"शेषत्वादायुषः पथ्यैर्याप्यः प्रायो विपर्यये ।"

इति । विपर्यये सति यो गदः स याप्यो यापनीयः । आयुषः शेषसद्भावात् पथ्याभ्यासाच्च । पथ्यस्य हिताहारविहारस्याभ्यासः पुनः पुनः करणं सातत्येनानुष्ठानमित्यर्थः । अभ्यासशब्देन कादाचित्कानुष्ठानमात्रं निषेधति । सुखसाध्यकृच्छ्रसाध्ययोः साध्यत्वमनुवर्तते, तद्वैपरीत्ये त्याज्यत्वं प्राप्नोति । तन्निवृत्त्यर्थं हेतुद्वयमुपात्तम् । प्रत्याख्येयस्त्वयं न भवति । (त ? क)स्मादायुषः शेषत्वात् । प्रत्याख्येयस्य याप्यस्य च सकलसुखसाध्यलक्षणवैपरीत्ये तुल्येऽपि याप्यस्यायं विशेषः यदुतायुषः शेषत्वम् । याप्य इति, तत्राभिधानं तत्र प्रथमाभिधानेन (व ? ल)क्ष्यमभिप्रैति । द्वितीयेन तु लक्षणम् । अयं पिण्डः — सुखसाध्यलक्षणानां वैपरीत्ये सति यो व्याधिरायुषः शेषत्वात् पथ्याभ्यासेन याप्यते कथमपि दत्ताल्पसुखो नीयते न तु साध्यते नच मारयति स याप्यनामेति । स चेदल्पमपि हेतुं लभेत क्षणादेव प्रतन्यते । विपर्यये स्थिते इति वान्वयः ॥ ३२ ॥

अधुना प्रत्याख्येयमाह —

**अनुपक्रम एव स्यात्स्थितोऽत्यन्तविपर्यये ।**
**औत्सुक्यमोहारतिकृद् दृष्टरिष्टोऽक्षनाशनः ॥ ३३ ॥**

अनुपक्रम इत्यादि । सुखसाध्यव्याधिलक्षणस्यात्यन्तेनातिशयेन विपर्ययोऽत्यन्तविपर्ययः आयुःशेषस्याप्यभावोऽत्यन्तविपर्ययः तस्मिन् स्थितो गदो-

ऽनुपक्रम एवाचिकित्स्य एव स्यात् । न विद्यते उपक्रमो यस्य सोऽनुपक्रमः प्रत्याख्येय इत्यर्थः । किमेतावदेवानुपक्रमलक्षणं नेत्याह — यत्रायुश्शेषोऽपि नास्ति, औत्सुक्यमोहारतिकृच्च गदोऽनुपक्रम एव न विपरीतमात्रता प्रत्याख्येयव्याधेर्भेदे ज्ञेयः । तथा दृष्टरि(ष्टमु ? ष्ट उ)त्पन्नं रिष्टं यस्य सोऽपि गदोऽनुपक्रमो द्वितीयः । तथाक्षनाशनश्चक्षुरादीन्द्रियनाशनोऽनुपक्रम इति तृतीयः । एवमेते त्रयोऽपि गदाः प्रत्याख्येयाः । इन्द्रियनाशेऽपि नष्ट एव पुरुषः । इन्द्रियनाशनस्यायुर्लक्षणत्वाभावादायुरन्तर्भूतानामिन्द्रियाणामभावेऽपि मृत एव पुरुषः । सुखसाध्यकृच्छ्रसाध्ययाप्यानामपि कदाचित् पादापचारादौत्सुक्यमोहारतिकृत्वं तथा दृष्टरिष्टत्वं तथाक्षनाशनत्वं भवति । एतैश्च प्रकारैर्नव भेदाः प्रत्याख्येयव्याधेः । तथा स्थितोऽत्यन्तविपर्यय इति प्रथम अन्येभ्योऽपि दृश्यत इति ॥ ३३ ॥

अधुना साध्यव्याधिग्रस्ता अप्येवंविधा रोगिणः प्रत्याख्येया दृष्टादृष्टभयादित्याह —

**त्यजेदार्तं भिषग्भूपैर्द्विष्टं तेषां द्विषं द्विषम् ।**
**हीनोपकरणं व्यग्रमविधेयं गतायुषम् ॥ ३४ ॥**
**चण्डं शोकातुरं भीरुं कृतघ्नं वैद्यमानिनम् ।**

त्यजेदिति । एवंविधमार्तं व्याधितं भिष(ग्) वै(न्यज ? द्य)स्त्यजेत्, न चिकित्सेदित्येतत्पदं सर्वेषु योज्यम् । भूपैर्द्विष्टं यं नृपा द्विषन्ति, तथा तेषां भूपानां द्विषं शत्रुं, तथा द्विषं शत्रुं सामर्थ्यादात्मनः शत्रुमिति गम्यते । तथा हीनं विकलमुपकरणं चिकित्साङ्गं यस्य तं चिकित्साङ्गसम्पादनाशक्तमित्यर्थः । तथा व्यग्रं कार्यव्याकुलम्, अथवास्मिन् क्षणे व्याधिं नाशयेदिति त्वरावन्तं, तथाविधेयमवैद्यवश्यं तथा गतायुषं दृष्टारिष्टनिमित्तैः सम्यग्ज्ञातायुःक्षयम्, तथा चण्डं क्रूरकर्माणं पापकारकमिति यावत् । अथवेदं भेषजमस्य व्याधेः शमनं (च ? त)दद्यैव सर्वमुपयोक्ष्यामीत्यादि साहसिकमित्यर्थः । तथा शोकातुरं पुत्रकान्ताधनादिवियोगजेन शोकेन पीडितं तस्य व्याधिः साध्योऽप्यसाध्यतां याति । तथा भीरुं शस्त्रक्षाराग्निसाध्यामयपीडितो भीरुस्तत्कर्म सोढुं न सहते, उपकारिणः अपकारी कृतघ्नस्तं पापीयांसं त्यजेत् । तथा वैद्यमानिनं त्यजेत् । अवैद्योऽपि वैद्यमिवात्मानं मन्यमानः सम्यगपि निर्दिष्टं न करोति । अहमेव भेषजं जानामि किमनेनेति निन्दया स्वमतेन च भेषजं करोति वैद्याभिमानित्वेन मूढत्वात् । स्याद् । 'आर्द्रसन्तानते'त्यादिना करुणाप्रधानेन वैद्येन तेषामपि चिकित्सा कर्तव्या । उक्तञ्च —

"पुण्यवान् नियतायुश्च न कथञ्चिन्न जीवति ।
तस्माद्वा(चा ? च)रमोच्छ्वासाच्चिकित्सेदेव यत्नतः ॥"

इति । तत् कथमुच्यते त्यजेदार्तमित्यादि । अत्र सञ्चक्ष्महे प्रत्यवायभयाद् भूपद्विष्टं चिकित्सतो वैद्यस्य राजतो भयम् । एवमन्येष्वपि चिकित्सतो हेतवश्चिन्त्याः । अत्र केचित्— भिषग्भिर्भूपैश्च द्विष्टं भिषग्भूपद्विष्टमिति समस्यन्ति । 'आर्तं च नृपसद्वैद्यद्विष्टमि'तिवचनप्रत्ययात् । अस्माकमप्येतदेव मतं प्रायशः ॥

एवं सकलस्य तन्त्रस्यार्थजातं सङ्गृह्य सुखग्रहणार्थं ग्रन्थरूपानध्यायानपि सङ्गृह्णाति —

**तन्त्रस्यास्य परं चातो वक्ष्यतेऽध्यायसङ्ग्रहः ॥ ३५ ॥**

तन्त्रस्येत्यादि । एवमायुर्वेदतन्त्रशैली — सङ्ग्रह(प ? च)रकसौश्रुतेष्वप्येवमेव । अध्यायानां सङ्ग्रहोऽध्यायसङ्ग्रहः । अतः परमस्मादूर्ध्वमस्याष्टाङ्गहृदयाख्यस्य तन्त्रस्याध्यायसङ्ग्रहो वक्ष्यते । सङ्गृह्यत इति सङ्ग्रहः एकत्रोक्तिः संक्षेपो वा सङ्ग्रहः, एकदेशग्रहणोक्तिरित्यर्थः ॥ ३५ ॥

के पुनस्तेऽध्याया इत्याह —

**आयुष्कामदिनर्त्वीहारोगानुत्पादनद्रवाः ।**
**अन्नज्ञानान्नसंरक्षामात्राद्रव्यरसाश्रयाः ॥ ३६ ॥**
**दोषादिज्ञानतद्भेदतच्चिकित्साद्व्युपक्रमः ।**
**शुद्ध्यादिस्नेहनस्वेदरेकास्थपननावनम् ॥ ३७ ॥**
**धूमगण्डूषदृक्सेकतृप्तियन्त्रकशस्त्रकम् ।**
**सिराविधिः शल्यविधिः शस्त्रक्षाराग्निकर्मकाः ॥ ३८ ॥**
**सूत्रस्थानमिमेऽध्यायास्त्रिंशत्**

आयुष्कामेत्यादि । (आह ? ईहा)चर्या । दिनं च ऋतुश्च दिनर्तू तयोरीहे दिनर्त्वीहे । आयुष्कामश्च दिनर्त्वीहे च रोगानुत्पादनं च द्रवश्चायुष्कामदिनर्त्वीहारोगानुत्पादनद्रवाः । तेन आयुष्कामीयो दिनचर्या, ऋतुचर्या, रोगानुत्पादनीयो, द्रवद्रव्यविज्ञानीयश्चेति पञ्चाध्यायाः । अन्नज्ञानम् अन्नस्य संरक्षा अन्नविधि(रि)त्यर्थः । मात्रा च द्रव्यं च रसाश्च ते आश्रयो येष्वध्यायेषु त एवमथैषां द्वन्द्वः । तेऽध्यायाः अन्नस्वरूपविज्ञानीयः अन्नरक्षा मात्राशितीयो द्रव्यादिविज्ञानीयो रसभेदीयश्चेति । दोषादिज्ञानः दोषादिविज्ञानीयः

तद्भेदो दोषभेदीयः तच्चिकित्सा दोषोपक्रमणीयः, द्विप्रकार उपक्रमो (क्रमो?) द्व्युपक्रमः द्विविधोपक्रमणीयः । शोधनं शु(ध?द्धिः) एवमनेन चैकदेशेन शोधनादिगणसङ्ग्रहोऽध्याय उपलक्ष्यते । एवमन्यत्रापि योज्यम् । स्नेहनं स्नेहः स्नेहविधिः, स्वेदनं स्वेदः स्वेदविधिः । रेको विरेचनं वमनविरेचनविधिः । आस्थापनं वस्तिविधिः । नावनं नस्यविधिः । धूमो धूमपानविधिः, गण्डूषादिविधिः । दृशि सेको दृक्सेकः । आश्च्योतनमाश्च्योतनाञ्जनविधिः, तृप्तिस्तर्पणं तर्पणपुटपाकविधिः । यन्त्रमेव यन्त्रकम् । एवं शस्त्रकम् । संज्ञायां कः । यन्त्रविधिः शस्त्रविधिः । सिराविधिरिति मध्यमपदलोपाख्यया तन्त्रयुक्त्या सिरावेधनविधिः, शल्यविध्यादीनां द्वन्द्वः शल्यापहरणविधिः, शस्त्रशब्देन शस्त्रकर्मविधिरुपलक्ष्यते । क्षारश्चाग्निश्च क्षाराग्नी तयोः कर्म तत्र भवोऽध्यायः क्षाराग्निकर्मविधिः । सूच्यतेऽनेन सकलतन्त्रार्थ इति सूत्रं हेतुलिङ्गौषधरूपं तत्तिष्ठत्यस्मिन्निति सूत्रस्थानम् । इमे पूर्वोक्तास्त्रिंशदध्यायाः सूत्रस्थानम् ॥

**शारीरमुच्यते ।**
**गर्भावक्रान्तितद्व्यापदङ्गमर्मविभागिकम् ॥ ३९ ॥**
**विकृतिर्दूतजं षष्ठं**

**शारीरमित्यादि** । शरीरस्येदं शारीरं, तच्छारीरस्थानमुच्यते । अध्यायसङ्ग्रह इति शेषः । किं तदित्याह — गर्भावक्रान्तीत्यादि । गर्भस्यावक्रमणं गर्भावक्रान्तिः, तस्य गर्भस्य व्यापत् गर्भव्यापत् । अङ्गं च मर्म चाङ्गमर्मणी तयोर्विभागावङ्गमर्मविभागौ तौ विद्येते ययोरध्याययोस्तावङ्गमर्मविभागिकौ । अङ्गविभागो मर्मविभागः । विकृतिशब्देन विकृतिविज्ञानीयः । दूते दूतविषये जातं दूतजं दूतादिविज्ञानीयः । षष्ठं षण्णां पूरणम् । दूतगः षष्ठ इति द्व्याकारस्य पाठः । दूताद्गच्छतीति दूतगः ॥

**निदानं सार्वरोगिकम् ।**
**ज्वरासृक्श्वासयक्ष्मादिमदाद्यर्शोऽतिसारिणाम् ॥ ४० ॥**
**मूत्राघातप्रमेहाणां विद्रध्याद्युदरस्य च ।**
**पाण्डुकुष्ठानिलार्त्तानां वातास्रस्य च षोडश ॥ ४१ ॥**

**निदानमिति** । निदानं नाम स्थानम् । सर्वरोगेषु भवं सार्वरोगिकम् । सर्वरोगनिदानमिति यावत् । तथा ज्वरादीनां सम्बन्धीनि निदानानि चतुर्दश । यथा — ज्वरनिदानम् । श्वासहिध्मानिदानम् । यक्ष्मादीति । राजयक्ष्मादि-

निदानम् । आदिशब्देन स्वरभेदादीनां ग्रहणम् । मदादीति । मदात्ययादिनिदानम् । आदिशब्देन मदादीनां ग्रहणम् । अर्शोनिदानम् । अतिसारग्रहणीनिदानम् । मूत्राघातनिदानम् । प्रमेहनिदानम् । विद्रधिवृद्धिगुल्मनिदानम् । उदरनिदानम् । पाण्डुशोफविसर्पनिदानम् । कुष्ठश्वित्रकृमिनिदानम् । वातव्याधिनिदानम् । वातास्रस्य च वातशोणितस्य निदानम् । षोडशः षोडशानां पूरणोऽध्यायः वातशोणितनिदानम् । षोडश इति पूरणार्थप्रत्ययेन स्थानपरिसमाप्तिरिष्यते । तदेवं षोडशाध्याया निदानस्थानम् ॥ ४१ ॥

अधुना चिकित्सितस्थानं वक्ति —

**चिकित्सितं ज्वरे रक्ते कासे श्वासे च यक्ष्मणि ।**
**वमौ मदात्ययेऽर्शःसु विशि द्वौ द्वौ च मूत्रिते ॥ ४२ ॥**
**विद्रधौ गुल्मजठरपाण्डुशोफविसर्पिषु ।**
**कुष्ठश्वित्रानिलव्याधिवातास्रेषु चिकित्सितम् ॥ ४३ ॥**
**द्वाविंशतिरिमेऽध्यायाः**

चिकित्सितमिति स्थानम् । उपरितनचिकित्सितशब्दः सर्वत्र योज्यः । ज्वरे चिकित्सितं ज्वरचिकित्सितमित्यर्थः । एवमन्येष्वपि सम्बन्धः । रक्तपित्तचिकित्सितं कासचिकित्सितं वातशोणितचिकित्सितमित्येते द्वाविंशतिरध्यायाश्चिकित्सितस्थानम् ॥

**कल्पसिद्धिरतः परम् ।**
**कल्पो वमेर्विरेकस्य तत्सिद्धिर्वस्तिकल्पना ॥ ४४ ॥**
**सिद्धिर्वस्त्यापदां षष्ठो द्रव्यकल्पो-**

अतश्चिकित्सितस्थानादनन्तरं कल्पसिद्धिर्नाम स्थानम् । कल्पश्च व्यापत्सिद्धिश्च कल्पसिद्धी तयोः स्थानम् । कल्पसिद्धि (:? स्थानम् ।) वमनकल्पः विरेचनकल्पः वमनविरेचनव्यापत्सिद्धिः । वस्तिकल्पः वस्तिव्यापत्सिद्धिः । द्रव्यकल्पः । षष्ठः षण्णां पूरणः षडध्यायाः । कल्पस्थानमित्यर्थः ॥

**ऽत उत्तरम् ।**
**बालोपचारे तद्व्याधौ तद्ग्रहे द्वौ च भूतगौ ॥ ४५ ॥**
**उन्मादेऽथ स्मृतिभ्रंशे द्वौ द्वौ वर्त्मसु सन्धिषु ।**
**दृक्तमोलिङ्गनाशेषु त्रयो द्वौ द्वौ च सर्वगौ ॥ ४६ ॥**

**कर्णनासामुखशिरोव्रणे भग्ने भगन्दरे।**
**ग्रन्थ्यादौ क्षुद्ररोगेषु गुह्यरोगे पृथग्द्वयम् ॥ ४७ ॥**
**विषे भुजङ्गे कीटेषु मूषकेषु रसायने।**
**चत्वारिंशोऽनपत्यानामध्यायो बीजपोषणः ॥ ४८ ॥**
**इत्यध्यायशतं विंशं षड्भिः स्थानैरुदीरितम् ॥ ४८½ ॥**

अतोऽस्मात् कल्पस्थानादूर्ध्वमुत्तरं नाम स्थानम्। अनेन तन्त्रकारेण कायाङ्गं प्रधानत्वेन स्वीकृतम्। तच्च पञ्चभिः स्थानैर्विस्तरेणोक्तम्। इदानीमन्येषां बालादीनां चिकित्सितं यत्राभिधीयते तदुत्तरम्। तत्र बालोपचरणीयः उपचारः। तद्व्याधौ बालामयप्रतिषेधः। भूतगौ भूतविषयौ द्वावध्यायौ भूतग्रहविज्ञानीयः भूतपूर्वग्रहप्रतिषेधः। उन्मादे एकः उन्मादप्रतिषेधः अथेत्यानन्तर्ये। स्मृतिभ्रंशोऽप(स्ता ? स्मा)रः तस्मिन्नेकोऽपस्मारप्रतिषेधः। उन्मादे च स्मृतिभ्रंश इति वा पाठः। वर्त्मसु वर्त्मरोगेषु द्वौ द्वौ वर्त्मरोगविज्ञानीयः वर्त्मरोगप्रतिषेधः। सन्धिसितासितरोगविज्ञानी(यः ? य)प्रतिषेधौ। दृक्तमोलिङ्गनाशेषु त्रिष्वप्येकैक इति त्रयः। लिङ्गनाशः पाटलः। दृष्टिरोगविज्ञानं तिमिरप्रतिषेधः लिङ्गनाशप्रतिषेधः। सर्वगौ इति प्रकृतत्वात्सर्वनेत्रग इति गम्यते सर्वाक्षिरोगे कर्णादिषु च व्रणान्तेषु द्वौ द्वौ सर्वाक्षिरोगविज्ञानीयः सर्वाक्षिरोगप्रतिषेधः। कर्णरोगविज्ञानप्रतिषेधौ नासारोगविज्ञानप्रतिषेधौ मुखरोगविज्ञानप्रतिषेधौ शिरोरोगविज्ञानप्रतिषेधौ व्रणप्रतिषेधः सद्योव्रणप्रतिषेधः। भङ्गे भगन्दरे चैकैकः भङ्गप्रतिषेधो भगन्दरप्रतिषेधः। ग्रन्थ्यादौ क्षुद्ररोगे गुह्यरोगे च पृथग्द्वयं प्रत्येकं द्वौ द्वौ ग्रन्थ्यर्बुदश्लीपदापचीनाळीविज्ञानप्रतिषेधौ क्षुद्ररोगविज्ञानप्रतिषेधौ गुह्यरोगविज्ञानप्रतिषेधौ। विषादिष्वेकैकः। विषप्रतिषेधः। सर्पविषप्रतिषेधः सर्पदंष्ट्राप्रतिषेधः। कीटलूतादिविषप्रतिषेधः। मूषिकाळर्कप्रतिषेधः। रसायनाध्यायः। चत्वारिंशः एषां पूरणः चत्वारिंशोऽध्यायः अनपत्यानां बीजं शुक्रं पोषयतीति बीजपोषणः वाजीकरणाध्याय इत्यर्थः। एवमेते चत्वारिंशदध्याया उत्तरस्थानमित्यनेन प्रकारेणाध्यायानां शतं विंशं विंशत्यधिकं सूत्रस्थानादिभिः स्थानैरुदीरितं प्रोक्तम्। विंशमिति शदन्तं विंशतेर्डः इति टिलोपः इतिशब्दः परिसमाप्तौ वा। आह। सङ्ग्रहानर्थक्यं वक्ष्यमाणत्वादध्यायानाम्। उच्यते। साकल्याभिधानार्थम्। अध्यायसङ्ग्रहे क्रियमाणे सकलतन्त्रं कार्त्स्न्येन गृहीतं भवतीति। तथाचागमः—

"यथा सुमनसां सूत्रं सङ्ग्रहार्थे विधीयते ।
सङ्ग्रहार्थे तथार्थानामृषीणां सङ्ग्रहः कृतः ॥"

इति ॥ ४५–४८½ ॥

इति श्रीदासपण्डितविरचितायां अष्टाङ्गहृदयव्याख्यायां हृदयबोधिकाख्यायां प्रथमोऽध्यायः ॥

---

## अथ द्वितीयोऽध्यायः ।

आयुष्कामीयाध्यायानन्तरं दिनचर्याध्याय आरभ्यते यत आयुः कामयमानेनेत्यादिना आयुष्यमासेव्यमिति प्रत्यपादि । आयुष्याणां तु प्रधानमाचारः । तथा चाह भगवान् व्यासः —

"आचाराल्लभ्यते ह्यायुराचारो हन्त्यलक्षणम् ।
आयुः कामयमानेन तस्मादाचार इष्यते ॥"

इति । स आचारः प्रत्यहमनुष्ठीयमानः आयुषोऽभिवृद्धिहेतुः तस्मादाचारज्ञापनार्थं दिनचर्याध्याय एव वक्तुं न्याय्यम् । अथवा एवं संबन्धः अस्मिंस्तन्त्रे आयुषः पालनं प्रकृतं तच्च द्विविधं स्वस्थवृत्तमातुरवृत्तं च तयोः स्वल्पवक्तव्यत्वादातुरोपयोगित्वाच्च स्वस्थवृत्तमेवादावारभ्यते । तत्रास्याचारस्य प्राधान्याद् दिनचर्याध्यायारम्भः । यद्वा 'आयुः प्रधान'मित्युक्तं पूर्वस्मिन् तस्य वृद्धये आचारो भवतीत्याह—'दिनचर्यामनन्तरम्' इति पाठ्यकारः । अथवा

"आयुष्याणां मुख्यतममारोग्यस्योपपादकम् ।
नित्याचारं बोधयितुं दिनचर्याभिधीयते ॥"

### अथातो दिनचर्याध्यायं व्याख्यास्यामः ॥

अथेति । अथात इ(त्यादिवाक्य ? तिपद)द्वयमायुष्कामीयवत् सर्वत्र व्याख्येयम् । अथवा अथेति पूर्वाध्यायानन्तर्ये । अत इति हेतौ यत एवं पूर्वाध्यायेनास्याध्यायस्य संबन्धः अतो हेतोरित्यर्थः । एवमुत्तराध्यायेष्वप्यथातःशब्दौ व्याख्येयौ इति हाटकः । दिनचर्यामध्यायमिति विलिङ्गत्वेऽपि नियतलिङ्गत्वादन्वयो युज्यते । दिने दिने चर्या उभयलोकहिता दिनचर्या । चर्या चेष्टा वृत्तमाचार इत्यनर्थान्तरं सा उपदिष्टा यत्राध्याये सोप्युपचाराद् दिनचर्येत्युच्यते । बहुकरणीयतया प्राधान्याच्च दिनचर्याध्यायोऽयमुच्यते । तथा च रात्रिचर्याप्यत्रोपदिष्टा — 'निशि चात्ययिके कार्ये' इत्यादिना । उपलक्षणमात्रं वा रात्रिंदिवस्य दिनशब्दः । तथा हि क्वचिद् रात्रिशब्देन रात्रिन्दिवमपि

गृह्यते—'सप्तरात्रं च लङ्घनादि'त्यादिना । इति ह स्माहुरिति प्रत्यध्यायं किमिति चेत्, इत्यर्थम् । उक्तं च —

"आयुर्वृद्धिं यशो भाग्यं कार्यसिद्धिमविघ्नताम् ।
लभते शास्त्रकर्तॄणामृषीणां बहुसंस्तवात् ॥"

इति ॥

**ब्राह्मे मुहूर्त्ते उत्तिष्ठेत् स्वस्थो रक्षार्थमायुषः ।**

**ब्राह्म** इत्यादि । ब्रह्मणोऽयं ब्राह्मः ब्रह्म ज्ञानं तदर्थमध्ययनाद्यपि ब्रह्म तस्य योग्यो मुहूर्त्तः स च सन्ध्यायाः पूर्वो मुहूर्त्तः नाडिकाद्वयं रात्रेश्चतुर्घटिकावशेषे समुत्थानं कार्यमिति अभ्यासाद्यपेक्षया तत्पूर्वोऽपि । उक्तं च —

"षष्ठोऽष्टमो वा योंऽशस्तु निशायाः षोडशोऽपि वा ।
ब्राह्मं मुहूर्त्तं तं विद्याद् विकल्प्यः शक्त्यपेक्षया ॥"

इति । तस्मिन् ब्राह्मे मुहूर्त्ते उत्तिष्ठेत् । किं भूतः स्वस्थः नीरोगः अनातुरः ।

"समदोषः समाग्निश्च समधातुमलक्रियः ।
प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते ॥"

इति स्वस्थलक्षणम् । अस्वस्थस्योत्थानं व्याधिवशादनियतं वेदितव्यम् । किमर्थमुत्तिष्ठेत् । आयुषो जीवितस्य यथोचितस्य परिपालनार्थं तदाप्युत्तिष्ठतो व्याध्यल(क्ष्या? क्ष्म्या)द्यभावेनायुषो रक्षा भवति । आयुःपरिपालनार्थमाचारः प्रभवत्येव । तथा ऱ्यागमः —

"स्वस्थवृत्तं यथोद्दिष्टं यः सम्यगनुवर्त्तते ।
स समाः शतमव्याधिरायुषा न वियुज्यते ॥"

इति ॥

**शरीरचिन्तां निर्वर्त्य कृतशौचविधिस्ततः ॥ १ ॥**
**अर्कन्यग्रोधखदिरकरञ्जककुभादिकम् ।**
**(कनीन्यग्रसमस्थौल्यं प्रगुणं द्वादशाङ्गुलम् ।)**
**प्रातर्भुक्त्वा च मृद्वग्रं कषायकटुतिक्तकम् ॥ २ ॥**
**भक्षयेद्दन्तधवनं दन्तमांसान्यबाधयन् ।**

शरीरस्य चिन्ता शरीरचिन्ता जीर्णाजीर्णनिरूपणमिति सङ्ग्रहदर्शनाद् द्योत्यते तथाहि —

"ब्राह्मे मुहूर्त्ते उत्तिष्ठेज्जीर्णाजीर्णे निरूपयन् ।"

इति । धातुभेदेन शरीरावयवसंख्यानमिति योगशास्त्रनिष्णाताः । तथाहि—

"निशामध्यमभागं त(द ? म)तिक्रम्य नृपोत्तम! ।
धमन्यादिविभागेन संख्यां कुरु दिने दिने ॥"

इति । 'मित्रद्रव्यसञ्चयादिशरीरयात्रार्था चिन्ते'त्यर्थशास्त्रे स्थिता । तथाहि —

"कः कालः कानि मित्राणि को देशः कौ व्ययागमौ ।
कश्चाहं का च मे शक्तिरिति चिन्त्यं मुहुर्मुहुः ॥"

इति । 'अपररात्रप्राप्तबुद्धिप्रसादाः कवय इव महीपाश्चिन्तयन्त्यर्थजातमि'-त्यादि च । तस्माच्छरीरचिन्ता ह्यस्तनाहारजीर्णाजीर्णनिरूपणादिका इत्यर्थो गम्यते । ह्यस्तनमाहारं मया भुक्तं जीर्णं नाम इति निरूप्य जीर्णे तु (जी) तदोत्तिष्ठेत् । अजीर्णे तु स्वप्यात् । उक्तं च —

"चतुर्नाड्यवशिष्टायां निशायां प्राप्तजागरः ।
चिन्तयेदात्मनोऽवस्थां जीर्णाजीर्णादिकां नरः ॥
नीरुजो, रोगवान् व्याधेरवस्थापेक्षमाचरेत् ।"

इति । तां निर्वर्त्य कृत्वा । एतच्च दोषपरिहाराय । उत्थितश्च कं कुर्यादि-त्याह — कृतेत्यादि । ततो मूत्रपुरीषोत्सर्गादेः कृतशौचविधानः । अनेन सङ्ग्रहोक्तं मलोत्सर्गशौचादिकं सर्वमनुवदति । ततोऽनन्तरमर्कादिकं दन्तधवनं भक्षयेत् । अर्कम् = (എരുക്ക്). न्यग्रोधम्=(പേരാൽ). खदिरम् = (കരിങ്ങാലി). करञ्जम् = (ഉങ്ങ്). ककुभम्=(നീർമരുത്). आदिग्रहणेन मालतीकरवीरादिग्रहणम् । अथवा कण्टकिनो वल्लीवृक्षादयो गृह्यन्ते कथं भक्षयेत् । दन्तानां मांसान्यबाधयन् अपीडयन् अतिवेगेन तीक्ष्णाग्रेण न कुर्या-दित्यर्थः । प्रातः प्रत्युषसि भुक्त्वा च आहारं भक्षयेद् वा भक्षयेद् मृद्वग्रं तथा कषायकटुतिक्तकं रसत्रयेण ह्यनेन श्लेष्मापनयनेन मुखवैशद्यरुचिलघुतादयः सम्यक् संपद्यन्ते रसानुक्रमेण कटुतिक्तकषायमिति वक्तव्ये रसक्रमं हित्वा तिक्तमन्ते पठन् दन्तपवनकर्मणि तिक्तमेव श्रेष्ठमिति दर्शयति । अर्काद्युपादा-नादेव कषायकटुतिक्तकत्वे लब्धे पुनरपि तद्ग्रहणं तद्रसयोगिनामन्येषामपि द्रव्याणां सङ्ग्रहार्थं स्पष्टार्थं वा । अर्कादिग्रहणमुदाहरणार्थं ज्ञेयम् । अभक्षणे भक्षयेदिति प्रयोगो भोजनेप्रयुक्तमौनाचमनादिविधानार्थम् । भक्षणशब्दप्रयोगो

भक्षणवत् पूर्वं पश्चाच्चाचमनार्थमिति न्यासे । अभक्षणे भक्षणशब्दो भक्षण-धर्माणामाचमनादीनां विधानार्थ इति पञ्जिकायाम् । त्रिकटुक्षौद्राक्ताग्रेण द्वादशाङ्गुलेन सत्वचा कार्यमित्यादि । तथा श्लेष्मातकाद्यनिष्टदन्तधावन(नि)षेधश्च संग्रहादिभ्यो ज्ञेयम् ।

"वाप्यत्रिवर्गत्रितयक्षौद्राक्तेन च घर्षयेद् ।"

इति संग्रहे ।

"अजग्धमनुपाक्लिन्नं षडष्टद्वादशाङ्गुलम् ।
प्रदेशिनीमुखसमं मृदु स्याद् दन्तधावनम् ॥"

इति सौश्रुते । *निर्लेखनं दन्तपवनान्तर्भूतम् ॥

**नाद्यादजीर्णवमथुश्वासकासज्वरार्दिती ॥ ३ ॥**
**तृष्णास्यपाकहृन्नेत्रशिरःकर्णामयी च तत् ।**

**नाद्यादिति** । अजीर्णादीनां द्वन्द्व इ(ति ? )निश्च तथा तृष्णादीनां च । अजी(र्ण ? र्णी)तद्दन्तपवनं न भक्षयेत् । एवं वम(च्छमदा ? श्वा)दिष्वप्येकादशसु योज्यम् । वमथुश्छर्दिः । आमयशब्देन हृदादीनां संबन्धः ॥

ततः सन्ध्योपासनादिकं धर्मशास्त्रोक्तमुपजीव्य स्वशास्त्राधिकृतमारोग्यसाधनमाह —

**सौवीरमञ्जनं नित्यं हितमक्ष्णोस्ततो भजेत् ॥ ४ ॥**
**†लोचने तेन भवतः सुस्निग्धघनपक्ष्मणी ।**
**व्यक्तत्रिवर्णे विमले मनोज्ञे सूक्ष्मदर्शने ॥ ५ ॥**

**सौवीर**मित्यादि । ततो दन्तधावनानन्तरं सौवीराख्यमञ्जनं सुवीरदेशजातमञ्जनविशेषं नित्यं भजेत् कस्माद् यतो हितमक्ष्णोः । तेनाञ्जनेन लोचने व्यक्तत्रिवर्णे स्पष्टशुक्लकृष्णरक्ते व्यक्तत्रिवर्णत्वाद् विमले सूक्ष्मदर्शने अत्यन्तसूक्ष्मप्रेक्षणसमर्थे । नित्याचारे प्रस्तुते नित्यग्रहणमावश्यकद्योतनार्थम् । पिण्डरसक्रियाचूर्णाञ्जनद्रव्येषु स्वस्थहितेष्वातुरहितेषु च बहुषु सत्सु कथं सौवीरमिति चेद् । ब्रूमः । सौवीरस्य सौम्यवर्णता । तथा (न ? ना)न्येषामञ्जनानाम् । केवलं चौषधिरावमनं प्रयुज्यते, सौवीरमलङ्कारार्थम् । सौवीराञ्जिताक्ष्यलङ्कृते वदने यथा ताक्ष्यशोभं मङ्गलार्थम् । सौवीरमञ्जनं त्रिदोषशमनम् । शालाकिनस्तथाहुः —

---

* 'लिखेदनुसुखं जिह्वां जिह्वा निर्लेखनेन च' इति संग्रहे । † मुद्रितपुस्तके न दृश्यते ।

"सौवीरकं तत्प्रयोगात् सर्वदोषापहं मतम् ।"

इति । प्रयुक्तस्य स्वस्थहितस्याञ्जनस्य निर्हरणादिक(षाया ? मा)नुषाङ्गिकं फलम् ॥ ५ ॥

**चक्षुस्तेजोमयं तस्य विशेषात् श्लेष्मणो भयम् ।**
**योजयेत्सप्तरात्रेऽस्मात् स्रावणार्थं रसाञ्जनम् ॥ ६ ॥**

**चक्षुरित्यादि** । अस्मात् कारणात् स्रावणार्थं चक्षुषः कफस्रावणार्थं सप्तरात्रे तु सति अतिक्रान्त इत्यर्थः । रसाञ्जनं दार्वीक्काथसमुद्भवा(ख्या ? ख्यं) योजयेत् ।

"सौवीराञ्जनसंयुक्तो दार्वीक्काथो घनीकृतः ।
रसाञ्जनत्वं लभते तत्परं नेत्ररक्षणम् ॥"

यस्माच्चक्षुस्तेजोमयमाग्नेयम् अत्र चक्षुःशब्द इन्द्रियवाचकः । यद्यपि पञ्चभूतात्मकं सर्वं, तथापि बाहुल्येन व्यपदेशः । (वचनं हि ?) तस्य चक्षुषो वातपित्ताभ्यां च भयमस्ति विशेषेण तु सौम्यात् कफाद् भयं स्यादिति शेषः विपरीतैर्विपर्यय इति । अथवा श्लेष्मतो भयम् आप्यत्वात् श्लेष्मणः । दृष्टं चैतद् बाह्यस्य वह्नेरद्भिर्निवारणम् । विशे(षे ? षादिति) ग्रहणाद् वातपित्ताभ्यामपि भयमस्तीति गम्यते । तन्निवृत्त्यर्थं श्लेष्मस्रावणाय रसाञ्जनं योजयेत्, स्वस्थस्य सप्तरात्रे, आतुरस्य व्याधिवशात् । सप्तरात्र इति मध्यमां गतिमाश्रित्योक्तम् — अत ऊर्ध्वमर्वागपि प्रकृत्यादिवशाद् योज्यमेव । तथाचागमः —

"पञ्चरात्रेऽष्टरात्रे वा स्रावणार्थं रसाञ्जनम् ।"

इति । अत्र च स्वभावनियमेऽपि कालविशेषग्रहणं निरन्तरस्रावणवर्जनार्थम् ॥ ६ ॥

**ततो नावनगण्डूषधूमताम्बूलभाग्भवेत् ।**

**तत इत्यादि** । अञ्जनादनन्तरं वक्ष्यमाणलक्षणानि नावनादीनि भजेत । पाठ्यकारस्त्वाह — नावनगण्डूषधूमाः सप्तरात्रात् प्रयोक्तव्याः स्रावणार्थप्रयुक्तरसाञ्जनानन्तरोक्तत्वाद् देशकर्तृत्वं न विद्येत । तस्माद् रसाञ्जनप्रयोगानन्तरं नस्यकवलधूमाः क्रमात् प्रयोज्या इति अञ्जनादीनि उद्देशक्रमेण सेव्यानि । तथाच संग्रहे —

"अञ्जनोत्क्लेशितं नस्यैः कवलैर्नावनेरितम् ।
धूमेन कबलोत्क्लिष्टं क्रमाद् वातकफान् जयेत् ॥"

इति। शालाकिनो रसाञ्जनानन्तरं धूमं धूमानन्तरं नस्यमिति वदन्ति—

"तीक्ष्णाञ्जनेनाञ्जितलोचनस्य यः सम्प्रदुष्टो न निरेति नेत्रात्।
श्लेष्मा शिरस्थः स च पीतमात्रे धूमे प्रशान्तिं लभते क्षणेन॥"

इति। ताम्बूलभाग् भवेत् ताम्बूलस्यास्य सौगन्ध्यवैशद्यारुचिहरत्वादिगुणवत्त्वात्॥

अन्यत्र प्रसङ्गाभावात् ताम्बूलस्य निषेधविषयं दर्शयति—

**ताम्बूलं क्षतपित्तास्ररूक्षोत्कुपितचक्षुषाम्॥ ७॥**
**विषमूर्च्छामदार्तानामपथ्यं शोषिणामपि।**

**ताम्बूलमित्यादि।** ताम्बूलं क्षतादीनामपथ्यम् अहितं क्षतमुरःक्षतं तद्वान् क्षतः 'अर्श आदिभ्योऽच्' एवं पित्तास्रः पित्तान्यद्रक्तपित्तं रूक्षो रूक्षशरीरः अन्तर्बहिःस्नेहसेवारहितः उत्कुपितमभिष्य(ग्रं? न्दि)चक्षुरेकं द्वे वा यस्य स एवं रूक्षेण हेतुना उत्कुपितचक्षुष इति वा। विषाद्यार्तानां च। मदो नाम पित्तविकारः पित्तकार्यः। शोषी राजयक्ष्मी। शोषिणामित्यसमासग्रहणात् तेषामास्यवैरस्यारुचिप्रसेकादिहरत्वादीषदनुज्ञातम्। अपिशब्दाज्ज्वरादीनाम् अपथ्यम्। ताम्बूलमिति केवलस्य नागवल्लीदलस्य न ग्रहणं किन्तु योगविशेषस्य

"ह्रूणीगण्डविपाण्डु नागलतिकापर्णं सपूगीफलं
सौधक्षारपरागलेशशबलं कर्पूरफाल्युद्गणम्।
योगोऽयं मदनप्रभावभवनं ताम्बूलनामा मुख-
श्रीकान्तिप्रभवः सुसौरभनिधिः पयूषयूषोद्गमः॥"

इति॥

वस्त्रालङ्करणादि प्रसिद्धमित्यनुक्त्वावश्यकर्तव्यमाह—

**अभ्यङ्गमाचरेन्नित्यं स जराश्रमवातहा॥ ८॥**
**दृष्टिप्रसादपुष्ट्यायुःस्वप्नसुत्वक्त्वदार्ढ्यकृत्।**

**अभ्यङ्गमित्यादि।** एवं तदेतत् सर्वं विधाय भोजनासन्नकाले अभ्यङ्गं नित्यमाचरेत्। नित्याचारे प्रस्तुते नित्यग्रहणमतिशयार्थम् अथवा नित्यग्रहणमुपलक्षणार्थम् एकद्वित्रिदिनान्तरमपि यथोचितमाचरतो न दोषः। सोऽभ्यङ्ग आचर्यमाणो जरादिहा। तथा दृष्टिप्रसादादिकृत् दृष्टेः प्रसादो वैमल्यं पुष्टिः शरीरपोषः सुत्वक्त्वं शोभनत्वग्वत्ता दृढस्य भावो दार्ढ्यम्॥

**शिरःश्रवणपादेषु तं विशेषेण शीलयेत् ॥ ९ ॥**

**शिर** इत्यादि । तमभ्यङ्गं शिरःश्रवणपादेषु विशेषेणातिशयेन शीलयेदभ्यस्येद् इति वचनाद् त्ववश्यं न तथा शरीरेऽभ्यङ्गः कार्यः यथैतेषु शिरःश्रवणपादेषु शिरसि शीलितस्य गुणावहत्वात् । वचनं हि —

'स केश्यः शीलितो मूर्ध्नि कपालेन्द्रियतर्पण'

इति । श्रवणे विशेषेण शीलनं तस्य वायव्यत्वात् । आगमो हि वायुः श्रोत्रस्पर्शनयोर्मूलमिति । पादे शीलनं च वातस्य स्थानत्वात् हृन्नाभ्योरध इति । श्रवणे पूरणमिति वेद्यम् । अभ्यङ्गस्योद्वर्तनात् पूर्वं कियता कालेन शरीरे स्थितिः । ब्रूमः । यावत्पञ्चशतं मात्रायाः । न्यासे चोक्तं —

"त्वग्रक्तमांसमेदोऽस्थिव्याप्तिर्मात्राशतैः पृथक् ।
स्नेहस्य तेन वातोऽस्थ्नि निविष्टः शममाप्नुयात् ॥
प्रत्यहं सेवने कालः प्रतिवारनिषेवणे ।
मुहूर्तपञ्चकं तिष्ठेदन्यथोक्तविकारकृत् ॥
तत उन्मार्जनं कुर्यात् ततः स्नानविधिं भजेत् ।
बालो रोगी च वृद्धश्च तैलाभ्यङ्गं सदाभ्यसेत् ॥"

इति ॥ ९ ॥

अथैतदपवादमाह —

**वर्ज्योऽभ्यङ्गः कफग्रस्तकृतसंशुध्यजीर्णिभिः ।**

**वर्ज्य** इत्यादि । कफग्रस्तादिभिरभ्यङ्गो वर्ज्यः वर्जनीयः । कफग्रस्तोऽभिनवजातकफः ग्रस्तग्रहणमतिशयोपलक्षणार्थम् । कृतसंशुद्धिर्वमनादिना अचिरकालनिर्हृतदोषः ॥

कृताभ्यङ्गेन व्यायामः कर्तव्य इति तं स्तौति—

**लाघवं कर्मसामर्थ्यं दीप्तोऽग्निर्मेदसः क्षयः ॥ १० ॥**
**विभक्तघनगात्रत्वं व्यायामादुपजायते ।**

**लाघवमित्यादि ।**

**"शरीरायासजननं कर्म व्यायाम उच्यते ।"**

तस्मात् पञ्च गुणा लाघवादयो जायन्ते । लाघवं देहलघुत्वम् । विभक्तानि विभागेन स्थितानि घनानि गात्राणि यस्य सः तस्य भावो विभक्तघनगात्रत्वम् ;

"प्रशंसाश्रवणात् तत्र तत्कामस्तु प्रवर्तते ।"

यथाह —

"विधिस्तुत्योः समावृत्तिः तथा निन्दानिषेधयोः ।
विधानं कल्प्यते स्तुत्या निन्दया च निषेधनम् ॥"

इति । व्यायामाद् एतत्सर्वमुपजायत इति स्तुत्या तं सेवेतेत्यर्थो लभ्यते ॥

वर्ज्यविषयमाह—

**वातपित्तामयी बालो वृद्धोऽजीर्णी च तं त्यजेत् ॥ ११ ॥**

**वातेत्यादि** । वातपित्तामयी बाल आषोडशवर्षात् वृद्धः सप्ततेरूर्ध्वमजीर्णी च तं त्यजेत् । अजीर्णिनोऽभ्यङ्गनिषेधादेव व्यायामनिषेधे सिद्धे अभ्यङ्गमन्तरेणापि कर्तव्यमित्याह — अजीर्णी चेति ॥ ११ ॥

व्यायामप्रकारभेदं दर्शयति —

**अर्धशक्त्या निषेव्यस्तु बलिभिः स्निग्धभोजिभिः ।**
**शीतकाले वसन्ते च मन्दमेव ततोऽन्यदा ॥ १२ ॥**

**अर्धेत्यादि** । (तु)शब्दोऽवधारणे स च व्यायामः शीतकाले हेमन्ते शिशिरे (व ? च) तयोः पूर्णबलत्वात् । वसन्ते च श्लेष्मनाशार्थं बलवद्भिः पुरुषैः स्निग्धान्नभोजिभिः सद्भिरर्धशक्त्यैव निषेवणीयः शक्तिर्बलं यावच्छक्यते ततोऽर्धमिति ।

"स्तनयोरन्तरे घ्राणे सर्वसन्धिषु कक्षयोः ।
स्वेदोद्गमो ललाटे च शक्त्यर्धमिति निर्दिशेत् ॥"

इति । समस्तेन बलेन न सेव्यो व्यायामः प्राक् श्रमाद् वर्ज्य इत्यर्थः । ततः ऋतुत्रयादन्यस्मिन् ऋतौ मन्दमेव स्वल्पमेव सेव्यः मन्दमिति क्रियाविशेषणम् ॥ १२ ॥

व्यायामस्य पश्चात् कर्माह—

**तं कृत्वानुसुखं देहं मर्दयेच्च समन्ततः ।**

**तमित्यादि** । तं व्यायामं कृत्वा अनुसुखं यथासुखं यथा शरीरबाधा न स्यात् तथा देहं सर्वं समन्ततः परितो मर्दयेत् ॥

अतिव्यायामं निषेधति—

**तृष्णा क्षयः प्रतमको रक्तपित्तं श्रमः क्लमः ॥ १३ ॥**
**अतिव्यायामतः कासो ज्वरश्छर्दिश्च जायते ।**

**तृष्णेति** । अतिव्याया(मान्निषे ? मनिषे)वणात् तृष्णादयो भवन्ति तृष्णेति पृथक् । मुनिरप्याह —

"श्रमः क्लमः क्षयस्तृष्णा रक्तपित्तं शिरोभ्रमः ।
अतिव्यायामतः कासो ज्वरश्छर्दिश्च जायते ॥"

इति । श्रमः शरीरसादः क्लमो मनःसादः । उक्तं च सौश्रुते महापाठे —

"देहायासः श्रमो देहे प्रवृद्धः श्वासवर्जितः ।
क्लमः स इति विज्ञेयः इन्द्रियार्थप्रबाधकः ॥"

इति ॥

व्यायामस्यातिमात्रसेवानिषेधप्रसङ्गेन यदन्यदप्यतिमात्रसेवितं दोषाय भवति तदपि प्रतिषेधति—

**व्यायामजागराध्वस्त्रीहास्यभाष्यादिसाहसम् ॥ १४ ॥**
**गजं सिंह इवाकर्षन् भजन्नतिविनश्यति ।**

**व्यायामेत्यादि** । व्यायामादीनां भाष्यान्तानां द्वन्द्वः । तान्यादिर्यस्य साहसस्य तदेवम् । आदिशब्देन धनुस्तुलाकर्षणादि साहसं नामावि(च्य ?)चा-(र्यम ? र्यारम)शक्तिम् अनिष्टानुकर्मेत्यर्थः । अयथाबलमारम्भः साहसम् । अत्र पुनर्व्यायामग्रहणेन यथातिसेविताद् व्यायामादनर्थातिशयप्राप्तिः तथा हास्यादिभ्योऽपीति दर्शयति । अथवा यावान् हास्यादिभ्योऽतिसेवितेभ्योऽनर्थः ततोऽप्यधिकतरो भवत्यतिसेविताद् व्यायामादिति दर्शयति । व्यायामादिसाहसमतिभजन् पुरुषो विनश्यति । अथवातिव्यायामादिकं साहसं सेवमानो विनश्यति अथवा व्यायामादिसाहसं भजन्नतिविनश्यति । अतिः सहसार्थः । तथाच मुनिः —

"व्यायामहास्यभाष्याध्वग्राम्यधर्मप्रजागरान् ।
नोचितानपि सेवेत बुद्धिमानतिमात्रया ॥
एतानेवंविधांश्चान्यान् योऽतिमात्रं निषेवते ।
गजं सिंह इवाकर्षन् सहसा स विनश्यति ॥"

इति । यथा सिंहो विक्रमवानल्पबलो महाबलं दन्तिनमाकर्षन् स्वयमेवानुपायप्रवृत्त्या विनश्यति तथा हि गजवधं प्रति सिंहस्य करजदशनैर्भेदनमुपायः । नाकर्षणं सिंहस्य गजहनन एव शक्तिः । महादेहं हस्तिनमाक्रष्टुकामः कृश-

शरीरः केसरी विनश्यति । तथैतानतिमात्रया भजन् क्षिप्रं विपद्यत इत्यर्थः 'गजः सिंहमिवाकर्षन्नि'ति वा पाठः । स्वकराकृष्टेन सिंहेन गजो हन्यते ॥

व्यायामादनन्तरकार्यमाह—

**उद्वर्तनं कफहरं मेदसः प्रविलापनम् ॥ १५ ॥**

**स्थिरीकरणमङ्गानां त्वक्प्रसादकरं परम् ।**

**उद्वर्तनमित्यादि** । उद्वर्तनस्य कफहरत्वादयश्चत्वारो गुणाः । उद्वर्तनं कषायद्रव्यैः—

"आर्द्रपिष्टस्य लिप्तस्य देहे द्रव्यस्य शोषिणः ।
प्रतिलोममुपाकृष्टिरुद्वर्तनमुदाहृतम् ॥"

तद् द्विविधं उच्छादनमुद्घर्षणमिति । उच्छादनं कल्ककृतं उद्घर्षणं चूर्णयोजितमिति ॥

कृतोद्वर्तनेन स्नातव्यमिति स्नानगुणानाह—

**दीपनं वृष्यमायुष्यं स्नानमूर्जाबलप्रदम् ॥ १६ ॥**

**कण्डूमलश्रमस्वेदतन्द्रातृड्दाहपाप्मजित् ।**

**दीपनमित्यादि** । स्नानं दीपनं वृष्यमायुष्यं च भवति । ऊर्जा उत्साहः मनःप्रहर्षो वा बलं प्राणाः ते प्रददाति करोति यत् तदेवम् । कण्ड्वादींश्च जयति सर्वाङ्गीणः तीव्रः सन्तापो दाहः । स्नानस्य दीपनवृष्या(दि)त्वं प्रभावात् । अथवा स्नानेन हर्षो भवति हर्षणाच्च वृष्यत्वम् । तथाच वक्ष्यति—

"यत् किञ्चिन्मधुरं स्निग्धं बृंहणं बलवर्धनम् ।
मनसो हर्षणं यच्च तत् सर्वं वृष्यमुच्यते ॥"

इति । तथा स्नानं जाठरा(ग्नि ? ग्ने)र्बहिर्निर्यियासूनि रोमकूपाश्रितान्य(र्चि ? र्चीं)षि रुद्ध्वा अन्तर्नयति तैश्चाग्निं प्रबलं कुर्व(द्) दीपनं संपद्यते । यथा शीतकाले शीतानिलसंस्पर्शरुद्धस्याग्नेः प्रबलत्वम् । अथवा स्नानेन भ्राजकाख्यं त्वगाश्रितं पित्तमन्तः प्रविशदूष्माणं संवर्धयति तेन तद्दीपनम् । अतएव परिषेके जलमुष्णमिष्यते यस्माच्छीतं निर्वापयति ततो न देहस्यान्तः प्रवेशयति । शीतकाले तु शीतानिलसंरुद्धस्याग्नेः प्रबलत्वं तत्काल एव कालस्वाभाव्यादिति वेदितव्यम् । स्नानशब्दस्य पञ्चसु वृत्तिः तदुक्तम्—

"आग्नेयं भस्मना स्नानमवगाहं तु वारुणम् ।
आपोहिष्ठेति च ब्राह्मं वायव्यं गोरजः स्मृतम् ॥

दिव्यं तु सातपं वर्षं स्नानं पञ्चविधं स्मृतम् ।"

इति अम्बुशब्दग्रहणान्मुख्यत्वाच्च वारुणमेवात्र गृहीतम् ॥

**उष्णाम्बुनाधःकायस्य परिषेको बलावहः ॥ १७ ॥**
**तेनैव चोत्तमाङ्गस्य बलहृत्केशचक्षुषाम् ।**

**उष्णेत्यादि** । अधःकायस्य उष्णाम्बुना परिषेको बलावहः प्राणकृत् । तेनैव उष्णोदकेनैव उत्तमाङ्गस्य शिरसः परिषेको विधीयमानः केशचक्षुषां बलहृत् (गं?) ।

"श्लेष्ममारुतकोपे तु ज्ञात्वा व्याधिबलाबलम् ।
कामम‌ु(ष्णं सिरं? ष्णाम्भसि) स्नानं भेष(द्यार्थः? ज्यार्थं) समाचरेत् ॥"

इति तुशब्दार्थः ॥

**स्नानमर्दितनेत्रास्यकर्णरोगातिसारिषु ॥ १८ ॥**
**आध्मानपीनसाजीर्णभुक्तवत्सु च गर्हितम् ।**

**स्नानमित्यादि** । रोगशब्दस्य नेत्रादिभिः सम्बन्धः । अर्दितादीनां द्वन्द्व इनिश्च । तथा आध्मानादीनां द्वन्द्वः । ततो मतुप् । अथ वाध्मानादीनामजीर्णान्तानां द्वन्द्वः तत इनिः । भुक्तवान् कृताहारः । स्नानमर्दितेषु गर्हितं निन्दितमपथ्यमित्यर्थः । एवं शेषेष्वपि योज्यम् । आध्मानं वायु(युन्ना? ना) जठरापूरः । पीनसो नासास्रावः । अत्र चशब्देन ज्वरादिरोगिष्वपि गर्हितमिति ॥

स्नातेन भोक्तव्यम् अत्र विशेषमाह —

**जीर्णे हितं मितं चाद्यान्न वेगानीरयेद्बलात् ॥ १९ ॥**
**न वेगितोऽन्यकारी स्यान्नाजित्वा साध्यमामयम् ।**

**जीर्ण इत्यादि** । ह्यस्तनेऽन्ने जीर्णे सम्यक् परिणते अद्यात् भुञ्जीत जीर्ण एव भोक्तव्यं जीर्णे भोक्तव्य(मि? मेवे)त्युभयनियमः । किमद्यात् हितं पथ्यं मितं मात्रायुतं पथ्यमपि ह्यतिमात्रं हीनमात्रं वा भुक्तं दोषाय स्यात् । अतो(ऽस्मिन्? मित)ग्रहणम् । क्षुद्वेगेरणप्रसक्त्यान्येषामपि वेगानामीरणं निषिध्यते । न वेगानित्यादि । वातविण्मूत्रादीनां सम्बन्धिनो वेगानुन्मुखीभूतान् बलात् नेरयेत् । न प्रवर्तयेत् । 'वातादीन्नेरयेद् बलादि'ति केचित् पठन्ति । वा(ता)दीन् वातविण्मूत्राणां वेगानिति वदन्तः । तथा वेगितः सञ्जातवातादिवेगस्तमकृत्वा नान्यकारी स्यात् नान्यत् कार्यं कुर्यात् । अन्यकारी न स्यादि-

त्युपजीवनार्थम् । साधयितुं शक्यः साध्यस्तं रोगमजित्वा नान्यकारी स्यादिति योज्यम् । साध्यामयस्य चिकित्साविलम्बने असाध्यतापत्तिः साध्यशब्दोपादा-(नात् सूचिता) ॥

स्वर्गम् । यथाह —

**सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः ॥ २० ॥**
**सुखं च न विना धर्मात्तस्माद्धर्मपरो भवेत् ।**

(**सुखार्था** इति ।) ..........

"दुःखेन यन्न संभिन्नं नच ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च सुखं स्वर्गपदास्पदम् ॥"

इति । सुखं च धर्माद् विना न भवति । तस्मात् कारणात् ऐहिकामुत्रिकसुख-प्राप्तेन धर्मप्रधानः स्याद् ॥

इदानीं सेव्यपरित्याज्यभिन्ना आचाराः कथ्यन्ते —

**भक्त्या कल्याणमित्राणि सेवेतेतरदूरगः ॥ २१ ॥**

**भक्त्ये**त्यादि । केषुचिद् विधिप्रतिषेधेषु न शक्यन्ते हेतवो निर्देष्टुम् । द्विविधा हि लोके भावाः केचिदस्मद्बुद्धिगम्याः केचिदस्मद्विशिष्टबुद्धिबोद्धव्या इति । तत्र येऽस्मद्बुद्धिगम्याः तेषु शक्यन्ते हेतवः प्रदर्शयितुम् । येऽस्मद्विशिष्ट-बुद्धिगम्याः तेषां तत्त्वं तद्विद एव जानन्ति । तद्वचनमेवास्माकं तदनुष्ठान-परिवर्जनयोः प्रमाणं न हेतवस्तत्रापेक्षणीया इति विवेक्तव्यम् । उक्तं च —

"विहितप्रतिषिद्धेषु प्रवर्तननिवर्तने ।
कार्ये तत्रोपपत्तीनां निरूपणमनर्थकम् ॥"

इति । कल्याणानि शु(भे ? भ)भा(वा ? वम)नांसि मित्राणि सहायान् । अथवा कल्याणे शुभकर्मणि मित्राणि । भक्त्या अव्याजेन अथवा अदम्भमतिः सन् भजेत । तादृशसहायसम्पर्कादस्यापि शुभाचार(वान् ? वत्वि)त्त्वमित्यभिप्रायः । इतर इति कल्याणमित्रापेक्षया अकल्याणानि इतराणि वा अमित्राणि तेभ्यो दूरगः तद्वर्जनपरः तत्सङ्गो हि दृष्टादृष्टानर्थकरः ॥ २१ ॥

पुनरपि वर्जनीयमाह —

**हिंसास्तेयान्यथाकामं पैशुन्यं परुषानृते ।**
**संभिन्नालापव्यापादमभिध्यादृग्विपर्ययम् ॥ २२ ॥**
**पापं कर्मेति दशधा कायवाङ्मानसैस्त्यजेत् ।**

हिंसेत्यादि । हिंसा प्राणिनां वधः स्तेयं चौर्यम् अन्यथाकामो निषिद्ध-कामसेवनं गुरुदारगमनादि । एतत् त्रिविधं कायिकं पापं कर्म । अन्यथा कामो मानस इत्यन्ये । प्रेमात्मकत्वात् कामस्य । यथाह —

"स्त्रीषु जातो मनुष्याणां स्त्रीणां वा पुरुषाश्रयः ।
अबान्धवकृतः स्नेहः काम इत्यभिधीयते ॥"

इति । पैशुन्यं परेषां भेदकृद् वचनम् अथवा पैशुन्यं पिशुनता दोषवक्तृत्वं कर्णेजपत्वमित्यर्थः । परुषं निष्ठुरवचनं दुःश्रवमधिक्षेपादि अनृतमसत्यवचनम् । संभिन्नालापोऽसम्बन्धप्रलपनं पुरुषार्थसम्बन्धशून्यवचनं चतुर्विधमेतद् वाचिकं पापं कर्म । व्यापादः प्राण्युपद्रवचिन्ता अभिध्या परसम्पदसहिष्णुता विषय-स्पृहा वा । दृग्विपर्ययः शास्त्रदृष्टिवैपरीत्यं नास्तिक्यं दृष्टेर्विपर्ययः दृष्टिर्वेदशा-स्त्राणि तदुक्तार्थविपरीतार्थप्रतिपत्तिरित्यर्थः । त्रिविधमेतन्मानसम् । ननु च दृग्विपर्यय इत्यनेनैव सिद्धे अन्यथाकाम इति वचनं किमर्थमिति । अत्रोच्यते । अन्यथाकामो निषिद्धकामसेवा सा कायेन क्रियते नास्तिकता मनसा परामृश्यते उभयमप्युभयथा च तथापि प्राचुर्येण निर्देश इति । एवं कायिकवाचिकमानसं-पापवृद्धिकरं कर्म द(शा ? शधा)दर्शितम् । कायवा(न् मा ? ङ्मा)नसैस्त्यजेत् त्रिभि-र्यथाक्रमं न कुर्यादित्यर्थः । दशधेति । स्थावरत्वतिर्यक्त्वान्त्यजातित्वा(नं ? नां) मूलानि दशधैवैतानि । संग्रहेऽपि तथा —

"दश कर्मपथा(भ्र ? द्र)क्षन् जयन्नभ्यन्तरानरीन् ।"

इति । देवलीयेऽप्युक्तं —

"कायिकैर्वृक्षतां तावत् वाचिकैः पशुतां तथा ।
मानसैरन्त्यजातित्वं तदधर्मान् दश(त्य)जेद्"

इति ॥

**अवृत्तिव्याधिशोकार्ताननुवर्तेत शक्तितः ॥ २३ ॥**

अवृत्तीत्यादि । अवृत्तीन् निर्धनान् यथाशक्ति अनुवर्तेत । यथार्हदा-नेनानुसरेत् । तथा व्याधिनार्तान् शोकार्तांश्च साम(र्था ? र्थ्या)नुरूपेण पाल-येत् ॥ २३ ॥

**आत्मवत्सततं पश्येदपि कीटपिपीलिकम् ।**

आत्मवदित्यादि । केवलपापकर्मारब्धशरीरं कीटपिपीलिकमशकमत्कु-णादिकमात्मवत् पश्येत् स्वशरीरतुल्यमनुपालयेदित्यर्थः । किमु सतोऽसाधून्वा ।

कीटपिपीलिकमप्यात्मवत् पश्येदित्यपिशब्दार्थः ।

"विप्रकीर्णा बहुविधा नराणां धर्मवर्णना ।
क्रियते तेन वाक्यानां न परस्परसङ्गतिः ॥"

**अर्चयेद्देवगोविप्रवृद्धवैद्यनृपातिथीन् ॥ २४ ॥**

अर्चयेदित्यादि । देवादीनर्चयेद् वृद्धान् ज्ञानशीलतपोभिः । नृपो राजा । अतिथिरसमानग्रामो वैश्वदेवान्ते समुपस्थितः —

"अतिथिर्वैश्वदेवान्ते भोजनार्थमुपागतः ।
तत्पूजनाज्जगत् सर्वं पूजितं मुनयो जगुः ॥"

इति ॥ २४ ॥

**विमुखान्नार्थिनः कुर्यान्नावमन्येत नाक्षिपेत् ।**

विमुखानित्यादि । अर्थिनो याचकान् प्रत्याख्यानेन विमुखान् न कुर्यात् । यथाशक्ति दद्यादित्यर्थः । नावजानीयात् नचाक्षिपेत् आक्षेपः परुषवचनादिभिरभिभवः ॥

**उपकारप्रधानः स्यादपकारपरेऽप्यरौ ॥ २५ ॥**

उपकारेत्यादि । अरौ शत्रौ अपकारपरेऽपि कृतापराधेऽपि सति उपकारप्रधानः स्यात् । ननु रिपुरपकारक एव तत्किमपकारपर इति विशेषणेन । तथाच माघः —

"उपकर्त्रारिणा सन्धिर्न मित्रेणापकारिणा ।
उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः ॥"

इति । अत्रोच्यते । न सर्वदैवारिरपकारं कर्तुं शक्तः स्यात् । किं तर्हि कदाचिदेव (ऋतु ?)हेत्वाद्यधीनत्वादपकारित्वस्य वातादिदोषवत् ।. यथा वातादयो दोषा दूषणस्वभावा अपि सन्तः कदाचिद् विकारकरत्वे समर्था भवन्ति । कदाचिन्नैव, दोषत्वं तु सर्वदैव तेषाम् । तस्मादपकारपर इत्यु(क्तः ? क्त)विशेषणम् । अपकारिण्युपकारकृत् स्यात् किं पुनरुपकारकर इत्यपिशब्दस्यार्थः । अरिग्रहणात् किं पुनरुपकारपरेषु मित्रेष्विति द्योतयति । सर्वत्र सर्वदा उपकारकरणशीलः स्यादित्यर्थः ॥ २५ ॥

**सम्पद्विपत्स्वेकमना हेतावीर्ष्येत् फले न तु ।**

सम्पदित्यादि । सम्पत्सु विपत्सु चैकमनाः समचित्तः स्यात् सम्पत्सु जातासूत्सिक्तेन विपत्सु विषादिना न भाव्यमित्यर्थः । हेतौ कारणे सम्पदमुद्दिश्य

परैरनुष्ठीयमाने ईर्ष्येत् अनेन हेतुनास्य धनादिप्राप्तिरहमेनमनेन हेतुना अतिशयिष्य इति । तत्फले धनादा[1]परैरनुभूयमाने नेर्ष्यां कुर्यात् फलार्थिना तत्कारणे यतितव्यमित्यर्थः । 'ईर्षणं नाम यत् परस्य भूतं तत् कथं मम नेतिबुद्धिरि'तीन्दुः ॥

**काले हितं मितं ब्रूयादविसंवादि पेशलम् ॥ २६ ॥**

काल इति । काले यथोचिते हितं पथ्यं मितं न तु बहु अविसंवादि सत्यं पेशलमर्थपुष्टं वा मधुरं वा ब्रूयात् । यथा कुरूणामनयं दृष्ट्वा नागपुरं प्राप्य सभायां मुकुन्दोऽयाचष्ट ।

"तेष्वासीनेषु सर्वेषु तूष्णीं भूतेषु राजसु ।
वाक्यमभ्याददे कृष्णः सदंष्ट्रो दुन्दुभिस्वनः ॥
जीमूत इव घर्मान्ते सर्वां विश्रावयन् सभाम् ।
कुरूणां पाण्डवानां च शमः स्यादिति भारत ! ॥"

इति । "काले ब्रूहीत्युक्ते" इति हृद्याकारः ॥ २६ ॥

**पूर्वाभिभाषी सुमुखः सुशीलः करुणामृदुः ।**
**नैकः सुखी न सर्वत्र विश्रब्धो नच शङ्कितः ॥ २७ ॥**

पूर्वेति । पूर्वाभिभाषी स्यात् । तथा करुणामृदुः करुणया आर्द्रमनाः मातेव पुत्रे । एकोऽद्वितीयः सन् सुखी न स्यात् । तथा सर्वत्र सर्वस्मिन् विस्रब्धो विश्वस्तो न स्यात् । तथा च भगवान् व्यासः — 'मायाचारे मायया वर्तितव्यम्' इति । तथा सर्वत्र मित्रस्वजनादिष्वपि शङ्कितः अविश्वस्तो न स्यात् तेषां वैमुख्यदोषप्रसङ्गभयात् ॥ २७ ॥

**न कश्चिदात्मनः शत्रुं नात्मानं कस्यचिद्रिपुम् ।**
**प्रकाशयेन्नावमानं नच निःस्नेहतां प्रभोः ॥ २८ ॥**

नेत्यादि । कश्चिदप्यात्मनः शत्रुं न प्रकाशयेत् । तत्प्रकाशनाद्धि भेदः स्यात् नात्मानं कस्यचिद् रिपुं प्रकाशयेत् । पूर्वोक्तादेव हेतोः अवमानमात्मन्यसत्कारं कस्यचिन्न प्रकाशयेत् । प्रभोः संबन्धिनीं निःस्नेहतां लोके न प्रकाशयेत् । तत्प्रकाशाद्ध्यसौ प्रभुर्जातावकाशैर्भेदकैः सुतरां निःस्नेहीक्रियते ॥२८॥

---

१. 'ईर्ष्या' इति पाठभेदः.

**जनस्याशयमालक्ष्य यो यथा परितुष्यति ।**
**तं तथैवानुवर्तेत पराराधनपण्डितः ॥ २९ ॥**

**जनस्ये**त्यादि । जनस्याशयमालक्ष्य अभिप्रायं मनोवा(ल)क्ष्य लोकस्य प्रकृतिं बुद्ध्या परि (च्छे? च्छि)द्य यो जनो यथा परितुष्यति तथा तेनैव प्रकारेण प्रियवचनादिना तमनुवर्तेत आराधयेत् पराराधने पण्डितः । पण्डा बुद्धिस्तद्वान् ज्ञानीत्यर्थः ॥ २९ ॥

**न पीडयेदिन्द्रियाणि नचैतान्यतिलालयेत् ।**
**त्रिवर्गशून्यं नारम्भं भजेत्तं चाविरोधयन् ॥ ३० ॥**

नेति । इन्द्रियाणि रसनादीनि कदन्नादिना न पीडयेत् । नचैतानीन्द्रियाण्यतिलालयेत् अतिशयेन न विलोभयेत् । त्रयाणां धर्मार्थकामानां वर्गस्त्रिवर्गः तेन शून्यं रहितमारम्भं न भजेत् तं त्रिवर्गमविरोधयन् परस्परमबाधयन् । तथा च कालिदासः —

"न धर्ममर्थकामाभ्यां बबाधे नच तेन तौ ।
नार्थं कामेन कामं वा सोऽर्थेन सदृशस्त्रिषु ॥"

इति । तत्र धर्मः वर्णाश्रमादिभेदभिन्नः स स्वर्गमोक्षसाधनः तदुक्तं — "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः" इति । अभ्युदयो ब्रह्मादिपदप्राप्तिः निश्रेयसं मोक्षः । पुराणं च —

"धर्मः स्वर्गाय मोक्षाय कामार्थाभ्यां च सर्वदा ।
सर्वैः सर्वात्मना सेव्यो न धर्मसदृशः सुहृत् ॥"

इति । अर्थ्यत इत्यर्थो भूम्यादिः । उक्तं च —

"भूमिर्मणयः कनकं
रजतं ताम्रादिधातवो लोहम् ।
गजतुरगगोमहिष्यः
खरकरभोरभ्राविकं वा य(न्? त्) ॥
यत् कृषिजन्यं धान्यं यत् फलमूलादि देहवृत्तिकरम् ।
यत् क्रयविक्रययोग्यं द्रव्यं सोऽर्थोऽभिधीयते सकलम् ॥"

इति । काम्यत इति कामः स द्विविधः सामान्यकामो विशेषकामश्चेति ।

"श्रोत्रादेः समनस्कस्य शब्दादेर्यत् प्रवर्तनम् ।
आनुकू(ल ? ल्य)धिया ज्ञेयः कामः सामान्यसंज्ञकः ॥
सुखाभिमानसम्बन्धत्व(ग्यु ? गु)पस्पर्शसम्भवा ।
प्रीतिर्विशेष(मा ? आ)ख्या(तं ? तः) दम्पत्योः पुत्रदायिनी ॥"

त्रिवर्गसाधनं कर्म भजेत् तं च त्रिवर्गं भजेदविरोधयन् इति हृदयाकारः॥३०॥

अनुयायात्प्रतिपदं सर्वधर्मेषु मध्यमाम् ।

अनुयायादित्यादि। सर्वधर्मेषु सर्वेष्वाचारेषु मध्यमामविरोधिनीं प्रतिपदं पदवीमनुवर्तेत न त्वेकत्र सक्तिं कुर्यात् प्रतिपत् सरणिर्मार्ग(मि ? इ)त्यनर्थान्तरम् ॥

नीचरोमनखश्मश्रुर्निर्मलाङ्घ्रिमलायनः ॥ ३१ ॥

नीचेत्यादि । नीचान्यदीर्घाणि रोमनखश्मश्रूणि यस्य स एवंविधो भ(जे ? )वेत् लोमानि बाहूरुप्रभृतिषु रोमाणि केशाश्चोच्यन्ते । तथा च 'हृषेर्लोमसु' इत्यत्र सूत्रे विवृ(ते ? तम्)। लोमानि मूर्धजान्यङ्गजानि चेह गृह्यन्ते इति।

"पौष्टिकं धन्यमायुष्यं रुचिरूपविराजनम् ।
केशरोमनखादीनां कल्पनं सम्प्रसाधनम् ॥"

इति चरके । तथा अङ्घ्री पादौ मलायनानि घ्राणकर्णादीनि निर्मलानि यस्य स एवम् । अस्य च फलमेवं—

"मेध्यं पवित्रमायुष्यमलक्ष्मीकलिनाशनम् ।
पादयोर्मलमार्गाणां शौचाधानमभीक्ष्णशः ॥"

इति ॥ ३१ ॥

स्नानशीलः सुसुरभिः सुवेषोऽनुल्बणोज्वलः ।
धारयेत्सततं रत्नसिद्धमन्त्रमहौषधीः ॥ ३२ ॥

स्नानेति । स्नानं शीलयतीति स्नानशीलः नित्यस्नायी स्यात् तथा सुसुरभिः सुगन्धिः शोभनो जीर्णमलिनवस्त्रादिवर्जितो वेषो यस्य स सुवेषः । अनुल्बणश्चासावुज्वलश्च अनुल्बणोज्ज्वलः अनुल्बणः अनुद्धतवेषः स्यात् स चोज्ज्वलश्च शोभनमङ्गलकुण्डलाङ्गुलीयकादिसम्भृतवेष इत्यर्थः । न तु

काच(विपुत्र ? त्रपुप्र)भृतिनिर्मितशैलूषकवेषादि(व ? भृ)त् । रत्नादीनि बाहुग्रीवादिषु सदैव धारयेत् । रत्नानि वज्रकपद्मरागादीनि सिद्धमन्त्रोऽपराजितादिः महौषधिः सहदेव्यादिका ॥ ३२ ॥

सातपत्रपदत्राणो विचरेद्युगमात्रदृक् ।
निशि चात्ययिके कार्ये दण्डी मौली सहायवान् ॥ ३३ ॥

सातपत्रेत्यादि । छत्रपादत्राणसहितो युगमात्रदृग् विचरेत् । युगं हस्तचतुष्टयं तत् पश्यति यः स एवं कुर्वन् संमुखमागच्छद्भिर्गवाश्वादिभिर्नोपद्रूयते —

"अन्वर्थसंज्ञं पादत्रं बलदृग्रक्षणं परम् ।
बल्यं नेत्रहितं छत्रं वातवर्षातपापहम् ॥"

'वृष्यं पादत्रधारणमि'ति च । निश्यपि आत्ययिके कार्ये दण्डी मौली सहायवान् सन् विचरेत् अर्थबलादुक्तमनात्ययिके नैव विचरेन्निशीति । हाटकोऽ(प्य ? पि)पादत्राणं शुक्लं च कथमिति । चरणतलनिबद्धानां शुक्रवहानां सिराणां शर्कराद्यभिघातादन्तर्वर्तिवायुः सिरान्तर्गतमूष्माणमुद्दीपयति । ततस्ताभ्यां वाय्वग्निभ्यां शुक्रं शोषमापद्यते । पादत्रधारणे स्वकारणादुपचीयमानस्य शुक्र(स्य) न ताभ्यां(शोष) इति तत्र वृष्यदशामुपपद्यते ।

"स्खलतः सम्प्रतिष्ठानं शत्रूणां च निबर्हणम् ।
अवष्टम्भनमायुष्यं भयघ्नं दण्डधारणम् ॥"

इत्यागमाद् दण्डीत्युक्तम् । मौलीति मौलं शिरोवेष्टनम् ।

"पटादि खण्ड(स ? शः)स्यूतं शिरोमानं हि वेष्टनम् ।
हिमकीटादिरक्षार्थं मौलं शोभनमिष्यते ॥"

इति । अथवा मौलिशब्दात् 'वाह्यादित्वादिनिः ।' तथा सहायवान् अनेनापि चित्तावष्टम्भः । अत्ययः कृच्छ्रम् अत्यये भवमात्ययिकम् अवश्यानुष्ठेयमित्यर्थः । तस्मिन् कार्ये ॥ ३३ ॥

चैत्यपूज्यध्वजाशस्तच्छायाभस्मतुषाशुचीन् ।
नाक्रामेच्छर्करालोष्टबलिस्नानभुवोऽपि च ॥ ३४ ॥

चैत्येत्यादि । चैत्यच्छायादीन् नाक्रामेत् विशिष्टदेवताधिष्ठितो लोकप्रसिद्धो वृक्षविशेषश्चैत्यः । 'बुद्धालय' इति हाटकः । आरामादिषु पथिक-

विश्रमार्थो वृक्ष' इति हृद्याकारः। पूज्यो गुरुपित्रादिः। ध्वजश्चिह्नम्। अशस्ताश्चण्डालादयः एषां छाया। भस्म भूतिः तुषो धान्यादित्वक् अशुचिः वि(ट ? ट्) यद्वा उच्छिष्टवस्तु। देवतामुद्दिश्यैकराशीकृताः सूक्ष्मपाषाणाः शर्कराः। लोष्टं मृत्पिण्डादिखण्डः। बलिर्देवाभ्यर्चनम्। 'भूतोपहार' इति हाटकः तस्य भूः, तथा स्नानभूर्यत्र कश्चित् स्नातः। 'चैत्यादीन् नाक्रमेत्. इति हाटकः ॥ ३४ ॥

**नदीं तरेन्न बाहुभ्यां नाग्निस्कन्धमभिव्रजेत् ।**
**सन्दिग्धनावं वृक्षं च नारोहेद्दुष्टयानवत् ॥ ३५ ॥**

नदीमिति। नदीं दोर्भ्यां न तरेत् तथाग्निस्कन्धमभि न व्रजेत् अग्निराश्यभिमुखं न गच्छेत्। स्कन्धः समूहः। सन्दिग्धा चासौ नौश्च तां नारोहेत्। सन्दिग्धायाः शिथिलबन्धनत्वात्। जर्जरत्वादतिभाराक्रान्तत्वाद् गमनं प्रति सन्दिग्धत्वात्। चः समुच्चये। वृक्षं च सर्वं नारोहेत् कथं दुष्टयानवद् यथा दुष्टयानमदान्तमश्वादिकं नारोहेत् तथेति। दुष्टयानारोहणमपि चोक्त्यानया निषिद्धं च शब्दाद् विषमशैलं नारोहेदित्यन्ये सङ्ग्रहदर्शनात् ॥ ३५ ॥

**नासंवृतमुखः कुर्यात् क्षुतिहास्यविजृम्भणम् ।**
**नासिकां न विकुष्णीयान्नाकस्माद्विलिखेद्भुवम् ॥ ३६ ॥**
**नाङ्गैश्चेष्टेत विगुणं नासीतोत्कुटितश्चिरम् ।**

नेति। नासंवृतमुखः क्षुतादीन् कुर्यात् हस्तादिना मुखं पिधाय कुर्यादित्यर्थः। द्वौ नञौ प्रतिषेधकौ प्रकृतमर्थं गमयतः। क्षुतिश्छिक्का हास्यं हसनं विजृम्भणं जृम्भा। तथा नासिकां न विकुष्णीयात् अङ्गुल्यादिना नासाविवरं न घट्टयेत्। मलोत्सारणमात्रं कार्यमेवेति विशब्देन द्योतयति अकस्मात् कारणं विना भूमिं न विलिखेत् नोत्कर्षेत्। अङ्गैर्हस्तपादादिभिर्विगुणमननुगुणं यथा भवति तथा न चेष्टेत न व्याप्रियेत। उत्कुटितं स्थितमवस्थानं यस्य स एवं भूतो नासीत चिरं न तिष्ठेदित्यर्थः अर्शोरोगाद्युत्पत्तेः। उत्कुटितश्चिरमिति वा पाठः ॥

**देहवाक्चेतसां चेष्टाः प्राक् श्रमाद्विनिवर्तयेत् ॥ ३७ ॥**
**नोर्ध्वजानुश्चिरं तिष्ठेन्नक्तं सेवेत न द्रुमम् ।**

देहेति। देहादीनां सम्बन्धिनीं चेष्टां क्रियां श्रमात् प्राक् खेदात् पूर्वमेव निवर्तयेत्। तावद्धनुराकर्षणादि कुर्याद् यावन्नातीव श्रमः स्यादित्यर्थः। अथवा यदि पूर्वमध्वादिभिः श्रान्तः ततो व्यायामं वर्जयेदिति। तथा ऊर्ध्वे जानुनी यस्य स एवम्भूतश्चिरं (न) तिष्ठेत्। शयने पादतः प्रतिष्ठाप्य चिरं न शयीतेत्यर्थः। नक्तं रात्रौ द्रुमं तरुतलं न सेवेत तदाश्रितकीटमूत्रशकृदादिपातरक्षार्थम्॥

तथा चत्वरचैत्यान्तश्चतुष्पथसुरालयान्॥ ३८॥
सूनाटवीशून्यगृहश्मशानानि दिवापि न।

तथेति। चत्वरस्त्रिपथः चैत्यान्तश्चैत्यसमीपम् अन्तशब्दः समीपवाची चतुष्पथो मार्गचतुष्टयसंगमः सुरालयो देवगृहम् एतांश्च नक्तं न सेवेत। सूना वधस्थानम् अटवी निर्जनो देशः शून्यगृहं(?) श्मशानं पितृवनं तानि दिवापि न सेवेत अपिशब्देन रात्रावपि सुतरामसेवनमाह॥

सर्वथेक्षेत नादित्यं न भारं शिरसा वहेत्॥ ३९॥
नेक्षेत प्रततं सूक्ष्मदीप्तामेध्याप्रियाणि च।

सर्वथेति। आदित्यं सर्वथा न ईक्षेत न पश्येत्।

"उद्यन्तमस्तमायान्तं तपन्तं प्रतिमागतम्।
उपरक्तं च भास्वन्तं वाससा वा तिरोहितम्॥"

इति सर्वथाग्रहणम्। भारं शिरसा न वहेत् न नयेत् प्रततमविरतं सूक्ष्मादीनि वस्तूनि नेक्षेत। दीप्तमुज्ज्वलम्। ननु सर्वथेक्षेतेत्यनेन कोऽर्थः, यतो रविरपि दीप्तो दीप्तग्रहणेनैवास्य न दर्शननिषेधः सिद्धः। अस्त्येवैतत्। किन्तु सर्वप्रकारमादित्यं नेक्षेत दीप्तं चानवरतं नेक्षेत॥

मद्यविक्रयसन्धानदानादानानि नाचरेत्॥ ४०॥

मद्येत्यादि। विक्रयो विनिमयः इयत्प्रमाणममुनेदं (क्रि? क्री)यते इति। (न?) स(न्दा? न्धा)नमुत्पादनम्। दानं यथाशास्त्रं स्वत्वानिवृत्तिः परस्वत्वापादनम्। आदानं च यथाशास्त्रमेव परस्माद् ग्रहणम्। एतेषां मद्यशब्देन षष्ठीसमासः। मद्यविक्रयादीनि नाचरेत्। द्विजविषयं चैतद् वाक्यमिति बोद्धव्यम्। सर्वस्य तु निषेधे मद्यविक्रयादिव्यवहारोच्छेदः स्यादिति मद्यविक्रयो मूल्यस्य प्रदानमिति हाटकः। दानपानानीत्यपपाठः॥ ४०॥

पुरोवातातपरजस्तुषारपरुषानिलान् ।
अनृजुः क्षवथूद्गारकासस्वप्नान्नमैथुनम् ॥ ४१ ॥

कूलच्छायानृपद्विष्टव्यालदंष्ट्रिविषाणिनः ।
हीनानार्यातिनिपुणसेवां विग्रहमुत्तमैः ॥ ४२ ॥

सन्ध्यास्वभ्यवहारस्त्रीस्वप्नाध्ययनचिन्तनम् ।
शत्रुसत्रगणाकीर्णगणिकापणिकाशनम् ॥ ४३ ॥

गात्रवक्त्रनखैर्वाद्यं हस्तकेशावधूननम् ।
तोयाग्निपूज्यमध्येन यानं धूमं शवाश्रयम् ॥ ४४ ॥

मद्यातिसक्तिं विश्रंभस्वातन्त्र्ये स्त्रीषु च त्यजेत् ।

पुर इत्यादि । त्यजेदिति क्रिया वक्ष्यमाणा । पुरःशब्दस्य वातातपाभ्यां प्रत्येकं संबन्धः । पुरोवातः पूर्वस्या दिश आगतो वायुः पुर आतपः पूर्वातपः पुरो वातादींस्त्यजेत् । अनृजुर्विषमस्थितशरीरः क्षवथ्वादीन् षट् त्यजेत् । अनृज्विति क्रियाविशेषणमिति केचित् । कूलं वप्रं तच्छायां त्यजेत् तत्र हि तिष्ठतस्तत्पाताद् भयं स्यात् । नृपद्विष्टो राजद्विष्टो राज्ञोऽप्रियो । व्या(लो ? ला) दुष्टहस्त्यादयः । दंष्ट्रिणः सर्पाद्याः । विषाणिनो गवाद्याः । हीनाः कुलशील-वृत्तादिभिर्न्यूनाः अनार्या असाधवः अतिनिपुणाः अतिगणनापराः आत्मनो विद्यमानादधिकं मन्यमानास्तेषां सेवां त्यजेत् । उत्तमैरिति । सहार्थे गम्यमाने तृतीया । उत्तमैः सह विग्रहं त्यजेत् । सन्ध्यास्वभ्यवहारादीन् पञ्च त्यजेत् । सन्ध्यासु स्त्रीसेवया भृशं दोषः । शत्रुसत्रेत्यादि । (सत्र्या ? शत्र्वा)द्यशनं त्यजेत् । सत्रं यज्ञस्तत्संबन्ध्यशनं त्यजेत् ऋत्विगादीन् वर्जयित्वा अन्यस्य हि तदन्न-निषेधात् । तथा हि—यज्ञान्ते तदुद्भूतपापोपशमनाय प्रायश्चित्तं श्रूयते । गणाः कथकचारादयस्तैराकीर्णं व्याप्तमशनं गणाकीर्णाशनं त्यजेत् । गणाशनमित्येव सिद्धे आकीर्णग्रहणं बहुपरिगृहीतत्वाभिव्यक्त्यर्थम् । बहूनां साधारणस्याकीर्णता संभवति । कामुकचित्तानि गणयतीति गणिका वेश्या तस्याः संबन्धि अशनं त्यजेत् । तत्पापसंक्रमणं स्यात् । पणिकः पणोपजीवी इतरो वणिगित्यर्थः । आपणिको वणिगिति व्याख्याकारः । तेषां शत्रुप्रभृतीनां संबन्ध्यशनं त्यजेत् । ननु कथं तेषामशनमिति संबन्धः यावता गणाकीर्णमेवाशनं गणाकीर्णाशनं न तु गुणाकीर्णस्येति । नैवम् । अशनशब्दस्य तत्र भावपरत्वात् । अशितिरशन-

मिति द्विविधः खल्वत्राशनशब्दस्तन्त्रेणोपात्तः कर्मपरो भावपरश्च तत्र यथा-योगं व्यवस्था तेन गणाकीर्णस्यान्नस्याशनं तद्गणाकीर्णाशनं न तु गणाकीर्ण-मशनमिति । तस्मात् तेषामिति समासः । अथवा गणाशनमाकीर्णाशनमिति सम्बन्धः गणाशनं बह्वायत्तमन्नम् आकीर्णं बहुजनसङ्कटः प्रदेशः तत्संबन्ध्यन्न-मिति । आकीर्णाशनं ह्यागमे निषिद्धं 'नाकाले नाकीर्णे नादत्वाग्रमग्नय' इति । उतवा आकीर्णशब्देनावकीर्णाभिधानं कामेनेन्द्रियाण्याकिरति अवाकिरति कामेन वा आकीर्यते अवकीर्यत इति कृत्वा । कथमाकीर्णशब्देनावकीर्ण उच्यते । यावतोपसर्गभेदेनार्थभेदाद् आङ् इति अत्राभिविध्यर्थः तेन शास्त्रनियमातिक्रमेण सर्वान् विषयानभिव्याप्येन्द्रियाणि किरन्नाकीर्ण उच्यते । अवशब्देन च नीच-कर्माभिमुख्यमुच्यते । तेन च शास्त्रनियमातिक्रमे इन्द्रियाण्याकिरन्नवकीर्ण उ-च्यते । उभयत्र नियमातिक्रमाविशेषेणानर्थान्तरत्वम् । किञ्च उपपदभेदेऽपि पर्या-यत्वं दृष्टं यौगिकानाम् उपदंशोऽपदंश इति । यागिकत्वं च यो ब्रह्मचार्यवकिरेत् अवकीर्णोऽस्मीति वचनात् । यदेवमर्थसाम्येनोदस्यात् तत्र त्वाकीर्णशब्दोऽव-कीर्णपर्यायः । तस्मादाकीर्णोऽवकीर्णः अवकीर्णो धूर्त इत्ययमर्थो लभ्यते । तस्याशनमिति धूर्तस्याशनमित्यर्थः । तथाच संग्रहः —

"गणारिगणिकासत्रधूर्तानां वणिजां नच ।"

इति । विद्यासमुद्रादिनर्मशास्त्रप्रोक्तप्रयोगनिष्णाता ये कुटुम्बसहिताः सञ्चरन्ति ते गणास्तेषामन्नमिति केचित् । गणः सहस्रादिनियत इति ह्याकारः । आ-कीर्णान्नमिति पृथ(च्छ ? गज)नैराकीर्णमितस्ततो व्याप्तमिति केचित् । गात्रा-ण्यङ्गानि तैस्तथा वक्त्रेण नखैश्च वाद्यं त्यजेत् । तथा हस्तावधूननं हस्तधूननं केशधूननं च हस्ताभ्यां कशावधूननं वा त्यजेत् । तोयेत्यादि । मध्यशब्दः प्रत्येकं युज्यते तोययोर्द्वयोर्मध्येन यानं त्यजेत् । न यायादित्यर्थः । एवमग्न्यो-र्मध्येन तथा पूज्ययोः । समासकरणात् तोयाग्न्योः तोयपूज्ययोरग्निपूज्ययोरपि मध्येन न यायादिति बोद्धव्यम् । धूमं शवाश्रयं शवोद्भूतं त्यजेत् । मद्याति-सक्तिमिति क्षत्रियादिविषयम् । मद्ये अतिसक्तिमतिसेवां त्यजेत् । ततः सेवा-मात्रमभ्यनुज्ञायते । स्त्रीषु विस्रम्भो विश्वासः तं तथा स्त्रीषु प्रसक्तं स्वातन्त्र्यं त्यजेत् । स्वतन्त्राः स्त्रियः परिहर्तव्या इति यावत् । अस्वतन्त्राः स्त्रियः कार्या इति स्मृतिवचनार्थं आर्थिकः । 'स्वतन्त्रस्त्रीषुचे' त्यस्मद्गुरवः पठन्ति । त्यक्तभ-र्तृका गृहात् प्रव्रजिताः स्वतन्त्रस्त्रियः तासु विस्रम्भं त्यजेदिति ॥ ४५ ॥

उक्तानुसक्तसमुच्चयार्थमाह—

**आचार्यः सर्वचेष्टासु लोक एव हि धीमतः ।**
**अनुकुर्यात्तमेवातो लौकिकार्थे परीक्षकः ॥ ४६ ॥**

**आचाय** इत्यादि । लोकशब्देन विशिष्टजनस्य ग्रहणं नतु यथा लोको व्यवहरति । (ता कृतानां ?) हि यस्माद् धीमतो बुद्धियुक्तस्य सर्वचेष्टासु निःशेषव्यापारेषु लोक एवोपदेष्टा । अतोऽस्माद्धेतोः तमेव लोकं लौकिकार्थे सदाचारे परीक्षकः पुरुषोऽनुकुर्यात् । यथा लोको व्यवहरति तथा व्यवह्रियादित्यर्थः । धीमान् पुरुषः परीक्ष्य बहुशो निरूप्य एते हि विशिष्टाः एभिरुपचरितमस्माभिरप्युपचरितव्यमस्मिन् विषय इति परीक्ष्य कुर्यादिति यावत् ॥ ४६ ॥

आचारसारसङ्ग्रहं निर्दिशति—

**आर्द्रसन्तानता त्यागः कायवाक्चेतसां दमः ।**
**स्वार्थबुद्धिः परार्थेषु पर्याप्तमिति सद्व्रतम् ॥ ४७ ॥**

**आर्द्रे**त्यादिना अथवा एवं सकलाचारमुक्त्वा पुनः सकलाचारसंयुक्तं ब्रवीति—आर्द्रसन्तानता आर्द्रमनस्ता सर्वसत्त्वेषु कृपालुत्वं त्यागो दानं कायादीनां दम उपशमः परार्थेषु स्वार्थबुद्धिः यथायं मे स्वार्थः यः परार्थ इति । एतदुक्तं भवति—परप्रयोजनेषु स्वप्रयोजनेष्विव यत्नं कुर्यादिति उभयलोकहितत्वाद् इत्येवं प्रकारं सद्व्रतं पर्याप्तं परिपूर्णं समाप्तमित्यर्थः । सच्छोभनं च तद्व्रतं सतां व्रतं वा ।

"शास्त्रमार्गादचलिताः परमार्थदिदृक्षवः ।
सन्तः परहितव्यग्राः शान्तचित्ता उदाहृताः ॥"

इति । व्रतं सङ्कल्पविशेषः ।

"आतिष्ठे तावदेवेदमिति शास्त्रीयकर्मणि ।
बुद्धिपूर्वमनुष्ठानं व्रतमित्यभिधीयते ॥"

इति । अथवा परितः सर्वतः आप्तं पर्याप्तं केषाञ्चित् तप्तशिलारोहणं धर्मः केषाञ्चित् केशोल्लुञ्च्छनं केषाञ्चिद् दिगम्बरत्वं केषाञ्चिच्छिरोबन्धादि । बहुम्बरमित्यादि । सर्वसिद्धान्तस्थितानामप्यनुमतमेव ॥ ४७ ॥

**नक्तं दिनानि मे यान्ति कथंभूतस्य संप्रति ।**
**दुःखभाङ् न भवत्येवं नित्यं सन्निहितस्मृतिः ॥ ४८ ॥**

नक्तमित्यादिनाचारकरणेऽभ्युपायं कथयति । सर्वदावधानस्य प्राधान्यं दर्शयतीति हाटकः । नक्तन्दिनानि रात्रिन्दिवानि सम्प्रतीदानीं कथम्भूतस्य कीदृशस्य सतः किं कुर्वत इत्यर्थः । मे मम यान्ति एवं नित्यं सर्वदा सन्निहितस्मृतिमान् सन् पुमान् दुःखभाङ् न भवति । नित्या सन्निहितस्मृतिरिति । यत्र पुरुषार्थचतुष्टयकरमाचारं कर्तुं प्रारभेत तत्राप्यपुनर्भवकरं कर्म ॥ ४८ ॥

आचारफलानि दर्शयन्नुपसंहरति —

**इत्याचारः समासेन यं प्राप्नोति समाचरन् ।**
**आयुरारोग्यमैश्वर्यं यशो लोकांश्च शाश्वतान् ॥ ४९ ॥**

इत्यादि । इत्याचार उक्त इति शेषः । अथवा इतिशब्दः समाप्तौ । समासेन संक्षेपेण आचारः समाप्तः । विस्तरतस्तु संग्रहादिषु धर्मशास्त्रेषु च प्रोक्ता आचारा अनुष्ठेया इति । यमाचारं समाचरन्ननुतिष्ठन्नायुरादीन् प्राप्नोति तथा लोकान् भूर्भुवःस्वःप्रभृतीन् शाश्वतान् नित्यान् ॥ ४९ ॥

इति श्रीदासपण्डितविरचितायाम् अष्टाङ्गहृदयव्याख्यायां
हृदयबोधिकाख्यायां द्वितीयोऽध्यायः ॥

---

## अथ तृतीयोऽध्यायः ।

दिनचर्याया अनन्तरं ऋतुचर्याया उपोद्घातः पूर्वस्मिन्नध्याये स्वस्थवृत्तमृतुविधानेन नोक्तं किन्तु सामान्येन । ऋतुविशेषानुक्त्वाहारविहारसेवनप्रतिपादनार्थमध्यायारम्भः । अथवा पूर्वं सामान्यदिनचेष्टैव प्रोक्ता । इदानीमृतुदिनेषु विशिष्टचेष्टाकरणार्थमध्यायारम्भः । अथवा —

"उक्ता चर्या दिनगता भिन्ना स्यादृतुभेदतः ।
तेनर्तुभेदज्ञानार्था ऋतुचर्याभिधीयते ॥"

अथवा उक्तमाचारमाचरन्नेव केवलमारोग्यं न प्राप्नोति । उक्तमाचारमृतुविशिष्टमप्याचारमाचरन्नेव केवलमारोग्यं प्राप्नोति । अतस्तत्प्रदर्शनार्थमृतुचर्याया आरम्भः ॥

ज्ञानापेक्षत्वाद् ऋतुस्वरूपमेवाह —

**अथात ऋतुचर्याध्यायं व्याख्यास्यामः ।**
**मासैर्द्विसंख्यैर्माघाद्यैः क्रमात् षड् ऋतवः स्मृताः ।**
**शिशिरोऽथ वसन्तश्च ग्रीष्मवर्षाशरद्धिमाः ॥ १ ॥**
**शिशिराद्यैस्त्रिभिस्तैस्तु विद्यादयनमुत्तरम् ।**
**आदानं च तदादत्ते नृणां प्रतिदिनं बलम् ॥ २ ॥**

**मासैरित्यादि** । अनेन कालोपवर्णनमाह । ननु कालोपवर्णनं दिनचर्यायां कस्मान्न कृतम् । उच्यते । ऋतुगौरवोद्भावनार्थम् । ऋतवो हि विशेषेणोपयोगिनः । मासव्यतिरिक्ताः कालभेदाः सङ्ग्रहात् ज्ञेयाः यथा—"मात्राकाष्ठाकलानाडीमुहूर्तयामाहोरात्रपक्षमासर्त्वयनभेदेन द्वादशधा प्रविभज्यते" इति । द्वे संख्ये येषां ते द्विसंख्याः माघ आद्यो(र्ष?) येषां फाल्गुनादीनां त एवम् । तैर्द्विसंख्यैर्माघाद्यैर्मासै क्रमात् परिपाट्या शिशिराद्याः शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्ताख्याः षड़ृतवः स्मृताः । माघफाल्गुनौ शिशिरः; चैत्रवैशाखौ वसन्तः; ज्येष्ठाषाढौ ग्रीष्मः; श्रावणप्रोष्ठपदौ वर्षाः; आश्वयुजकार्तिकौ शरत्; मार्गशीर्षपौषौ हेमन्तः इति । मासशब्देनात्र चान्द्रमसमासो गृह्यते । पक्षद्वयं मास इति संग्रहेऽप्येवमुक्तं— "पञ्चदशाहोरात्राणि पक्षः पक्षद्वयं मासः स शुक्लान्तः ।" इति । ततश्च —

"मासराशिस्वरूपाख्यमृतोर्यल्लक्षणत्रयम् ।"

इत्यत्र निर्दिष्टेषु त्रिष्वपि ऋतुप्रकारेषु मासापेक्षया ऋतुकल्पनं न राश्यपेक्षया । धनुर्वृश्चिकौ हेमन्त इति लोके प्रसिद्धिः । सारकृदप्येवमाह — एते माघादयो मासाश्चान्द्रं पक्षमवलम्ब्य प्रोक्ता इति गम्यन्ते । सौरं पक्षमवलम्ब्यावदिष्यद्यदि कुम्भादय कर्कटान्ताः षण्मासास्तूत्तरायणम् अभविष्यत् सिंहादयो मकरान्ताश्च दक्षिणायनम् । तत् तथा न कथ्यते कर्कटादिधनुरन्तमेव दक्षिणायनं पठ्यते भगवतो दिवाकरस्य मेषादिमीनान्तराशिष्ववक्रमणं निरूप्य तस्माद् भगवतः शशाङ्कस्य चित्रादितारकाप्रा(प्ति ? प्ती)ः परिगणय्य चैत्रादयः फाल्गुनान्ताः परिकल्पनीयाः । उक्तं च—

"चित्रादितारकाद्वन्द्वे पूर्णपर्वेन्दुसंयुते ।
मासाश्चैत्रादयो ज्ञेयास्त्रिके षष्ठान्त्यसप्तमाः ॥"

इति । अतएव मासानां चैत्रादीनामप्रसिद्धिः । उक्तं च —

"चान्द्रा मासाश्चैत्रवैशाखसंज्ञौ ज्येष्ठाषाढश्रावणप्रोष्ठपादाः ।
आश्विन्याख्यः कार्तिको मार्गशीर्षः पौषो माघः फाल्गुनः पर्वनिष्ठाः ॥"

इति । अत्र माघादिग्रहणं युगपरिवर्तनस्यादिर्माघ इति ज्ञापनार्थम् । उक्तं च —

"शुक्लपक्षे प्रतिपदि शिशिरे चोत्तरायणे ।
माघमासे श्रविष्ठायां युगः संपरिवर्तते ॥"

इति। अथवा उत्तरायणस्य माङ्गलिकत्वात् तत्पूर्वाभिधानम्। उपादानादेव षट्त्वे लब्धे षड्ग्रहणं परमतव्युदासार्थम्। परमतापेक्षणार्थमिति केचित्। विप्रतिपत्तिसूचनार्थमिति ह्याकारः। तथाहि केचित् शीतोष्णवर्षलक्षणास्त्रय एव ऋतव इति मन्यन्ते। कालस्तु शीतोष्णवर्षभेदात् त्रिधा मत इति तथा—

"ऋतुर्वर्षा भवेन्मासाश्चत्वारः श्रावणादयः।
चत्वारो मार्गशीर्षाद्या हेमन्तस्तु भवेद् ऋतुः॥
ग्रीष्मश्चैत्रादयो मासाश्चत्वार स्यात् क्रमेण तु।"

इति।

"एवं शीतोष्णवर्षाणामाधिक्यादृतवस्त्रयः।"

इति खरनादे। पञ्चर्तव इति वेदे पठ्यते—प्रतिदेशमित्यादि। शिशिराद्या इति शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्ताख्याः। क्रमादिति अनेन क्रमेण ऋतुकल्पना न्याय्या नान्यथेति। वेदे तु वसन्तादित्वेन पाठे शिशिरादिग्रहणमयनविभागार्थम्। अपि च—

"रात्रिन्दिवसयो(?) मासाश्चत्वारः स्यात् क्रमेण तु।
एवं शीतोष्णवर्षाणामाधिक्यादृतवस्त्रयः॥"

इति। वक्ष्यति हि—दैर्घ्यान्निशानामेतर्हीति। त्रिभिरित्यादि। तैरिति प्रकृतत्वाद् ऋतुभिस्त्रिभिः शिशिरवसन्तग्रीष्मैरुत्तरायणं जानीयात् सवितुरुत्तरदिङ्मार्गगमनमुत्तरायणं ज्योतिश्चक्रस्य सर्वदा पश्चिमाभिमुखं भ्रमतः प्रवहवायुधृतस्य मध्ये या रेखा त(स्य? स्या) उत्तरदेशगमनमुत्तरायणं तस्या दक्षिणदिग्गमनं दक्षिणायनं तस्या मध्यस्थितिर्विषुद्वयम्। उत्तरायणदक्षिणायनवचनं तन्मुखेन कालस्याग्नेयसौम्यभेदज्ञापनार्थं बलवृद्धिज्ञापनार्थं च। तस्योत्तरायणस्य स्वशास्त्रप्रसिद्धं नामान्तरमाह—तदुत्तरायणमादानसंज्ञं च विद्यात्। आदानस्यान्वर्थतां प्रतिपादयति तदित्यादि तदयनं कर्तृ नृणां प्राणिनां प्रतिदिनमन्वहं बलं सारमादत्ते गृह्णाति दिने दिने बलहानिरित्यर्थः। अथवा तदा तस्मिन् काले बलमादत्ते सारं गृह्णाति कोऽसौ प्रकृतत्वादादित्य इत्यरुणदत्तो हाटकश्च॥ २॥

कया युक्त्या बलमादत्ते इत्याह—

**तस्मिन् ह्यत्यर्थतीक्ष्णोष्णरूक्षा मार्गस्वभावतः।**
**आदित्यपवनाः सौम्यान् क्षपयन्ति गुणान् भुवः॥ ३॥**

**तिक्तः कषायः कटुको बलिनोऽत्र रसाः क्रमात् ।**
**तस्मादादानमाग्नेयं**

**तस्मिन्नित्यादि** । आदित्यश्च पवनाश्चादित्यपवनाः ते तस्मिन् काले आदाने यस्माद् भुवः सम्बन्धिनः सौम्यान् गुणान् क्षपयन्ति नाशयन्ति कीदृशास्ते अत्यर्थमतिशयेन तीक्ष्णाश्चाशुकारिणः अत्यर्थमुष्णाश्चात्यर्थं रूक्षाश्च कस्मादेवंविधास्त इत्याह — मार्गस्योत्तरायणस्य स्वभावेन नात्रान्यो हेतुर्वक्तुं शक्यः । नच स्वभावः पर्यनुयोगमर्हति स्वभावपर्यन्तो युक्तिनिवहः मार्गस्वभावतोऽत्यर्थतीक्ष्णादिगुणमयूखव्याप्तमण्डलो भगवानादित्यः । तत्सम्बन्धेनात्यर्थतीक्ष्णादिगुणा वायवश्च सौम्यान् सोमसम्बन्धिनो गुणान् मन्दशीतस्निग्धादीन् क्षपयन्ति विरुद्धत्वात् । विपरीतैर्विपर्यय इति आग्नेयगुणाधिक्यात् सौम्यगुणहानिरित्यर्थः । यतश्चादित्यपवना रूक्षाः ततोऽत्र एषु ऋतुषु तिक्तादयो रसा यथाक्रमं बलिनो भवन्ति । एषु कालेष्वेषामभिवृद्धिः स्वोत्पत्तिकारणमहाभूतानामुत्कर्षात् । क्रमादिति । तिक्तः शशिरे खवा(ख्वा)त्मकः । कषायो वसन्ते गोनिलात्मकः । कटुको ग्रीष्मे वह्न्यनिलात्मक इति । (अं ? अ)समासात्तिक्तादीनामेकैकस्य शिशिरादिषु बलवत्त्वख्यापनार्थः । रसारम्भभूतबलवृद्धेः वृद्धिस्समानैरिति न्यायेन तिक्तादिरेकैको बली भवति द्वौ तु स्वप्रमाणस्थितावेव ॥

यत एवं भूमेः सौम्यगुणहानिर्वर्धनं च रूक्षाणाम् रसानाम् । तस्मात्कारणादादानमाग्नेयम् अग्न्यादित्ययोः समानगुणत्वेनैकत्वात् तदा हि आवारम्भात् तस्याग्नेर्बलवत्त्वम् ॥

**ऋतवो दक्षिणायनम् ॥ ४ ॥**
**वर्षादयो विसर्गश्च यद्बलं विसृजत्ययम् ।**

ऋतव इत्यादि । त्रयो वर्षादयो वर्षाशरद्धेमन्ता ऋतवो दक्षिणायनं दिवाकरस्य दक्षिणदिङ्मार्गगमनाद् दक्षिणायनसंज्ञं स च कालो विसर्गाख्यः । तस्यान्वर्थतामाह — यद्यस्मादयं कालो बलमादानकाले गृहीतं प्राणिभ्यो विसृजति ददाति तस्माद् विसर्गः तस्मिन् काले सर्वस्य बलवृद्धिरित्यर्थः ॥

**सौम्यत्वादत्र सोमो हि बलवान् हीयते रविः ॥ ५ ॥**
**मेघवृष्ट्यनिलैः शीतैः शान्ततापे महीतले ।**
**स्निग्धाश्चेहाम्ललवणमधुरा बलिनो रसाः ॥ ६ ॥**

**सौम्यत्वादित्यादि।** हि यस्मादत्र विसर्गाख्ये काले सौम्यत्वात् सोमगुणभूयिष्ठत्वात् सोमो बलवान् तदाश्रितरात्रिवृद्धिदर्शनात्। तथा हीयते रविस्तदाश्रितदिनह्रास्युपलब्धेः हीनशक्तिः संपद्यते । तस्मिन् काले दक्षिणमार्गगमनाद्रविर्हीनशक्तिर्भवति तस्मात् सोमो बलवान् भवति सौम्यगुणवृद्धिदर्शनाद् आग्नेयगुणक्षयदर्शनाच्च सोमादित्ययोर्बलवृद्धिक्षयावुपचरितौ। वायोरादाने भृशतरं रौक्ष्यं विसर्गे किञ्चिद्रौक्ष्यहानिः। तथा चागमः — "विसर्गे पुनर्वायवो नातिरूक्षाः प्रवान्ति इतरे पुनरादाने"[1] इति। सोमो बलवान् रविर्हीयते कदा महीतले भूपृष्ठे शान्ततापे सति कैः शीतैर्मेघवृष्ट्यनिलैः शीतैरित्युपलक्षणार्थं विसर्गकालत्वान्मृदुभिः स्निग्धैरप्यमीभिः इति। अतएव इहायने स्निग्धा रसा अम्ललवणमधुरा बलवन्तो भवन्ति । अत्रापि क्रमादित्यनुवर्तते । पूर्ववच्च व्याख्येयः। चशब्दो व्यतिरेके। यद्यपि अम्ललवणयोराग्नेयत्वं तथापि तत्कालयोर्भूजलयोः कालस्य सौम्यत्वाद् बलवत्त्वं न तेजस इति चशब्दार्थः। अयनस्वरूपवर्णनं समानानीकप्रत्यनीकपरिज्ञानेन क्रियाकरणार्थम्-उत्तरदक्षिणायनयोः सौम्याग्नेयौ क्रियाक्रमौ कर्तव्यावित्यर्थः ॥ ६ ॥

इदानीमयनोक्ते बलस्य हानिवृद्धी सर्वत्र समे इति दर्शयति —

शीतेऽग्र्यं वृष्टिघर्मेऽल्पं बलं मध्यं तु शेषयोः ।

**शीत इत्यादि।** शीते शीतोपलक्षिते काले हेमन्तशिशिराख्ये नृणां बलमग्र्यं पूर्णं भवति विसर्गान्तत्वादादानप्रारम्भत्वाच्च । आदानादौ शिशिरे यद्यपि कलया बलहानिः, सा क्रमेणेति बलाधिक्यमुक्तमुपपद्यते। वृष्टिघर्मे वर्षाग्रीष्मयोर्बलमल्पं विसर्गप्रारम्भत्वादादानान्तत्वाच्च । सकलस्य बलस्यार्तत्वाद् ग्रीष्मे बलमल्पम्। ईषदीषद् बलं विसृजतीति वृष्टौ बलमल्पमेव। तुशब्दोऽवधारणे शेषयोः शरद्वसन्तयोः विसर्गादानमध्ययोर्बलं मध्यमेव उपचयापचयक्रमेणेत्यर्थः। अत्र कालकृतस्य बलस्य हानिवृद्धी वर्ण्येते न सहजयुक्तिकृतयोः। तथा च संग्रहे —

"हेमन्ते शिशिरे चाग्र्यं विसर्गादानयोर्बलम् ।
शरद्वसन्तयोर्मध्यं हीनं वर्षानिदाघयोः ॥"

इति ॥

एवमृतुस्वरूपमुक्त्वा तेषु चर्यां विवक्षुरादौ हेमन्तचर्यां ब्रूते —

**बलिनः शीतसंरोधाद्धेमन्ते प्रबलोऽनलः ॥ ७ ॥**
**भवत्यल्पेन्धनो धातून् स पचेद्वायुनेरितः ।**
**अतो हिमेऽस्मिन्सेवेत स्वाद्वम्ललवणान्रसान् ॥ ८ ॥**

बलिन इत्यादि । पूर्वं शिशिरादिकमृतुमुक्त्वा हेमन्तादिकां चर्यां कथं ब्रूते इति चेत् । अतिदेशमिति यां कांचित् तन्त्रयुक्तिं प्रदर्शयितुम् । अपि च ग्रन्थलाघवार्थं च हेमन्तचर्या शिशिरेऽतिदेष्टुं न्याय्या नान्या हेम(न्तः ? न्ते) । कुतः —

"निगद्य शिशिरे वृत्तं तद्धेमन्तेऽतिदिश्यते ।
यदि व्युत्क्रमता तत्र नातिदेशे च लाघवम् ॥
पुनर्हेमन्तचर्यान्ते वसन्तोक्तौ क्रमात्ययः ।
क्रमभङ्गद्वयं न स्यात् क्रमस्यैकस्य भञ्जनात् ॥
इति सञ्चिन्त्य मनसा प्राह हैमन्तिकं विधिम् ।"

विसर्गान्त्यत्वाद्धेमन्तस्य । बलिन उपचितबलस्य स्वभावतः प्रबलाग्नेः पुंसो हेमन्तकाले शीतसंरो[धा]त् शीतेन समग्रं रोधात् सर्वतो निरोधादित्यर्थः । तस्माद्धेतोरनलोऽग्नि(र्ज्व ? र्ब)लीभवति । यतो बाह्येन शैत्येन सर्वतो रुद्धेषु रोमकूपाख्येषु स्रोतस्सु जाठराग्नेरूष्माणो बहिः प्रतिहताः प्रतिनिवृत्त्योदरं प्रविश्य जाठरं जातवेदसं संवर्धयन्ति । उक्तवांश्च —

"देहोष्माणो विशन्तोऽन्तः शीते शीतानिलाहताः ।
जठरे पिण्डितोष्माणं प्रबलं कुर्वतेऽनलम् ॥
विसर्गबलिनां प्रायः स्वभावादि गुरु क्षमम् ।"

इति । आगमश्च — बलिनां बलवत्ता भवति । हेमन्त इति शिशिरर्तोरपि ग्रहणम् । बलिन इति कालान्तरेष्वपि बलिनामग्निर्बलवान् भवत्येव इह तु विशेषेण बलवान् भवतीति दर्शयति । शीतसंरोधादित्यनेन स्वरूपलक्षणं कार्याग्निवृद्धिहेतुं च वक्ति । हेमन्त इत्यनेनैतद् द्योतयति । अस्मिन्नेव काले शीतसंरोधात् प्रबलोऽग्निर्भवति न तु ऋत्वन्तरोपजनितशीतेन संरोधात् । तथा ह्यन्यर्तुजेन शीतेनाग्निसादो भवति यथा वर्षासु । तत्र हि वृष्टिवाताभ्यां भवति शीतं न चाग्निदीप्तिः । वक्ष्यति च —

"अश्मणस्तेजनं च यत्"

इति। तथा—

"भोजनं त्वतिदुर्दिने।
व्यक्ताम्ललवणस्नेहं संशुद्धं[1] क्षौद्रवल्लघु॥"

इति। तस्मान्मन्दाग्निमृते हेमन्तस्याग्निवर्धनं स्वभावः। तथाचोक्तं सङ्ग्रहे—

"मन्दाग्निर्भवति प्रायः कफवातोत्तरे हिमे।"

इति। यतोऽग्नेर्वृद्धिः अतः स्वल्पेन्धनोऽल्पाहारः सन् सोऽनलः स्ववृद्ध्यतिशयेन पाचनीयाभावाच्च धातून् रसासृगादीन् पचेत्। कीदृशः—वायुना ईरितः ध्मानोद्दीपितः। वक्ष्यति च—

"आहारमग्निः पचति दोषानाहारवर्जितः।
धातून् क्षीणेषु दोषेषु जीवितं धातुसंक्षये॥"

इति। पचेदिति सम्भावनायाम्। अथवा अल्पेन्धनत्वादग्निसादोऽपि सम्भाव्यते—तथाच सङ्ग्रहः—

"निरिन्धनो यथा सीदेदत्युदीर्णतया तथा।
धातूनपि पचेदस्य ततस्तेषां क्षयान्मरुत्॥
तेजस्सहचरः कुप्येत् शीतः शीते विशेषतः।"

इति। अल्पेन्धनत्वमुपलक्षणम्। अतो रूक्षाशनं प्रमिताशनं च गृह्यते। आगमश्चात्र—

"स यदा नेन्धनं युक्तं लभते देहजं ततः।
रसं हिनस्ति ..............................॥"

इति। अत्रायुक्तेन्धनत्वस्य रूक्षाल्पप्रमिताशनत्वमिति नैयासिकाभिप्रायः।

यस्मादेवंविधाहारकुपितेन वायुना प्रेरितोऽग्निर्धातून् पचेत् अतो हेतोरस्मिन् हिमे शीते स्वाद्वम्ललवणाख्यान् रसान् सेवेत। तस्मादत्र वृद्धेन वायुनाग्निसन्धुक्षणमयुक्तं तस्य तद्वैषम्यहेतुत्वाद्। ब्रूमः। निदानादिविशेषापेक्षया दोषाणां विशिष्टकार्याश्रयवचनात्। तथा च सङ्ग्रहः—

"कोष्ठे रुद्धोऽग्निकृद् वायुर्मेदसाशोंभिरग्निहृत्।"

---

१. 'संशुष्कं' इति पाठभेदः.

इति । एतेन 'वर्षासु दुष्टैर्दोषैः अग्निः सीदति' इत्यत्रापि वातपित्ताभ्यां वैषम्य-तैक्ष्ण्यहेतुभ्यां तत्कालदुष्टाभ्यामग्निसादो नानुपपन्नः । स्वहेतूनपि स्वाद्वादीन् अग्निबलापेक्षया सेवेत "अग्निबलापेक्षिणी मात्रा" इति वचनात् । स्वाद्वादि रसत्रयोपादानं स्निग्धगौरवार्थम् अस्मिन्नित्येव पर्याप्तेऽपि हिम इति विशेषणं कालस्य शैत्यादपि वातवृद्धिः सम्भाव्यते । तथा चागमः — 'वायुः शीतः शीते प्रकुप्यती'ति । किञ्च अन्यर्तुसम्भवे हिम इत्यस्यार्थस्य द्योतनाय हिम इत्युक्तम् । चीयमानकफवृद्धिहेतूनामपि स्वाद्वादीनामुपयोगविधानं करिष्यत इति ॥ ८ ॥

दैर्घ्यान्निशानामेतर्हि प्रातरेव बुभुक्षितः ।
आवश्यकार्यं संभाव्य यथोक्तं शीलयेदनु ॥ ९ ॥

दैर्घ्यादित्यादि । एतर्हि अस्मिद् हेमन्ते प्रातरेव प्रत्युषसि बुभुक्षितो भवति नान्यकालवत् किञ्चिद् दिनातिक्रान्तौ सत्याम् आवश्यकार्यं विण्मूत्रोत्सर्गादिकं दिनचर्योक्तं सम्भाव्य कृत्वा यथोक्तं यथानिर्दिष्टं वक्ष्यमाणं वातघ्न-तैलाभ्यङ्गादिकमनु पश्चात् शीलयेत् न तु कालान्तरवदन्तरार्थार्थव्यापारेषु प्रयतेतेत्यर्थः । किञ्च यद्यपि बुभुक्षितोऽऽवश्यकार्यं सम्भाव्य शीलयेत् तदन्वित्युक्तम् । वचनं हि —

"आहारकाले संप्राप्ते यो न भुङ्क्ते बुभुक्षितः ।
तस्य सीदति कायाग्निर्निरिन्धनं इवानलः ॥"

इति । तस्मादौचित्याद् बुभुक्षितेनाहारः कार्य इति वेद्यम् । नन्वन्यस्मिन्नपि काले बुभुक्षितस्यैवाहारानुज्ञानादिह बुभुक्षितग्रहणं न कार्यं, युक्तमाह भवान् किन्तु अस्मिन् काले जाठरोऽग्नि(रत्यग्नि)च्छायानुकारी भवति । ततोऽस्य जाठराग्नेरत्यग्नेरिवोपचारो युक्तः । यथा —

"मुहुर्मुहुरजीर्णेऽपि भोज्यान्यस्योपहारयेत् ।
निरिन्धनोऽन्तरं लब्ध्वा यथैनं न विपादयेत् ॥"

इत्यबुभुक्षितस्यैव भोजनाधिकारित्वमिति भ्रान्तिनिरासाय बुभुक्षितग्रहणम् । निशानां दैर्घ्यादिति विशिष्टकालोपलक्षणार्थं कृतं यदात्र हेमन्ते शर्वर्यो दीर्घा जायन्ते तदा एष विधिः सर्वोऽनुष्ठेयो न प्रारब्धमात्र एवास्मिन् इति । पौषे

मासि उत्तरे देशे निशानामतिदैर्घ्यम् आषाढे मासि दक्षिणे देशे दिवसस्यातिदैर्घ्यं च शास्त्रसिद्धम् । उक्तं च यवनसंहितायां —

"दक्षिणायनगे सूर्ये हिमवत्तटभूमिषु ।
षट्त्रिंशन्नाडिका रात्रिः पौषे मास्युच्छ्रयक्रमात् ॥
चतुर्विंशतिनाडीकं दिनं तत्र क्षयक्रमात् ।
उत्तरायणगे सूर्ये सेतुबन्धान्तिकावनौ ॥
षट्त्रिंशन्नाडिकायामं दिनं वृद्धिक्रमाद् भवेत् ।
चतुर्विंशतिनाडीका निशा ह्रासक्रमाद् भवेत् ॥"

इति । नन्वत्र 'सेवेत शीलयेद् भजेदित्येकार्थाभिधायीनि बहूनि क्रियापदानि किं निर्दिष्टानि एकेनैवार्थावगतेः । अत्र ब्रूमहे । कार्यान्तरसूचनार्थमेतत्पदत्रयं कृतम् । अतो हिमेऽस्मिन्नित्यत्र यः सेवेतशब्दः स इदं द्योतयति—स्वाद्वम्ललवणरसाः पवनविजयार्थमस्मिन् काले नितरामुपयोक्तव्याः न (क? का)-दाचित्क एषामस्मिन्नृतावुपयोगो विधेय इति । अतएव वातघ्नतैलाभ्यङ्गादेः पृथगेषां रसानामुपन्यासः । तथा यथोक्तं शीलयेदित्यत्र यः शीलयेदित्येष शब्दः स वातघ्नतैलादेः सर्वस्य तुल्यकक्ष्यतां द्योतयति । तथा प्रावाराजिनेत्यादौ यो भजेच्छब्दः (स) सकलस्याहारविहारशीलनस्य शयनविधेश्च तुल्यतां प्रथयति । तथाच वक्ष्यति —

"आहारशयनाब्रह्मचर्यैर्युक्त्या निषेवितैः ।
शरीरं धार्यते नित्यमगारमिव धारणैः ॥"

इति ॥ ९ ॥

**वातघ्नतैलैरभ्यङ्गं मूर्धतैलं विमर्दनम् ।**
**नियुद्धं कुशलैः सार्धं पदाघातं च युक्तितः ॥ १० ॥**

वातेति । वातघ्नतैलैरभ्यङ्गं शीलयेत् तैलस्य सर्वस्यैव वातघ्नत्वे सिद्धे वातघ्नैरिति विशेषणं अतिशयप्रतिपादनार्थम् । तेन वातहरद्रव्यसिद्धैर्बलातैलादिभिरिति बोध्यम् । मूर्धतैलं शिरोऽभ्यङ्गादि न शिरोवस्तिः तस्य शु-(द्ध? द्धि)सापेक्षत्वात् 'मूर्धतैलं शिरोऽभ्यङ्ग' इति हाटकः । विमर्दनं शरीरसंवाहनम् एतदौचित्यादभ्यक्तः सन् शीलयेत् कुशलैस्तद्विद्भिर्मल्लैः सार्धं सह

१. 'मूर्ध्नि तैलमिति' पाठभेदः.

नियुद्धं निरायुधस्य बाहुयुद्धं मल्लयुद्धं पाणिपादबन्धनादिरूपं शीलयेत्। पदाघातः पदा पदेन वा शनैराहत्य मर्दनं स्तैमित्यशान्त्यर्थम्। पादेनाघातः पादाघातो वा। युक्तित इत्यनेनैवार्धशक्त्यैव शीलनं द्योतयति। बाहुयुद्धपदाघातयोश्चाभ्यक्तेनैव शीलनं युक्तम्। युक्तित इति सर्वत्रानुवर्तते। हृद्याकारस्त्वाह—मूर्ध्रे तैलादीनां सेवाक्रमोऽत्र न विवक्षितः कृताभ्यङ्गस्य नियुद्धायोग्यत्वादिति। शीतकाल एव विमर्दनादीनां विधिः अन्यत्राभ्यङ्ग एव ॥ १० ॥

कषायापहृतस्नेहस्ततः स्नातो यथाविधि।
कुङ्कुमेन सदर्पेण प्रदिग्धोऽगरुधूपितः ॥ ११ ॥

कषायेति। कषा(य?)येण रोध्रादिनापहृतः स्नेहः) यस्य स एवम्। अन्ये त्वाहुः—सुगन्धिमङ्गलद्रव्यसंभृताः कुण्डद्रोणीकटाहादिषु संस्थिताः आप एव कषायशब्देनोच्यन्ते। यथोक्तं भोजराजीये—

"यथर्तुविहितं तोयं पूतं हारि सुगन्धि च।
अवगाह्य चिरं तिष्ठेच्छ्रमस्नेहापनुत्तये ॥
ततः पीठगतः स्नायात् गन्धामलकवारिभिः।
तीर्थोदकैश्चापि तथा मूलमन्त्राभिमन्त्रितैः ॥"

इति। ततोऽनन्तरं यथाविधि शास्त्रोदितेन 'उष्णाम्बुने'त्यादिना बिधानेन स्नातः कुङ्कुमेन काश्मीरेण प्रदिग्धोऽनुलिप्तः दर्पः कस्तूरिका सह तेन वर्तते यत् कुङ्कुमं तदेवम्। तयोरुष्णत्वाल्लेपविधानम्। तथा अगरुणा जोङ्गकेन धूपितः ॥ ११ ॥

रसान् स्निग्धान् पलं पुष्टं गौडमच्छसुरां सुराम्।
गोधूमपिष्टमाषेक्षुक्षीरोत्थविकृतीः शुभाः ॥ १२ ॥
नवमन्नं वसां तैलं शौचकार्ये सुखोदकम्।
प्रावाराजिनकौशेयप्रवेणीकौथवास्तृतम् ॥ १३ ॥
उष्णस्वभावैर्लघुभिः प्रावृतः शयनं भजेत्।
युक्त्यार्ककिरणान् स्वेदं पादत्राणं च सर्वदा ॥ १४ ॥

रसानिति। रसादीन् भजेत् रसान्मांसरसान् स्निग्धान् घृतादिसंस्कृतान् पुष्टं पलं मेदुरं मांसं भजेत्। उक्तं च सङ्ग्रहे—

"बिलेशयौदकानूपप्रसहानां भृतानि च ।
मांसानि ............................... ॥"

इत्यादि । तथा गुडस्येदं गौडं गुडकृतं मद्यम् । तथा अच्छसुरां सुरां मण्डसुरां मदिरां च भजेत् । अन्नेन कषायद्रव्यैश्च या क्रियते सा सुरा भण्यते । ननु द्विविधैव सुरा सेव्यत्वेऽनेनाभीष्टा तत्सु(र ? रा)शब्द एव निर्देष्टुं न्याय्यः । तस्मिन् हि सामान्यपदे निर्दिष्टे द्विविधैव सुरा निर्दिष्टा भवति । सत्यमेतत् । किन्तु अच्छसुरां सुतरां भजेत् । न तथा सुरामिति ज्ञापनार्थं द्वयोरुपादानम् । अत एवाच्छसुरामिति पूर्वं निर्दिष्टम् । गोधूमादिभ्यः पञ्चभ्यः उत्थानं यथा विकृतीनां ता एवम् । उत्पूर्वात् तिष्ठतेः 'सुपीति' योगाद् भावे कः "उदः स्थास्तम्भोः पूर्वस्य" इति सस्य तकारः । गोधूमादीनामग्निपक्वानामपूपादिविकृतीर्विकारान् शुभा रम्याः पथ्या वा भजेत् । तथा नवमपुराणमन्नं तथा वसां भजेत् । नवान्नाभ्यनुज्ञानमग्नेर्बलवत्त्वात् ।

"शुद्धमांसस्य यः स्नेहः सा वसा परिकीर्तिता ।"

तथा तैलं भजेत् तैलं पानाय अभ्यङ्गस्य प्रागनुज्ञानात् नवान्नवसातैलानां गुरुत्वेनाग्निशमनार्थं विधानं स्वभावसंयोगमात्रादिगुरुक्षमस्तदा जाठरो वह्निः । शौचकार्ये शौचक्रियायां सुखोदकमुष्णोदकं भजेत् । प्रावारः पटे कार्पासादितूलसंस्यूतस्तूलपट इति प्रसिद्धः । अरुणदत्तोऽपि प्रावारः कार्पासो रोमवान् घनः पटस्तूलपटादिरित्याह "प्रावारोरङ्कुरआदिरोमभिर्निर्मितः" इति हृद्याकारः । अजिनं सुखस्पर्शं रोम(ज्ञा ? चर्म) (गव्या ? गो) व्याघ्रादिचर्म । कौशेयं कीटनिर्मितकोशतन्तुनिर्मितः पटविशेषः पट्टवसनम् । प्रवेणी सूचिपानाख्यो वस्त्रविशेषः 'प्रवेणी घनश्लीनपट्टनिर्मितः प्रावाराकार' इति सारकृत् । तूलपट इति हृद्याकारः । कौसुम्भरसरक्तच्छागाविरोमादिनिर्मितो घनो विचित्रः कौथवः रक्तकम्बल इति प्रसिद्धः । एभिरास्तृतं दत्तप्रतिच्छदं शयनं भजेत् । कीदृशः शयनं भजेत् । उष्णस्वभावैर्लघुभिः कौशेयादिभिः प्रावृतः प्रकर्षेणाच्छादितः । ईदृशैः प्रावृते जाठरवह्नितेजसां निस्सरणं न निरुध्यते इति तन्निरोधे पूर्ववद् वह्निवृद्धिरिति दोषः । तथा अर्ककिरणं भजेत् कथं युक्त्या सम्यग्योगलक्षणया नाति । अतिसेवितानि क्लान्त्यादीन् कुर्युः ।

तथा स्वेदं भजेत् युक्त्या यथायोग्यमित्यत्रापि योज्यम् । अतिसेवितो हि स्वेदो ग्लान्यादीन् जनयेत् पादत्राणं च उपानत् पादुकादिकं सर्वदा भजेत ॥ १२-१४ ॥

**पीवरोरुस्तनश्रोण्यः समदाः प्रमदाः प्रियाः ।**
**हरन्ति शीतमुष्णांग्यो धूपकुङ्कुमयौवनैः ॥ १५ ॥**

पीवरेत्यादि । पीवरं पुष्टमूरुस्तनश्रोणि यासां ता एवंभूताः प्रमदा नार्यः शीतं हरन्ति नुदन्ति । पीवरत्वेनातिकार्श्यमत्र निषिध्यते । तथाचाह ग्राम्यधर्माधिकारे – 'त्यजेदतिकृशामि'ति । किंभूताः सह मदेन यौवनोद्भूतेन सुरादिपानभोजनेन च कामोद्रेककारिणा वा वर्तन्ते समदाः मत्ताः तथा प्रियाः वल्लभाः हृदयाभिप्रेताः अगर्वादिजनितेन धूपेन कुङ्कुमानुलेपनेन तथा यौवनोष्मणा च स्वाभाविकेनोष्णाङ्ग्यः त्रिभिरप्युष्णैः शीतं हर(ति ? न्ति) । स्निग्धादिसेवया कफस्यातिमात्रचयपरिहाराय ईषद्रतिरभ्यनुज्ञायते ॥ १५ ॥

**अङ्गारतापसन्तप्तगर्भभूवेश्मचारिणः ।**
**शीतपारुष्यजनितो न दोषो जातु जायते ॥ १६ ॥**

अङ्गारेत्यादि । अङ्गाराणां तापोऽङ्गारतापः अङ्गारविन्यासजेन तापेन सन्तप्ते गर्भवेश्मनि अपवरके तथाविधे भूवेश्मनि वा चरतः पुंसः । तथा च मुनिः —

"सेवेत भूगृहं चोष्णमुष्णं गर्भगृहे तथा ।"

इति । गर्भगृहाभ्यन्तरे यद् भूवेश्म तत्रेति केचित् । अङ्गारतापसन्तप्तगर्भभूवेश्मचारिणः पुंसो यथा शीतपारुष्याभ्यां जनितो दोषो दुःखं न जातु कदाचिज्जायते । ततोऽङ्गारता(मुष्णं उष्णं ?)पसन्तप्तगर्भभूवेश्मचारी स्यादिति भावः । पारुष्यं रौक्ष्यं वायोः शीतपारुष्यं शीताधिक्यं वा ॥ १६ ॥

हेमन्तचर्यामुक्त्वा इदानीं शिशिरे तामतिदिशति —

**अयमेव विधिः कार्यः शिशिरेऽपि विशेषतः ।**
**तदा हि शीतमधिकं रौक्ष्यं चादानकालजम् ॥ १७ ॥**

अयमित्यादि । विधिश्चर्या । अयमेव हैमन्तिको विधिः पूर्वोक्तः शिशिरेऽपि विशेषतोऽतिशयेन कार्यः कुतो विशेषतः कार्य इत्याह — हि यस्मात्

तदा तस्मिन् शिशिरे शीतमधिकं हेमन्ताद् भवति कालस्वभावात्। तथा आदानकालजनितं रौक्ष्यं च। ततो हेतुद्वयाद् विशेषेण हैमन्तिको विधिः सेव्यः। हेमन्ते रसान् स्निग्धान् शीलयेदित्युक्तं शिशिरे तानतिशयेन शीलयेद् एवं सर्वेष्वपि योज्यम्। तदा देहोष्माणो मेघा मारुतवत् शीतेनात्यन्तं रुध्यन्ते। तथाचागमः —

"हेमन्तशिशिरौ तुल्यौ शिशिरेऽल्पं विशेषणम्।
रौक्ष्यमादान(जं) शैत्यं मेघमारुतवर्षजम्॥"

इति। शिशिरे काले हैमनेभ्यो मारुतेभ्यः पवनाः शीतस्वभावाहितशक्तयो देहोष्माणं रुन्धन्ति। श्लेष्मप्रकोपेन वसन्तप्रत्यासत्त्यास्मिन् भृशं मैथुनमभ्यर्हितम् — आगमो हि — "निषेवेत मैथुनं शिशिरागमे" इति। आदानकाल एव रौक्ष्यस्य कारणं नान्यदत्र। अत एव हेमन्ते शीतेऽपि विसर्गकालत्वाद् रौक्ष्यं नास्त्येव। उक्तवांश्च —

"शिशिरे शीतमधिकं मेघमारुतवर्षजम्।
रौक्ष्यमादानजं तस्माद् कार्यः पूर्वाधिको विधिः॥"

इति। अन्यत्रापि —

"हेमन्तशिशिरौ तुल्यौ शिशिरेऽल्पं विशेषणम्।
त्वग्रूक्षजननं शैत्यं मेघमारुतवर्षजम्॥"

इति। चरके चोक्तं —

"हेमन्तशिशिरौ तुल्यौ शिशिरेऽल्पं विशेषणम्।"

रौक्ष्यमादान(कालज)मिति। आदानस्य प्रारम्भमात्र एव शिशिरस्य सम्भव इति शिशिरे किञ्चिदेव रौक्ष्यं वेद्यम्। ननु यथा रौक्ष्यमादानकाले वेद्यं तथौष्ण्यम् इति। तथाचोक्तं — 'तस्मिन्नत्यर्थतीक्ष्णोष्णरूक्षा' इति। एवं चौष्ण्यसम्भवाच्छीतस्य हेमन्ततो हानिः प्राप्ता न त्वाधिक्यं तत्कथमुक्तं तदा हि शीतमधिकमिति। ब्रूमः। आदानत्वेऽपि शिशिरस्य नौष्ण्यम्। आदानकालादिः शिशिरः। तत्र किञ्चिदेवौष्ण्यं तद्वायुभिः शीतरूक्षैरभिभूयते। रौक्ष्यस्य द्वौ हेतू एकस्तावद् भगवान् दिवाकरः कुर्वन् स्नेहादानम्। द्वितीयस्त्वादानकालः। तदेवं रौक्ष्येणोभयहेतुजेन शिशिरे काले वाताः शीतस्वभावा आहिताधिकशक्तयो

जायन्ते हैमन्तेभ्यो वातेभ्यः । तथाविधाश्चोष्णेनादानकालप्राधान्यादप्राप्तबलेन शिशिरे नाभिभूयन्ते । अनभिभूताश्च शीतस्वभावाः शीतमेव वर्धयन्ति । अतो युक्तं शीताधिक्यं शिशिर इति ॥ १७ ॥

सम्प्रति क्रमप्राप्तां वसन्तचर्यामाह —

**कफश्चितो हि शिशिरे वसन्तेऽर्कांशुतापितः ।**
**हत्वाग्निं कुरुते रोगानतस्तं त्वरया जयेत् ॥ १८ ॥**

**कफ** इत्यादि । शिशिरे स्वाद्वम्ललवणस्निग्धादिनाहारेण कालस्वाभाव्याच्च श्लेष्मा सञ्चितोऽतिशयेन स्त्यानत्वादकुपितो वसन्ते अर्कांशुतापितः सूर्यकिरणैर्विलायितो जलस्वरूपत्वाद् विपरीतं जाठराग्निं बाह्यमिव सलिलं हत्वा हि यस्माद् रोगान् व्याधीन् कुरुते जनयत्यतोऽस्मात् कारणात् (तत् ? तं) कफं त्वरया शीघ्रमेव दोषागमात् प्रागेव जयेत् । दोषानिति केचित् पठन्ति । अर्कतापित इत्यनेनैव सिद्धे अंशुशब्दः रश्मीनां पटिमानं सूचयति न तथा शीते । तत्र हि 'धूमधूम्ररजोमन्दा' इत्यधिजगे ॥ १८ ॥

कैर्जयेत् —

**तीक्ष्णैर्वमननस्याद्यैर्लघुरूक्षैश्च भोजनैः ।**
**व्यायामोद्वर्तनाघातैर्जित्वा श्लेष्माणमुल्बणम् ॥ १९ ॥**
**स्नातोऽनुलिप्तः कर्पूरचन्दनागरुकुङ्कुमैः ।**
**पुराणयवगोधूमक्षौद्रजाङ्गलशूल्यभुक् ॥ २० ॥**
**सहकाररसोन्मिश्रानास्वाद्य प्रिययार्पितान् ।**
**प्रियास्यसङ्गसुरभीन् प्रियानेत्रोत्पलाङ्कितान् ॥ २१ ॥**
**सौमनस्यकृतो हृद्यान् वयस्यैः सहितः पिबेत् ।**
**निर्गदानासवारिष्टसीधुमार्द्वीकमाधवान् ॥ २२ ॥**

**तीक्ष्णै**रिति । तीक्ष्णैर्वमननस्याद्यैः । आदिशब्देन धूमविरेचनादीनां ग्रहणम् । तथा लघूनि रूक्षाणि च यानि भोजनानि तैश्च । तथा व्यायामश्च उद्वर्तनं च आघातश्च पादाघातः तैश्च कफं जयेत् । चशब्दो लुप्तनिर्दिष्टः । जित्वेत्यादि । कफमुल्बणमुद्धतं जित्वा अनन्तरं स्नातोऽनुलिप्तः समालब्धः कर्पूरचन्दनागरुकुङ्कुमैः तथा पुराणं च तत् यवगोधूमं च तथा क्षौद्रं माक्षिकं तथा जाङ्गलं च तच्छूल्यं च तानि भुङ्क्ते यः स एवम् । शूल्यं

शूलकप्रोतपाचितं मांसम् । अत्र पुराणशब्देन पञ्चषण्मासातिक्रान्तमेव धान्यं गृह्यते । काश्यपेनाप्युक्तं —

"यच्छारदं तद्धि वसन्तभोज्यं
वासन्तिकं यच्छरदि प्रयोज्यम् ।
एवं पुराणं भवतीह धान्यं
निरामयार्थं विहितं नराणाम् ॥"

इति । एवंविधः सन् वयस्यैर्मित्रैः सहित आसवादीन् पिबेदिति वक्ष्यमाणेन संबन्धः उत्तरदीपकत्वात् । सहकाररसेनोन्मिश्रान् अधिवासितानित्यर्थः । चतुर्द्धा सहकारयुक्तिः — पल्लवयुक्तिः पुष्पयुक्ति रसयुक्तिर्गन्धयुक्तिरिति । अत्र गन्धयुक्तिर्बहुधा विभिन्ना हरमेखलाकक्षपुटादिषु प्रसिद्धा । सा नेह कथ्यते दुष्करत्वात् । रसयुक्तिमेवमाह भोजः —

"सहकाररसः सुरभिर्युक्त्या कर्पूरदर्पसंमिलितः ।
संस्कृतभाजननिहितो वारुण्यामोदसाधनो हृद्यः ॥"

इति । तथा प्रियया दयितया आस्वाद्य किञ्चित् पीत्वा अर्पितान् दत्तान् प्रियास्यसङ्गेन सुरभीन् सुगन्धीन् तथा प्रियानेत्रैरुत्पलसदृशैः प्रतिबिम्बितैरङ्कितान् सञ्जातशोभान् । अथवा प्रियानेत्रैरुत्पलैश्चाङ्कितान् । "सहकारोत्पलाङ्कितान्" इति हि सङ्ग्रहवचनात् । तथा सौमनस्यकृतः चित्तप्रसादकरान् हृद्यान् हृदयाय हितान् अथवा हृद्यस्त्विहावधौ रुचिरः अन्यत्रान्योर्थोऽपि भवति । हृदयशब्दोऽत्र लक्षणया रुचिवाची । अन्यत्र तु मुख्यार्थः । निर्गदान् पुराणत्वेन निर्दोषान् देशकालाद्यनुपहतान् इति वा । एवंविधानासवादीन् पिबेत् । आसवो यो द्रव्याण्यासुत्य क्रियते । उक्तं च —

"*मद्याकाराधिकद्रव्यैः खदिराद्यैः कृतस्तु यः ।
सोऽरिष्टः स्यादासवस्तु द्रव्याण्यासुत्य यः कृतः ॥"

इति । अन्यत्रापि —

"द्रव्याण्यासुत्य सञ्जातस्वरसादासवः स्मृतः ।
सारद्रव्यकषायैश्च तथा तक्रादिकैर्द्रवैः ॥
सकल्कैर्मासमुषितः कुम्भेऽरिष्टोऽग्निदीपनः ।
शीधुरिक्षुरसोद्भूतः स्थापकापरनामवान् ॥

* मद्याकाराधिकद्रव्यमदिराद्यैः कृतस्तु यः ।
पद्यमेतदित्येवं जातीयमपि दृश्यते ॥

मृद्वीकारससंभूतं मार्द्वीकमिति कथ्यते ।
शर्करामधुसंभूतो माधवो मदवर्धनः ॥''

इति ॥ १९-२२ ॥

मद्यानधिकारिणां पेयमाह —

**शृङ्गवेराम्बु साराम्बु मध्वम्बु जलदाम्बु वा ।**

शृङ्गेति । शृङ्गवेराम्बु शुण्ठीक्वथितं जलं पिबेत् । साराम्बु खदिरासनचन्दनादिसारक्वथितं जलम् । मध्वम्बु क्षौद्रमिश्रं अम्बु । जलदाम्बु मुस्तेन क्वथितं जलम् । वाशब्दः समुच्चये ॥

**दक्षिणानिलशीतेषु परितो जलवाहिषु ॥ २३ ॥**
**अदृष्टनष्टसूर्येषु मणिकुट्टिमकान्तिषु ।**
**परपुष्टविघुष्टेषु कामकर्मान्तभूमिषु ॥ २४ ॥**
**विचित्रपुष्पवृक्षेषु काननेषु सुगन्धिषु ।**
**गोष्ठीकथाभिश्चित्राभिर्मध्याह्नं गमयेत्सुखी ॥ २५ ॥**
**गुरुशीतदिवास्वप्नस्निग्धाम्लमधुरांस्त्यजेत् ।**

दक्षिणेत्यादि । काननेषूपवनेषु स्थितो मध्याह्नं गमयेत् अतिवाहयेत् । अह्नो मध्यं मध्याह्नः । कथं — विदग्धानामासनबन्धो गोष्ठी तस्यां कृता याः कथा गोष्ठीकथाः ताभिश्चित्राभिः कमनीयाभिः । न त्वर्थव्यवहारसंबन्धिनीभिः । कीदृशः सन् सुखी रागद्वेषादिरहितः । किंभूतेषु काननेषु दक्षिणदिक्प्रवृत्तैरनिलैः शीतेषु । तथा परितः समन्तात् जलं नित्यं वहन्ति यानि तेषु । 'आभीक्ष्ण्ये णिनिः' । तेषां क्वचित् प्रदेशे अदृष्टोऽल्पदृष्टः क्वचिदतिघनत्वान्नष्टो न दृश्यते सूर्यो येषु तानि एवं तेषु । अथवा अदृष्टत्वान्नष्ट इव सूर्यो येषु । तथा मणीनां वज्रमरतकादीनां कुट्टिमानि विशिष्टा भुवः ताभिः कान्तिः शोभा येषां तान्येवं तेषु । परपुष्टैः कोकिलैः विघुष्टेषु कृतशब्देषु । कामकर्माणिमदनव्यापाराः अन्तशब्दः प्रशंसावचनः । यथोद्भटस्य 'वनान्तदेवतावेण्य' इति । कामकर्मान्तनिमित्तं भूमयो येषां वनानां तान्येवं तेषु । मदनव्यापारस्य प्रशस्तभूमिष्विति हाटकः । कामकर्मान्ता मदनव्यापारा इति सारकृत् । विचित्राणि नानारूपाणि पुष्पाणि येषां ते तथाविधा वृक्षा येषां तान्येवं तेषु । सुष्ठु गन्धो येषां तेषु 'गन्धस्य —' इति समासान्तः । सत्यप्यादानत्वात् पवनकोपे कुपितकफक्षयार्थमीषद्रतिरभ्यनुज्ञायते । तथाचागमः —

"वसन्तेऽनुभवेत् स्त्रीणां काननानां च यौवनम् ।"

इति । अत्र वसन्ते गुर्वादींस्त्यजेत् कफवृद्धिभयात् । स्यादत्र विष्यन्दित्वा-ल्लवणमपि निषेद्धव्यम् । कस्मादम्लमधुरौ द्वावेव निषिध्येते । ब्रूमः । लवणमपूर्वं कफमम्लमधुराविव न करोति । किन्तर्हि सञ्चितस्य कफस्य स्रुतिरूपतां विधत्ते विष्यन्दित्वात् । किञ्च लवणस्य मधुरादिवत् बहुतरं नोपयोगः इति । व्याख्या-कारश्चैवमाह —

"अन्नसंस्कारकत्वेन स्वल्पं लवणसेवनम् ।
न कफोत्पत्तिहेतुत्वाल्लवणः कफकृत् स्मृतः ॥
सञ्चितस्य घनस्यास्य स्रुतिमौष्ण्यात् (करोति हि) ।
अतो न लवणस्यात्र निषेधो मधुराम्लवत् ॥"

इति ॥

अधुना ग्रीष्मचर्यामाह —

**तीक्ष्णांशुरतितीक्ष्णांशुर्ग्रीष्मे संक्षिपतीव यत् ॥ २६ ॥**
**प्रत्यहं क्षीयते श्लेष्मा तेन वायुश्च वर्धते ।**
**अतोऽस्मिन् पटुकट्वम्लव्यायामार्ककरांस्त्यजेत् ॥ २७ ॥**

तीक्ष्णेत्यादि । यत् यतो हेतोः तीक्ष्णांशुरादित्यः अतितीक्ष्णा अंशवो यस्य स एवम्भूतः सन् ग्रीष्मे संक्षिपतीव नाशयत्येव । जगतः स्नेहमित्यत्रानु-क्तमप्यर्थाल्लभ्यते । जगदिति स्थावरजङ्गमं च भूतग्राममाह स्नेहं बलसारम् । स्नेहं स्निग्धगुणमिति पञ्जिकायाम् । इवशब्द एवशब्दार्थे । व्याख्याकारस्तु— स्नेहमर्कोऽतितीक्ष्णांशुरिति पठति । अतोऽस्मात् कारणात् अस्मिन् ग्रीष्मे पट्वादींस्त्यजेत् । बलहानिकरत्वात् ॥ २७ ॥

**भजेन्मधुरमेवान्नं लघु स्निग्धं हिमं द्रवम् ।**

भजेदिति । मधुरमेवान्नं भजेत् । लघु वह्न्यर्थं । स्निग्धम् वातशमनाय हिमं पित्तशमनाय । वातपित्तयोर्ग्रीष्मे सञ्चयात् । उक्तं च —

"उष्णसन्तप्तदेहानां ग्रीष्मे राजन् शरीरिणाम् ।
चीयेताग्नेयभावात् तु पित्तं रौक्ष्याच्च मारुतः ॥"

इति । एवं विशेषयोरपि दोषयोर्वर्षासु पित्तश्लेष्मणोस्सञ्चयः । शिशिरे कफ-

मातरिश्वनोः । ननु दोषद्वयस्य ग्रीष्मादिषु सञ्चयोऽभिप्रेतश्चेत् कस्मादेकस्यैव सञ्चयाभिधानमिति । उच्यते ।

"यत्र काले तु यो दोषः प्रधानत्वेन सञ्चितः ।
तस्यैवोक्तिर्न चान्यस्य दुर्बलस्यास्य संग्रहः ॥"

लघु स्निग्धं हिमं द्रवम् । चेति चशब्दो लुप्तनिर्दिष्टः ॥

सामान्येन भोजनमुक्त्वा विशेषेणाह —

**सुशीततोयसिक्ताङ्गो लिह्यात्सक्तून् सशर्करान् ॥ २८ ॥**

सुशीतेत्यादि । सुष्ठु शीतेन तोयेन सिक्तमाप्लुतमङ्गं कायो यस्य स एवंभूतः सन् सक्तून् सशर्करान् लिह्यात् । सक्तूनां सशर्करत्वविधानं बलार्थं वातपित्तशमनार्थं च ॥ २८ ॥

**मद्यं न पेयं पेयं वा स्वल्पं सुबहुवारि वा ।
अन्यथा शोफशैथिल्यदाहमोहान् करोति तत् ॥ २९ ॥**

मद्यमित्यादि । अस्मिन् काले मद्यं न पेयं सर्वैः । तीक्ष्णोष्णत्वान्मद्यानां निषेधः । पेयं वा स्वल्पमिति वातश्लेष्मप्रकृतिना श्लेष्मप्रकृतिना वा तत्क्षपणार्थं स्वल्पमेव पेयम् । अत्रापि बहु न पेयम् । सुबहुवारि वेति । पित्तश्लेष्मप्रकृतीनामप्युचितेन श्लेष्मक्षयार्थं पित्तप्रतीकारमपीच्छता सुबहुवारि तन्मद्यं पेयम् । अथवा मद्यसात्म्यस्य तत्प्रतिषेधकृतोऽवश्यंभावी धातुक्षय इति तत्परिहारार्थं स्वल्पस्य बहूदकसंवृत्तस्य वा पानम् । एवं विषयविभागो बोद्धव्यः । अन्यथा निषेधविध्योर्विरोधः स्यात् । आगमश्चात्र —

"मद्यमल्पं न वा पेयमथवा सुबहूदकम् ।"

इति । स्वाद्वाद्याहारोपयोगात् कफप्रकृतेरवश्यंभाविकफात् स्रोतोलेपः ततश्चाग्निदौर्बल्यं तत्परिहारार्थं रूक्षाम्ल(रस)स्याम्ल(कारी?) पाकिनोऽपि युक्तमल्पस्य बहूदकसंवृत्तस्य वा पानम् । अन्येषां तु न तत्पानमिष्यते न्यासे । पाठ्यकारोऽपि मद्यं न पेयमित्यत्रानेकविधत्वं "स्वं स्वं प्रकृतिमुद्दिश्य" इत्याह । हृद्याकारस्तु "पेयं वातिसात्म्यात्, त्यागाशक्तौ सुबहुवारि श्लेष्मवृद्धिं पित्तशमनं चेच्छते"त्याह । अन्ये सर्वथा मद्यस्य निषेधं वदन्ति । तन्मद्यमन्यथा प्रकारान्तरेण पीतं सत् शोफादीन् करोति । शोफः श्वयथुः शैथिल्यमङ्गानामनैश्वर्यं दाहः सर्वाङ्गीणस्तापः ॥ २९ ॥

**कुन्देन्दुधवलं शालिमश्नीयाज्जाङ्गलैः पलैः ।**

**कुन्देत्यादि** । कुन्दः पुष्पविशेषः इन्दुश्चन्द्रः कुन्देन्दुवद् धवलं शुक्लं शालिं जाङ्गलैः पलैर्मांसैः सहाश्नीयात् कुन्देन्दुधवलमिति श्वैत्यातिशयः कथ्यते। अन्ये पलं मांसरसमाहुः । मांसस्यातिघनस्य विदाहित्वान्निषेध इति ॥

**पिबेद्रसं नातिघनं रसालां रागखाण्डवौ ॥ ३० ॥**

**पानकं पञ्चसारं वा नवमृद्भाजने स्थितम् ।**
**मोचचोचदलैर्युक्तं साम्लं मृन्मयशुक्तिभिः ॥ ३१ ॥**

**पाटलावासितं चाम्भः सकर्पूरं सुशीतलम् ।**

**पिबेदित्यादि** । जाङ्गलैः पलैः रसमिति च सम्बध्यते । रसं नातिघनं पिबेत् । रसशब्देनादिलोपाख्यया मांसरस उच्यते । रसपाकविधिः सूदशास्त्रात् ज्ञेयः । यथा ---

"निरस्थिरुधिरं क्षुण्णं क्षालितं हरिणादिजम् ।
पलं पलत्रयमितमष्टप्रस्थे पचेज्जले ॥

अष्टावशिष्टं तत् पूतं वाससा मृदुना ततः ।
कटुत्रयरजः किञ्चित् किञ्चिज्जीरकजं रजः ॥

त्रिजातधान्यसंम्मिश्रं भूस्तृणेनाधिवासितम् ।
खजेन मथितं युक्तमार्द्रिकाडाडिमाम्बुना ॥

सरामठेन हविषा धूपितं शशिना तथा ।
विद्यान्मांसरसं सिद्धं सिद्धं स्वास्थ्यानुवर्तने ॥

श्वासकासक्षयहरं वृष्यं बृंहणदीपनम् ।
हृद्यं वातहरं रुच्यं स्वरवर्णकरं परम् ॥"

इति । तथा रसालां च पिबेत् नातिघनां

"खजेन मथितं पादशर्करं दधिसंयुतम् ।
शुण्ठीजीरकसिन्धूत्थै रसालां मार्जिकां विदुः ॥"

इति । तथा रागषाडवौ पिबेत् ।

"द्राक्षाक्काथः शालिसक्तूपपन्नः
क्षौद्रप्रायः शर्करावांशिमिश्रः ।

गौडांशाढ्यः सत्रिजातः सधान्यः

रागो ज्ञेयः षाडवो डाडिमाम्लः ॥

[1]स्यादेवायं षाडवो डाडिमाम्लो

लेह्यः पेयो वा भवेद्वस्त्रपूतः ।

पक्वापक्वौ वातपित्ते हतस्तौ

रुच्यौ वृष्यौ बृंहणौ ग्राहिणौ च ॥"

इति ।

"सितामध्वादिमधुरा रागास्तन्वच्छकान्तयः ।"

ते सान्द्राः षाडवा[2] इति हाटकः । पानकं पञ्चसाराख्यं पिबेद् ।

"द्राक्षामधूकखर्जूरकाश्मर्यैः सपरूषकैः ।

तुल्यांशैः कल्पितं पूतं शीतं कर्पूरवासितम् ॥

पानकं पञ्चसाराख्यं दाहतृष्णानिवर्तकम् ॥"

इति । पञ्चसाराणां कल्कं सलिलेन विलोड्य रात्रिस्थितं वाससा संगाल्य कर्पूराधिवासितं नवे मृण्मये कुम्भे स्थितं डाडिमाम्लेन पातव्यम् । अपरं च —

"क्षीरं क्षौद्रं पिप्पली च शर्कराघृतसंयुतम् ।

पानकं पञ्चसाराख्यं वातपित्तहरं परम् ॥"

इति ।

"द्राक्षामधूकमधुककोलडाडिमसाधितम् ।

पानकं पञ्चसाराख्यम्"

इति । पाठ्यकारः साम्लं डाडिमतिन्तिडीकादियोगाद्येन पिबेदित्याह । मृण्मयशुक्तिभिः शुक्तिः पात्रविशेषः । अनु पाटल्या वासितं सुरभीकृतं सकर्पूरं सुशीतलं चाम्भः पिबेत् । मृन्मयशुक्तिभिरित्यत्रापि योज्यम् । पाटलावासितमिति सुरभिकुसुमवासस्योपलक्षणम् । कर्पूरवासितमिति गन्धद्रव्याधिवासस्य । उक्तं च सुश्रुतेन —

"परिपेलवया तुल्यागरुगुग्गुलुमुस्तकाः ।

चूर्णिताः शशिनोपेता वारिभाजनधूपनम् ॥

---

१. 'साम्ला', २. 'खांडवाः' इति पाठभेदः.

कुष्ठैलामिसिसंयुक्तैः पाटलोशीरबालकैः ।
मृदितैर्मृत्सु पिष्टैस्तैः खदिराङ्गारपाचितैः ।
सहकाररसाभ्यक्तैश्चम्पकोत्पलकेतकैः ॥
पद्मपैरपि कुन्दैश्च यथालाभोपपादितैः ।
श्रेष्ठः सलिलवासोऽयं स्मृतः सर्वर्तुको बुधैः ॥"

इति ॥

**शशाङ्ककिरणान् भक्ष्यान् रजन्यां भक्षयन् पिबेत् ॥ ३२ ॥**
**ससितं माहिषं क्षीरं चन्द्रनक्षत्रशीतलम् ।**

शशाङ्केत्यादि । माहिषं क्षीरं ससितं सशर्करं रात्रौ पिबेत् । किंभूतं चन्द्रेण नक्षत्रैश्च शीतलं रात्रावाकाशतलके शैत्यार्थं स्थापितं प्रथमयामस्थितं द्वितीययामे पिबेत् इति यावत् । यदा चन्द्रो न स्यात् तदा नक्षत्रैः शीतलमिति नक्षत्रग्रहणम् । किं कुर्वन् पिबेत् । शशाङ्ककिरणान् भक्ष्यान् भक्षयन् ।

"प्रक्षिप्य शर्करां क्षीरे पक्वेऽतिघनतां गते ।
निर्वर्तितास्तु गुलिकाः शशाङ्ककिरणाः स्मृताः ॥"

निर्वर्तिता ये भक्ष्या इति वा पाठः । अथवा —

"वांशीपिष्टसिताखण्डैः सगोधूमप्रियङ्गुभिः ।
क्षीरे पाकघने क्षिप्तैः पिण्डाश्चन्द्रकराह्वयाः ॥"

इति ॥

**अभ्रङ्कषमहासालतालरुद्धोष्णरश्मिषु ॥ ३३ ॥**
**वनेषु माधवीश्लिष्टद्राक्षास्तबकशालिषु ।**
**सुगन्धिहिमपानीयसिच्यमानपटालिके ॥ ३४ ॥**
**कायमाने चिते चूतप्रवालफललुम्बिभिः ।**
**कदलीदलकल्हारमृणालकमलोत्पलैः ॥ ३५ ॥**
**कल्पिते कोमलैस्तल्पे हसत्कुसुमपल्लवे ।**
**मध्यंदिनेऽर्कतापार्तः स्वप्याद्धारागृहेऽथवा ॥ ३६ ॥**

अभ्रङ्कषेत्यादि । अभ्रमाकाशं कषन्त्युल्लिखन्तीवात्युच्चत्वात् अभ्रङ्कषाः महान्तश्च सालाश्च तालाश्च महासालतालाः अभ्रङ्कषाश्च ते महासालतालाश्च ते

रुद्धः (सङ्गि? स्थगि)त उष्णरश्मिरादित्यो येषु वनेषु तेषु मध्यन्दिने मध्याह्ने अर्कतापार्तस्सन् स्वप्याच्छयीत। माधव्यो लताविशेषा अतिमुक्तकाख्याः तासु श्लिष्टा माधवीश्लिष्टाः द्राक्षायाः स्तबका गुच्छकाः द्राक्षास्तबकाः। माधवीश्लिष्टाश्च ते द्राक्षास्तबकाश्च तैः शालितुं शीलं येषां वनानाम्। इति णिनिः। अनेकार्थत्वाद् धातूनामिति। अथवा शालिन्शब्दस्तद्धन्तमाह स्तबकव(त? न्ति) इति तान्येवं तेषु कस्मिन् स्वप्यात् कायमाने। कायमानमिति प्रपा आर्द्रवेण्वादिकल्पितः पत्रविहितो विचित्रो हरितशाद्वलावच्छिन्नो वा गृहविशेषः। सुगन्धि च तद् हिमं च पानीयं च ततसुगन्धिहिमपानीयं तेन सिच्यमाना पटानां वस्त्राणामालिः पङ्क्तिः समूहः पटालिः पटालिकाः पटकुट्यो वा यस्मिन् तस्मिन् तथाविधे कायमाने। तथा प्रवालाः किसलयानि फलानां लुम्बयः स्तबकाः प्रवालाश्च फललुम्बयश्च प्रवालफललुम्बयः चूतानां प्रवालफललुम्बयः ताभिश्चिते परितो व्याप्ते। "चिते चूतैः प्रवालफललुम्बिभिः" इति केचित्पठन्ति लुम्बिभिरिति केचित्। तत्पक्षे लुम्बयः स्तबकाः॥

ईदृशि कायमाने स्थितो यादृशि शयने शयीत तन्निरूपयन्नाह — कदल्या रम्भाया दलानि पत्राणि कल्हारं सौगन्धिकं मृणालं बिसं कमलं पद्ममुत्पलं कुमुदं तैः कदलीदलादिभिः कोमलैः सुकुमारस्पर्शैः कल्पिते रचिते तल्पे शयने। किंभूते हसन्तः कुसुमपल्लवाः कुसुमानि च पल्लवाश्च यत्र तस्मिन्। अथवा धारागृहे स्वप्यादिति वर्तते। धारागृहं जलयन्त्रगृहम्। अविरतं यतो जलधाराः पतन्ति॥ ३६॥

किं भूते —

**पुस्तस्त्रीस्तनहस्तास्यप्रवृत्तोशीरवारिणि।**

**पुस्ते**ति। पुस्तस्त्रीस्तनहस्तास्यैः प्रवृत्तगुशीरवारि यत्र तस्मिन् पुस्तं दार्वादिमय्याः स्त्र्याद्याकृतेरुपादानकारणं यद् वस्तु तदुच्यते —

"पुस्तस्त्री सालभञ्जी च पाञ्चालीति च कथ्यते।
स्यूतसूत्रा दारुयोषा परभावा तथैव च॥"

**निशाकरकराकीर्णे सौधपृष्ठे निशासु च॥ ३७॥**

**निशे**त्यादि। निशासु रात्रिषु सौधपृष्ठे हर्म्यतले आसना कार्येत्यध्याहार्यम्। तत्रासीतेत्यर्थः। किम्भूते निशाकरः शीतांशुः तस्य करा गभस्तयः तैराकीर्णे व्याप्ते। आसनमिति वा पाठः॥

**आसना, स्वस्थचित्तस्य चन्दनार्द्रस्य मालिनः।**
**निवृत्तकामतन्त्रस्य सुसूक्ष्मतनुवाससः॥ ३८॥**
**जलार्द्रास्तालवृन्तानि विस्तृताः पद्मिनीपुटाः।**
**उत्क्षेपाश्च मृदूत्क्षेपा जलवर्षिहिमानिलाः॥ ३९॥**
**कर्पूरमल्लिकामाला हाराः सहरिचन्दनाः।**
**मनोहरकलालापाः शिशवः शारिकाः शुकाः॥ ४०॥**
**मृणालवलयाः कान्ताः *प्रफुल्लकमलोज्ज्वलाः।**
**जङ्गमा इव पद्मिन्यो हरन्ति दयिताः क्लमम्॥ ४१॥**

**स्वस्थेत्यादि**। स्वस्थचित्तस्य रागाद्यनुपहतमनसः जलार्द्राः क्लमं हरन्ति। एवं तालवृन्तादयो योज्याः। अन्तर्दीपकत्वादस्य। तथाच कीदृशस्य। चन्दनार्द्रस्य चन्दनानुलिप्तस्य। तथा मालिनः स्रग्विणः। निवृत्तं कामतन्त्रं यस्य स एवम्। तथा सुष्ठु सूक्ष्मे तनुनी स्वच्छे वाससी यस्य स एवम्। जलार्द्रा इत्यन्वर्थाः। यन्त्रबद्धाः पानीयाप्लुताः शाटिकाः। जलार्द्रवस्त्रकृता इति हृद्याकारः। तालवृन्तानि। मयूरपिञ्छादिकृतानि तालवृन्ताकृतीनि व्यजनानि। विस्तृता महान्तः पद्मिनीपुटा नलिनीपत्राणि वीजनार्थम्। उत्क्षेपाः श्वेतचमरीवालकृताश्चामराणि। उत्क्षेपा मयूरपिञ्छादिकृता व्यजनविशेषा इति हाटकोऽरुणदत्तश्च। ते च किम्भूताः। मृदुरुत्क्षेपो येषु ते मृदूत्क्षेपाः। जलवर्षी हिमानिलो येषूत्क्षेपेषु त एवम्। शीतजलाभ्युक्षितैरेतैर्वातः कार्य इत्यर्थः। कर्पूरमल्लिकामालाः। मालाशब्दः प्रत्येकं संबध्यते। कर्पूरमालाः कर्पूरस्य स्थूलपालिभिर्ग्रथिता मालाः मल्लिकामालाश्चेत्यर्थः। कर्पूरशकलैः सह बद्धमाला इति पाठ्यकारः। हारा मुक्तादामानि। किम्भूताः। सहरिचन्दनाः हरिचन्दनरसाप्लुताः।

"छेदे शोणं सुगन्धाढ्यं हरिचन्दनमिष्यते।"
"छेदे रक्तं कषे पीतं हरिचन्दनमिष्यते॥"

इति च। मनोहरः सन् कलो मधुर आलापो येषां त एवम्भूताः। शिशवो बालकाः। तथा शारिकाः शारयः। शुकाः कीराः। मृणालान्यतिकोमलानि वलयाः कटकानि यासां ताः। दयिताः योषितः। किम्भूताः। कान्ता रम्याः। प्रफुल्लैः कमलैरुज्ज्वलाः शोभिताः। एवंभूताश्चोत्प्रेक्ष्यन्ते जङ्गमाः सञ्चारिण्य इव पद्मिन्यः। क्लमं हरन्तीति योज्यम्। स्वस्थचित्तस्येति प्राधान्यख्यापनार्थं प्रागुपात्तम्।

---

* 'प्रोत्फुल्लकमलोज्जला' इति मुद्रितग्रन्थपाठः.

यथा स्वस्थचित्तस्यैते जलार्द्रादयो दयितान्ताः क्लमं हरन्ति न तथोपतप्तमनसः। यथा चन्दनार्द्रादिसकलविशेषणविशेषितस्याप्युपतप्तमनसो न तथा क्लमं हरन्ति। अत एव 'शोकः शोषणानां, निर्वृतिः पुष्टिहेतूनामि'ति च प्रोक्तमग्र्यसंग्रहे। क्लमस्य लक्षणमुक्तं सुश्रुते च —

"योऽनायासश्रमो देहे प्रवृद्धः श्वासवर्जितः।
क्लमः स इति विज्ञेय इन्द्रियार्थप्रबाधकः॥"

इति॥ ४१॥

वर्षाचर्यामाह—

**आदानग्लानवपुषामग्निः सन्नोऽपि सीदति।**
**वर्षासु दोषैः**

**आदानेत्यादि**। आदानाख्येन कालेन ग्लानं (सं? स)क्लमं वपुः शरीरं येषां पुरुषाणां त आदानग्लानवपुषः तेषामपचितधातूनाम् अग्निरप्यपचितः सन्नो मन्दः सन् वर्षासु पुनरपि सीदति हानिं याति। अपिशब्दः पुनःशब्दार्थे, अनेकार्थत्वान्निपातानाम्। वर्षास्विति नित्यंबहुत्वाद् बहुवचनम्। आदानकालस्याग्नेयत्वादग्नेरान्तरस्य वृद्धिरुपपन्नेति सन्देहमपाकुर्वाणस्तत्र निमित्तमनुवदति ग्लानवपुषामिति। आधारस्य वपुषः सादे आधेयस्याग्नेश्च साद इति भावः। तथाच मुनिः —

"आदानदुर्बले देहे पक्ता भवति दुर्बलः।
स वर्षास्वनिलादीनां दूषणैर्बाध्यते पुनः॥"

इति। वर्षासु प्रावृषि। वर्षशब्दः संवत्सरवचनः पुल्लिँङ्गः। ऋतुवाची नित्यस्त्रीलिङ्गः नित्यबहुवचनश्च। केन सीदतीत्याह— कालस्वभावाद् दोषैः। दुष्टैरित्यनुक्तमप्यर्थाद् गम्यते। यतोऽग्निसादहेतुत्वमदुष्टानां तेषां न सम्भवति, तस्माद् दुष्टैर्दोषैरग्निः सीदति इत्यर्थाल्लभ्यते न त्वदुष्टैरिति। वचनं हि —

"स वर्षास्वनिलादीनां दूषणैर्बाध्यते पुनः।"

इति॥

कथं वर्षासु दोषाणां दुष्टत्वमित्याह —

**दुष्यन्ति तेऽम्बुलम्बाम्बुदेऽम्बरे॥ ४२॥**

**सतुषारेण मरुता सहसा शीतलेन च।**
**भूबाष्पेणाम्लपाकेन मलिनेन च वारिणा॥ ४३॥**
**वह्निनैव च मन्देन**

दुष्यन्तीत्यादि। ते दोषा दुष्यन्ति। कदा। अम्बरे वियति अम्बुलम्बाम्बुदे सति एवंविधे काले अम्बुना लम्बमाना अतिनिर्भरत्वादम्बुदा मेघा यस्मिन् एवंविधे। अनेन च विशेषणेनास्य कालस्य स्वरूपमुपलक्षयन्नाचार्यो यदैवंविधो वर्षाकालः सम्पद्यते तदा चैते दोषा दुष्यन्तः स्वकर्मण्ययोग्याः सम्पद्यन्ते। न वर्षाकालमात्रे अनासादितस्वरूपे इति दर्शयति। प्रवृत्तसर्वबलायां प्रावृषीत्यर्थः। तेषां दुष्टिकारणं पृथगुच्यते— सतुषारेण सजलकणेन मरुता तथा सहसा ग्रीष्मतापादनन्तरमेव शीतलेन बाह्येनान्तरो वायुर्दुष्यति। तथा भुवो बाष्पो भूबाष्पः। ग्रीष्मतापिताया भुवः प्रथमजलसेकेन जात ऊष्मा धूमाकारो बाष्प उच्यते। तेन पित्तं दुष्यति। तथा कालस्वाभाव्यादम्लपाकेन वारिणा पित्तं दुष्यति। तथा मलिनेन लूतादितन्तुविण्मूत्रादिमलकलुषेण वारिणा वर्षाजलेन। तथा कालस्वाभाव्याच्चातिशयेन मन्दत्वं गतेनाग्निना श्लेष्मा दुष्यति। चशब्दात् पूर्वोक्तेन वारिणा च। पूर्वविधिसिद्धत्वाद् वह्नेर्मान्द्यानुवादः। अन्ये भूबाष्पेण जातेनाम्लपाकेनेति वदन्ति। अन्ये घर्मतप्तानां सर्वद्रव्याणां जलसेकात् तरुणीभूतानां अम्लः पाको भवति। तेन पित्तं दुष्यतीत्याहुः। तेन प्रावृष्यादौ गृहीतानामौषधानां निषेधः। उक्तं च— 'पौष्कलावते वर्षाः प्रोष्ठपदाश्वयुजाभ्यां तत्र पङ्कपरिक्लिन्नायां भूमौ वियति च मेघावतते शीतवातबाहुल्ये पृथिव्या ऊर्ध्वगतेनोष्मणापो विदग्धा ओषधीरम्लीकुर्वते। ततः पित्तमुपचीयत' इत्यादि। एवमेव हेमन्तेऽपि मधुरलवणादीनां मधुरविपाकोऽवगन्तव्यः। व्याख्याद्वितीयानि हि शास्त्राणीति सर्वतन्त्रसमयाद् वर्षाहेमन्तयोः सर्वद्रव्याणामम्लमधुराख्यः कालकृतो विपाकविपर्ययोऽयमपवादिकः।

अन्ये तु भूबाष्पाम्लपाकाभ्यां पित्तं दुष्यति। मलिनवारिमन्दवह्निभ्यां चशब्दादम्लपाकेन च श्लेष्मा दुष्यति इत्याहुः। यद्यपि सतुषारमरुतादयो वातादीनां यथासम्भवं विपरीताः समानाश्च, तथापि न तेषां प्रशमायाऽलं द्रव्यस्वभावात्। सामान्यात्तु केवलं वृद्धिमेव कुर्वन्ति यथा मन्दकफाणितमूलकादीनि। वह्निनैव च मन्देनेति अग्निमान्द्याद् वातादयस्त्रयोऽपि वर्धन्ते। श्लेष्मा त्वतिशयेनेति श्लेष्महेतुत्वेनोक्तम्। तथाच मुनिः—

"वर्षास्वग्निबले हीने कुप्यन्ति पवनादयः।"

इति। अग्निबले च हीने न सम्यगाहारपाक इति। न तथा पूर्वं रसनिष्पत्तिः।

प्रायः किट्टमभिवर्धते ततश्च वातादयोऽपि वर्धन्ते। तथाचागमः—'किट्टात् स्वेदमूत्रपुरीषवातपित्तश्लेष्माण' इति। तथा—

"शमप्रकोपौ दोषाणां सर्वेषामग्निसंश्रयौ।"

इति त्रयाणामप्युक्ते कोपे वातस्यैव प्रकृष्टः कोपो विज्ञेयः।

"चयप्रकोपप्रशमा वायोर्ग्रीष्मादिषु त्रिषु।"

इति वचनात्। पित्तश्लेष्मणोस्तु दुष्टत्वमात्रमेव। अरुणदत्तस्त्वाह—इह दुष्यन्तीत्युक्त्या स्वस्थानस्था एव दुष्टिं प्राप्ता विषादिस्पृष्टद्रव्यवत् कार्यकरण-समर्था न जायन्ते इत्युक्तम्। चयप्रकोपप्रशमा इत्यत्र च यः प्रकर्षेण कोपः स्थानान्तरगमनादिलक्षणो गदितः तदेवमस्मिन् काले वायोः कदाचिद् दुष्टत्वं स्यात् कदाचित् कोपश्चेति वचनाभ्यामेताभ्यां प्रत्यपादि। पित्तश्लेष्मणोस्तु दुष्टत्वमात्रमेवेति न किञ्चिदत्रासमञ्जसमिति॥

**तेष्वित्यन्योन्यदूषिषु।**
**भजेत् साधारणं सर्वमूष्मणस्तेजनं च यत्॥ ४४॥**

तेष्वित्यादि। इति प्रकारे। अन्योन्यं दूषयितुं शीलं येषां वातादीनां त एवं तेष्वनेन प्रकारेण परस्परदूषणस्वभावेषु सत्सु साधारणं सर्वं भजेत्। यत्किञ्चिद् वातादीनां युगपत् प्रशमनं तत् सर्वं सेवेत। यच्चोष्मणो जाठराग्ने-स्तेजनमुद्दीपनं भवति तद् भजेत्। ऊष्मणस्तेजनस्यात्र चशब्दयुक्तस्योपादानं प्राधान्यख्यापनार्थम्। अग्निर्हि सर्वभावानां प्रधानम्। प्राधान्यं च वक्ष्यति—

"शान्तेऽग्नौ म्रियते युक्ते चिरं जीवत्यनामयः।
रोगी स्याद् विकृते मूलमग्निस्तस्मान्निरुच्यते॥"

इति। तस्मादग्न्युत्तेजनार्थं यत्नः कार्य इति भावः। हृद्याकारोऽप्येवमाह—तेषु दोषेषु इति उक्तेन प्रकारेणान्योन्यमेकैकं दूषिषु पृथग्दुष्टेषु भजेत् साधा-रणं त्रिदोषहरं दोषहरत्वमापाद्य सेव्यं तिक्तामृतासैन्धवडाडिमादीनि त्रिदोष-हराणीति। हाटकस्त्वेवमाह—तेषु अग्निदोषेष्वनेन प्रकारेण परस्परं दूषण-स्वभावेषु वातादीनां साधारणं युगपत् प्रशमनं सर्वं सेवेत। ऊष्मणो जाठराग्ने-स्तेजनं समुद्दीपनं यत् तच्च भजेत्। आगमश्चात्र—'साधारणः सर्वो विधि-र्वर्षासु शस्यते' इति। अग्नेर्दोषाणां च साधारण इति नैयासिकाभिप्रायः इति। एतदेवाभिमतमस्मद्गुरूणाम्। भजेदिति क्रिया अग्निदीपकत्वात् 'भोजनं त्वतिदुर्दिन' इति यावत् सर्वेषु योज्या॥ ४४॥

अथ किं साधारणमिति तदुदाहरणार्थमाह —

**आस्थापनं शुद्धतनुर्जीर्णं धान्यं रसान् कृतान् ।**
**जाङ्गलं पिशितं यूषं* मध्वरिष्टं चिरन्तनम् ॥ ४५ ॥**
**मस्तु सौवर्चलाढ्यं वा पञ्चकोलावचूर्णितम् ।**
**दिव्यं कौपं शृतं चाम्भो भोजनं त्वतिदुर्दिने ॥ ४६ ॥**
**व्यक्ताम्ललवणस्नेहं संशुष्कं क्षौद्रवल्लघु ।**

**आस्थापनमित्यादि** । शुद्धा तनुर्यस्य स एवं कृतविरेचनादिः सन् आस्थापनं निरूहं भजेदिति क्रमेण दोषाणां शोधनमुक्तम् । सङ्ग्रहे चोक्तं —

"वस्तिकर्म निषेवेत कृतसंशोधनक्रमः ।"

इति । (शुद्धतनुरिति । पित्तं च वातश्च । अत्र कफस्य दुष्टिर्निष्यन्दमात्रम् । ?) तथा जीर्णं धान्यं पुराणयवगोधूमादिकम् । तथा रसान् मांसरसान् । किम्भूतान् । कृतान् स्नेहशुण्ठ्यादियुतान् । तथा जाङ्गलं पिशितं हरिणैणादिमांसम् । यूषं च मुद्गडाडिमादिकृतम् । तथा मधु मार्द्वीकमरिष्टं च द्वयमप्येतच्चिरन्तनं पुराणं न तु नवमग्निमान्द्यभयात् । 'मध्वरिष्टं मधुकृतमरिष्टमि'ति हृद्याकारः । तथा पञ्चकोलावचूर्णितं सौवर्चलाढ्यं मस्तु । वाशब्दः समुच्चये ।

"पिप्पलीपिप्पलीमूलचव्यचित्रकनागराः ।"

पञ्चकोलम् । तेनावचूर्णितम् । तथा दिव्यमाकाशजमम्भः । तथा कौपं कूपजमम्भः । तथा शृतं युक्त्या क्वथितं ताटाकादिकमम्भः पिबेत् । चः समुच्चये । आगमश्चात्र — 'तप्तशीतं वा कौपं सारसमेव वा' इति । दिवि भवं दिव्यम् । कूपे भवं कौपम् । अतिदुर्दिने वातवर्षाकुले त्वह्नि । व्यक्ताः प्रधानाः अम्ललवणस्नेहा यत्र तद् भोजनं भजेत् । यथा संशुष्कं शुष्कप्रायम् । तथा क्षौद्रवत् । तथा लघु । ननु 'वातलं मध्वि'ति वक्ष्यति । पवनश्चात्र कुप्यतीत्युक्तम् । अतो माक्षिकस्यात्र प्रयोगो न युक्तः । अत्रोच्यते । दोषधातवोऽस्मिन् काले क्लेदमुपयान्ति । ततश्च क्लेदसंरक्षण एवोपक्षीणप्रभावत्वाद् मधु मरुत्कोपं विधातुमसमर्थं, तस्मान्मधूपयोगो न्याय्य एव । पञ्जिकायामप्युक्तम् । क्षौद्रस्य रूक्षत्वेन वातलस्य वर्षासूपयोगस्तदानीमुपजायमानक्लेदशमनाय । यावत्या मात्रया पवनस्य प्रकोपो न भवेद् तावतीं मधुनो मात्रां यथोक्तैः पवनशमनैः व्यक्ताम्ललवणस्नेहैरन्वितां भजेद् इति भावो गम्यते । अतिदुर्दिन इति वातवर्षाकुलेऽहनि । तथाच सङ्ग्रहे —

* 'यूषान्' इति मुद्रितग्रन्थपाठः.

"वृष्टिवाताकुले त्वह्नि भोजनं क्लेदवातजित् ।"

इति ॥

अथात्र काले यादृशः पुरुषः स्यात्, तद् दर्शयति —

**अपादचारी सुरभिः सततं धूपिताम्बरः ॥ ४७ ॥**
**हर्म्यपृष्ठे वसेद् बाष्पशीतशीकरवर्जिते ।**
**नदीजलोदमन्थाहःस्वप्नमायासातपांस्त्यजेत् ॥ ४८ ॥**

अपादेत्यादि । पादाभ्यां चरति नित्यं पादचारी नैवं यः सोऽपादचारी । वाहनयायी स्याद् दुष्टकर्दमबाष्पादिपरिहारार्थम् । तथा सुरभिः शोभनगन्धयोगात् । 'स्नानशीलः सुसुरभिरि'त्यनेनैवास्यार्थस्योक्तत्वात् सुरभिग्रहणमतिशयार्थम् । तथा सततमविरतं धूपिते अम्बरे यस्य स एवम् । तथा हर्म्यपृष्ठे धवलगृहाभ्यन्तरे वसेत् । कीदृशि । बाष्पश्च शीतश्च शीकरश्च तैर्वर्जिते । तथा नदीजलादिकं च त्यजेत् ।

"सक्तवः सर्पिषाभ्यक्ताः शीतोदकसमन्विताः ।
नातिद्रवो नातिसान्द्र उदमन्थ इति स्मृतः ॥"

इति । नदीजलादिवत् मैथुनस्यापि निषेधो बोद्धव्यः । तथाचागमः — 'व्यवायं चात्र वर्जयेद्' इति । सक्तव उदकालोडिताः ससर्पिष्का उदमन्थवाच्याः । तदत्र काले सात्म्यत्वात् सक्तवस्तक्रादिसंयोगान्नात्यन्तमनिष्टाः । पानीययोगात्तु वातलाः प्रकृष्टवातले काले नाभीष्टाः । अत एव मुनिनाप्येवमुक्तम् —

"उदमन्थं दिवास्वप्नमवश्यायं नदीजलम् ।
व्यायाममातपं चैव व्यवायं चात्र वर्जयेत् ॥"

इति ॥ ४८ ॥

अधुना शरच्चर्यामाह —

**वर्षाशीतोचिताङ्गानां सहसैवार्करश्मिभिः ।**
**तप्तानां सञ्चितं वृष्टौ पित्तं शरदि कुप्यति ॥ ४९ ॥**
**तज्जयाय घृतं तिक्तं विरेको रक्तमोक्षणम् ।**

वर्षेत्यादि । वर्षासु जातं वर्षाणां वा शीतं वर्षाशीतं तदुचितं सात्म्यं यस्य तदेवंविधमङ्गं वपुर्येषां त एवं तेषाम् । सहसैव द्रागेव शरदि जातायाम् अर्करश्मिभिस्तप्तानां शरदि पित्तं कुप्यति । किम्भूतम् । वृष्टौ सञ्चितं वर्षासु वृद्धिं

गतम्। यतश्चैवं ततस्तज्जयाय पित्तशमनार्थं तिक्तं घृतं कुष्ठचिकित्सितोक्तं योज्यमिति वाक्यशेषः। यदि वा घृतं तिक्तं तिक्तैर्द्रव्यैः साधितं महातिक्तादिकम्। अनुबलस्यापि श्लेष्मणः पराभवः कार्यः। न केवलपित्तस्यैवेति प्रतिपादयितुं तिक्तसंस्कृतं सर्पिराचष्टे। अथवा मधुरकषाययोरपि तिक्तवत् पित्तशमनत्वेनार्थात् प्राप्तौ सत्यां तिक्तस्य स्वशब्देन ग्रहणं प्राधान्यप्रदर्शनार्थम्। तत्प्राधान्यं च पित्तश्लेष्महरत्वात् शरद्यनुषज्यमानप्रकृतज्वरशमनत्वादग्निमान्द्यपरिहारत्वादरुचिहरत्वात् तृष्णाघ्नत्वाच्च। तथा विरेकोऽत्र योज्यः। तथा रक्तमोक्षणम्। सर्वोपक्रमात् पित्ते विरेकस्य ज्यायस्त्वादिह पूर्वमुपन्यासः। तथाह—'विरेचनं पित्तहराणामि'ति। ततो रक्तमोक्षणम्। पित्तवातहरत्वाच्च तज्जयाय घृतं तिक्तमिति घृतस्य पूर्वमुपन्यासः, नह्यस्निग्धस्य विरेचनप्राप्तिरस्ति। तथाच वक्ष्यति—

"स्नेहस्वेदावनभ्यस्य कुर्यात् संशोधनं तु यः।
दारु शुष्कमिवानामे शरीरं तस्य दीर्यते॥"

इति। तथा विरिक्तस्य च पवनप्रकोपभयम्। कालस्वाभाव्याच्च पित्तकोपभयम्। तदेवं परिहरते। तथा देहपुष्ट्यर्थमग्निसन्धुक्षणार्थं च घृतप्रयोगः कार्य इत्यनेककार्यकत्वेन च प्राधान्याच्च तिक्तघृतस्य पूर्वमुपन्यासः। प्राधान्यं चोक्तम्। हाटकस्त्वाह—रक्तमोक्षणस्यान्ते वचनं सर्पिष्पानाद्यैर्न शक्यते यदा रक्तस्य प्रशमः कर्तुं तदा रक्तमोक्षणं कर्तव्यमिति ज्ञापयितुम्। तदा च रक्तस्य हरं तस्य पित्तसाधारणत्वाद् इति। अथवा शरदि पित्तवद् रक्तस्यापि कोपः।

"कट्वम्ललवणास्तीक्ष्णमुष्णवीर्यं विदाहि च।
द्रव्यं जाङ्गलको देशः शरत्कालश्च कोपनः॥
स्वादुतिक्तकषायाश्च शीतवीर्याणि रेचनम्।
आनूपःससिरावेधो हेमन्तः शमना मताः॥" इति

हृद्याकारस्तु पित्ते ईषत्कुपिते तिक्तघृतमतिकुपिते विरेचनं तदुन्मूलनाय ततोऽपि कुपिते रक्तमोक्षणं च कुर्यादित्याह। असमासकरणं देशकालाद्यनुरोधेन तिक्तघृतादीनामेकेन द्वाभ्यां समस्तैः पित्तं जयेदिति ज्ञापनार्थम्। विरेकस्तु पित्तजयार्थमवश्यं शरदि कार्यः यथा वसन्ते श्लेष्मविजयाय वमनं वर्षासु च पवनविजयाय वस्तिः। अत एव प्राङ्निर्दिष्टं वसन्ते वमनं वर्षासु चास्थापनं शरदि विरेक इति। उक्तं च—

"वसन्ते वमनं वृष्टौ वस्तिः शरदि रेचनम् ।
कालस्वभावाद् वृद्धस्य कफादेः शुद्धिरुत्तमा ॥"

इति ॥

**तिक्तं स्वादु कषायं च क्षुधितोऽन्नं भजेल्लघु ॥ ५० ॥**
**शालिमुद्गसिताधात्रीपटोलमधुजाङ्गलम् ।**

**तिक्त**मित्यादि । अत्यन्तक्षुधितास्तिक्तादिरसवल्लघ्वन्नं भजेत् । अल्पं चेत्यध्याहार्यम् । तथाहि—शरदि कफस्यानुबलत्वादग्नेर्मान्द्यं विसर्गस्वाभाव्याच्चाल्पतरमात्रयाशनेऽपि न प्रमाद इति । तथाचागमः—

"तत्रान्नपानं मधुरं लघु शीतं सतिक्तकम् ।
पित्तप्रशमनं सेव्यं मात्रया सुप्रकाङ्क्षितैः ॥"

इति । सर्वेऽष्वृतुषु मात्रयैव भोजनेऽनुज्ञाते पुनर्मात्राग्रहणं दर्शयता शरदि कफस्यानुबलत्वाद् विसर्गस्वाभाव्याच्चाल्पतरमात्रयाशनेऽपि न प्रमाद इति पञ्चिकाकारस्याभिप्रायः । क्षुधित इत्यनुवादस्तस्य भोजनाधिकारादिति हृद्याकारोऽरुणदत्तश्च । (किं तत्) तिक्तादिगुणयुक्तमित्याह—शाल्यादीन् सप्त । भजेदिति विधिरनुवर्तते ॥

**तप्तं तप्तांशुकिरणैः शीतं शीतांशुरश्मिभिः ॥ ५१ ॥**
**समन्तादप्यहोरात्रमगस्त्योदयनिर्विषम् ।**
**शुचि हंसोदकं नाम निर्मलं मलजिज्जलम् ॥ ५२ ॥**
**नाभिष्यन्दि न वा रूक्षं पानादिष्वमृतोपमम् ।**
**चन्दनोशीरकर्पूरमुक्तास्रग्वसनोज्ज्वलः ॥ ५३ ॥**
**सौधेषु सौधधवलां चन्द्रिकां रजनीमुखे ।**

**तप्त**मित्यादिना जलं स्तूयते । एवंविधं जलं भजेत् । तप्तांशुकिरणैः सूर्यरश्मिभिः अहनि समन्तात् सर्वतः तप्तं कथितम् । समन्तादिति नैकदेशे तप्तमित्यर्थः । एवं शीतांशुरश्मि(भि)रित्यत्रापि द्रष्टव्यम् । चन्द्रकिरणैर्निशि समन्ताच्छीतं शीतीकृतम् । अहोरात्रग्रहणं कृत्स्नाहोरात्रसन्तप्तशीतानामेवायं वक्ष्यमाणो गुणराशिः न मुहूर्तादितप्तशीतानामिति दर्शयितुम् । तथा अगस्त्योदयेन निर्विषीकृतम् । शुचि पवित्रम् । वर्षासु ह्यशुचीत्युक्तं, तच्च हंसोदकं नाम तन्त्रकारैरायुर्वेदे संज्ञितं हंसवन्निर्मलत्वात्, हंसैरासेव्यत्वाद् वा । मानसात् सरसः क्रौञ्च-

पर्वतरन्ध्रेण शरदि भूमिमागच्छन्ति हंसाः तैरासेव्यमिति। हंसा यथा दोषं न स्वीकुर्वते तथा शरदि जलान्यपि पङ्कादिलग्नं दोषं नाङ्गीकुर्वत इति हंसशीलत्वाद् वा हंसोदकमित्युच्यते। हंस इति वादित्यस्य संज्ञा, तेनोत्सृष्टमुदकम्। तथाच स्मृतिः —

"अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते।
आदित्याज्जायते वृष्टिः"

इति। हंस इति वा सूर्याचन्द्रमसोः संज्ञा। तद्रश्मिभिरहोरात्राभ्यां संस्कृतमुदकं हंसोदकम्। हंसा मेघास्तैरुत्सृष्टमुदकं हंसोदकमिति वा। तथा निर्मलमकलुषम्। मलान् वातपित्तश्लेष्मणो जयति मलजित्। अगस्त्योदयनिर्विषमिति विशेषणेनैतत् प्रतिपादयति। यदा यदन्तरिक्षप्रभवं सरस्तटाकादिस्थजलं, तदेव प्रायेण शरद्येवङ्गुणं वेद्यं न कूपादिप्रभवम्। तस्य सदा निर्विषत्वात्। तथा चान्तरिक्षप्रभवमेव पठ्यते —

"लूतादितन्तुविण्मूत्रविषसंश्लेषदूषितम्।"

इति। मलजित् पित्तजिदिति हृद्याकारः। तच्च नाभिष्यन्दि न श्रुतिरूपश्लेष्मकरमिति। न वा रूक्षं न च वातप्रकोपि। वाशब्दश्चशब्दार्थे। यतस्तप्तांशुकिरणैस्तप्तं, यतश्च शीतांशुरश्मिभिः शीतं प्रसादितमित्थं स्नेहरौक्ष्ययोरन्तरे वर्तमानम्। पानादिष्वमृतोपमम्। आदिशब्देन स्नानावगाहोपस्पर्शनादीनां ग्रहणम्। कुपितदोषशमनादकुपितदोषसाम्यानुवृत्तिहेतुत्वाच्चामृततुल्यं पथ्यं जीवनादिगुणयोगात्। एतज्जलं भजेदिति योज्यम्। अत्रोष्णांशुग्रहणमग्निनिवृत्त्यै। किरणग्रहणं साक्षात् तत्संभावनार्थम्। हठपलाशादिभिरास्तृतमपि रविस्तापयति। न तु तत् तथा गुणवत्। अतः किरणग्रहणं तद्व्यवधानव्युदासार्थं मेघाद्यनन्तरितरश्मिसंस्पर्शप्रदर्शनार्थं च। एवं शीतांशुभिरित्यत्रापि द्रष्टव्यम्। ननु सर्वं दिनं सूर्यकिरणैस्तापः संभवति। चन्द्रकरैस्तु सर्वां रात्रिं कथमिव स्यात्। यतः सकलचन्द्रमसः पौर्णमास्यामेव सर्वस्यां रात्र्यां संभवो नान्यत्र। तस्माच्छीतं चन्द्रकरैरित्यत्र सर्वस्यां रात्र्यामिति न युक्तम्। अत्रोच्यते। विमले व्योमनि यथैव रविचन्द्रौ यथाकालमव्याहतरूपव्याप्तौ पथ्यतां जलस्यापादयतः तद्वन्नक्षत्राण्यपि। तस्मान्नक्षत्रैरपि शीतं चन्द्रेणैव श्रेष्ठमेवात्र भवत्युदकम्। एवं च तदेवमवगच्छ। अन्यथैतद् वाक्यमयुक्तमेव स्यात्। चरकमुनिनाप्यनेनैवाभिप्रायेण नक्षत्रग्रहणं नाकारि। यथा —

"दिवा सूर्यांशुसन्तप्तं निशि चन्द्रांशुशीतलम्।"

इति । अष्टाङ्गसङ्ग्रहेऽप्युक्तम्—

"दिवा दिवाकरकरैर्निशाकरकरैर्निशि ।"

इति । अत्र हि सकलस्याहोरात्रस्य रविशशियोगेन निशि निशाकरग्रहणमनर्थकं स्याद् व्यभिचाराभावात् । तथा चन्दनादिभिः षड्भिरुज्ज्वलः शोभनः सन् सौधेषु धवलगृहेषु चन्द्रिकां ज्योत्स्नां भजेत् । कदा रजनीमुखे प्रदोषे । परतस्तु निदाघ इव न सेव्या तुषारवातभयात् तुषारवातौ ह्यत्र परिहार्यौ ॥

तथाचाह—

**तुषारक्षारसौहित्यदधितैलवसातपान् ॥ ५४ ॥**
**तीक्ष्णमद्यदिवास्वप्नपुरोवातान् दश त्यजेत् ।**

तुषारेत्यादि । तुषारादीन् दश त्यजेत् । तुषारोऽवश्यायः । क्षारो यवक्षारादिः । सौहित्यं तृप्तिः । तीक्ष्णं च तन्मद्यम् । पुरोवातः पूर्वदिगागतो वातः ॥

विस्तरोक्तामृतुचर्यां सुखस्मरणार्थं सङ्क्षिप्याह—

**शीते वर्षासु चाद्यांस्त्रीन् वसन्तेऽन्त्यान् रसान् भजेत् ॥**
**स्वादुं निदाघे शरदि स्वादुतिक्तकषायकान् ।**

शीत इत्यादि । इयं 'चानुमतं' नाम तन्त्रयुक्तिः । पूर्वोक्तस्यैवार्थस्यानुमाननमनुमतम् । शीते हेमन्तशिशिरयोः वर्षासु चाद्यांस्त्रीन् रसान् स्वाद्वम्ललवणाख्यान् भजेत् । वसन्ते चान्त्यांस्त्रीन् तिक्तकटुकषायान् भजेत् । निदाघे ग्रीष्मे स्वादु मधुरं भजेत् । शरदि स्वादुतिक्तकषायान् रसान् भजेत् ॥

रसतः संक्षिप्योक्त्वेदानीं गुणतः संक्षिप्याह—

**शरद्वसन्तयो रूक्षं शीतं घर्मघनान्तयोः ॥ ५६ ॥**
**अन्नपानं समासेन विपरीतमतोऽन्यदा ।**

शरदित्यादि । शरद्वसन्तयो रूक्षमन्नपानं समासेन भजेत् । अन्यदा उक्तादन्यस्मिन् काले हेमन्तशिशिरग्रीष्मवर्षासु अतो विपरीतं स्निग्धमन्नपानं भजेत् । घर्मघनान्तयोर्ग्रीष्मशरदोः शीतमन्नपानं भजेत् । अतो विपरीतमुष्णमन्नपानम् अन्यदा वर्षाहेमन्तशिशिरवसन्तेषु । वर्षाहेमन्तशिशिरेषु स्निग्धोष्णम् । वसन्ते रूक्षमुष्णं च । ग्रीष्मे स्निग्धशीतम् । शरदि रूक्षशीतम् इति ॥

सेव्यत्वेनोपदिष्टस्याहारस्यापवादमाह—

**नित्यं सर्वरसाभ्यासः स्वस्वाधिक्यमृतावृतौ ॥ ५७ ॥**

नित्यं सदा सर्वेष्वृतुषु सर्वेषां षण्णामपि रसानामभ्यासः शीलनं, कार्य इति वाक्यशेषः। 'सर्वरसाभ्यासो बलवर्णकराणामि'त्यागमात् । वक्ष्यति च— 'षड्रसं मधुरप्रायमि'ति । यद्येवं यथर्तु रसनियमः कुत इत्याशङ्क्याह —स्व-स्वाधिक्यमिति । स्वंच स्वं च स्वस्वं तस्यात्मीयस्य ऋतुभेदं प्रति विहितस्य रसस्याधिक्यं भूयस्त्वं, यथा 'शीते वर्षासु चाद्यांस्त्रीनि'त्युक्तम् । तदेषु ऋतुषु हि ते रसा भूयसोपयोक्तव्याः न त्वेत एवेत्यर्थः । तथा समधातुं प्रति समे देशे चैष नियमो वेद्यः। अन्यत्र तु जाङ्गलेऽनूपे वा देशे विषमधातुभिश्च धातुसाम्यो-त्पादनार्थं देशप्रकृत्यनुगुणमन्यत्र विहितमृतुविधानमन्यस्मिन्नप्यृतावनुष्ठेयमेव ॥ ५७ ॥

किमन्यस्मिन् ऋतौ प्राप्ते पूर्वर्तुचर्या सहसैव त्याज्या अन्या च सेव्या । नेत्याह—

**ऋत्वोरन्तादिसप्ताहावृतुसन्धिरिति स्मृतः ।**
**तत्र पूर्वो विधिस्त्याज्यः सेवनीयोऽपरः क्रमात् ॥ ५८ ॥**

**ऋत्वोरित्यादि** । अथवा ऋतुसन्धौ चर्याभेदप्रदर्शनार्थमृतुसन्धिमाह— ऋत्वोः शिशिरवसन्तयोः वसन्तग्रीष्मयोः ग्रीष्मप्रावृषोरित्यादि । तयोरन्तस-प्ताहश्चादिसप्ताहश्चान्तादिसप्ताहौ । गच्छत ऋतोरन्ते सप्ताह आगच्छतश्चादि-सप्ताह इति चतुर्दश दिवसाः तौ ऋतुसन्धिरिति स्मृतः उच्यते । तत्र ऋतुसन्धौ पूर्वः पूर्वर्तुसम्बन्धी विधिस्त्याज्यः । अपरः एष्यदृतुसम्बन्धी विधिः सेवनीयः । कथम् । क्रमात् क्रमेण 'पादेनापथ्यमि'त्यादिना । न तु स-हसा ॥ ५८ ॥

अक्रमसेवात्यागदोषावाह—

**असात्म्यजा हि रोगाः स्युः सहसा त्यागशीलनात् ।**

**असात्म्येत्यादि** । हि यस्मात् सहसा त्यागात् सहसा शीलनाच्चासात्म्या-ज्जाता रोगाः स्युः । तस्मात् सहसा त्यागशीलनं न कार्यमिति भावः । पूर्वाभ्य-स्तस्य विधानस्य त्यागोऽप्यसात्म्य एव । अनभ्यस्तस्यागामिकालविधानस्य सेवाप्यसात्म्यैव । असात्म्याज्जाता असात्म्यजाः । आत्मना सह वर्तत इति सा(स्म्य ? त्मा) तस्य भावः सात्म्यम् । स्वरूपमात्रकथने सात्म्येति भवति । यदभ्यासेन दुःखं न करोति सुखं च तनोति तत् सात्म्यमित्यर्थः ।

"ऋतुवृत्तमिदं सर्वं स्वस्थसापेक्षमुच्यते ।
कालस्वभावं सम्भाव्य दोषोद्रेकनिवृत्तये ॥

स्वंस्वौ द्वौ भिषजा पाल्यः कश्चिदन्यो यदृच्छया ।
भिषजा परिपाल्यस्य वृत्तमेतदिति स्थितिः ॥"

इति श्रीदासपण्डितविरचितायां हृदयबोधिकायां
तृतीयोऽध्यायः ॥

---

अथ चतुर्थोऽध्यायः ।

उक्तं स्वस्थवृत्तं वेगधारणशीलस्य स्वास्थ्याय नालमिति तत्प्रतिषेधार्थमध्याय आरभ्यते । अथवा उक्तेन स्वस्थवृत्तेन विधारितवेगस्य न स्वास्थ्यमतो वेगविधारिणा जातरोगाणां निदर्शनार्थं ताचिकि(त्सां ? त्सार्थं) चाध्यायः । अथवा —

स्वस्थस्य रोगानुत्पादः कालतः प्रागुदीरितः ।
कर्मतो व्याध्यनुत्पत्तिरिदानीमभिधीयते ॥

**अथातो रोगानुत्पादनीयाध्यायं व्याख्यास्यामः ।**

रोगाणामनुत्पादो रोगानुत्पादनं तस्मै हितो रोगानुत्पादनीयः । उपदर्शनं चेदम् । 'निदर्शना'ख्यया तन्त्रयुक्त्या चोत्पन्नरोगोपशमनीयोऽपि । वातादिरोधोत्थानां रोगाणामुत्पन्नस्याप्युपशमाय । तथाच वक्ष्यति —

"अनुत्पत्त्यै समासेन विधिरेष प्रदर्शितः ।
निजागन्तुविकाराणामुत्पन्नानां च शान्तये ॥"

इति ॥

**वेगान् न धारयेद् वातविण्मूत्रक्षवतृट्क्षुधाम् ।
निद्राकासश्रमश्वासजृम्भाश्रुच्छर्दिरेतसाम् ॥ १ ॥**

वेगानित्यादि । वातादीनां त्रयोदशानां वेगान् न धारयेत् । वेगो नाम भावानां स्वस्थानात् प्रवृत्त्युन्मुखता । क्षव(थु ?) छिक्का । श्रमेण श्वासः श्रमश्वासः । उद्देशोऽयम् । निर्देशे त्वेषां चतुर्दशत्वं स्याद् वातस्य द्वैविध्यात् । उद्देशनिर्देशौ नाम तन्त्रयुक्ती प्राग् दर्शितौ ॥ १ ॥

वेगेषु धृतेषु ये रोगा भवन्ति तानाह —

**अधोवातस्य रोधेन गुल्मोदावर्तरुक्क्लमाः ।
वातमूत्रशकृत्सङ्गदृष्ट्यग्निवधहृद्गदाः ॥ २ ॥***

---

१. 'स्त्रीस्वौ द्वौ' ख. पाठः.

---

* इतःपरं —"स्नेहस्वेदविधिस्तत्र वर्तयो भोजनानि च ।
पानानि वस्तयश्चैव शस्तं वातानुलोमनम् ॥" इत्येकः श्लोको मुद्रितमूलकोशे अधिकतया दृश्यते ।

अधोवातस्येति । वातस्य प्राधान्यात् तद्रोधजान् रोगान् पूर्वमाह — वातो द्विविधः, ऊर्ध्वगश्चाधोगश्च । तत्र मूत्रपुरीषसमानयोगक्षेमत्वाद् गुल्मादिकर्तृत्वेन प्राबल्याच्चाधोवातः प्रथममुच्यते । 'धारणात् पुनरुद्गारस्येत्यूर्ध्व'गो वक्ष्यते । अधोवातस्य गुदवातस्यापानाख्यस्य रोधेन गुल्मादयो दश रोगा भवन्ति । उदावर्तोऽर्शोनिदाने वक्ष्यते । रुक् पायुप्रदेशे । क्लमो ग्लानिः । वातादीनां सं(यो ?)गोऽप्रवृत्तिः । दृष्टेरग्नेश्च वधो नाशः । हृद्गदो हृद्रोगः ॥ २ ॥

**शकृतः पिण्डिकोद्वेष्टप्रतिश्यायशिरोरुजः ।**
**ऊर्ध्ववायुः परीकर्तो हृदयस्योपरोधनम् ॥ ३ ॥**
**मुखेन विट्प्रवृत्तिश्च पूर्वोक्ताश्चामयाः स्मृताः ।**

शकृत इति । शकृतो रोधेन पिण्डिकोद्वेष्टादयो जायन्ते । पिण्डिका नाम जङ्घाकाण्डस्य पश्चिमे भागे पिण्डाकृति कठिनं मांसम् । तत्र उद्वेष्टो रज्ज्वादिभिर्वेष्ट्यमानप्रतीतिः । उद्वेष्टनमिव रुग् भवतीत्यर्थः । प्रतिश्यायः पीनसः । चः समुच्चये । मुखेन विट्प्रवृत्तिः पुरीषनिर्गमः स्यात् । न केवलं त एव, यावत् पूर्वोक्ताश्च गुल्मादयश्च स्मृताः ॥

**अङ्गभङ्गाश्मरीबस्तिमेढ्रवंक्षणवेदनाः ॥ ४ ॥**
**मूत्रस्य रोधात् पूर्वे च प्रायो रोगास्तदौषधम् ।**

अङ्गेत्यादि । मूत्रस्य रोधादङ्गभङ्गादयो जायन्ते । अङ्गानां जङ्घोरुप्रभृतीनां भङ्ग इव स्फोटनमिवाङ्गभङ्गः । वस्त्यादीनां वेदनया सम्बन्धः । पूर्वे च रोगा वातशकृद्रोधोक्ताः सर्वे प्रायो मूत्रस्य रोधाद् जायन्ते । प्रायोग्रहणाद् रोगसाकल्यं न विवक्षितमिति दर्शयति । तदौषधं तेषां वातादित्रयरोधजानां रोगाणामौषधमुच्यते ॥

किं तदित्याह —

**वर्त्यभ्यङ्गावगाहाश्च स्वेदनं वस्तिकर्म च ॥ ५ ॥**

वर्त्तीति । वर्तिः फलवर्तिः मदनफलप्रधाना गु(ल ? लादि)तीक्ष्णविरेचनद्रव्यकल्पिता स्वकराङ्गुष्ठप्रमाणा गुदे प्रणिधेया वर्त्तिः । अवगाहो वातहरद्रव्यसाधिते द्रवे द्रोण्यां स्थिते मग्नदेहस्यावस्थानम् । वस्तिकर्म निरूहयोजना । प्रयोगाणामुक्तानां समुच्चयार्थ एकश्चकारः, अन्योऽनुक्तवातहरक्वाथादिपरिग्रहार्थः । वातादित्रयरोधजातानां रोगाणां फलवर्त्यादिकं सामान्यमौषधम् ॥ ५ ॥

**अन्नपानं च विड्भेदि विड्रोधोत्थेषु यक्ष्मसु ।**

अन्नेत्यादि । विड्रोधोत्थेषु पुरीषधारणजेषु यक्ष्मसु रोगेषु विशेषेण विड्भेदि अन्नं पानं च औषधं शस्यत इति वा सम्बन्धः । विशः पुरीषस्य भेदि भेदकं यावकमस्तुवास्तुकादि । चशब्दात् पूर्वोक्तं वर्त्यादि च ॥

**मूत्रजेषु च पाने तु प्राग्भक्तं शस्यते घृतम् ॥ ६ ॥**
**जीर्णान्तिकं चोत्तमया मात्रया योजनाद्वयम् ।**
**अवपीडकमेतच्च संज्ञितं**

**मूत्रजेष्वि**त्यादि । मूत्रजेषु मूत्ररोधजेष्वङ्गभङ्गादिषु यक्ष्मसु विशेषेण पाने प्राग्भक्तं घृतं च शस्यते । चशब्दात् पूर्वोक्तं वर्त्यादिकं च । प्राग्भक्तमन्नस्य पूर्वम् , यत्र घृतपानसमनन्तरं भक्तं युज्यते । तुर्विशेषे तैलप्रतिषेधार्थः । ननु वेगधारणेन बाहुल्येन मरुत एव प्रकोपः । तथाच वक्ष्यति —

"ततश्चानेकधा प्रायः पवनो यत् प्रकुप्यति ।"

इति । पवनविजये च यथा तैलं वरं न तथा घृतमतस्तैलस्यैवावपीडकयोजनमुचितं न सर्पिषः । अत्रोच्यते । तैलस्य वातजितोऽपि पानेऽसात्म्यत्वादल्पमूत्रत्वाद् बद्धविट्कत्वाच्चात्रायोग्यं पानम् । अल्पमूत्रत्वं 'तिलगतं तैलं स्वयोनिवदि'त्यतिदेशेन लभ्यते । 'तिलो ह्यल्पमूत्र' इति वक्ष्यति । प्राग्भक्तस्य घृतस्याल्पा मात्रान्नेन सह प्रयोगविधानात् सिध्यति । वक्ष्यति च — 'सभक्तोऽल्प' इति । अ(त्र ? त्रा)पानस्य कोपः 'अन्नादौ विगुणेऽपाने' इति पूर्वं घृतप्रयोगः । केवलं पीतं घृतमूर्ध्वं क्षिपत्यपानः । तदवष्टम्भनार्थं घृतस्योपर्यन्नोपयोगः । जीर्णान्तिकं च एतस्मिन् सघृतेऽन्ने जीर्णे यद् भवति तज्जीर्णान्तिकम् । जीर्णान्ते च घृतं शस्यते । कथम् । उत्तमया मात्रया अहोरात्रजरणलक्षणया मात्रया । चः समुच्चये । त्वर्थ इति पण्डितः । यज्जीर्णान्तिकं घृतपानं तत्तु उत्तमया मात्रया अष्टयामजरणलक्षणया शस्यते, न प्राग्भक्तमिवाल्पया मात्रया । अहोरात्रजरणलक्षण(ये)ति । एतच्च योजनाद्वयं प्रयोगद्वयं प्राग्भक्तस्नेहयोजना जीर्णान्तिकस्नेहयोजना चावपीडकसंज्ञितम् अवपीडकमुच्यते आयुर्वेदे । पाठ्यकारस्त्वाह — प्राग्भक्तमिति यस्य प्रयोगस्य पूर्वं भोजनं प्रयुज्यते तत् प्राग्भक्तम् । जीर्णान्तिकमिति ह्यस्तनेऽन्ने जीर्णे पश्चाद् भोजनस्य पूर्वमेवेत्यर्थः । एवमुभ(य)कालप्रयुक्ते अहोरात्रजरणलक्षणा मात्रा प्रयुक्ता भवति । उभय-

कालप्रयुक्तेन सर्पिषान्नमवपीड्यते। तस्मादस्य प्रयोगस्य समुदितस्यैवावपीडकसंज्ञा, नैकस्य। संज्ञाकरणं शास्त्रप्रदेशे व्यवहारार्थम्। वक्ष्यति च —

"रसैः कोष्णैश्च सर्पिर्भिरवपीडकयोजितैः।"

इति। अस्तने स्नेहे जीर्णे घृतप्रयोगो जीर्णान्तिकप्रयोग इति केचित्। तथोक्तेऽवपीडकता न स्यात्। कथमिति। अन्नमवपीडयतीत्यवपीडकम्, ऊर्ध्वाधोनिरोधेनान्नावपीडनात्। उक्तं च क्षारपाणिना —

"भक्तस्य प्राक् तदन्ते च सर्पिरिष्टं विशेषतः।
मूत्रजेषु गदेष्वेतदवपीडाख्यया स्मृतम्॥"

इति। आह। अवपीडकं नाम उक्तमात्रा, तच्च देशानुरूपत्वाच्चिकित्सायाः पूर्वभक्तमेव युज्यते। कया युक्त्येति। वस्तिदेशे शूलोदयः। वस्तिश्च वातस्थानं तस्य च स्नेहोऽलं शमायेति। एवंच सति पानसमनन्तरं भुक्तस्याहारस्याजीर्णिरतश्च म(न? ल)सञ्चयः स्यात्। अत्र प्रतिविधीयते। तथा साध्यत्वान्मूत्रनिग्रहे मूत्रस्रवणमवश्यं कार्यम्। तच्च वृद्धौ सत्यां सुकरमिति। इत्थं चैतदेवं, येन वायावपि जेतव्ये तत्प्रधानभेषजं तैलमल्पमूत्रत्वादपहाय सर्पिष उपादानमकरोदिति नैयासिकाभिप्रायः॥

धारणात् पुनः॥ ७॥
उद्गारस्यारुचिः कम्पो विबन्धो हृदयोरसोः।
आध्मानकासहिध्माश्च हिध्मावत् तत्र भेषजम्॥ ८॥

**धारणादित्यादि।** पुनःशब्दः सामान्यनिर्दिष्टवातप्र(कारो? कोपो)क्तशिष्टोद्गाराख्यवातपरामर्शाय। पुनरिति व्यतिरेके इत्यरुणदत्तः। उद्गारस्य धारणादरुच्यादयो भवन्ति। उरो वक्षः, तस्याधो हृदयं, तयोर्विबन्धः अन्तः स्तम्भ इव प्रतीतिः। वायुना कुपितेन नाभेरधः सशूलमापूरणमाध्मानम्। तत्र तेषु रोगेषु हिध्मावद् भेषजं चिकित्सितस्थाने वक्ष्यमाणहिध्माचिकित्सावद् भेषजम्॥ ८॥

शिरोर्तीन्द्रियदौर्बल्यमन्यास्तम्भार्दितं क्षुतेः।

**शिरइत्यादि।** क्षुतेः क्षवथोर्धारणाच्छिरोर्त्यादयः स्युः। इन्द्रियाणां दर्शनादीनां दौर्बल्यं स्वविषयग्रहणे अशक्तत्वम्। इन्द्रियदौर्बल्यमित्यत्र 'पूरणगुण—'त्यादिना समासप्रतिषेधे सत्यपि 'तत्स्थैश्च गुणैः षष्ठी समस्यते' इति समासः। अर्दितो वातव्याधिविशेषः॥

**तीक्ष्णधूमाञ्जनाघ्राणनावनार्कविलोकनैः ॥ ९ ॥**

**प्रवर्तयेत् क्षुतिं सक्तां स्नेहस्वेदौ च शीलयेत् ।**

क्षुतिं सक्तामप्रवर्तमानां तीक्ष्णधूमादिभिः प्रवर्तयेत् । तीक्ष्णशब्दो धूमादिभिर्नावनान्तैः सम्बध्यते । तीक्ष्णा धूमादयः स्वे स्वेऽध्याये वक्ष्यन्ते । (जीर्ण ? तीक्ष्ण)माघ्राणं नासया मरिचादिग्रहणम् । स्नेहस्वे(दौ) च शीलयेत् अभ्यस्येत् । क्षुतिः क्षुतम् ॥

"प्राणोदानौ समौ स्यातां मूर्ध्नि स्रोतःपथे स्थितौ ।
नस्तः प्रवर्तते शब्दः क्षुतं तदिति निर्दिशेत् ॥"

इति सुश्रुते ॥

**शोषाङ्गसादबाधिर्यसंमोहभ्रमहृद्गदाः ॥ १० ॥**

**तृष्णाया निग्रहात् तत्र शीतः सर्वो विधिर्हितः ।**

तृष्णाया निग्रहान्निरोधात् आस्यशोषादयो भवन्ति । तत्र तृष्णारोधजेषु विकारेषु सर्वः शीतो विधिः स्नानान्नपानादिको हितः ॥

**अङ्गभङ्गारुचिग्लानिकार्श्यशूलभ्रमाः क्षुधः ॥ ११ ॥**

**तत्र योज्यं लघु स्निग्धमुष्णमल्पं च भोजनम् ।**

क्षुध इति निग्रहापेक्षया षष्ठी । एवमन्यत्रापि यत्र षष्ठी तत्र निग्रहनिरोधयोरेकरान्वयो बोद्धव्यः । क्षुधो बुभुक्षाया निग्रहादङ्गभङ्गादयो भवन्ति । सामान्येनापि शूलशब्दनिर्देशे पक्वाशयगतः शूलो गृह्यते । कथम् । विशेषस्थानत्वात् । क्षुद्वेगनिग्रहेण निरावरणः प्रभञ्जनः कुप्यति । तस्य च स्थानं पक्वाशयः । वक्ष्यति च — 'पक्वाधानं विशेषतः' इति । तत्र क्षुधो निग्रहे भोजनं लघ्वादिगुणं योज्यम् । लघु शाल्यादि ॥

**निद्राया मोहमूर्धाक्षिगौरवालस्यजृम्भिकाः ॥ १२ ॥**

**अङ्गमर्दश्च तत्रेष्टः स्वप्नः संवाहनं तथा ।**

निद्राया निग्रहान्मोहादयो भवन्ति । मूर्धाक्ष्णोर्गौरवम् । जृम्भिका समुखविकासो (गा)त्रविनामः । अङ्गे मर्दः अङ्गानां मृद्यमानताप्रतीतिः । तत्र निद्रावेगरोधोत्थे विकारे स्वप्न इष्टः । संवाहनं स्वल्पमर्दनम् ॥

**कासस्य रोधात्तद्वृद्धिः श्वासारुचिहृदामयाः ॥ १३ ॥**

**शोषो हिध्मा च कार्योऽत्र कासघ्नो सुतरां विधिः ।**

१. 'धे वि' ख. पाठः.

कासवेगस्य रोधात् तद्वृद्धिस्तस्य कासस्य वृद्धिराधिक्यं स्यात् । तथा श्वासादयः । तत्र कासहा कासचिकित्सितोक्तो विधिरतिशयेन कार्यः ॥

**गुल्महृद्रोगसंमोहाः श्रमश्वासाद् विधारितात् ॥ १४ ॥**
**हितं विश्रमणं तत्र वातघ्नश्च क्रियाक्रमः ।**

श्रमेण व्यायामादिना साहसेन सद्यो जातः श्वासः श्रमश्वासः तस्माद् विधारितात् तद्वेगरोधाद् गुल्मादयः स्युः । विश्रमणं हितं, वातघ्नश्च क्रियाक्रमो हितः ॥

**जृम्भायाः क्षुतिवद्रोगाः सर्वश्चानिलजिद्विधिः ॥ १५ ॥**

समुखविकासैः गात्रविनामो जृम्भा, तस्या विधारितायाः क्षुतिनिग्रहवद् रोगाः स्युः । अत्र सर्वो वातघ्नो विधिः क्रियाक्रमो हित इति शेषः ॥ १५ ॥

**पीनसाक्षिशिरोहृद्रुङ्मन्यास्तम्भारुचिभ्रमाः ।**
**सगुल्मा बाष्पतस्तत्र स्वप्नो मद्यं प्रियाः कथाः ॥ १६ ॥**

**पीनसेति** । बाष्पतोऽश्रुणो विधारितात् पीनसादयो भवन्ति । पीनसो नासास्रवः । अक्ष्यादीनां रुजा सम्बन्धः । सगुल्मा इति सशब्द(स्या ? श्चा)-र्थः । गुल्मश्चेत्यर्थः । तत्र स्वप्नादिका अपि चिकित्साः ॥ १६ ॥

**विसर्पकोठकुष्ठाक्षिकण्डूपाण्ड्वामयज्वराः ।**
**सकासश्वासहृल्लासव्यङ्गश्वयथवो वमेः ॥ १७ ॥**
**गण्डूषधूमानाहारं रूक्षं भुक्त्वा तदुद्वमः ।**
**व्यायामः स्रुतिरस्रस्य शस्तं चात्र विरेचनम् ॥ १८ ॥**
**सक्षारलवणं तैलमभ्यङ्गार्थे च शस्यते ।**

**विसर्पेति** । वमेश्छर्देर्विधारिताया विसर्पादयः स्युः । छर्दिनिग्रहादसृ-जोऽपि दुष्टिः । ततश्च कण्ड्वादीनामुत्पत्तिः । कोठो लोहितं कठिनमण्डलम् । (വട്ടച്ചുണങ്ങ്) अक्षिकण्डूर्नेत्रकण्डूः । (आक्षि? ??) अक्षिक(ण्डू ? ण्ड्वादी)-नामामयेन सम्बन्ध इत्यरुणदत्तः । व्यङ्गो मुखे श्यावादिमण्डलानि । उद्वमन-मिवानुभवो हृदयस्य स हृल्लासः । तत्र गण्डूषादयः शस्ताः । गण्डूषश्च धूमश्च अनाहारश्च उपवासः त्रयाणामेकवद्भावः । रूक्षमौषधं भुक्त्वा पीत्वा तदुद्वमः तस्य रूक्षौषधस्य छर्दनम् । रूक्षं भुक्त्वोद्वमेत् स्निग्धस्य कफोत्क्लेशित्वात् । एतावता हि प्राणो वायुः स्वमार्गं गृह्णाति । अस्रस्रुतिः रक्तस्रावः तथा

क्षारलवणाभ्यां युक्ते तै(ला?लम)भ्यङ्गार्थे न्यस्यते हितं भवति। चशब्दः शुद्ध्याकर्षणार्थः॥ १८॥

**शुक्रात् तत्स्रवणं गुह्यवेदना श्वयथुर्ज्वरः॥ १९॥**
**हृद्व्यथा मूत्रसङ्गाङ्गभङ्गवृद्ध्यश्मषण्डताः।**

शुक्राद् विधारितात् तस्य शुक्रस्य स्रवणम्। तथा गुह्यवेदना पायुमेहन-वृषणशूलम्। तथा श्वयथुः प्रकृतत्वाद् गुह्य एव। वृद्धिर्वृषणयोर्वृद्धिः। अश्म अश्मरी। षण्डता स्त्रीगमनाशक्तता।

**ताम्रचूडसुराशालिबस्त्यभ्यङ्गावगाहनम्॥ २०॥**
**बस्तिशुद्धिकरैः सिद्धं भजेत् क्षीरं प्रियाः स्त्रियः।**

तत्र ताम्रचूडादिकं तथा बस्तिशुद्धिकरैः कूश्माण्डादिभिः सिद्धं क्षीरं भजेत्। ताम्रचूडः कुक्कुटः। प्रियाश्च स्त्रियो भजेत्। प्रियत्वं हि स्वबुद्ध्या कल्प्यम्। निरनुबन्धनं रतिसेवनात् प्रवर्तते शुक्रम्॥

इदानीमचिकित्स्यान् वेगविधारिणो दर्शयति—

**तृट्शूलार्तं त्यजेत् क्षीणं विड्वमं वेगरोधिनम्॥ २१॥**

तृडित्यादि। तृट्शूलाभ्यामतिशयेनार्तं पीडितं तथा क्षीणदेहं वेग-रोधिनं त्यजेत् न चिकित्सेत्। तथा विशं यो वमति तं च वेगविधारिणं त्यजेत्॥ २१॥

अथ किमेत एव रोगा वेगविधारणाद् भवन्ति, नेत्याह—

**रोगाः सर्वेऽपि जायन्ते वेगोदीरणधारणैः।**

**रोगा** इत्यादि। व्याख्याकारस्तु अमुमेव सम्बन्धं पद्यरूपेण ब्रूते—

"वेगधारणजातानां दिङ्मात्रमिह दर्शितम्।
रोगाणां भेषजानां च तथान्यद् रोगभेषजम्॥
समस्ति तत्रापि दिशं दिशत्यद्य यथाक्रमम्॥"

(क्रृति?इति)। अथवा वेगधारणाद् यथा व्याधयो जायन्ते, उदीरणादपि तथेति सूचयितुमिदमाह। वेगानां पुरीषादिसम्बन्धिनां यान्युदीरणान्यनागतानां प्रवर्तनानि तैः, तथा तेषामेवागतानां यानि विधारणान्यनुत्सर्गलक्षणानि तैश्च सर्वेऽपि रोगा जायन्ते न केवलं पूर्वोक्ता एव। वेगानामुदीरणादपि पूर्वोक्ता व्याधयः सर्वे

सम्भवन्तीत्यनुवादरूपेण विधिः । प्रायशः सर्वेऽपि वेगधारणशीला एव । तस्माद् वेगोदीर(ण ? णं) पूर्वं न प्रस्तुतं विरलत्वात् । यदि च वेगोदीरणं के केचित् कुर्वते चेत्, तेषामपि वेगधारणजाता एव व्याधयो जायन्ते गुल्मादयः । तत्र (भे ? भै)षज्यमपि तथाविधमेवेति सूचयितुं सर्वेऽपि रोगा धारणैरुदीरणैर्जायन्ते इत्युक्तवान् । हाटकस्त्वाह — यद्यपि वेगोद्दीरणधारणात् सर्वे रोगा जायन्त इत्युक्तम् । तथापि यथा वेगधारणात् सप्रत्यवाया रोगा भवन्ति न तथोदीरणा-दिति तन्त्रकृता 'अधोवातस्ये'त्यादिना वेगधारणजो रोगस्तच्चिकित्सा चोक्ता । रोगकर्तृकत्व(प्र)सङ्गेनोदीरणमप्युक्तमिति[2] । अपिच वेगोदीरणधारणं नाम वायोः कर्म । तस्य क्रियावत्त्वात् । तेन च वेगोदीरणधारणलक्षणेन स्वकर्मणा स एव वायुः कुप्य(ते ? ति) । स कुपितः सर्वानेव विकारान् जनयति । वचनं हि—

"शाखागताः कोष्ठगताश्च रोगा मर्मोर्ध्वसर्वावयवाङ्गजाश्च ।
ये सन्ति तेषां न तु कश्चिदन्यो वायोः परं जन्मनि हेतुरस्ति ॥
विट्श्लेष्मपित्तादिमलाशयानां विक्षेपसंहारकरः स यस्मात् ।"

इति ॥

ननु रोगानुत्पादनीयः प्रस्तुतः, तत् कथं सर्वरोगाणां भैषज्यं प्रस्तुतम् । अत्र परि-हाररूपेणैतदाह —

**निर्दिष्टं साधनं तत्र भूयिष्ठं ये तु तान् प्रति ॥ २२ ॥**

निर्दिष्टमित्यादि । तत्र तेषु वेगोदीरणधारणोत्थेषु सर्वेषु रोगेषु मध्ये ये तु भूयिष्ठं बाहुल्येन तदानीमेव जायन्ते गुल्मोदावर्तादयः, तान् व्याधीन् प्रति 'वर्त्यभ्यङ्गे'त्यादि साधनं निर्दिष्टं चिकित्सोक्ता । ये पुनरानुषङ्गिकास्तेषां वक्ष्यमाणेन विशेषचिकित्सेति सूचयितुं तुशब्दः । अथवा तुशब्दो विशेषार्थः । विशेषेण ये जायन्त इति ॥ २२ ॥

**ततश्चानेकधा प्रायः पवनो यत् प्रकुप्यति ।**
**अन्नपानौषधं तत्र युञ्जीतातोऽनुलोमनम् ॥ २३ ॥**

ततश्चेत्यादि । ततो वेगोदीरणधारणादनेकधा पवनो यस्मात् कुप्यति । अतोऽस्माद्धेतोस्तस्य पवनस्यानुलोमनं स्वमार्गयोजकं शुद्धिशमनान्नपानौषधं युञ्जीत प्रयोजयेत् । ततश्चेति वेगोदीरणधारणयोः समान एव वायुकोपः । अथवा सर्वरोगाणां चिकित्सितं विवक्षुः सर्वरोगा वायुकोपजा इति हृदि कृत्वा

१. 'कसं', २. 'ति' इति अ' क. पाठः.

सर्वरोगप्रतीकारं वायोरनुलोमनमाह । प्रायःशब्देन क्वचित् कफादेरपि कोपमनुवदति । तथाच वमिनिग्रह उक्तं गण्डूषधूमादिचिकित्सितम् । नचैतद्वाया-(वदु ? वु)पदिश्यते । वेगोदीरणजातानां रोगाणां दुर्बलत्वं ख्यापयितुमनुवादविधिः ॥ २३ ॥

यदि वेगरोधाद् रोगा जायन्ते तर्हि लोभादीनामपि नरकादिरोगहेतूनां वेगा न धार्या इति प्राप्ते सतीदमाह —

**धारयेत्तु सदा वेगान् हितैषी प्रेत्य चेह च ।**
**लोभेर्ष्याद्वेषमात्सर्यरागादीनां जितेन्द्रियः ॥ २४ ॥**

**धारयेदि**त्यादि । तुशब्दोऽवधारणे । अनेनाधारणे प्रत्य(पाद ? वा)यं दर्शयति । सदा सर्वकालं लोभादीनां वेगान् धारयेदेव तेषां विषयोन्मुखतां निवारयेत् । तेषां विधार्यत्वे हेतुमाह—हितैषी प्रेत्य चेह च इति । प्रेत्य परलोके च हितैषी श्रेयस्कामः । यः पुरुषः स्वहितमिच्छतीत्यर्थः । यस्मादेते वेगा विधार्यमाणाः परत्रेह च हितकरा भवन्ति तस्मादेते विधार्या इति । जितेन्द्रिय इत्यनेन धारणेऽभ्युपायं ब्रूते । जितेन्द्रिय एवैतान् धारयितुं शक्तो नान्यः । इन्द्रियजये सति एतद्वेगधारणं शक्यत इत्यर्थः । जितानि दान्तानि इन्द्रियाणि मनःषष्ठानि चक्षुरादीनि विषयाणामनभिला(ष ? षु)कतया येन स जितेन्द्रियः । लोभस्य लक्षणमुक्तम् । ईर्ष्या परगुणासहिष्णुता । अथवा —

"परस्य हि गुणं दृष्ट्वा या रुजा मनसि स्थिरा ।
सेर्ष्या मता तु यद्वद्धः संसृतौ परिवर्तते ॥"

ईर्ष्या क्रोध इत्यरुणदत्तः । द्वेषो वैरम् । मात्सर्यं परगुणासहिष्णुतेति हाटकः । रागः प्रीतिरभिलाषो वा । आदिशब्देनाभिध्यादिपरिग्रहः । प्रेत्येह चेति कर्तव्ये द्विश्चकारकरणं रागादीनां वेगविधारणेन प्रेत्य तथास्मिन् लोके च तुल्यकक्ष्यत्वज्ञापनार्थम् । अन्यथा प्रेत्येत्यस्य पूर्वनिर्देशाद् भूयसैषां रागादीनां विधारणं प्रेत्य न तथेह लोके पश्चान्निर्दिष्टत्वात् । (इति स्यात्) ॥ २४ ॥

अन्यच्च हितैषी किं कुर्यादित्याह —

**यतेत च यथाकालं मलानां शोधनं प्रति ।**
**अत्यर्थसंचितास्ते हि क्रुद्धाः स्युर्जीवितच्छिदः ॥ २५ ॥**

**यतेत चे**त्यादि । स्वास्थ्यसंवाहनविधायिनो रोगानुत्पादस्य प्रकृतत्वादिदमुच्यते । मलानां वातपित्तश्लेष्मपुरीषादीनां दोषाणां वा शोधनं प्रति यत्नं

कुर्याद्, ऋतुविहितमाचारमाचरन्नपीति शेषः । यथाकालं विहितकाले । यो यस्य मलस्य शोधनकालः स तस्मिन् काले शोधनीय इत्यर्थः । शुद्धानामपि दोषसञ्चयो भवत्येव । तस्माद् वत्सरे वत्सरे पक्षात् पक्षाद् द्वाविति सूचयितुं यथाकालमित्युक्तवान् । अयमेवार्थः सनिदर्शनमाचार्येण संग्रहे प्रदर्शितः—

"क्रमादपामपि मणौ प(तो? ङ्को)ऽवश्यं भवत्यतः ।
उत्तिष्ठेत यथाकालं मलानां शोधनं प्रति ॥"

इति । तस्यायमर्थः— यथा किल निसर्गनिर्मलानां तादृशेऽपि मणावलिञ्जरे स्थितानामपामवश्यमुपजायते कालक्रमात् पङ्कः, तथा प्रतिनियतमृतुषु तत्तदनुष्ठानमनु(ति)ष्ठतोऽपि वपुषि भवत्येव दोषाणां कालक्रमेण दुष्टिः । अतो यथाकालमुत्सहेत शोधनाय । न पुनस्तदुपेक्षेत । ऋतुविहितविध्यनुरोधमात्रापरितुष्टो दुष्टान् दोषान् व्याधिवशादपि शोधयेत् । किमर्थं शोधनं क्रियत इत्याह— हि यस्मात् ते मला अत्यर्थं सञ्चिताः अतिशयेन स्वस्थाने वृद्धिं गताः कुतोऽप्याहारविहाररूपात् तूपहितात् क्रुद्धाः कुपिताः सन्तः कदाचिज्जीवितच्छिदः स्युः । तस्मात् ते शोधनीयाः । अत्यर्थसञ्चितग्रहणेनैतद् द्योतयति— यदैते दोषा अत्यर्थं सञ्चिताः स्युः तदैव तेषामन्योपक्रमेभ्यः शोधनाख्य उपक्रमो ज्यायान् । लङ्घनपाचने तूपक्रममात्रे इति ॥ २५ ॥

तदेतच्चेतसि कृत्वा दोषा इत्यादिग्रन्थं ग्रन्थकृदुवाच —

**दोषाः कदाचित् कुप्यन्ति जिता लङ्घनपाचनैः ।**
**ये तु संशोधनैः शुद्धा न तेषां पुनरुद्भवः ॥ २६ ॥**

दोषा वातादयो लङ्घनपाचनैर्जिताः प्रकृतिं प्रापिताः कदाचित् कस्मिन्नपि काले कुप्यन्ति । ये पुनः संशोधनैः शुद्धास्तेषां न पुनरुद्भवः संशोधनशुद्धानां पुनरुत्पत्त्यभावः । तस्मादत्यर्थसाञ्चितानां शोधनमेव कार्यम् ॥ २६ ॥

अनन्तरं चिकित्सामाह —

**यथाक्रमं यथायोगमत ऊर्ध्वं प्रयोजयेत् ।**
**रसायनानि सिद्धानि वृष्ययोगांश्च कालवित् ॥ २७ ॥**

**यथाक्रममित्यादि** । कालविद् यो वैद्यः सोऽतः संशोधनादूर्ध्वं रसायनानि वृष्ययोगांश्च योजयेत् । काल(वि)दिति काले प्रयुक्तयोरेव रसायनवाजीकरणयोः स्वकार्यकरत्वं, गुणवतोरपि नान्यदेति दर्शयति । कालशब्दो देश-

कालशरीराहाररसात्म्यसत्त्वप्रकृतीनामुपलक्षणार्थः। न हि काल्मात्रविद् रसायनप्रयोगं सम्यग् विधारयितुं समर्थः। किम्भूतानि रसायनानि। सिद्धानि बहुशो दृष्टप्रत्ययानि आमलकावलेहादीनि। कथं योजयेदित्याह— यथाक्रमं रसायनवाजीकरणाध्यायोक्तक्रमेण 'अथ स्निग्धतनुरि'त्यादिना, 'अथ स्निग्धविशुद्धानामि'त्यादिना च। तथा यथायोगं यो यस्य युज्यते दातुमित्यर्थः। यथा वातप्रकृतेर्योग्यमिदं पित्तप्रकृतेरिदमित्यादि तथा अमुष्मिन् देशे काले वामुष्मिन् वयस्यमुष्मिन् देहे रसायनमिदं योग्यमिति यथायोगार्थः। यस्य यस्य यद् यद् योग्यमित्यर्थः। एवं वृष्ययोगेऽपि योज्यम्। अन्ये योगमनतिक्रम्येति वदन्ति। अत्र च रसायनानि वातातपिकानि योजयेत्, न कुटीप्रावेशिकानि। स्वस्थवृत्ताधिकारत्वाद् ऋतुविधानस्य ॥ २७ ॥

**भेषजक्षपिते पथ्यमाहारैर्बृंहणं क्रमात् ।**
**शालिषष्टिकगोधूममुद्गमांसघृतादिभिः ॥ २८ ॥**
**हृद्यदीपनभैषज्यसंयोगाद् रुचिपक्तिदैः ।**
**साभ्यङ्गोद्वर्तनस्नाननिरूहस्नेहबस्तिभिः ॥ २९ ॥**

भेषजेत्यादि। भेषजेन क्षपिते संशोधनेन कर्शिते शाल्यादिभिराहारैर्भोज्यैर्बृंहणं पथ्यं हितं क्रमात् स्वल्पं स्वल्पं न सहसैव। किम्भूतैः। हृद्यानि तानि दीपनानि च भैषज्यान्यौषधानि शुण्ठीपिप्पल्यार्द्रकत्वगेलादीनि, तैः संयोगो मिश्रता तस्माद् रुचिपक्ती ददति अभिलाषपाकावुत्पादयन्ति ये शाल्यादयस्तैः। 'बृंहणं पथ्यं हृद्यदीपनसंयोगाद् यथासंख्यं रुचिपक्तिदैरि'ति हृद्याकारः। किम्भूतैराहारैः। (अ? सा)भ्यङ्गादिभिश्चेत्यर्थः। स्नेहबस्तिरनुवासनम् ॥ २९ ॥

एवं कृते सति पुरुषः किं प्राप्नोतीत्याह—

**तथा स लभते शर्म सर्वपावकपाटवम् ।**
**धीवर्णेन्द्रियवैमल्यं वृषतां दैर्घ्यमायुषः ॥ ३० ॥**

तथेति। (य? त)था तेन प्रकारेण पूर्वं शोधनं ततो बृंहणं ततो रसायनप्रयोग इत्येवंरूपेण स संशोधनादिसेवी पुरुषः शर्म सुखं स्वास्थ्यं लभते। ततः सर्वेषां पावकानां त्रयोदशानामग्नीनां भूताग्निधात्वग्निजाठराग्नीनां पाटवं शक्तिं लभते। धीवर्णयोश्चक्षुरादीन्द्रियाणां वैमल्यं लभते। तथा वृषतां ग्राम्यमनसामर्थ्यं लभते। तथा दैर्घ्यमायुषो जीवितस्याधिक्यं लभते ॥ ३० ॥

रोगानुत्पादनीयप्रस्तावाद् 'ये भूतविषे'त्यादिना आगन्तुरोगान् सोपक्रमान् निर्दि-शति —

ये भूतविषवाय्वग्निक्षतभङ्गादिसम्भवाः।
कामक्रोधभयाद्याश्च ते स्युरागन्तवो गदाः॥ ३१॥

अथवा निजरोगोत्पत्तिकारणपरिहारप्रसङ्गेनागन्तवो रोगाः तत्परिहाराश्चोच्यन्ते इति हाटकः। ये भूतेत्यस्य निजागन्तु(वि)काराणामित्यनेन सम्बन्धः। एकान्तस्तन्त्रयुक्तिरत्र। ये गदा भूतादिभ्यः सम्भूता ज्वरविसर्पादयः, तथा रागद्वेषादयश्च, ते गदा आगन्तुसंज्ञाः स्युः। भूता देवादयो ग्रहाः। वायुः पुरोवातादिः। पण्डितस्त्वाह — रागादीनामागन्तुत्वमनुपपन्नं 'रागादिरोगान् सततानुषक्तानि'त्यनेन सहजत्वनिर्देशादिति। अत्र ब्रूमहे — आद्यशब्देनाद्भिभवा गृह्यन्ते। 'आद्यमादिभवं स्मृते' इति वैजयन्ती। रागद्वेषभयादिभवा ज्वरादय इति॥ ३१॥

एषां चिकित्सां निर्दिशति —

त्यागः प्रज्ञापराधानामिन्द्रियोपशमः स्मृतिः।
देशकालात्मविज्ञानं सद्वृत्तस्यानुवर्तनम्॥ ३२॥*
अनुत्पत्त्यै समासेन विधिरेष प्रदर्शितः।
निजागन्तुविकाराणामुत्पन्नानां च शान्तये॥ ३३॥

त्याग इत्यादि। प्रज्ञाया अपराधः असाध्वाचरणानि, दिनचर्योक्ताचारव्यतिक्रम इत्यर्थः। उक्तं च —

"धीधृतिस्मृतिविभ्रष्टः कर्म यत् कुरुतेऽशुभम्।
प्रज्ञापराधं तं विद्यात् सर्वदोषप्रकोपनम्॥"

इति। तेषां त्यागः। तथेन्द्रियाणां चक्षुरादीनामुपशमो रूपादिविषयेऽतिप्रवृत्तानां संयमनम्, अशुभरूपे वा विषये प्रवृत्तानां संयमनमलोलुपतेत्यर्थः। तथा स्मृतिरतीतार्थानुस्मरणं 'नक्तन्दिनानी'त्युक्तप्रकाशनशरीरमिति जन्मनि यावत्कारणशरीरविषया स्मृतिः। तथा देशादीनां विज्ञानमवबोधः। देशो जाङ्गलादिः, कालः शीतादिः, आत्मविज्ञानं तावत् प्रकृत्यादिपरीक्षा। तथा सतां वृत्तं

---

* इतःपरं —

"अथर्वविहिता शान्तिः प्रतिकूलग्रहार्चनम्।
भूताद्यस्पर्शनोपायो निर्दिष्टश्च पृथक् पृथक्॥" इत्येकः श्लोको मुद्रितमूलकोशेऽधिकतया दृश्यते।

चरितं सद्वृत्तं तस्यानुवर्तनमनुष्ठानम्। निजानामागन्तूनां च विकाराणामनुत्पत्त्यै रोगानुत्पादनाय समासेन सङ्क्षेपेण विधिरेषः 'त्यागः प्रज्ञापराधानामि'त्यादिः 'सद्वृत्तस्यानुवर्तनमि'त्येवमन्तः प्रदर्शितः सम्यगुक्तः। चः समुच्चये। न केवलं निजागन्तूनां रोगाणामनुत्पत्त्यै विधिरेष प्रोक्तो यावदुत्पन्नानां च जातानां शान्तये विधिः प्रागुक्तः॥ ३३॥

दोषाणां हि शोधनमुक्तं, तस्य कालमाह —

**शीतोद्भवं दोषचयं वसन्ते विशोधयन् ग्रीष्मजमभ्रकाले।**
**घनात्यये वार्षिकमाशु सम्यक् प्राप्नोति रोगानृतुजान्न जातु॥ ३४॥**

**शीतोद्भव**मित्यादि। शीतशब्देन हेमन्तशिशिरयोर्ग्रहणं, तत्रोद्भवो जन्म यस्य दोषचयस्य तं, हेमन्तशिशिरसञ्चितं कफमित्यर्थः। तं वसन्ते विशोध-(येत्? यन्)वमनेन निर्हरन् पुरुषः, ग्रीष्मजं दोषचयं ग्रीष्मसञ्चितं वातमभ्रकाले वर्षासु वस्तिभिर्विशोध(येत्? यन्), तथा वार्षिकं दोषचयं वर्षासु सञ्चितं पित्तं घनात्यये (घनस्य) अपाये शरदि विरेचनेन विशोधयन् ऋतुजान् रोगान् जातु कदाचिन्न प्राप्नोति। शोधयन्निति हेतौ शतृप्रत्ययः। अनेन ऋतुविशिष्टा-चारापरिज्ञानाद् रोगाः सम्भवन्तीति सूचयति। दोषानृतुजानिति वा पाठः। ऋतुकाले सञ्चितान् दोषानित्यर्थः। अयं पिण्डार्थः — स्वस्थानां पुंसामृतुज-नितं दोषं ऋत्वन्तरेऽपि विशोधयेदिति। वसन्ते विशोधयन्नित्यत्र वसन्तप्रारम्भ एव चैत्रे मासि विशोधयान्निति बोध्यं, प्रत्यवायभयात्। तथाहि — ऋ-तुद्वयसञ्चितस्य दोषस्य शोधनमक्रियमाणं रोगानीकं कुर्यादिति ग्रीष्मजम-भ्रकाल इत्यत्राभ्रकालग्रहणेन वर्षाप्रारम्भमात्रे श्रावण इति बोध्यम्। घनात्यये वार्षिकमित्यत्रात्यन्तघनविनाशे शरत्पश्चिमे मासि कार्त्तिके विशोधयेद् इति बोध्यम्। ननु वर्षावसन्तयोः प्रथमे मासि शोधनमुक्तम्। शरद्यपि तथा भवितव्यम्। उच्यते। शरदि पश्चिमे मासि शोधनस्य विधानं तस्य चिर-स्थितेरपेक्षित्वात्। तदपेक्षा च हेमन्तशिशिरयोरतिशीतत्वेन प्रतिकर्मनि-षेधात्। तथाहि — अग्रे हेमन्तशिशिरकालजो दोषचयो वसन्ते शोधयितव्यः। तस्मा(द्रा? दाश्व)युजे मासि वार्षिको दोषचयो यदि विशोध्यते, तदानीमतितरां बहुरग्रे दोषचयः स्यात् कालस्य बहुत्वात्। किञ्च नभसि कृतप्रतिकर्मणो यदि शरत्प्रथमे मासि शोधनं क्रियेत एकमासान्तरितत्वेन शीघ्रतरं कृतं स्यात्

तथानिष्टमिति न्यासे । किञ्च एषां मासानां शीतोष्णसाधारणत्वाच्च । वचनं हि—

"श्रावणे कार्त्तिके चैत्रे मासि साधारणे क्रमात् ।
ग्रीष्मवर्षाहिमचितान् वाय्वादीनाशु निर्हरेत् ॥"

इति । अन्ये त्वाहुः—वसन्तेऽप्रकाले घनात्यय इत्युक्तेऽपि चैत्रश्रावण-कार्त्तिका मासा आशुशब्दग्रहणेन गृह्यन्त इति ॥ ३४ ॥

स्वस्थानुष्ठेयमुपसंहरति नित्यमित्यादिना । अथवा, एवं सम्बन्धः, इतश्च रोगा न भवन्तीत्याह नित्यमित्यादिना—

**नित्यं हिताहारविहारसेवी**
**समीक्ष्यकारी विषयेष्वसक्तः ।**
**दाता समः सत्यपरः क्षमावा-**
**नाप्तोपसेवी च भवत्यरोगः ॥ ३५ ॥**

**नित्यमित्यादि** । नित्यं सदैव हिताहारविहारौ सेवते तच्छीलो यः स एवम्भूतो नरः । हिताहिताहारौ वक्ष्येते । विहारो दिनर्तुचर्योक्तो वर्तते च । मानसानां दोषाणामभावे कारणमाह—समीक्ष्यकारीत्यादिना । तथा समीक्ष्यकारी विमृश्यकारी निरूप्य कार्याणां कर्ता, शुभाशुभकरणवर्जनसमर्थ इत्यर्थः । तथा विषयेषु शब्दादिष्वसक्तोऽतिश्रद्धाविहीनः । तथा दाता दानशीलो विभवानुसारेण । समः सर्वभूतेषु । तथा सत्यपरः अवितथवाक् । तथा क्षमावान् यः शक्तोऽपि दण्ड्ये दण्डं न करोति । [illegible]ष्णुता । तथा आप्तानुपसेवते तच्छीलो यः स आप्तोपसेवी चारोगो भवति । न केवलं प्राक्तनसुविध्यनुष्ठानेनारोगः संपद्यते यावदाप्तोपसेवी चेति चशब्दार्थः । आप्ताः शिष्टा निर्दोषा इति पर्यायाः । तदुक्तम्—

"आगमस्त्वाप्तवचनमाप्तिं दोषक्षयं विदुः ।
वीतदोषोऽनृतं वाक्यं न ब्रूयाद्धेत्वसम्भवात् ॥"

इति । यथार्थवागाप्तः । पाठ्यकारस्तु "*अर्थेष्वलभ्येष्वि"त्यादिग्रन्थमपि पठति । तस्यैवं व्याख्या—नित्यं हिताहारेत्यादिना दिनचर्याध्यायोक्ताचारमुल्लङ्घयति

* "अर्थेष्वलभ्येष्वकृतप्रयत्नं कृतादरं नित्यमुपायवत्सु ।
जितेन्द्रियं नानुतपन्ति रोगास्तत्कालयुक्तं यदि नास्ति दैवम् ॥"

इति सङ्ग्रहे ।

यदि, रोगाः स्युरिति । अर्थेत्यादिना अर्थानुबन्धासु प्रवृत्तिषु क्रियमाणासु दैवं न (स ? प्र)माणीकरोति यदि महाननर्थः । 'तत्कालयुक्तं यदि नास्ति दैवमि'-त्यनेनैतद् द्योतयति — रोगानुत्पत्त्यर्थं जाताः सर्वे पुरुषकाराशा दैवं दुर्बलं चेत् फल(न्ते ? न्ति) नान्यथेति । तत्कालयुक्तं दैवं तत्कालं विना नोन्मुखं पुराकृतं कर्म । कालोऽनुकूल इत्यादिना— यस्य पुनर्दैवमनुकूलं तस्य सर्वप्रारम्भाः सुख-करा एव भवन्तीत्याह । अथवा 'शारीरमानसानां रोगाणामभावे सामान्येन कारणमाह — *काल इत्यादिना' इति हाटकः ॥ ३५ ॥

इति श्रीदासपण्डितविरचितायां हृदयबोधिकायां
चतुर्थोऽध्यायः ॥

---

## अथ पञ्चमोऽध्यायः ।

'अन्नपानं च विड्भेदि' इत्युक्तत्वाद् द्रवमागतम् । अथोच्यते । स्वस्थहितप्रसङ्गेनेति हाटकः । अथवा "नित्यं हिताहारविहारसेवी भवेद्" इति प्रागुदितं यतोऽतो हिता-हिताहारविशेषवित्त्यै द्रवान्नविज्ञानविधिं ब्रवीति इति । तौ चाहारविहारौ दिनर्तुचर्ययोर्य-द्यपि नियमितौ, तथापि भवत्यलं न हिताहितस्वरूपं विज्ञानम् । एवं हि तत्रावादीत्—

"गुरुशीतदिवास्वप्नस्निग्धाम्लमधुरांस्त्यजेत् ।"

तथा—

"व्यक्ताम्ललवणस्नेहं संशुष्कं क्षौद्रवल्लघु ॥"

तथातीतेऽध्याये जगाद—। "अन्नपानं च विड्भेदी"ति तादेयता वाक्येन न ज्ञायते किं पुनस्तद् गुरु शीतं किं लघु किं स्निग्धोष्णं किं शकृद्भेदनमिति । तस्मादाहारस्वरूपमत्र प्रतन्यते । स चाहारो द्विविधः, द्रवः कठिन इति । तत्रान्नपानसंस्काराद्युपयोगो द्रवे तोयादिके सम्भवति । अथ प्रथमं द्रवमुच्यते, तथा पञ्चवर्गस्वभावत्वेनाल्पवक्तव्यत्वाच्च । कठिनान्नस्य शाल्यादेः सप्तवर्गस्वभावत्वेन भूयस्त्वमिति ।

### अथातो द्रवद्रव्यविज्ञानीयमध्यायं व्याख्यास्यामः ।

**अथात** इत्यादि । अपामेवायं स्वाभाविको गुणो यद् द्रवत्वम् । अत्र यानि कानिचिद् द्रवस्वरूपद्रव्याणि अम्मयान्येव क्षीरदध्यादीनि, तदर्थं द्रवद्रव्यशब्दः सामान्येन सर्वद्रव्यव्यक्तिपरिहारार्थं शास्त्रकृता प्रयुक्तः । द्रवाणि च तानि द्रव्याणि, तेषां विज्ञानमवबोधः, तस्मै हितो द्रवद्रव्यविज्ञानीयः, तमध्यायमिति । तत्रापि प्राधान्यात् तोयस्याग्रे वचनम् । प्राधान्यं च 'उदकं श्रेष्ठं सर्वरसयोनित्वा'दिति

---

* "कालोऽनुकूलो विषया मनोज्ञा धर्म्याः क्रियाः कर्म सुखानुबन्धि ।
सत्त्वं विधेयं विशदा च बुद्धिर्भवन्ति धीरस्य सदा सुखाय ॥"

इति सङ्ग्रहे ।

वचनात् सर्वभूतसादृम्याद् जीवनादिगुणयोगाच्च। तत्राप्यान्तरिक्षस्य जलस्य महूपकारित्वात् प्रागुपन्यासः।

**जीवनं तर्पणं हृद्यं ह्लादि बुद्धिप्रबोधनम्।**
**तन्वव्यक्तरसं मृष्टं शीतं लघ्वमृतोपमम्॥ १॥**

**गङ्गाम्बु नभसो भ्रष्टं स्पृष्टं त्वर्केन्दुमारुतैः।**
**हिताहितत्वे तद् भूयो देशकालावपेक्षते॥ २॥**

जीवनमित्यादि। जीवनं म्लानस्यौजसो वृद्धिकरम्। सौम्यधातुवर्धनमित्येके। संज्ञाविरहितं जीवयतीत्यन्ये। तर्पणं तृप्तिकरं क्रमहृदिति यावत्। मांसादीनाप्याययतीति पाठ्यकारः। हृद्यं हृदयाय हितं पथ्यमित्यर्थः। न तु हृदयस्य प्रियं हृद्यमिति व्याख्येयम्। एवं हि व्याख्यायमान'मम्लं हृद्याना' मित्यग्र्याणां मध्येऽतत्वाम्मुनिर्नैवाकरिष्यद्, यस्मात् किञ्चिद् द्रव्यं कस्यचित् प्रियं भवति न सर्वं सर्वत्र। तस्माद् हृदयाय हितं हृद्यमिति बोध्यम्। हृदयस्य प्रियमितीन्दुः। हृद्यं हृदयावयवहितमिति सारकृत्। हृदयवर्तमानानां मनःप्रभृतीनां हितमिति पाठ्यकारः। ह्लादि आह्लादकरं, यथोष्णक्रान्तस्य चन्द्रादि दर्शनस्पर्शनादिभिरेवानिर्देश्यमानन्दविशेषं करोति। बुद्धिप्रबोधनं बुद्धेः प्रबोधनं प्रसादनं, यावन्मात्रा यस्य शेमुषी सा तस्य स्फुटप्रतिभासा तद्योगाद् भवतीत्यर्थः। बुद्धेः पटुत्वकरमिति यावत्। तनु स्वच्छम्। अव्यक्तरसमनभिव्यक्तषड्रसोपेतं, षण्णां रसानां तुल्यबलत्वेनावस्थितत्वात्। मृष्टं युक्तम्, अथवा मृष्टं मनःप्रीणनम् आस्वादप्रीतिकरं प्रियमित्यास्वादसुखम्। अनेकरसयुक्तानि द्रवाण्यन्यान्यपि सन्त्येव, न तु कार्त्स्न्येन तानीन्द्रियप्रसादप्रीतिकराणि। मृष्टं शुद्धमिति न व्याख्येयम्। तथाच मुनिः—

"शीतं शुचि शिवं मृष्टं विमलं लघु षड्गुणम्।
प्रकृत्या दिव्यमुदकम् ………… ॥"

इति। अत्र हि मृष्टविमलयोर्द्वयोरुपादाने पौनरुक्त्यं स्यात्, तस्मान्मृष्टशब्दोऽत्र मनःप्रीणनार्थः। हृद्याकारस्त्वाह — मृष्टं शुद्धं, यद्योगादशुचीनामपि शुचित्वं तस्य शुद्धिर्न वर्णयितुं शक्यते। चरके मृष्टशुचिपदयोरुपादाने व्याख्यानान्तरं कर्तव्यं 'शीतं शुचि शिवं मृष्टम्' इति। अत्र मृष्टशब्दो बुद्धिप्रबोधन इति। तथा शीतं स्पर्शेन वीर्येण च। तथा लघु लघुगुणयुक्तम्। अमृतोपममिति।

अमृतवत् त्रिदोषघ्नत्वधातुसाम्यकरत्वप्राणसन्धारकत्वविषजित्त्ववयःस्थापनत्वादिगुणैर्युक्तमित्यर्थः। तथाचोक्तं सङ्ग्रहे —

"सूर्येन्दुवृतसमुक्तत्वाल्लघु वातकफापहम्।
शैत्यजीवनसौम्यत्वैः पित्तरक्तविषार्तिजित्॥"

इति। नभसो भ्रष्टमन्तरिक्षात् पतितमात्रम्। आकाश एव वस्त्रादिना गृहीतमात्रम्। गाङ्गं जलमीदृग्गुणं भवति, सद्यो वस्त्रादिगृहीतस्यैवंरूपत्वात्। स्पृष्टमित्यादि। तुर्विशेषे। पुनरर्थ इत्यरुणदत्तः। पतितं रविचन्द्रानिलैः कालानुसारिभिः स्पृष्टं सत् यद्धं तद् भूयः पश्चात् पथ्यापथ्यत्वे देशं कालं चापेक्षते। कालानुसारिभिरनुविदधाति। देशो विषयो जाङ्गलादिः श्वेतादिश्च यादृग्गुणो भूदेशो यदुदकेन संवृत्तः तादृग्गुणं तदुदकमिति। तथा कालानुविधायित्वमुष्णकाले पतितमुष्णं शीते शीतं तथा वर्षेऽपीति। अनादिनिधनमूलकालानुविधायिनो मासादयः शीतादीनां लक्षणविशेषाणां निवर्तका इति। अर्केन्दुमारुतैरिति समस्तनिर्देशो यदा समस्तैरेतैः स्पृष्टं न तु व्यस्तैः तदा हिताहितत्वे देशाद्यपेक्षत इति। सद्यो वस्त्रादिगृहीतस्य जलस्य तैस्तैर्योगः सम्भवतीति तत् प्रायेण हितमेव। अर्केणेन्दुना मारुतेन च व्यस्तसमस्तैः स्पृष्टं समस्तगुणमिति हृद्याकारः॥ १, २॥

ननु गाङ्गाम्बु न ज्ञायते कतमदिति, अतस्तत्परीक्षामाह —

**येनाभिवृष्टममलं शाल्यन्नं राजतस्थितम्।**
**अक्लिन्नमविवर्णं च तत् पेयं गाङ्गमन्यथा॥ ३॥**
**सामुद्रं तन्न पातव्यं मासादाश्वयुजाद्विना।**

**येनेत्यादि**। येनाम्बुनाभिवृष्टमाभिमुख्यतः सिक्तं रजते पात्रे मुहूर्तस्थितं निर्मलं शाल्यन्नमक्लिन्नं क्लेदरहितं सिक्थमविवर्णं च मत्तं भवति, तद् गाङ्गं जलं पेयं पथ्यमित्यर्थः। पेयमित्युपलक्षणम्। स्नानावगाहाद्यपरायणेन कार्यमित्यर्थः। अन्यथा एतल्लक्षणविपर्यये क्लिन्नविवर्णे शाल्यन्ने चेत् सामुद्रं, तन्न पातव्यमपथ्यम्। अत्रापि पानमुपलक्षणार्थं स्नानावगाहयोः। सामुद्रिकस्य क्षारान्वयत्वात् क्लेदनादियोगः। किं सर्वदा न पातव्यं सामुद्रं जलं, नेत्याह — मासादाश्वयुजाद् विनेति। आश्वयुजं मासमन्तरेण तन्न पातव्यम्। आश्वयुजे तु मासि कालस्वाभाव्यात् सामुद्रमपि पथ्यमेवेति भावः। आश्वयुजः शरदादिमासः। अश्व-

युगिति केचित् पठन्ति। आश्वयुजे मासि सामुद्रस्य पथ्यत्वं 'तप्तं तप्तांशु-किरणै'रित्यादिगुण(व)त्त्वादिति हृद्याकारः। ननु गाङ्गाम्भसोऽपि तदानीं पान-निषेधः। यथाह सुश्रुते सङ्क्षेपे—"शाल्योदनपिण्डं राजतपात्रस्थं वर्षति देवे कुर्वीत सिक्थप्रक्लेदि सामुद्रं तन्नोपादेयमाश्वयुजे मासि गाङ्गमर्पी"ति। अ-त्रा(धः तस्य नत्तो? धःस्थस्य नत्तोऽ)न्वये बह्वागमविरोधः प्रसज्यते। यथा—

"अगस्त्योदयसूर्यांशुमारुताहतकिल्बिषम्।
ग्राह्यं शुक्लपटेनाम्भो मेघाच्छरदि दोषनुत्॥"

इति।

"शारदेऽपश्चिमे मासि गाङ्गं शक्रः प्रवर्षति।
शरदि ग्रहणं तस्मादान्तरिक्षस्य पूजितम्॥"

इति।

"गाङ्गमाश्वयुजे मासि प्रायो वर्षति वासवः।
सामुद्रकं वा विमलं पथ्यं तत्र पतज्जलम्॥"

इति। तेन नकर्षणेन गाङ्गमपि नोपादेयमिति व्याख्या न साधीयसी। एवं व्याख्या कार्या— आश्वयुजे मासि गाङ्गमपि। अपिर्वैरेव। सामुद्रकं च तदानीं गाङ्गमपि स्यात्। गङ्गाम्बुसमानगुणमित्यर्थः। तथोक्तं वृद्धसुश्रुते—"(स? वा)रं द्विविधं, गाङ्गं सामुद्रं च। तयोः परीक्षणं कुर्वीत— शाल्योदनपिण्डमकुथितम-विदग्धं रजतभाजनोपहितं वर्षति देवे (बहिः) कुर्वीत। स यदि मुहूर्तात्तस्ता-दृश एव भवति, गाङ्गं भवतीत्यवगन्तव्यम्। वर्णान्यत्वे सिक्थप्रक्लेदे च सामुद्रं तन्नोपादेयम्। सामुद्रमप्याश्वयुजे मासि गृहीतं गाङ्गवद् भवति। तदुपाददी-तेति। गाङ्गसामुद्रजलभेदाभावेन चरके पठ्यते—

"जलमेकविधं सर्वं पतत्यैन्द्रं नभस्तलात्।
तत् पतत् पतितं चैव देशकालावपेक्षते॥"

इति। नायं वर्षजलभेदाभावपरः श्लोकः। किं तर्हि, देशकालप्रतिपादनार्थः। एकविधं यज्जलं गाङ्गं सामुद्रं वा तत्पतत् पतितं च देशकालमपेक्षते पथ्या-पथ्यत्व इति शेषः इत्यर्थः॥

**ऐन्द्रमम्बु सुपात्रस्थमविपन्नं सदा पिबेत्॥ ४॥**

ऐन्द्रमित्यादि। ऐन्द्रमम्बु गाङ्गं जलं सुपात्रस्थं शोभनपात्रे हेममय-

रजतमृन्मयादौ स्थितं न मलिनाशुचिजुगुप्सितपात्रस्थम् अविपन्नमसञ्जातदोषविकृतं सदा सर्वर्तुषु पिबेत् । विपन्नं चेत् प्रतीकार उक्तः सङ्ग्रहे —

"घनवस्त्रपरिस्रावैः क्षुद्रजन्त्वभिरक्षणम् ।
व्यापन्नस्यास्य तपनमग्न्यर्कायसपिण्डकैः ॥
पर्णीमूलबिसग्रन्थिमुक्ताकतकशैवलैः ।
वस्त्रगोमेदकाभ्यां वा कारयेत् तत्प्रसादनम् ॥"

इति । आदित्यः शक्रो मेघश्च वर्षर्तावागमात् कदाचित् क्वचित् कश्चिद्वर्षतीत्यवगन्तव्यम् । शक्रादित्ययोर्मेघाज्ञाकरत्वेन वृष्टिकर्तृत्वमुपचर्यते ॥ ४ ॥

**तदभावे च भूयिष्ठमान्तरिक्षानुकारि यत् ।**
**शुचिपृथ्वसितश्वेते देशेऽर्कपवनाहतम् ॥ ५ ॥**

तदित्यादि । तदभावे तस्यैन्द्रस्याभावे गाङ्गजलाभावे भूयिष्ठं बाहुल्येनान्तरिक्षमैन्द्रं जलं यदनुकरोति स्वच्छादिगुणैर्गाङ्गाम्बुसदृशमित्यर्थः, तत् पिबेत् । तदनुकरोति कीदृशमित्याह — शुचीति । शुचौ पङ्कादिवर्जिते पृथौ महति असिते असिते कृष्णमृत्तिके अथवा श्वेतमृत्तिके देशे यज्जलं तथार्कपवनाभ्यामाहतमासमन्तात् क्रान्तम् आदित्यतप्तं मारुतक्षोभितं चेत्यर्थः । ईदृशमान्तरिक्षानुकारि स्यादिति भावः । भूमिस्थितस्य जलस्य भूमिरससङ्क्रान्तिः सङ्ग्रहोक्ता—

"श्वेते कषायं तत् स्वादु कृष्णे तिक्तं च पाण्डुरे" इत्यादि ॥ ५ ॥

पेयमुक्त्वा हेयमाह —

**न पिबेत् पङ्कशैवालतृणपर्णाविलास्तृतम् ।**
**सूर्येन्दुपवनादृष्टमभिवृष्टं घनं गुरु ॥ ६ ॥**
**फेनिलं जन्तुमत् तप्तं दन्तग्राह्यतिशैत्यतः ।**

**न पिबेदित्यादि** । पङ्कः कर्दमः, शैवालं, तृणं खण्डं, पर्णं पत्रम्, आविलास्तृतयोः पङ्कादिभिर्यथासम्भवं सम्बन्धः । तेन पङ्केनाविलं कलुषं शैवालादिभिरास्तृतं संछादितमिति बोध्यम् । ईदृशभूमिस्थमम्बु न पिबेत् । तथा तटतरुच्छायाद्यावृतत्वात् सूर्यादिभिरदृष्टमनासेवितं न पिबेत् । तथाभिवृष्टं तदहोवृष्टं निर्मलं श्वभ्रपतितं त्रिरात्रात् पूर्वं न पिबेत् । तस्य त्रिरात्रस्थितस्य पेयत्वमुक्तवान् हारिश्चन्द्रः —

"वार्षिकं तदहोवृष्टं भूयिष्ठमहितं जलम् ।
व्युष्टं त्रिरात्रं तच्चैव प्रसन्नममृतोपमम् ॥"

इति । अभिवृष्टं तत्कालपतितान्यवर्षजलमिश्रीभूतमिति हाटकादयः अस्मद्गुरवश्च । तथा घनं सान्द्रं, तथा गुर्व(ति ?)पाकि, तथा फेनिलं सञ्जातफेनं, तथा जन्तुमत् कीटयुक्तं, तथा तप्तमादित्येन उष्णं, सद्यो न पेयमिति । तथा अतिशैत्याद् दन्तग्राहि दन्तान् गृह्णाति कार्याक्षमान् करोति । तज्जलं न पिबेदिति प्रतिषेधं योजयेत् । एवम्भूतं भू(इ ? मि)ष्ठमुदकं न पिबेत् ॥

अधुना आन्तरिक्षं यन्न पेयं, तदाह—

**अनार्तवं च यद्दिव्यमार्तवं प्रथमं च यत् ॥ ७ ॥**
**लूतादितन्तुविण्मूत्रविषसंश्लेषदूषितम् ।**

**अनार्तवमित्यादि** । यद् दिव्यं जलमार्तवं न भवति, तच्च न पिबेत् । ननु सर्वमेव दिव्यं जलमार्तवम् । कालस्य ऋतुरूपत्वात् । ऋतौ भवमार्तवम् । एवंच न किञ्चिदनार्तवं सम्भवति । उच्यते । अनार्तवं न पिबेत् अर्थादार्तवं पिबेदित्युक्तं भवति । तदत्र सामान्योक्तावपि विशिष्टो दिव्यस्य जलस्य ऋतुर्बोध्यो वर्षाख्यः, यस्मिन् काले दिव्यं जलं पेयत्वेनाभ्यनुज्ञायते । यथा— 'वर्षासु दिव्यनादेय' इत्यादि । अन्यर्तुभवं त्वनार्तवत्वान्न पेयम् । अत्र च वर्षा(ख्या ? ख्य) ऋतुश्चातुर्मासिकोऽभिप्रेतः । अत एवाश्वयुजे मासि दिव्यं जलं पेयत्वेनानुजज्ञे । अन्यथानार्तवत्वात्तु तदपेयमेव स्यात् । अथवा 'तुण्डीरपाण्ड्यचोला(दौ ? दिषु) पूर्वसागरतटाश्रितेषु देशेषु शरदादौ वर्षारम्भः । पश्चिमसागरनिकटवर्तिषु देशेषु अष्टौ मासान् वर्षति । एवमन्यत्रापि यत्र वर्षनियमस्तत्रानार्तवं निषिध्यते । 'आर्तवं प्रथमं च यत्' न केवलमनार्तवं पिबेदित्येव, आर्तवमपि प्रथमं न पिबेत् । ऋतावपि प्रथमपतितं न पिवेत् । प्रथमस्य जलस्यापेयत्वे हेतुमाह - लूतेति । लूता आदिर्येषां ते लूतादयः । आदिशब्देन कीटादिक्षुद्रजन्तवो गृह्यन्ते । तेषां यानि तन्तुविण्मूत्रविषाणि तेषां संश्लेषः सम्पर्कः तेन दूषितं यत् तदार्तवमपि न पेयम् । दूषितमिति हेतुगर्भम् । लूतादीनां तन्त्वादिभिर्दूषितत्वात् न पेयमित्यर्थः । तन्तुः सूत्राकारविशेषः । लालेत्यन्ये । केचित्तु आर्तवं च प्रथमं च तच्च पेयम् । लूतादितन्त्वादिदूषितं न पेयमित्याहुः ।

'महोपकारि सलिलं वृष्टिजं स्थावरादिषु ।
सर्वेषु तेन मुख्यत्वात् प्रथमं तन्निरूपणम् ॥

तदनन्तरं बहूदकत्वान्नदीजलमाह —

**पश्चिमोदधिगाः शीघ्रवहा याश्चामलोदकाः ॥ ८ ॥**

**पथ्याः समासात्ता नद्यो विपरीतास्त्वतोऽन्यथा ।**

**पश्चिमोदधिगा** इत्यादि । याः पश्चिममुदधिं समुद्रं गच्छन्तीति पश्चिमोदधिगाः । 'अन्येष्वपि दृश्यते' इति डः । तथा शीघ्रवहा वेगवत्यः, तथ अमलोदका निर्मलसलिलाः, एवं त्रिविशेषणविशिष्टा नद्यः समासात् संक्षेपतः पथ्या हिताः ।

"वारुणीककुदुद्भूता वातभूरेणुवर्जिताः ।
सरितः प्रातिकूल्येन क्षोभयन्त्यो गिरेस्तटान् ॥
तेन पश्चिमादेग्याताः पथ्यास्ताः स्वत एव वा ।"

शीघ्रवाहित्वममलोदकत्वं च सर्वासां नदीनां पथ्यत्वकारणम् । अन्या नद्यो याः पुनः अत आभ्योऽन्यथाभूतलक्षणाः, ता विपरीता अपथ्याः पूर्वदिग्गताः अल्पवेगाः पङ्कादिकलुषाश्चापथ्याः ।

"पौरस्त्या मरुतश्चण्डाः शर्करारेणुवर्षिणः ।
दूषयन्ति सरित्तोयं तरुपर्णादिपातनैः ॥"

पर्वतभेदेन इदानीं निरूप्यते —

**उपलास्फालनाक्षेपविच्छेदैः खेदितोदकाः ॥ ९ ॥**

**हिमवन्मलयोद्भूताः पथ्यास्ता एव च स्थिराः ।**

**कृमिश्लीपदहृत्कण्ठशिरोरोगान् प्रकुर्वते ॥ १० ॥**

उपलेत्यादि । मुनिस्तु हिमवत्प्रभवानां पथ्यत्वमाह । कृष्णात्रेयसुश्रुतौ त्वपथ्यत्वमाहतुः । अत एवायं ग्रन्थकारो युक्त्या मतद्वयमप्यङ्गीकुर्वाण एवं विशेषणमाह । उपलानामास्फालनं घट्टनं तेनाक्षेपः पतनविशेषः क्षोभो वा तेन विच्छेदो विश्लेषः तैः खेदितं खन्नं जातक्षोभमुदकं यासां ताः खेदितोदकाः । ईदृगुदका एव हिमवज्जाता मलयजाताश्च नद्यः पथ्याः । यास्त्वीदृगुदका न भवन्ति ता अपथ्याः । ता एव तु स्थिरा मन्दवहाः सद्यः कृम्यादीन् कुर्वते । रोगशब्दस्य हृदादिभिः सम्बन्धः ।

"नद्यः पाषाणसिकतावाहिन्यो विमलोदकाः ।
मलयप्रभवा याश्च जलं तास्वमृतोपमम् ॥

नद्यः पाषाणविच्छिन्नविक्षुब्ध*विहतोदकाः ।
हिमवत्प्रभवाः पथ्याः पुण्या देवर्षिसेविताः ॥"

इति चरके ॥ १० ॥

**प्राच्यावन्त्यपरान्तोत्था दुर्नामानि महेन्द्रजाः ।**
**उदरश्लीपदातङ्कान् सह्यविन्ध्योद्भवाः पुनः ॥ ११ ॥**
**कुष्ठपाण्डुशिरोरोगान् दोषघ्न्यः पारियात्रजाः ।**
**बलपौरुषकारिण्यः सागराम्भस्त्रिदोषकृत् ॥ १२ ॥**

प्राच्येति । प्राच्यादिजा नद्यो दुर्नामान्यर्शांसि कुर्वते । प्राच्या गौडाः । अवन्तयो मालवाः । आवन्त्या इति वा । अपरान्ताः कोङ्कणाः । महेन्द्रजा नद्य उदरश्लीपदातङ्कान् कुर्वते । सह्यपर्वतोत्था विन्ध्यपर्वतोत्थाश्च पुनः कुष्ठादीन् कुर्वते । पारियात्राज्जाता दोषघ्न्यो भवन्ति । तथा बलपौरुषकारिण्यः । बलं नाम शरीरसम्बन्धवज्जनितं चेष्टासामर्थ्यं तत् शुक्रधातोरेव प्रसादः । यथा उक्तं हि सुश्रुतेन — 'तत्र रसादीनां शुक्रान्तानां धातूनां यत् परं तेजस्तत् खल्वोजस्तदेव बलमि'ति । पौरुषं शुक्रं तत् कुर्वन्ति । हृद्याकारस्त्वाह — 'पारियात्रोद्भवानां मन्दवहानां पङ्कादिकलुषितानां व्याधिकरत्वमित्यवगन्तव्यम् । तत्प्रभवानां विमलजलानां शीघ्रवहादियुक्तानां पथ्यत्वमुक्तमेव । नान्यथा बहूनामागमानां परस्परविरोधात् 'पारियात्रोद्भवाः पथ्याः' इति, "दोषघ्न्यः पारियात्रजा इति च ।

"तीव्रवेगाः शुद्धजलाः पाषाणस्खलनाकुलाः ।
नद्यः पथ्या इति ज्ञेयाः सर्वपर्वतसम्भवाः ॥"

इति" । इति । पर्वतविशेषेणापि पथ्यापथ्यत्वभेदः क्रियाभेदात् सुतरां भवतीति ज्ञेयम् । सागराम्भ इति न्यूनतादोषं परिहर्तुं निरुपयोगिद्रव्यस्य गुणं वक्ति । सङ्ग्रहे त्वेवमाह —

"एतत् स्वरूपं शास्त्रस्य यद् व्यापित्वेन वर्ण्यते ।
स्पृशति न्यूनतादोषो महानव्यापिनि ध्रुवम् ॥
महासागरतोयं च प्रोक्तं निरुपयोग्यपि ।"

इति ॥ ११,१२ ॥

---

* विमलोदका इति मुद्रितचरके ।

नदीजलं निरूप्य कूपादिजलं निरूपयति —

**विद्यात् कूपतटाकादीन् जाङ्गलानूपशैलतः ।**

**विद्यादित्यादि ।** आदिशब्देन सङ्ग्रहोक्तानां सारसचौण्डप्रास्रवणौद्भिद-वापीनदीनां ग्रहणम् । यथा —

"कौपसारसताटाकचौण्डप्रास्रवणौद्भिदम् ।
वापीनदीतोयमिति तत् पुनः स्मृतमष्टधा ॥"

इति ।

"कौपं स्वादु त्रिदोषघ्नं लघु पथ्यं च सर्वदा ।
सक्षारं कफवातघ्नं दीपनं पित्तकृत् सरम् ॥
तृष्णाघ्नं सारसं बल्यं कषायमधुरं लघु ।
कषायकटुतिक्तं च ताटाकं गुरु वातलम् ॥
चौण्डं तु पित्तलं दोषहरं प्रास्रवणोदकम् ।
औद्भिदं स्वादु पित्तघ्नं स्वादु वापीजलं लघु ॥
नादेयं वातलं रूक्षं कटुकं वारि निर्दिशेत् ।"

इति । सुश्रुतमहापाठे त्वेषां लक्षणमुक्तं —

"भूम्युत्खातसमुद्भूतमिन्द्रनीलसमप्रभम् ।
विमलं मधुरास्वादं कौपं जलमुदाहृतम् ॥
नद्याः शैलान्तदाद् वापि स्रुतमेकान्तनिर्मलम्[१] ।
कुमुदाम्भोजसंछन्नं[२] वारि सारसमुच्यते ॥
प्रशस्तभूमिभागस्थं नैकसंवत्सरोषितम् ।
कषायमधुरास्वादं ताटाकं सलिलं मतम् ॥
स्वयं शीर्णे शिलाश्वभ्रान्नीलोत्पलनिभं जलम् ।
लतावतानसंछन्नं बुधैश्चौण्डेयमुच्यते ॥
शैलसानुसमुद्भूतं स्पृष्टं वातहिमातपैः ।
लघु शीतमलं स्वादु स्मृतं प्रास्रवणं जलम् ॥
विदार्य भूमिमुद्भूतं महत्या धारया स्रवेत् ।
यज्जलं वेदितव्यं तदौद्भिदं स्वादु शीतलम् ॥

---

१. 'संश्रितमि'ति व्याख्यासारे. २. 'प' ख. पाठः.

पाषाणैरिष्टकाभिर्वा बद्धा स्याद् या तु कूपवत् ।
वापी सा खलु विज्ञेया कृतसोपानपङ्क्तिका ॥
नद्यां शैलप्रभूतायां गोमेदकमणिप्रभम् ।
प्रशस्तभूमिभागस्थं जलं नादेयमुच्यते ॥"

इति । तदेतान् कूपादीन् जाङ्गलानूपशैलान् समाश्रित्य विद्याज्जाङ्गलादिदेशजान् । यथायोगं लघून् गुरूंश्च जानीयादित्यर्थः । तत्र जाङ्गले देशे कूपादीनां सप्तानां बहूदकसम्बन्धाभावाल्लघुत्वं वेद्यम् । अनूपे बहूदकसम्बन्धाद् गुरुत्वं वेद्यम् । शैले तु अत्यन्तजलाल्पत्वादतिलघुत्वं वेद्यम् । तत्र विशेषो विद्यते । प्रायशः सह्यविन्ध्यादिशैलजातानामपां गुरुत्वं प्रत्यक्षसिद्धमुद(कं ? कस्य) बहुत्वेऽप्यल्पत्वेऽपि । तथाच सङ्ग्रहे —

"भूमिभेदमहीध्राणां सामीप्याद् गुरु लाघवम् ।"

इति । शैलप्रभवं नदीगुणं विद्यात् । तोयस्य पेयस्य ग्रहणकाल उक्तः —

"दिवाकरकरैस्तप्तं रात्रौ चन्द्रांशुशीतलम् ।
प्रातरेव जलं ग्राह्यं शैत्यसाधर्म्ययोगतः ॥"

इति । बहुविधजलवर्णनं, सर्वदा सर्वैरपि सेव्यत्वात् किञ्चित् कचिल्लभ्यत इति प्रशस्तस्याभावेऽन्यदपि विशोध्य सेव्यमित्युक्तवान् । सङ्ग्रहे —

"घनवस्त्रपरिस्रावैः क्षुद्रजन्त्वभिरक्षणम् ।"

इत्यादि ॥

यैर्जलं न पेयं तानाह —

**नाम्बु पेयमशक्त्या वा स्वल्पमल्पाग्निगुल्मिभिः ॥ १३ ॥**
**पाण्डूदरातिसारार्शोग्रहणीदोषशोथिभिः ।**
**ऋते शरन्निदाघाभ्यां पिबेत् स्वस्थोऽपि चाल्पशः ॥ १४ ॥**

**नाम्बु** इत्यादि । अल्पाग्न्यादिभिरम्बु न पेयम् । सर्वथैषां जलपाननिषेधे प्रत्यवायमपि शङ्कमान इदमाह — एभिरशक्त्या पिपासासहिष्णुतया स्वल्पं पेयं प्रत्यवायभयात् । पिपासासहिष्णुभिरत्यल्पं पेयं, यावन्मात्रेण प्रत्यवायो न भवति तावदेव पेयमित्यर्थः । शक्त्यामिति वा पाठः । अल्पाग्नयश्च गुल्मिनश्चेति द्वन्द्वः । पाण्ड्वादीनां मत्वर्थीयेन सम्बन्धः । व्याधीनां सलिलपानेन वृद्धिरिति निषेधः । अल्पाग्नीनां कथितं जलं विहितं सङ्ग्रहे —

"काममल्पमशक्तौ वा पेयं स्वौषधसंस्कृतम् ।
पाषाणरूप्यमृद्धेमजतुतापार्कतापितम् ॥
पानीयं शीतमुष्णं वा त्रिदोषघ्नं तृडर्तिजित् ।"

इति । स्वौषधसंस्कृतमल्पाग्नीनां कथितं जलं पञ्चकोलादिपक्वमित्यर्थः । शरन्निदाघाभ्यामन्तरेणान्यस्मिन्नृतौ स्वस्थोऽप्यल्पशः पिबेत् । किं पुनरातुरः ॥ १३, १४ ॥

**समस्थूलकृशा भक्तमध्यान्तप्रथमाम्बुपाः ।**

समेत्यादि । भक्तस्य मध्यान्तप्रथमेषु कालेषु येऽम्बु पिबन्ति, ते यथाक्रमं समाः स्थूलाः कृशाश्च भवन्तीति । युक्तिस्तत्राग्निसाम्यात् कफोर्ध्वभूम्या वह्निमान्द्याच्च ।

"भक्तस्यादौ जलं पीतमग्निसादं कृशाङ्गताम् ।
अन्ते करोति स्थूलत्वमूर्ध्वं चामाशयात् कफम् ॥
मध्ये मध्याङ्गतां साम्याद् धातूनां जरणं सुखम् ।"

इति सङ्ग्रहे ॥

इदानीं सर्वजलानां सामान्यगुणमुक्त्वा उष्णं शीतमिति भेदमधिकृत्याह —

**शीतं मदात्ययग्लानिमूर्छाच्छर्दिश्रमभ्रमान् ॥ १५ ॥**
**तृष्णोष्णदाहपित्तास्रविषाण्यम्बु नियच्छति ।**

शीतमित्यादि । शीतमम्बु मदात्ययादीन् नियच्छति नाशयति । शीतमित्यामं जलं मदात्ययो मद्यो(त्थो ? त्थो) रोगः ग्लानिः क्लान्तिः मूर्छा मोहः श्रमः खेदः भ्रमोऽनवस्थितिः मनोभ्रम इति केचित् । अक्षिभ्रम इत्यन्ये । दिक्चक्रवालस्य परिभ्रान्तिप्रतिभासः । प्रायश उष्णेन कालेनाहारादिना वा दाह उष्णदाहः । एवंगुणमप्यामं जलं क्वचिन्नेष्यते । उक्तवांश्च —

"अनवस्थितदोषाग्नेर्व्याधिक्षीणबलस्य च ।
नाल्पमप्याममुदकं हितं तद्धि त्रिदोषकृत् ॥"

इति ॥

अधुनोष्णाम्बुगुणानाह —

**दीपनं पाचनं कण्ठ्यं लघूष्णं बस्तिशोधनम् ॥ १६ ॥**
**हिध्माध्मानानिलश्लेष्मसद्यःशुद्धे नवज्वरे ।**
**कासामपीनसश्वासपार्श्वरुक्षु च शस्यते ॥ १७ ॥**

दीपनमित्यादि। उष्णमम्बु दीपनादिगुणोपेतं भवति। पाचनमामस्य, दीपनमग्नेः। पाचने दीपनत्वं दीपने पाचनत्वं च स्यात् सर्वत्र, क्वचिन्न स्यादिति व्यतिरेकः सिद्धः। पाचनस्य लङ्घनस्य दीपनत्वं न, दीपनस्य घृतस्य पाचनत्वं च न। दीपनादयः शक्तिविशेषाः सूक्ष्मक्रिया वा। कण्ठ्यं स्वर्यम्। वस्तिशोधनं वस्तिशब्देन तात्स्थ्यान्मूत्रं गृह्यते। मूत्रशोधनमित्यर्थः। हिध्मादिषु च शस्यते। आमः अपरिपक्काहाररसः। केचित् पीनसविशेषणमामशब्दमाहुः। तैरजीर्णे उष्णाम्बु नोक्तं स्यात्। अजीर्णे चालसकरूपे जलमुष्णमिष्यत एव॥ १६,१७॥

अनभिष्यन्दि लघु च तोयं क्वथितशीतलम्।
पित्तयुक्ते हितं दोषे व्युषितं तत् त्रिदोषकृत्॥ १८॥

अनभिष्यन्दीत्यादि। क्वथनलक्षणमुक्तं सङ्ग्रहे —

"क्षीणपादत्रिभागार्धं देशर्तुगुरुलाघवात्।
*सुशीतं फेनरहितमवेगममलं हितम्॥"

इति। अस्यार्थस्तन्त्रान्तरेऽप्युक्तः —

"धन्वसाधारणानूपेष्वम्बु पक्वं प्रशस्यते।
पादत्रिभागार्धहीनमुष्णवर्षहिमेषु च॥"

इति। चतुर्भागावशेषमेव लोके दृश्यते। तत् कथमिति चेद्, अत्यन्तलाघवार्थम्। तन्त्रान्तरेऽप्युक्तं —

"वल्कक्षरब्रह्ममुसाग्निसूर्यतस्त्वर्तुभागैरवशेषिताः स्युः।
पानव्रणस्नेहविपाकगण्डूषाश्च्योतनास्थापनके कषायाः॥"

इति। सुश्रुतेनाप्युक्तं —

"यत् क्वथ्यमानं निर्गन्धफेनं स्यान्निर्मलं लघु।
चतुर्भागावशिष्टं तु तत् तोयं कफरोगनुत्॥
तत्पादहीनं पित्तघ्नमर्धहीनं तु वातनुत्।"

इति। अन्यत्रापि —

"कर्षं गृहीत्वा द्रव्यस्य तोयस्य प्रस्थमेव च।
अष्टावशेषे तद् ग्राह्यं तोयपाके त्वयं विधिः॥"

इति।

* 'क्वथिताभि'ति मुद्रितसङ्ग्रहे।

"वह्नौ मन्दे कफे वृद्धे तोयं पेयं पदास्थितम् ।
पित्ते त्रिभागावशिष्टं मारुतेऽर्धावशेषितम् ॥"

इति ।

एवं क्वथनलक्षणं संक्षेपाभिप्रायेणेहोक्तम् । अनभिष्यन्दि न श्लेष्मकारि लघु च । आधारवशात् क्वथितमम्भो लघ्वपि यद् गुरु सम्पन्नं, तदपि क्वथित-शीतलं लघु भवतीत्यन्ये । केषाञ्चित् स्वाभाविकलघुगुणयोगात् पुनर्लघुत्वव-चनमग्निसंस्कारवशाल्लघुतरत्वप्रतिपत्त्यर्थम् । स्यादत्र । अप्सु पाकजगुणगणा-सम्भवात् तेष्वग्निना पाको न युक्तः । ब्रूमः ।

"शृतशीतजलं दद्यात् पिपासाज्वरशान्तये ।"

इत्यागमात् । इयांस्तु विशेषः । विलक्षणत्वप्रादुर्भावेन पाको दृष्टः । पक्वे जले पीते तत्संयुक्तवातादिदोषगतानुलोमनादिकार्यानुमेया पाकजोत्पत्तिरिति नैया-यिकाभिप्रायः । शीतलत्वादभिष्यन्दित्वं तोयस्य प्राप्तं क्वथितशीतलत्वेनास्य निषिद्धम् । मदात्ययादिहृत्त्वं तु यत् शीतलत्वसामान्यात् तदस्यास्त्येव, न केनचिन्निषेद्धुं सम्भाव्यते ।

पित्तयुक्ते हितं दोषे । एकवचनमविवक्षितम् । तेन वातपित्ते पित्तश्लेष्मणि च संनिपाते च तत्र पित्ताधिकता दृश्यते, तत्र हितम् । वचनं हि —

"क्वथितशीतलम् ।
संसर्गे पित्तकफयोः संनिपाते च पूजितम् ॥"

इति । अभ्युषितं निशास्थितं, त्रिदोषकृत्त्वान्न पेयमित्यर्थः । तस्य त्रिदोषक-र्तृत्वे युक्तिरस्माभिरत्र क्वचिदपि न दृष्टपूर्वा चिन्त्या च । यतः शास्त्रप्रदेशेषु पर्युषितस्य जलस्यामस्य पक्वस्यापि पथ्यता प्रसिद्धा । अतस्त्रिदोषकर्तृत्वं प्रति मौनमेव भजामः । आमपक्वजलसांकर्यमपि त्रिदोषकरम् । उक्तं च सङ्ग्रहे — 'पानीयं न तु पानीयम्' इत्युक्ते, कोऽर्थ इति चेद्, जाङ्गले पीते तस्मिन्न-जीर्णे आनूपं न पेयमिति, आनूपे पीते साधारणं न पेयमित्यादि ज्ञेयम् । प्रदे-शज इत्युक्तत्वाद् अन्यदपि द्योत्यते — कौपे पीते ताटाकं न पेयं, ताटाके पीते कौपं न पेयमित्यादि सर्वत्र चिन्त्यम् । आमे अपक्वे पानीये अजीर्णे क्वथित-शीतं च जलं न पेयम् । पाठ्यकारस्तु —'अत्र चशब्दादेव पक्वपानीयेऽजीर्णे

आममपि न पेय'मित्याह। पक्के क्वथिते जलेऽजीर्णेऽपीतरदामं जलं यावन्न भुक्तं तावत् सजातीयमपि न पेयम्। अथवा पक्वपानीयमेव सर्वदा सर्वेषां प्रयोज्यमिति। एवमामपानीयप्रतिषेधप्रसङ्गादेतदपि गम्यते। आमे व्यावायजीर्णे क्वथितमपि न पेयमित्यन्ये। शीते विधिरयं द्वयोरप्यामपक्वयोर्जलयोः शीतयोस्तयोरेष विधिः, अथवा शीते क्वथितशीतवारिणि एतद्विधानम्। तुरवधारणे। तप्ते उष्णे अजीर्ण एव शिशिरं शीतं त्यजेत्। जीर्णे तु न शीतं त्यजेत्। तप्तशब्द उष्णवाचकः। अत्र तुशब्दादेतद् द्योतयति — विजातीये जलेऽजीर्णे विजातीयस्य निषेधः, तत्र जीर्णे पिबेदिति नियमनिर्णे। तप्ते जीर्णे निषेधो यथा शीतस्य, तथा 'जीर्णे शीतं पिबेद्' इति विधिश्च विधते शास्त्रप्रदेशेष्विति। तथाच खरनादे —

"तप्तवारिणि जीर्णे तु शीतं वारि पिबेत् पुनः।
अन्यथा शीतसाम्रानं नरं हन्यान्निषेवितम्॥"

इति। तप्तेऽजीर्णे च शिशिरं त्यजेदिति केषांचित् पाठः। चशब्दात् शिशिरे अजीर्णे तप्तमपि न पेयमिति सूचितं भवतीति तेषामभिप्रायः। अतियोगेन बाहुल्येन तृष्यतस्तृष्णावतोऽपि प्रयोजितमुपयुक्तं सर्वस्यापि नरस्य श्लेष्मपित्ततां प्रयाति, ज्वरितस्य विशेषतः यत आमेनाग्नौ बहिष्कृते ज्वरोत्पत्तिरामस्य च पानीयं तर्पकमिति विशेषशब्दो (ग्रन्थ)कृता नोक्तः। सङ्ग्रहोक्तं 'पानीयं प्राणिनां प्राणा' इत्यादिग्रन्थं केचित् तत्रापि पठन्ति। तस्यायमर्थः— अत्यन्तप्रतिषेधेन न कुत्रचिद् वारि वार्यते। यतः पानीयमाह्लादकरत्वात् प्राणिनां प्राणाः। विश्वं च सर्वं स्थावरजङ्गमं पानीयमयमेव। अतो हेतोरिति। संक्षेपतयाल्पोपयोगित्वाच्चावश्यायादिगुणा ग्रन्थकृता नोक्ताः, उदकवाच्यत्वसामान्यात् शीतादिसाम्याच्च॥ १८॥

नालिकेरजलमाह —

**नालिकेरोदकं स्निग्धं स्वादु वृष्यं हिमं लघु।**
**तृष्णापित्तानिलहरं दीपनं वस्तिशोधनम्॥ १९॥**

**नालिकेरोदकमित्यादि**। नालिकेरान्तःस्थितमुदकं स्निग्धं स्वादु वृष्यं हिमं शीतवीर्यं च भवति। एवम्भूतमपि प्रभावाल्लघु भवति। तथा तृष्णादिहरम्। तन्त्रान्तरे अवस्थावशात् पित्तकरत्वमुक्तं —

"नालिकेरस्य यत्तोयं पुराणं पित्तवर्धनम् ।
तस्यैव तरुणं तोयं पित्तघ्नं क्रमिनाशनम् ॥"

इति । तथा दीपनं वस्तिशोधनं मूत्रशोधनं च भवति । अस्य दीपनत्वे संशयः । तन्त्रान्तरे—

"ग्रन्थिकं दीपनीयानां नालिकेराम्बुतोऽन्यथा ।"

इति दर्शनाद् । अर्थभेदे ग्रन्थिकं दीपनीयानामौषधानामुत्तमं नालिकेराम्बु अतोऽन्यथा दीपनीयानामध(म ? मं) दीपनेषु मुख्यं न स्यादित्यर्थः । नालिकेरोदकमिति सञ्जातकपालस्यासञ्जातमज्जस्य फलस्य बालभावमजहतः प्रभञ्जनेनानवरतवीजितस्य जलं गृह्यते दीपनलघुत्वादिसंयोगात् । यथोक्तं भोजे—

"तुङ्गद्रुमस्य हि फलं चतुर्धा परिगृह्यते ।
बालञ्च तरुणञ्चैव पक्वशुष्के तथैव च ॥
तत्र बालस्य पानीयं दीपनं स्वादु शीतलम् ।
जीर्णज्वरहरं वृष्यं वस्तिशुद्धिकरं परम् ॥
तरुणस्य तु सक्षारं सकषायं परं गुरु ।
पक्वोदकमपि तथा विशेषाद् वह्निनाशनम् ॥
अपि क्षीरसमानत्वादहृद्यं परमं मतम् ।
समास्थितस्य शुष्कस्य तोयं स्वादु परं मतम् ॥
चातुर्थिकज्वरहरं विशेषाद् वातनाशनम् ।"

इति ॥ १९ ॥

इदानीं युक्त्याभ्यसङ्ग्रहं निर्दिशति--

**वर्षासु दिव्यनादेये परं तोये वरावरे ।**

वर्षास्वित्यादि । प्रावृष्यन्तरिक्षं जलं परम् अत्यन्तं वरं पथ्यं, नदीभवं परमत्यन्तमवरमपथ्यम् । इति तोयवर्गः ॥

परिशिष्टेभ्यो वर्गेभ्यः प्राज्यजनोपयोगितयोपकारित्वेनाजन्मसात्म्येन प्राधान्यात् पयःसंज्ञासामान्याच्च जीवनादिगुणसंयोगाच्च तोयवर्गादनन्तरं क्षीरवर्गारम्भः । अत्र श्लोको वा —

"बहुसेव्यत्वसादृश्यत्वजीवनादिगुणान्वयैः ।
निरूपयति पथ्यत्वात् पयसोऽनन्तरं पयः ॥"

इति । तत्रापि दध्यादीनां मूलकारणभूतत्वात् क्षीरस्य प्रागुपादानम् । तथा जीवनीयानां रसायनानां चाग्रेसरत्वात् । तथाच सङ्ग्रहे — "क्षीरं जीवनीयानां क्षीरघृताभ्यासो रसायनानामि"त्याह ॥

**स्वादुपाकरसं स्निग्धमोजस्यं धातुवर्धनम् ॥ २० ॥**
**वातपित्तहरं वृष्यं श्लेष्मलं गुरु शीतलम् ।**
**प्रायः पयः**

**स्वादुपाकरसमित्यादि** । पयः क्षीरं प्रायः स्वादुपाकरसादियुक्तं भवति । स्वादू पाकरसौ यस्य तदेवं स्वादुरसत्वादेव स्वादुपाकत्वे सिद्धे पुनः पाकग्रहणं पाकस्य कार्यकरत्वातिशयख्यापनार्थम् । ओजस्यं ओजसो हितं ओजसे हितमिति वा । ओजो धातुसारः, अथवा ओजो बलवर्धनमित्यर्थः ।

"सद्योबलकरं क्षीरं सद्योबलहराः स्त्रियः ।"

इति । धातूनां वर्धनम् । वृष्यं शुक्रकरमतिशयेनेति बोध्यम् । धातुवर्धनत्वादेव शुक्रकरत्वमात्रस्य सिद्धेः । प्रायोग्रहणात् क्वचिद् व्यभिचारं सूचयति । उष्ट्र्यादिक्षीरे व्यभिचारं वक्ष्यति । स्वादुपाकरसत्वादेव क्षीरस्य स्निग्धवृष्यादयो गुणा लब्धा एव, किं पुनरेतैरुद्दिष्टैरिति केचिन्मन्यन्ते । तान् ब्रूमहे — मधुररसाक्षिप्तेभ्यो वृष्यस्निग्धादिभ्योऽपरे स्निग्धवृष्यादयो गुणा बहुतराः क्षीरस्य विद्यन्त इति ज्ञापनाय एते स्निग्धादयो गुणाः पुनरुद्दिष्टाः । महाभूतानां संयोगादिविशेषात् केचिद्रससहचरिता एव गुणा द्रव्यं निविशन्ते, ये रसे समारोप्य वर्ण्यन्ते । यथा मधुरे आयुष्यादिगुणा अम्लेऽग्निदीप्तिकृदादयः । केचिच्च रसमनपेक्ष्यैव द्रव्ये निविशन्ते । यथा मधुररसद्रव्ये मकुष्टतण्डुलीयादौ रूक्षादयो गुणाः । तथाहि स्निग्धादीनां तत्रोपलम्भः प्राप्तो मधुररसाश्लिष्टत्वात् । तस्मान्मकुष्टकादिद्रव्यं मधुररससहचरोक्तेन गुणौघेन संयुक्तं वक्तुं युक्तम् । अन्यथा तु कृतं षड्रसगुणस्वरूपवर्णनमनर्थकमेव स्यात् । तस्मादयमत्र विषयविभागो ज्ञेयः । केचिद् गुणा रससहचरिता द्रव्ये निविशन्ते । यद्वशात् तद् द्रव्यं रसगुणाननुवर्तते । ईदृशं च विषयमुद्दिश्य तन्त्रविद्भिर्म-

१. "गव्यं माहिषमाजं च कारभं स्त्रैणमाविकम् ।
ऐभमैकशफं चेति क्षीरमष्टविधं मतम् ॥"

एवं ग्रन्थान्तरे ।

धुरादिरसानां स्निग्धादिगुणा वर्णिता वेद्याः । केचित् तु रसनिरपेक्षयैव द्रव्ये निविशन्ते । अत एव तद् द्रव्यं रसगुणान् नानुवर्तते । अस्मिंस्तु विषये रसगुणवर्णनं-नोक्तमेव वेद्यम् । तस्मात् क्षीरस्य स्वादुपाकरसत्वे सत्यपि स्निग्धादिगुणवर्णनम् । एवं चोभयथा क्षीरस्य स्निग्धादिगुणयोगादधिकाः स्निग्धादयो ये गुणास्ते सन्तीत्यवगच्छ । अयमेव व्यवहारोऽन्यत्राप्येवंविधे शाल्यादौ द्रव्ये विज्ञेयः ॥

एवं पयोमात्रस्य सामान्यगुणमुक्त्वा क्षीराणां गवादिविशेषेण विशेषो व्याक्रियते—

**अत्र गव्यं तु जीवनीयं रसायनम् ॥ २१ ॥**

**क्षतक्षीणहितं मेध्यं बल्यं स्तन्यकरं सरम् ।**
**श्रमभ्रममदालक्ष्मीश्वासकासातितृट्क्षुधः ॥ २२ ॥**
**जीर्णज्वरं मूत्रकृच्छ्रं रक्तपित्तं च नाशयेत् ।**

अत्रेत्यादि । गव्यस्य पूर्वतरमुपादानं सर्वक्षीरेभ्यो ज्यायस्त्वात् । तथा हि माहिषमपि तक्रादि गोरसशब्देन प्रथितमिति । अत्र एषु क्षीरेषु मध्ये गव्यं क्षीरं, तुर्विशेषे, जीवनीयमोजस्यमतिशयेनेति बोध्यम् । जीवनीयमात्रस्य ओजस्यमित्यनेनैव क्षीरसामान्यलक्षणेनोक्तत्वात् । तथाच मुनिः —

"प्रवरं जीवनीयानां क्षीरमुक्तं रसायनम् ।"

इति । ओजस्यं हि जीवनीयमुच्यते । तथा ओजःक्षये जीवनीयानामौषधानामुपयोगो निर्दिष्टः । यथा —

"जीवनीयौषधक्षीररसाद्यास्तत्र भेषजम् ।"

इति । जीवनीयं सौम्यधातुवृद्धिकरं वा । रसायनमिति रसमांसादीनां श्रेष्ठानां लाभोपायो रसायनम् । उक्तं च --

"लाभोपायो हि शस्तानां रसादीनां रसायनम् ।"

इति । अथवा रसायनमिव रसायनं प्राणसन्धारकत्वात् । क्षतमुरःक्षतं तद्वतो हितं क्षीणस्य च हितं क्षतक्षीणाभ्यामिति चतुर्थी वा । क्षीणः क्षीणधातुः । मेध्यं मेधायै बुद्ध्यै हितं 'उगवादिभ्यो यत्' इति यत् । एवं बल्यम् ।

"शब्दार्थग्रहणे शक्तिराशु मेधाभिधीयते ।"

स्त्रीणां च स्तन्यवृद्धिकरं 'कृञो हेतुताच्छील्य—' इति हेतौ टः । स्तन्यकरणे

हेतुरित्यर्थः । सरं मूत्रादीनां स्रंसनम्, अथवा शरीरे व्याप्तिशीलम् । श्रमादीन् नाशयति च । अधोभागस्य रक्तपित्तस्य

"प्रतिलोमं च हरणं रक्तपित्ते चिकित्सितम् ।"

इति वमनोपक्रम्यस्य विरेचनत्वादयोग्यस्यापि क्षीरस्य तत ऊर्ध्वभागस्य श्लेष्मानुबन्धस्य श्लेष्मवृद्धिकरत्वादनर्हस्यापि क्वचिदवस्थाभेदे प्रयोज्यत्वादुपपन्नम् । शोणितपित्तघ्नत्वमिति न्यासे । आश्विनसंहितायामेवं गुणाः कीर्त्तिताः —

"गुल्मेऽतिसारे च हितं रक्तोत्थेष्वामयेषु च"

इति ॥

**हितमत्यग्न्यनिद्रेभ्यो गरीयो माहिषं हिमम् ॥ २३ ॥**

हितमित्यादि । माहिषं महिषीसम्बन्धि क्षीरमत्यग्निभ्योऽनिद्रेभ्यश्च हितम् अग्निं शमयति निद्रां जनयति । गरीयो गुरुतरं हिमं भृशं शीतवीर्यम् । तथाच मुनिः —

"महिषीणां गुरुतरं गव्याच्छीततरं पयः ।
स्नेहादूनमनिद्राय हितमत्यग्नये च तत् ॥"

इति । खरनादे तूक्तं —

"गव्यं स्नेहोत्तमं क्षीरं गव्याच्च पयसः पयः ।
यथोत्तरं स्नेहहीनमौरभ्रच्छागमाहिषम् ॥

जाङ्गलानूपशैलेषु चरन्तीनां यथोत्तरम् ।
पयो गुरुतरं वत्सो यथा चासां प्रवर्धते ॥"

इति ॥ २३ ॥

**अल्पाम्बुपानव्यायामकटुतिक्ताशनैर्लघु ।**
**आजं शोषज्वरश्वासरक्तपित्तातिसारजित् ॥ २४ ॥**

अल्पेत्यादि । आजं छागलं क्षीरमल्पाम्बुपानादिभिस्त्रिभिर्हेतुभूतैर्लघु भवति । अल्पाम्बुपानादिकं चाजानां स्वभावोऽन्यासां तु देशसादृम्यापेक्षया । यद्येवं स्वभावादेवाल्पाम्बुपानादेर्गम्यमानत्वादेतदुपन्यासो व्यर्थ एव । अत्रोच्यते । हेतुकथनमन्यस्या अप्येवंहेतुयुक्ताया जातेः क्षीरलघुत्वज्ञापनार्थम् । किञ्च

अजानामपि बहुजलपानाव्यायाममधुरगुर्वशनैः क्षीरं गुरु स्यादिति ज्ञापनार्थं च। एतत् सर्वं स्पष्टमुक्तं सङ्ग्रहे—

"पिण्याकाद्याशिनीनां[1] तु गुर्वभिष्यन्दि तत् स्मृतम्।
अचेष्टया च प्रादोषाद् गरीयः स्मृतमौषसम्॥
व्याख्यातोऽनेन लघिमा चेष्टावत्प्रकृतिष्वपि।"

इति। प्रदोषेऽपराह्णे यद् गृहीतं पयस्तदपेक्षया औषसं प्रभाते यद् गृहीतं तद् गुरु चेष्टारहितत्वात्। रात्रौ हि प्राणिनां न काचिच्चेष्टा भवति। दिवा च धावनादिक्रियया प्रादोषं लघु। अनया च दिशा सर्वमपि चिन्त्यम्। तथा शोषादीन् ज(न?)यति। परतन्त्रे त्रिदोषहितत्वमुक्तम्—

"अजानामल्पकायत्वात् सर्वौषधिनिषेवणात्।
अल्पाम्बुपानाद् व्यायामात् त्रिदोषघ्नमजापयः॥"

इति॥ २४॥

**ईषद्रूक्षोष्णलवणमौष्ट्रकं दीपनं लघु।**
**शस्तं वातकफानाहकृमिशोफोदरार्शसाम्॥ २५॥**

ईषदित्यादि। औष्ट्रिकमुष्ट्रीक्षीरं लघु। तथा ईषन्मनाक् रूक्षोष्णलवणम् ईषद्रूक्षमीषदुष्णमीषल्लवणमिति। तथा दीपनं भवति। तथा वातादीनां शस्तं वातादिषु पथ्यमित्यर्थः। औष्ट्रिकमिति 'उष्ट्राद् वुञ्' इति वुञ्। 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इत्युष्ट्रीशब्दस्यापि॥ २५॥

**मानुषं वातपित्तासृगभिघाताक्षिरोगजित्।**
**तर्पणाश्च्योतनैर्नस्यैरहृद्यं तूष्णमाविकम्॥ २६॥**
**वातव्याधिहरं हिध्माश्वासपित्तकफप्रदम्।**

**मानुषमिति**। मानुषं मानुषीक्षीरं वातपित्तासृगभिघाताक्षिरोगजिद् भवति वातादिचतुष्टयमक्षिरोगस्य हेतुः। वातेन पित्तेनासृजाभिघातेन चोत्पन्नानां चाक्षिरोगाणां नाशनम्। केन प्रयोगेणेत्याह—तर्पणाश्च्योतनैर्नस्यैर्न तु पानादिना। तर्पणादीनि स्वे स्वेऽध्याये वक्ष्यमाणानि। नारीक्षीरं **बन्धनम्**। तथा **सुश्रुतोक्तिः**—

"कषायानुरसं नार्याः क्षीरं वर्चोनुबन्धनम्।"

---

१. 'म्लेशिनीनामि'ति मुद्रितसङ्ग्रहे।

इति । आविकं क्षीरमुष्णवीर्यं भवति । तथा अहृद्यं हृदयाय न हितं, तथा वात-व्याधिहरं हिध्मादिप्रदम् । आविकमिति अविशब्दात् स्वार्थे कप्रत्ययान्तात् 'तस्येदम्' इत्यण् ॥

**हस्तिन्याः स्थैर्यकृद् बाढमुष्णं त्वैकशफं लघु ॥ २७ ॥**
**शाखावातहरं साम्ललवणं जडताकरम् ।**

हस्तिन्याः पयो बाढमतिशयेन स्थैर्यकरं भवतीति हाटकोक्तिः । बाढमित्यादिना ऐकशफमुच्यत इत्यस्मद्गुरवोऽरुणदत्तश्च । एक एकविभागः शफः खुरो यासां बडवादीनां ता एकशफाः तासामिदमैकशफं पयः बाढमतिशयेनोष्णवीर्यं भवति । शाखावातहरं शाखा रक्तादयस्त्वक् च तेषु स्थितं हरति । शाखासु बाहूरुप्रभृतिषु वातं हरतीत्यरुणदत्तादयः । 'हरतेरनुद्यमनेऽच्' इत्यच् । तथा साम्ललवणं ईषदम्लमीषल्लवणं जडताकरं जडता अङ्गजाड्यं स्तैमित्यं तत्करणहेतुः । 'कृञो हेतु —' इत्यादिना हेतौ टः । अजादीनां क्षीरे सामान्योक्तगुणविपरीतो यो विशेषः, स तस्यापवादो विज्ञेयः ॥

**पयोऽभिष्यन्दि गुर्वामं युक्त्या शृतमतोऽन्यथा ॥ २८ ॥**

पय इत्यादि । आममपक्वं पयः अभिष्यन्दि श्लेष्मप्रकोपि मालिन्येन स्रोतसां स्रावकं वा । युक्त्या शास्त्रोक्तया शृतमतोऽन्यथा आमाद् विपरीतम् अनभिष्यन्दि लघु च स्यात् । लघिमा च पूर्वावस्थामपेक्ष्योच्यते । युक्तिर्योग उपायः । श्रपणयुक्तिरेवमुक्ता सङ्ग्रहे खरनादे च —

"अर्धोदकं क्षीरशिष्टमामाल्लघुतरं शृतम् ।"

इति । अन्यत्रापि —

"चतुस्त्रिद्विगुणं नीरं समं वा क्षीरपाचने ।
क्षीरावशिष्टं पक्तव्यं लघु तत् प्रतिलोमनम् ॥
अनौषधं सौषधं वा पक्वं लघु भवेत् पयः ।"

इति । सुश्रुतेनाप्युक्तं —

"निर्जलं तु शृतं क्षीरं चतुर्भागावशेषितम् ।
द्वित्रिभागावशिष्टं वा पयो बाष्कयणं हितम् ॥

श्रृतशीतं तु पित्तघ्नं श्रृतोष्णं कफवातजित् ।
तत्पादहीनं पित्तघ्नमर्धहीनं तु वातनुत् ॥''

इति ॥ २८ ॥

**भवेद् गरीयोऽतिश्रृतं धारोष्णममृतोपमम् ।**

**भवेदिति** । अतिश्रृतमतिशयेन पक्वं केवलपाके घनीभूतं भोज्यमिव सञ्जातं गरीयो गुरुतरं भवेत् । खरनादे चोक्तं—

"स्यान्निर्जलश्रृतं द्वित्रिचतुरष्टांशशेषितम् ।
यथा श्रृततमं सारं गुरु चाल्पतमं पयः ॥''

इति ।

''त्यजेद् विवर्णं ग्रथितं विगन्धं विरसं पटु ।
रक्तपित्तप्रशमनी वृष्या सन्तानिका गुरुः ॥''

इति सौश्रुते —

''मुहूर्तपञ्चकातीतं क्षीरं व्रजति विक्रियाम् ।
श्रृतं तद्द्विगुणात् कालादा दधित्वात् ततो विषम् ॥''

इत्यन्यत्र । धारोष्णं पयः अमृतोपमं पथ्यत्वेन । परतन्त्रोक्तिश्च —

''धारोष्णममृतं शीतं धाराशीतं त्रिदोषलम् ।
बाल्ये छागं पयः शस्तं गव्यमन्यत्र सर्वतः ॥''

इति ॥

अथ क्षीरविपाकत्वाद् दधिगुणान् निरूपयति —

**अम्लपाकरसं ग्राहि गुरूष्णं दधि वातजित् ॥ २९ ॥**
**मेदःशुक्रबलश्लेष्मपित्तरक्ताग्निशोफकृत् ।**
**रोचिष्णु शस्तमरुचौ शीतके विषमज्वरे ॥ ३० ॥**
**पीनसे मूत्रकृच्छ्रे च रूक्षं तु ग्रहणीगदे ।**
**नैवाद्यान्निशि नैवोष्णं वसन्तोष्णशरत्सु न ॥ ३१ ॥**
**नामुद्गसूपं नाक्षौद्रं तन्नाघृतसितोपलम् ।**
**न चानामलकं नापि नित्यं नो मन्दमन्यथा ॥ ३२ ॥**
**ज्वरासृक्पित्तवीसर्पकुष्ठपाण्डुभ्रमप्रदम् ।**

**अम्लेत्यादि** । अम्लौ पाकरसौ यस्य तदेवम्भूतं दधि भवति । तथा ग्राहि स्तम्भनम् तथा चोक्तं —

"भेदि तत् पिण्डितान् भावान् शकृदाद्यान् भिनत्ति यत् ।
विपरीतमतो ग्राहि तच्च स्तम्भनमुच्यते ॥"

इति ।

"दुग्धदध्नोर्विपाकोक्तिः पुरस्ताच्छ्रैष्ठ्यहेतुकी ।
रसकार्याद् विपाकस्य कार्यं श्रेष्ठतरं तयोः ॥"

तथा गुरूष्णं वातजिच्च । मेदआदीन् करोति । ननु पाकेऽम्लः शुक्रनाशनः इत्युक्तत्वाच्छुक्रकृत्त्वमयुक्तम् । ब्रूमः— स्नेहनबृंहणवातहरबलकरत्वादुपपन्नं शुक्रकृत्त्वम् । अग्निकृत्त्वमस्य रसपाकयोरम्लत्वादुष्णवीर्यत्वाच्च । वक्ष्यति च —

"किञ्चिद् रसेन कुरुते कर्म पाकेन चापरम् ।
गुणान्तरेण ॥"

इत्यादि । साधु रोचत इति रोचिष्णु, स्वस्मिन् रुचिं करोतीत्यर्थः । न रोचत एव केवलमन्यं चाहारं रोचयतीति । शस्तमरुचौ अरुचिव्याधेश्च हितमित्यर्थः । रोचते हि घृतपूरादि, न त्वरुचिं जयति । अरुचिघ्नं पटोलपत्रं, न तु रोचते । वक्ष्यति च —

'तिक्तः स्वयमरोचिष्णुररुचि'मित्यादि । रोचिष्णुत्वादेव चोच्चावचं व्यञ्जनपरिहृतैर्मांसमण्डकादिभिरपि तृप्तस्यापि दध्यभिलाष उत्पद्यत एव । अत एव चैतदाहारान्तेऽभ्यवहरन्ति । शीतक इति विषमज्वरविशेषणम् शीतपूर्वके विषमज्वरे सततादौ शस्तम् । यद्यपि शीतको वातश्लेष्मजस्तथापि वाताधिके पथ्यम् । उक्तं हि —

"अग्न्यनग्निकृतान् स्वेदान् स्वेदिभेषजभोजनम् ।"

इति । पीनसे । नासास्रावे वातपित्तकफसन्निपातजे शस्तं परिपाकात् पीनसानां शान्तिः । दधि च श्लेष्मलमपि परिपाककरमुष्णत्वात् स्रुतिरूपस्य स्त्यानकरत्वादिति । अथवा पूर्ववत् सामान्योक्तावपि यत्र योग्यं पीनसे वातिके तत्रैतदुपकल्प्यताम् । अनुक्तेष्वपि हि सामान्यप्रक्रमो वस्तुवशाद् विशेषेष्वेव परिणमति । तथाहि अत्रैवोपरिष्टाद् दुग्धकर्मसु व्यतीतं —

"श्रमभ्रममदालक्ष्मीश्वासकासातितृट्क्षुधः ।
जीर्णज्वरं मूत्रकृच्छ्रं रक्तपित्तं च नाशयेत् ॥"

इति । न च सर्वेष्वेव कासश्वासकृच्छ्रेषु पयः कार्मुकमिति । तथा ग्रहण्यां

रूक्षमुद्धृतोपरिभागं शस्तम् । अनेन च हेतुना दध्नः प्रकृतिस्थस्य स्निग्धत्वं युक्त्यैवोक्तम् । यतो ग्रहणीगदे रूक्षमुद्धृतस्नेहमुक्तम् । (ननु) वातजिदित्यने(न) नार्थः, यानि खलु द्रव्याणि बल्यस्निग्धवृष्यगुरूष्णानि तानि वातघ्नान्येव दृष्टानि । तस्माद् वातजिदिति न वाच्यम् । नैवम् । सक्तुमद्यसूर्यतापमन्दकादिषु व्यभिचारात् । तथाहि 'सक्तवो वातला वृष्या रूक्षा बलकरा'श्च । माद्वीकादि मद्यं हर्षणत्वाद् वृष्यं वातलं च । सूर्यतापश्चोष्णोऽपि सन् मारुतस्य वृद्धये । मन्दकं च स्निग्धाम्लगुरूष्णमपि त्रिदोषकरम् । इत्येवं व्यभिचारदर्शनाद् युक्तमुक्तं वातजिदिति । श्लेष्मपित्तरक्तकृत्त्वे अम्लपाकत्वादुष्णवीर्यत्वाच्चैवावगते पुनस्तद्ग्रहणमतिशयार्थम् । अन्येभ्योऽम्लद्रव्येभ्यो दध्येतान्यतिशयेन करोतीति । निशि कदाचिदपि नैवाद्यात् रात्रौ निषेधाद् दिवा भुञ्जीतेत्यर्थापत्त्या गम्यते । दिवा भोजने निषेधविषयं दर्शयति—नैवोष्णमग्न्युपतप्तम् । एवकारो रात्रावौष्ण्ये चात्यन्तनिषेधाय । तथा वसन्तोष्णशरत्सु नाद्यात् । अन्यर्तावपि मुद्गसूपादीनामन्यतमेन रहितं नाद्यात् । तत्र घृतसितोपलयोः समासेनैतयोर्योगेन पथ्यत्वमिच्छन्ति । मुद्गसूपादीनां तु मिश्रीभावो दध्ना जन्यमानस्य दोषस्य प्रतिबन्धनार्थं कल्प्यते रक्तपित्तवत् । यथा समीरणोल्बणे रक्तपित्ते तित्तिर्यादीनामौष्ण्यमुदुम्बरादिरसेन प्रतिबध्यते । अमुद्गसूपमिति वा पाठः । अनेकनञ्ग्रहणात् सर्वथापथ्यत्वं दर्शयति । अन्यथा मुद्गसूपादिसहितमद्यादिति वक्तुं युज्यते । अथवा प्रत्येकनञ्प्रयोगादेतद् गम्यते— एकेनापि संयुक्तं भोज्यमिति । नापि नित्यं नच सातत्येन भोज्यमुदर्के रोगाबहुत्वात् । वक्ष्यति च —'कीलाटदधिकूचिके'त्यादि । न च मन्दमजातं भोज्यम्, त्रिदोषलत्वात् । दुग्धावस्थाव्यतीतं दध्यवस्थामसंप्राप्तमन्तरावर्ति मन्दमित्युच्यते । केवलमपि दधि स्वल्पं कदाचिद् भुञ्जीतेत्यर्थादवगम्यते । अन्यथा केवलस्य गुणकथनं निष्फलमेव स्यादिति केचिदाहुः । अन्यथेत्यादिप्रशब्द एवं द्योतयति — विधिभ्रष्टं दधि निषेव्यमाणं प्रकर्षेण ज्वरादीन् ददातीति । दध्न उपरिभागे सरः अधो मण्डः एतद्गुणास्तु लाघविकत्वान्नेहोक्ताः । मुनिना च दर्शिताः—

"त्रिदोषकृन्मन्दजातं वातघ्नं दधि शुक्लम् ।
सरः श्लेष्मानिलघ्नस्तु मण्डः स्रोतोविशोधनः ॥"

इति ।

"विद्याद् दधिघृतादीनां गुणदोषान् यथाक्रमः ।"

इति वचनात् तेषां क्षीरतुल्यगुणत्वेऽपि परतन्त्रोक्ता विशेषाश्चानुक्ता वर्ण्यन्ते—

"दध्याजं कफपित्तघ्नं क्षयरोगविनाशनम् ।
दुर्नामश्वासकासेषु हितमग्नेश्च दीपनम् ॥
विपाके मधुरं वृष्यं रक्तपित्तप्रसादनम् ।
[1]बलसंवर्धनं स्निग्धं विशेषाद् दधि माहिषम् ॥
वातघ्नं कफकृत् स्निग्धं विशेषान्न च पित्तकृत् ।
कुर्याद् भक्ताभिलाषं च दधि यत् सुपरिस्रुतम् ॥
शृतात् क्षीराच्च यज्जातं गुणवद् दधि तद् स्मृतम् ।
वातपित्तहरं रुच्यं धात्वग्निबलवर्धनम् ॥"

इत्यादि ॥

दध्नः कार्यं तक्रमाह—

तक्रं लघु कषायाम्लं दीपनं कफवातजित् ॥ ३३ ॥
शोफोदरार्शोग्रहणीदोषमूत्रग्रहारुचीः ।
प्लीहगुल्मघृतव्यापद्गरपाण्ड्वामयान् जयेत् ॥ ३४ ॥

तक्रमित्यादि । तक्रं दण्डमथितस्य चतुर्थांशजलसहितस्य दध्नो विकार उद्धृतस्नेहम् । तक्रलक्षणमेवमुक्तं तन्त्रान्तरे—'तक्रमरिष्टमुदश्वित् पादाम्ब्वर्धाम्बु निर्जलमि'ति । तल्लघुत्वादिगुणयुक्तं भवति । तथा शोफादीनेकादश जयेन्नाशयेत् । घृतस्यातिपानादुत्पन्ना व्यापद् रोगो घृतव्यापत् । गरः कृत्रिमो विषविशेषः । तस्य निषेधविषयः शास्त्रान्तराद् ज्ञेयः ।

"नैव तक्रं क्षते दद्यान्नोष्णकाले न दुर्बले ।
न मूर्छाभ्रमदाहेषु न रोगे रक्तपैत्तिके ॥
शीतकालेऽग्निमान्द्ये च कफोत्थेष्वामयेषु च ।
मार्गावरोधे दुष्टे च वायौ तक्रं प्रशस्यते ॥"

इति सुश्रुते । तथोक्तं—

"तक्रमामं कफं कोष्ठे हन्ति कण्ठे करोति च ।
पीनसश्वासकासादौ सिद्धमेवोपयोजयेत् ॥"

इति ।

---

१. 'बलासवर्धनमिति मुद्रितसुश्रुते ।

"मन्दजातं मरुत्कोपि रूक्षाभिष्यन्दि दुर्जरम् ।
अतिजातं भृशाम्लौष्ण्यतैक्ष्ण्यात् पित्तकरं परम् ॥
दोषघ्नमुद्धृतस्नेहं सस्नेहमपि शोफजित् ।
वातेऽम्लं सैन्धवोपेतं स्वादु पित्ते सशर्करम् ॥
हितं तक्रं कफे साम्लं व्योषसौवर्चलान्वितम् ।
तक्राल्लघुतरो मण्डो दुर्जरा तक्रकूर्चिका ॥"

इति ।

"उष्णं शुक्रक्षयकरं गवां तक्रं तु पित्तलम् ।
माहिषं कामिलाहन्तृ शीतं छागादि दोषलम् ॥"

॥ ३४ ॥

**तद्वन्मस्तु सरं स्रोतःशोधि विष्टम्भजिल्लघु ।**
**नवनीतं नवं वृष्यं शीतं वर्णबलाग्निकृत् ॥ ३५ ॥**
**सङ्ग्राहि वातपित्तासृक्क्षयार्शोऽर्दितकासजित् ।**

**तद्वदित्यादि** । मस्तु दध्नः सञ्जातसलिलम् । दध्नि चिरस्थिते सलिलोत्पत्तिः । मस्तु तद्वत् तक्रवद् गुणैर्वेद्यं, तक्रगुणोपेतमित्यर्थः । तथा सरं मलभेदि, स्रोतःशोधि, तक्रस्य स्रोतःशोधकत्वेऽपि मस्तुनोऽतिशय इति । तथा विष्टम्भजित् अन्तःप्रदेशे पिण्डीभूतस्य वायोः सञ्चरणं विष्टम्भः ।

"अम्लं कषायानुरसमवृष्यं कफवातजित् ।
आह्लादनं प्रीणनं च भिनत्त्याशु मलं च तत् ।
बलमावहति क्षिप्रं मस्तु भक्तस्य रोचकम् ॥"

इति सुश्रुते । लघ्वित्यादिना नवनीतगुणं ब्रूते । तक्रस्य लघुत्वेनैव मस्तुनो लघुत्वसिद्धेः । अपिचोक्तं भोजेन —

"सद्यो दण्डाहताज्जातं नवनीतं नवं लघु ।
सौकुमार्यकरं चैव सकषायं हिमं परम् ॥"

इति लघुत्वदर्शनाच्च । अन्ये मस्तुन एवेति वदन्ति पुनर्लघुत्वकथनमतिशयद्योतनायेति वदन्तः । नवं नवोद्धृतं नवनीतं लघ्वादिगुणं शीतं शीतवीर्यं सङ्ग्राहि मलग्राहि । सांग्राहीत्यपपदम् । वातादिजिच्च । सङ्ग्रहे चोक्तं —

"शीतं स्वादु कषायाम्लं नवनीतं नवोद्धृतम् ।"

इत्यादि ॥

क्षीरोद्भवं तु सङ्ग्राहि रक्तपित्ताक्षिरोगजित् ॥ ३६ ॥

क्षीरोद्भवं तु क्षीरादेव जातं यत्, क्षीरमेव मथित्वोत्पादितं नवनीतं संग्राहि रक्तपित्ताक्षिरोगजिच्च भवति ॥ ३६ ॥

शस्तं धीस्मृतिमेधाग्निबलायुःशुक्रचक्षुषाम् ।
बालवृद्धप्रजाकान्तिसौकुमार्यस्वरार्थिनाम् ॥ ३७ ॥
क्षतक्षीणपरीसर्पशस्त्राग्निग्लपितात्मनाम् ।
वातपित्तविषोन्मादशोषालक्ष्मीज्वरापहम् ॥ ३८ ॥
स्नेहानामुत्तमं शीतं वयःसंस्थापनं परम् ।
सहस्रवीर्यं विधिभिः शृतं कर्मसहस्रकृत् ॥ ३९ ॥

शस्तमित्यादि । शृतं तु धीप्रभृतीनामाग्निग्लपिता(त्मा)न्तानां शस्तं हितम् । धीर्वस्तुग्रहणशक्तिः । स्मृतिरतीतविचारशक्तिः । मेधा वस्तुविवेकशक्तिः धारणाशक्तिर्वा । प्रजाद्यर्थिनां च शस्तं, प्रजा अपत्यं, शुक्रस्य सफलताकरमिति यावत् । तथा वातादिघ्नम् । तथा स्नेहानां तैलादीनामुत्तमं श्रेष्ठम् । वयःसंस्थापनं जरया विना वयः स्थापयतीत्यर्थः । सहस्रवीर्यमिति सहस्रशब्दोऽनेकार्थः, अनेकशक्तीत्यर्थः । कथं, विधिभिर्योगसंस्कारादिभिः शृतं संस्कृतं सहस्रवीर्यमनेकशक्ति सम्पद्यत इत्यर्थः । यावद्भिर्द्रव्यान्तरैरस्य संयोगः संस्कारो वा तावन्ति शक्त्यन्तराणि स्वगुणमजहदेव धारयतीति । अत एव हेतोः सहस्रशब्दोऽनेकार्थः । अन्यथा द्रव्याणामानन्त्यात् कथं दशशतवाची सहस्रशब्द उपपद्यते । विधिग्रहणाच्च निसर्गेणेति दर्शयति । अन्ये त्वेवं व्याचक्षते—सहस्रशब्दो दशशतसंख्यावाच्येव । सहस्रपाकात् परं पाको नास्तीति । सहस्रपाक्यं हि सर्पिरुक्तं न सहस्रपाकात् परेण । तत्र चेदं सहस्रपाक्यत्वे प्रयोजनं पाकसहस्रं यावच्छक्त्यन्तरारोपणमस्य सम्भाव्यते । नातः परम् । अन्यथा सहस्रपाकात् परेण किञ्चिदिति पाको नोक्तः । तस्मादासहस्रं पाकानां शक्त्यन्तराण्यारोहन्ति पाका न ततः परेणेति । तथा कर्मसहस्रकृत् अनेककार्यकृत् । 'वयसः स्थापनं परम् । सहस्रवीर्यं विधिभिर्घृतमि'ति वा पाठः । विधिभिः शृतमिति केचित् पठन्ति स्नेहानामुत्तममिति घृतपर्यायं वदन्तः । "स्नेहानामुत्तमं सर्पिर्वयसः स्थापनं परम् । सहस्रवीर्यं विधिभिः शृतमि"त्यन्ये पठन्ति । अन्ये सहस्रवीर्यमिति घृतपर्यायं वदन्ति । तथाचोक्तममरमालायां—

"सहस्रवीर्यशब्देन दूर्वा सर्पिश्च कथ्यते ।
पिबरी चैव सोमश्च मयूरस्य शिखा तथा ॥"

इति । तथा प्रोक्ते विधिभिरित्यत्र श्रुतमित्यध्याहारश्च न भवति । अपिच विधिभिः श्रुतं कर्मसहस्रकृदित्यत्र पूर्वोक्तः सकलोऽप्यर्थः प्राप्नोति ॥ ३७–३९॥

**मदापस्मारमूर्च्छायशिरःकर्णाक्षियोनिजान् ।**
**पुराणं जयति व्याधीन् व्रणशोधनरोपणम् ॥ ४० ॥**

मदेत्यादि । पुराणघृतं मदादीन् जयति, शिरआदिजान् व्याधींश्च । व्रणानां शोधनं पूयपैच्छिल्यादिकं शोधयति, तथा व्रणान् रोपयति ।

"पूर्वोक्तांश्चाधिकान् कुर्याद् गुणांस्तदमृतोपमम् ।
तद्वच्च घृतमण्डोऽपि रूक्षस्तीक्ष्णस्तनुः सरः ॥"

इति सङ्ग्रहे । पुराणमतीतबहुकालं पञ्चदशादिवर्षस्थितम् । आगमो हि—

"पञ्चवर्षात् प्रभृति तु जीर्णमित्युपचर्यते ।
वर्षमेकादशं प्राप्य सर्वरोगहरं परम् ॥"

इति । अन्यत्रापि —

"पञ्चसंवत्सरातीतं पुराणं घृतमिष्यते ।
यावत्कालं (स्थितं) तावत् तस्य शक्तिर्विवर्धते ॥"

इति । वर्षशतस्थितं पुराणसर्पिरिति केचित् । उक्तं च कश्यपेन —

"स्थितं वर्षशतं श्रेष्ठं कुम्भसर्पिस्तदुच्यते ।"

इति । महिष्यादीनां घृतं स्वकारणक्षीरसदृशम् । तथाचागमः —

"सर्पिष्यजाविमहिषीक्षीरवत् तानि निर्दिशेत् ।"

इति ॥ ४० ॥

**बल्याः कीलाटपीयूषकूचिकामोरटादयः ।**
**शुक्रनिद्राकफकरा विष्टम्भिगुरुदोषलाः ॥ ४१ ॥**

बल्या इत्यादि । कीलाटादयः क्षीरविकारास्तद्विकृतिविकाराश्च । अल्पक्षीरे बहुना तक्रेण कृतः कीलाटः । सद्यःसूतायाः क्षीरकृतः पीयूषः ।

"दधितक्रकृता कूची कूचिका च निगद्यते ।
शारिकावाशितं तद्वत् कूचिचीति च कथ्यते ॥"

इति । मोरटः क्षीरसदृशः सतक्रेण पयसा कृतः । आदिशब्देन क्षीरशाक-तक्रपिण्डादयो गृह्यन्ते । कीलाटादयो बल्यत्वादिगुणाः । एषामभिसादनत्वम-नुक्तमपि बल्यत्वेन शुक्रकरत्वेन विष्टम्भित्वेन दोषलत्वेन चावगम्यते । सङ्ग्रहे त्वेषां स्पष्टार्थं वह्निसादनत्वमुक्तम् ॥ ४१ ॥

श्रेष्ठार्थं निर्धारयति—

गव्ये क्षीरघृते श्रेष्ठे निन्दिते चाविसम्भवे ।

गव्य इति । गव्ये गोसम्भवे क्षीरघृते श्रेष्ठे । आविके च निन्दिते । घृतस्य च क्षीरविकारोपलक्षणार्थत्वाद् दधितक्रमस्त्वादीनामपि गव्यानामेव श्रेष्ठत्वं वेद्यम् । अत एवाविसम्भवानां दधितक्रादीनामधमत्वं वेद्यं न क्षीरघृतयोरेव । अत एव सुस्पष्टं कृत्वोक्तं सङ्ग्रहे—

"विद्याद् दधिघृतादीनां गुणदोषान् यथापयः ।"

इति । अस्य हृदयार्थः दधिघृतादीनां पयोगुणानतिक्रमेण गुणान् विद्यात् । यथा स्वादुपाकरसमित्यादिना सामान्येन क्षीरगुणा उक्तास्तद्वद् दध्यादीनामपि सामान्येनैव गुणा उक्ताः । विशेषाभिलाषे तु दध्यादीनां सत्स्वपि सामान्येषु प्रकृतिभूतं यत् क्षीरं तद्गुणान्वयोऽपि ग्राह्यः । अजादीनां दधितक्राद्यनिरूपणं क्षीरगुणख्यापनाय । उक्तवांश्च —

"विद्याद् दधिघृतादीनां गुणदोषान् यथा पयः ।"

इति । लघुक्षीरजातं दधि लघु, गुरुक्षीरजातं गुरु, त(द्व)न्मस्तु तक्रं सर्पिः । हरिश्चन्द्रेणैवमुक्तम् —

"अजाविमहिषादीनां प्रायः क्षीरसमं दधि ।
तक्रं दधिगुणं सर्पिरथो तक्रगुणं मतम् ॥"

इति । गव्यमिति 'गोपयसोर्यदि'ति यत् । बाहुल्येन क्षीरनिर्देशात् क्षीरवर्गोऽयम् । दधिनवनीतादीनां तु तद्विकारभूतत्वात् । इति क्षीरवर्गः ॥

सरगुरुस्निग्धबृंहणादिगुणसामान्याद् बहूपयोगित्वाच्च क्षीरवर्गादनन्तरमिक्षुवर्ग आरभ्यते —

इक्षोः सरो गुरुः स्निग्धो बृंहणः कफमूत्रकृत् ॥ ४२ ॥
वृष्यः शीतोऽस्रपित्तघ्नः स्वादुपाकरसो रसः ।
सोऽग्रे सलवणो दन्तपीडितः शर्करासमः ॥ ४३ ॥

इक्षोरित्यादि । इक्षो रस इति सम्बन्धः । सरत्वादिगुणयुक्तः । सरः शकृद्भेदी । बृंहणो वक्ष्यमाणलक्षणः । तथा कफमूत्रकृत् । अनुक्तमप्यस्य पवनहन्तृत्वं वेद्यं स्निग्धबृंहणवृष्यमधुरादिगुणयोगात् । वचनं हि — 'वृष्यः शीतः पवनजि'दिति । भुक्ते हि समीरणकृत्त्वमस्य दृष्टम् । तथाच सङ्ग्रहे — 'भुक्ते वातप्रकोपन' इति । स च रसोऽग्र इक्षुप्रान्ते जातः सलवण ईषल्लवणः । सुश्रुते चोक्तम् —

"अतीव मूले मधुरो मध्ये मधुर एव च ।
अग्रे चाक्षेषु च ज्ञेय इक्षूणां लवणो रसः ॥"

इति । मूले च सलवणत्वमुक्तं परतन्त्रे —

"मूले चाग्रे च विज्ञेय इक्षूणां लवणो रसः ।
मध्ये चातीव मधुरो बृंहणो वह्निमान्द्यकृत् ॥"

इति । पाषाणादिना संक्षुण्णस्येक्षोः सद्य एव यो रस उत्पद्यते, तस्यैते यथोक्ता गुणा वेद्या नान्यथापीडितस्येक्षुरसस्य । यतो दन्तपीडितस्यान्यथागुणो निर्दिश्यते 'दन्तपीडितः शर्करासम' इति, यन्त्रकालाद्यनुपहतत्वात् । दन्तपीडितः शर्करया समः । अन्ये दन्तपीडितस्यैव सरत्वादिकं गुणमाहुरीषदादिनिपीडितस्यापि किञ्चित्कालविधृतिं मन्यमानाः ॥ ४३ ॥

यान्त्रिकस्त्वन्यगुण एवेत्याह —

**मूलाग्रजन्तुजग्धादिपीडनान्मलसङ्करात् ।**
**किञ्चित्कालविधृत्या च विकृतिं याति यान्त्रिकः ॥ ४४ ॥**

**विदाही गुरुविष्टम्भी तेनासौ तत्र पौण्ड्रकः ।**
**शैत्यप्रसादमाधुर्यैर्वरस्तमनु वांशिकः ॥ ४५ ॥**

मूलेत्यादि । मूलं चाग्रं च जन्तुजग्धादयश्च । जन्तुजग्धं कृमिभक्षितम् आदिशब्देन त्वग्जटाग्रहणम् तेषां तथाविधानामिक्षूणां पीडनात् । तथा मलसङ्करान्मलमिश्रणात् । तथा किञ्चित्कालैर्विधृत्या च किञ्चित्कालं स्थितत्वाद्, यान्त्रिके रसे स्वल्पकालविधृतिर्विलम्बनं दृष्टम् । तदेतैः कारणैर्यान्त्रिको रसो विकृतिं याति स्वभावादन्यथात्वं प्राप्नोति । प्रागवस्थात्यागेन दशान्तरप्राप्तिर्विकृतिः । यथा—

गुरुरधिकगुरुः सम्पद्यते अविदाही विदाही अविष्टम्भी विष्टम्भीत्येवंविधास्य विकृतिः । यान्त्रिकश्चक्रादिजातः । यान्त्रिकस्य रसस्य बाहुल्येन लोके लत्तादिसहितस्य पीडनात् कालविलम्बोपलब्धेश्च ग्रन्थकृदेवमवोचत् । हेतुनिर्देशो हेत्वभावात् कार्याभावप्रतिपादनार्थः । विकृतिं याति विकृत्यभावेऽपि दन्तपीडितस्य यथोत्कृष्टगुणत्वं, तथा न प्रायशोऽपरस्य । तथोक्तमौरभ्रे—

"दन्तैः संपीडितः पौण्ड्रो यथा दाहादिकान् जयेत् ।
मत्स्यण्डिकापि न तथा किं पुनर्यान्त्रिको रसः ॥"

इति । यतो विकृतिं याति तेन हेतुनासौ यान्त्रिको रसो विदाह्यादिगुणः संपद्यते । विदाही सौम्यभावानां विदहनशीलः । यन्त्रपीडितो हि किञ्चित्कालावस्थानादम्लतयानुक्लिष्टत्वाद् विदाहं करोति । अथवा जाठराग्निसंयोगाद् यः पाकं गच्छन् मध्यमायामेवावस्थायां विदह्यमानः पित्तं कुर्वंश्चिरमवतिष्ठते न द्रागेव जरां याति गुरुत्वात् । अथवा वस्तुस्वभावात् स विदाहगुणयुक्तो भण्यते । तस्मादतिगुरुत्वाद् विदाही कथितः । उक्तं च —

"शालिपिष्टमयं सर्वं गुरुभावाद् विदह्यते ।"

इति । विष्टम्भी विष्टम्भकरः । सशब्दस्य वायोः सञ्चरणं विष्टम्भः ।

तत्र तेषु इक्षुरसेषु मध्ये पौण्ड्रकः पुण्ड्रकस्य रसः शैत्यादिभिर्हेतुभूतैर्वरः सर्वेक्षुरसेभ्यः श्रेष्ठः । शैत्यं शीतभावः । प्रसादो रसस्य प्रसन्नता । अल्पवर्ती श्वेतवर्णः पुण्ड्रेक्षुः पुण्डरीकनामा शकदेशे प्रसिद्धः । तमनुवांशिकः । हीनार्थे अनुशब्दस्य 'कर्मप्रवचनीययुक्ते द्वितीये'ति द्वितीया । शैत्यादिभिः पुण्ड्रकाद्धीनो वांशिक इत्यर्थः । वंशाकारो वंशेक्षुरिति काश्यपप्रसिद्धः तद्भाषयैव ॥ ४४, ४५ ॥

**शातपर्वककान्तारनैपालाद्यास्ततः क्रमात् ।**
**सक्षाराः सकषायाश्च सोष्णाः किञ्चिद्विदाहिनः ॥ ४६ ॥**

शातेति । शातपर्वकादयश्च रसास्ततो वांशिकाद् रसात् क्रमादुत्तरोत्तरं शैत्यादिभिर्हीनाः । ते च शातपर्वकादय ईषत्क्षारत्वेन युक्ता ईषत्कषायरसा ईषदुष्णवीर्या ईषद्विदाहिनश्च । शतपर्वकः स्थूलो रक्तकाण्डः । अल्पकाण्डत्वात् तद्भाषयैव प्रसिद्धः । तस्य रसः शातपर्वकः । कान्तारो धूम्रकाण्डो भस्मेक्षुरिति प्रसिद्धः । तस्य रसोऽपि कान्तारः । नैपालो नीलेक्षुरिति प्रसिद्धः । तस्य रसो

नैपालः । कान्तारनैपालौ देशविशेषाविति हृद्याकारः । आदिशब्देन क्षुद्रेक्षु-पिशाचेक्षू ॥ ४७ ॥

**फाणितं गुर्वभिष्यन्दि चयकृन्मूत्रशोधनम् ।**
**नातिश्लेष्मकरो धौतः सृष्टमूत्रशकृद् गुडः ॥ ४७ ॥**
**प्रभूतकृमिमज्जासृङ्मेदोमांसकफोऽपरः ।**

फाणितमिति । फाणितं क्षुद्रगुडीभूत इक्षुरसो गुरु अतिशयेन गुर्विति वेद्यं, कारणस्य रसस्य गौरवसिद्धेः । अभिष्यन्दि स्रुतिरूपश्लेष्मकारि । चयकृद् दोषाणाम् । स्वधाम्न्येव वृद्धिश्चयः । त्रिदोषकरमित्यर्थः । मूत्रशोधनं मूत्रमति-वाहयति ॥

इक्षुरसो घनीकृतो गुडो धौतः शुद्धः संस्कारादिना निर्मलो नाति-श्लेष्मकरः किञ्चित्कफकर इत्यर्थः । मूत्रं शकृच्च सृजति बहिः क्षिपति । अपरो-ऽधौतः समल इति यावत् । प्रभूताः कृम्यादयो यस्य स एवम् । कारणे कार्योपचाराद् गुडोऽप्येवमुक्तः । यथा नड्वलोदकं पादरोग इति । प्रभूतान् कृम्यादीन् करोतीत्यर्थः । 'धौतः शुद्धरसजातः, अधौतोऽधौतरसोद्भूत' इति हृद्याकारः ॥

**हृद्यः पुराणः पथ्यश्च नवः श्लेष्माग्निसादकृत् ॥ ४८ ॥**

हृद्य इत्यादि । गुड इत्यनुवर्तते । पुराणो गुडो हृद्यो हृदयाय हितः । तथा पथ्यः अन्तर्मध्यबहिर्मार्गाणां हितः । नवो गुडः श्लेष्माग्निसादौ करोति ॥ ४८ ॥

**वृष्याः क्षतक्षीणहिता रक्तपित्तानिलापहाः ।**
**मत्स्यण्डिकाखण्डसिताः क्रमेण गुणवत्तमाः ॥ ४९ ॥**

वृष्या इति । तिस्रः शर्करा मत्स्यण्डिकाद्याः —

"अतिशुद्धेक्षुरसजा वह्निपाकाद् घनीकृताः ।
मत्स्यण्डिका खण्डसितास्तथान्याश्चापि शर्कराः ॥
स्थूलमध्यकृशाङ्गीनां तिसृणामत्र सङ्ग्रहः ।"

शुक्लकपोतपिण्डिकामत्स्यण्डिका । खण्डः खण्डरूप एव । सिता तादृगेव संस्थानतो वर्णतश्च । (विलीनेऽपि सितायाः?) मत्स्यण्डिकाद्यास्तिस्रः शर्करा वृष्याः । तथा क्षीणक्षतहिता रक्तपित्तापहा अनिलापहाश्च । तथा क्रमेण

गुणवत्तमाः । पूर्वस्मादुत्तरोत्तरं वृष्यत्वादिभिरतिशयेन युक्ता इति । मत्स्यण्डिका गुडाद् धौताद् गुणवती । ततोऽपि संस्कारेण गुणैश्चाधिकः खण्डः । ततोऽपि सितशर्करा गुणवत्तमा निर्मलतमत्वात् । गुणवत्तमा इति गुणवतीशब्दस्य तमप्प्रत्यये पुंभावोऽत्र पक्षे वक्तव्य इति । गुणवत्तरा इति वा पाठः । मत्स्यण्डिकाया लघवश्च ।

"मत्स्यण्डिकायास्तु लघुस्तु खण्डः
खण्डात् तु लघ्वी त्वथ शर्करा स्यात् ।"

इति तन्त्रान्तरवचनात् ॥ ४९ ॥

**तद्गुणा तिक्तमधुरा कषाया यावशर्करा ।**

तदित्यादि । यावशर्करा यवनशर्करेति हूणादिषु प्रसिद्धा । या दुरालभारससम्मितेनेक्षुरसेन किंपाकमूलमिन्धनं कृत्वा क्रियते तत्रैव प्रसिद्धा । अथवा —

"चूर्णैर्यवानां सम्मिश्रा कुक्कुटाण्डरसेन च ।
क्रियते या सूदमुख्यैः संप्रोक्ता यावशर्करा ॥"

इति सूदशास्त्रे । 'दुरालभारसेन कृते'ति हाटकः । 'धन्वयावकषायसाधिता शर्करा यावशर्करे'त्यस्मद्गुरवः । तथा तद्गुणा मत्स्यण्डिकादिगुणा, तिक्तमधुरकषायरसा च ॥

**दाहतृट्च्छर्दिमूर्छासृक्पित्तघ्नयः सर्वशर्कराः ॥ ५० ॥**

दाहेत्यादि । सर्वशर्करा हि ताश्चान्या(श्च) दाहादिनाशनाः । सर्वाङ्गीणस्तीव्रः सन्तापो दाहः ॥ ५० ॥

वरावरत्वं निर्धारयति—

**शर्करेक्षुविकाराणां फाणितं च वरावरे ।**

शर्करेत्यादि । इक्षुविकाराणां मध्ये शर्करा फाणितं च वरावरे भवतः । क्रमेण शर्करा श्रेष्ठा फाणितमवरम् ॥

शर्करायोनिप्रसङ्गेन मधुनोऽपि गुणानाह —

**चक्षुष्यं छेदि तृट्श्लेष्मविषहिध्मास्रपित्तनुत् ॥ ५१ ॥**
**मेहकुष्ठकृमिच्छर्दिश्वासकासातिसारजित् ।**
**व्रणशोधनसन्धानरोपणं वातलं मधु ॥ ५२ ॥**

**रूक्षं कषायमधुरं तत्तुल्या मधुशर्करा ।**
**उष्णमुष्णार्तमुष्णे च युक्तं चोष्णैर्निहन्ति तत् ॥ ५३ ॥**

चक्षुष्यमित्यादि । मधु चक्षुषो हितं बाह्याभ्यन्तरप्रयोगेण । तथा छेदि लीढं तैक्ष्ण्याद् देहे पिण्डितान् भावान् छिनत्ति विभजते । अथवा छेदीत्यु-भयथा— आश्च्योतनव्रणलेपादावुपयुक्तम्, तथाभ्यवहारे तृडादिजिद् मेहादि-जिदिति च । प्रायेणाभ्यवहारविषयमेव । व्रणशोधनादिकं बाह्यविषयमेव । प्रायश आलिप्तं व्रणानां शोधनं सन्धानं रोपणं च । शोधनं पूयपैच्छिल्या-दिप्रेरकम् । सन्धानं द्वौ व्रणौष्ठावेकीकरोति । रोपणं प्रसिद्धमेव । तथा वातलमित्येतदभ्यवहारविषयमेव । अथवा वातलं बाह्याभ्यन्तरप्रयोगेण । अन्ते व्यस्तश्रुतत्वात् । चक्षुष्यं छेदीत्यादिनास्य मधुनः कर्मनिर्देशः । रूक्षं कषायमधु-रमित्यनेनास्य रूपनिर्देशः । लाघवाच्चात्र मधुभेदा नोक्ताः, सङ्ग्रहे तूक्ताः —

"भ्रामरं पौत्तिकं क्षौद्रं माक्षिकं तद्यथोत्तरम् ।
वरं जीर्णं च तेष्वन्त्ये द्वे एव विनियोजयेत् ॥

इति ।

"स्याद् भ्रामरं शुक्लवर्णं कृष्णवर्णं तु पौत्तिकम् ।
क्षौद्रं तु विमलं विद्यात् तैलाभं माक्षिकं मतम् ॥"
"भ्रामरं तर्पणं स्वादु त्रिदोषं पौत्तिकं विदुः ।
परं तु गुर्वभिष्यन्दि क्षौद्रं रूक्षं मनाग् गुरु ॥
माक्षिकं लघ्वपवनं मधुरं शस्यते व्रणे ।
गरीयः स्वाद्वभिष्यन्दि नवं जीर्णमतोऽन्यथा ॥
मण्डः पुराणो मधुरस्तीक्ष्णो रूक्षो लघुस्तनुः ।"

इति । तथा सङ्ग्रहे कटुपाकित्वगुरुत्वशैत्यविषान्वयित्वविरुद्धोपक्रमत्वयोग-वाहित्वादीन् गुणानवोचत् —

"विषवृक्षलतादीनां पुष्पेभ्योऽपि यतो मधु ।
कुर्वते ते स्वयं यच्च सविषा भ्रमरादयः ॥
विषान्वयित्वं तेनास्य मधुनः परिकल्प्यते ।
गुरुरूक्षकषायत्वाच्छैत्याच्चाल्पं हितं मधु ॥

---

१. 'क्ल क्ष', २. 'पै' ख. पाठः.

न हि कष्टतमं किञ्चित् तदजीर्णाद् यतो नरम्।
उपक्रमविरोधित्वात् सद्यो हन्याद् यथा विषम्॥

नानाद्रव्यरसत्वाच्च योगवाहि परं मधु।
वृष्ययोगैरतो युक्तं वृष्याणामुत्तमं मतम्॥"

इति। भ्रामरपौत्तिकयोर्विषान्वयित्वं मदकरत्वं च। कटुपाकत्वं सर्वस्यापि। ननु मधुनो नानाद्रव्यात्मकत्वेन किमिति वातलमिति गृह्यते। ब्रूमः—तद्धि पाकेन पद्मादिभ्यः क्रियते। तानि च कषायाणि। कषायत्वे सति गुरुत्वशैत्यं वातरु-त्वेनानुगतम्। अतः कारणविशेषाद् युज्यते गुणक्रियाविशेषः। इत्थं च तदेव यथा रूक्षैर्द्रव्यैर्युक्तं यथा रौक्ष्यकरं न तथा स्निग्धादियुक्तं स्नेहादि करोति। वृष्यत्वं चास्य स्रोतोविशुद्धिकरत्वाद् वृष्यतां करोतीति नैयासिकाभिप्रायः। अथ वा योगवाहित्वाद् वृष्यत्वम्। वचनं हि—

"नानाद्रव्यात्मकत्वात्तु योगवाहि परं मधु।
वृष्ययोगैरतो युक्तं वृष्यतामनुवर्तते॥"

इति। योगवाहित्वं नाम स्वगुणापरित्यागे(ना? नां)शेन सादृश्यात् परस्य शक्तिपरिपूरणम्। कथम्। स्वामिकृत्याविरोधेन भृत्यः स्वं च प्रयोजनं देह-यात्रादिकं कुर्वन् यथा लोकेऽत्र दृश्यते।

"योगवाहि तथा द्रव्यं संयुक्तस्य प्रयोजनम्।
उद्दीपयत् तथा स्वीयमविरुद्धं करोत्यपि॥"

तन्मधु शैत्याद् गुरुत्वादल्पमेवोपयोज्यम्। उपक्रमविरोधित्वात् तदजीर्णे। तथा हि— अजीर्णे ह्युष्णोदकपानादि विहितं, तच्च मधुनो विरुद्धम्। अथवा शीता क्रिया क्रियेत, सा ह्यजीर्णं वर्धयेदिति।

"वातलं वातकोपेऽपि वर्षासु मधु शस्यते।
त्रिदोषघ्नं मधु प्रोक्तं केचिच्छंसन्ति वातलम्॥"

तत्तुल्येत्यादि। भ्रामरादिभिः क्वथितैर्या शर्करा क्रियते सा मधुशर्करा। अन्ये मधुना सम्मिश्रेण क्वथितेनेक्षुरसेन कृता मधुशर्करेति वदन्ति। मधुना भाविता शर्करा मधुशर्करेत्यन्ये। तत्तुल्या मधुसमानगुणा।

तच्च मधु उष्णमग्न्यातपाभ्यां युक्तं सन्निहन्ति मारयति । तथोष्णार्तं पुरुषं निहन्ति । उष्णे च काले देशे चोपयुक्तं, तथा चोष्णैरुष्णस्पर्शैराहारादिभिर्युक्तं सन्निहन्ति ॥ ५३ ॥

उष्णस्य मधुनः प्रयोगविषयमाह —

**प्रच्छर्दने निरूहे च मधूष्णं न निवार्यते ।**
**अलब्धपाकमाश्वेव तयोर्यस्मान्निवर्तते ॥ ५४ ॥**

**प्रच्छर्दन इत्यादि** । उष्णमुष्णस्पर्शमपि मधु वमननिरूहयोर्न निवार्यते न निषिध्यते । तत्र युक्तिमाह— यस्मात् कारणात् तयोर्वमननिरूहयोरलब्धपाकमपक्वमेवाशु निवर्तते पुनरागच्छति । इतीक्षुवर्गः ॥ ५४ ॥

सर्पिषोऽनन्तरमेव स्नेहसामान्यात् तैलवर्गे वक्तव्ये गुडस्य समानरसवीर्यविपाककर्मत्वात् प्रायेण चाभ्यवहारद्रव्येषु भक्ष्यभोज्येष्वस्यैव तैलेभ्यः सुतरामुपयोगादिक्षुवर्गोऽन्तर्निर्दिष्टः । शर्करामधुनोर्मद्याकारत्वान्मद्ये प्राप्तेऽपि भूरिजनोपयोगित्वाच्च मद्यात् प्राक् तैलं वक्तव्यमित्याह — द्रवत्वात् तैलवर्गारम्भ इति हाटकः

**तैलं स्वयोनिवत् तत्र मुख्यं तीक्ष्णं व्यवायि च ।**
**त्वग्दोषकृदचक्षुष्यं सूक्ष्मोष्णं कफकृन्न च ॥ ५५ ॥**

**तैलमित्यादि** । तैलभाषासामान्यात् सर्वस्थावरस्नेहानां तैलसंज्ञा । सर्वं तैलं स्वयोनिवत् स्वकारणसमगुणं भवति । यतो यदभिनिर्वृत्तं तत्स्वरूपमेव तदित्यर्थः । तत्र तेषु तैलेषु मध्ये मुख्यं मुखे भवं मुख्यं श्रेष्ठं तिलोद्भवं तैलं, तिलस्येदं तैलमिति तद्धितः । ततः शब्दे मुख्यत्वमस्य, अनेकगुणयोगादर्थतोऽपि मुख्यत्वम् । तत् तीक्ष्णं शीघ्रकारि तथा व्यवायि व्याप्तिशीलं तथा त्वग्दोषकृत् पानाभ्यासेन त्वचं दूषयति, अभ्यङ्गेन त्वग्दोषं कृन्ततीति वा । 'कृती छेदने' इत्यस्य धातोः प्रयोगः । अचक्षुष्यं चक्षुषो हितं न भवति । तैलस्योपयोगादेव चक्षुष्यत्वम् । सूक्ष्मं सूक्ष्मस्रोतोगामि, उष्णमुष्णवीर्यम् । स्वयोनिवदित्यतिदेशेनैव सिद्धे पुनरुष्णग्रहणमतिशयद्योतनाय । प्रायशस्तिलोद्भवत्वाच्छ्लेष्मकरत्वं प्राप्तमित्याह — कफकृन्न चेति । कफं च न करोति । सङ्ग्रहेऽप्युक्तं —

"मेध्यास्तिलः स्पर्शशीतो मेध्यं तैलं खलो हिमः ।
तस्यैव श्लेष्मकर्तृत्वं न तैलस्य खलस्य वा ॥"

इति । दाकरस्त्वायुर्वेदावतारेऽभिजगे —

"विपाके कटुकं तैलं वातघ्नं कफपित्तकृत् ।"

इति । इत्युभयमतद्योतनायात्राचार्यः 'कफकृन्न च' इत्युक्तवान् । किञ्चित् कफं करोतीत्यर्थः । उक्तं च सारमुष्टौ —

"किञ्चित् कफकृतं तैलं पित्तकृद् वातनाशनम् ।
त्वग्दोषकृदचक्षुष्यं पानेऽभ्यङ्गे तयोर्हितम् ॥"

इति ॥ ५५ ॥

**कृशानां बृंहणायालं स्थूलानां कर्शनाय च ।**
**बद्धविट्कं कृमिघ्नं च संस्कारात् सर्वरोगजित् ॥ ५६ ॥**

**कृशाना**मिति । कृशानां पुंसां बृंहणाय बृहत्त्वायालं पर्याप्तम् । स्थूलानां च कर्शनायालम् । कृशस्थूलयोर्विषमधातुत्वमपनीय समधातुत्वमापादयतीति शमनेषु तैलस्य प्राधान्यमुच्यते । ननु कथमेकस्माद् वस्तुनो विरुद्धं कार्यद्वयं कृशबृंहणत्वस्थूलकर्शनत्वरूपं स्यादिति । अत्र ब्रूमः— तैलस्य तैक्ष्ण्यादिगुणयोगात् स्रोतःशोधनत्वेनाहारसारः शरीरं व्याप्य पुष्टिं विदधाति । तस्मात् कृशानां बृंहणम् । अनेनैव हेतुना स्रोतःशोधनत्वेन मेदसोऽवहननात् स्थूलानां कर्शनमिति विरुद्धकार्यं न हि प्रवर्तकत्वप्रभावादिति केचित् । संस्कारवशादित्यन्ये । अथवा न विरुद्धं कार्यद्वयमेवैतत्, किन्तु साम्यलक्षणमेककार्यमिति ॥

"वातादिदोषसंरोधात् स्रोतसां रसवाहिनाम् ।
आहारजन्मा न रसो रसादीन् प्राप्नुयादतः ॥
कृशो भवति तस्यैतत् तैलं स्रोतोविशोधनम् ।
तीक्ष्णादिगुणयोगेन ततः स्रोतोविशोधनात् ॥
प्रपद्यते रसो धातूंस्ततः पुष्टिर्भविष्यति ।
मेदोधातुप्रधानत्वात् स्थूलतासम्भवो नृणाम् ॥
मेदःक्षयकरं तैलं तीक्ष्णोष्णादिगुणान्वयात् ।
तेन मेदसि संक्षीणे कृशत्वमुपपद्यते ॥
धातुसाम्याख्यमेकं स्यादेतत् कार्यं तिलोद्भवात् ।
विरुद्धकार्यनिष्पत्तिशङ्कां मनसि मा कृथाः ॥"

तीक्ष्णादिगुणयोगात् तैलस्य बृंहणकर्शनत्वे सिद्धे सति ज्ञापनार्थमिदमुक्तं तीक्ष्णोष्णादियुक्तमन्यदपि द्रव्यम् —

"कृशानां बृंहणायालं स्थूलानां कर्शनाय च ।"

इति । बद्धा ग्रथिता विट् पुरीषं येन तदेवम् । कः समासान्तः । सङ्ग्रहे तूक्तं —

"तैलप्रयोगादजरा नि(र्वि ? र्व)लीका जितश्रमाः ।
आसन्नतिबला युद्धे दैत्याधिपतयः पुरा ॥"

इति । तस्मात् प्रभावादेव देहसाम्यकरत्वमिति द्योतयति पाठ्यकारः । संस्कारात् सर्वरोगजित् संस्कारो गुणाधानं, विशिष्टद्रव्यकृतं संस्कारमाश्रित्याशेषरोगजित्, संस्कारद्रव्यसंस्कृतं तैलं स्वगुणमनुवर्तते संस्कारगुणमतिशयेन भजते तदित्यर्थः ॥ ५६ ॥

**सतिक्तोषणमेरण्डतैलं[1] स्वादु सरं गुरु ।**
**वर्ध्मगुल्मानिलकफानुदरं विषमज्वरम् ॥ ५७ ॥**
**रुक्शोफौ च कटीगुह्यकोष्ठपृष्ठाश्रयौ जयेत् ।**
**तीक्ष्णोष्णं पिच्छिलं विस्रं रक्तैरण्डोद्भवं त्वति ॥ ५८ ॥**

**सतिक्तेत्यादि** । एरण्डतैलम् एरण्डस्नेहः । सर्वस्थानराणां स्नेहस्य 'विकारे स्नेहे तैलजि'ति तैलजादेशे सति एरण्डतैलं कुसुम्भतैलं तिलतैलमित्यादि रूपं भवति । तदीषत् तिक्तकटुकं भवति । स्वादु मधुररसं सरं शकृद्भेदि, वर्ध्मादीन् जयेत् कट्यादिस्थितौ रुक्च्छोफौ च जयेत् । तथा तीक्ष्णोष्णपिच्छिलं विस्रं च भवति । रक्तैरण्डतैलं त्वतिशयेन तीक्ष्णादिगुणयुक्तम् ॥ ५७, ५८ ॥

**कट्वुष्णं सार्षपं तीक्ष्णं कफशुक्रानिलापहम् ।**
**लघु पित्तास्रकृत् कोठकुष्ठार्शोव्रणजन्तुजित् ॥ ५९ ॥**

**कट्विति** । सार्षपं तैलं कटुकमुष्णं तीक्ष्णं (कफ)शुक्रानिलापहं च । अपपूर्वाद्धन्तेः 'अन्येष्वपि दृश्यते' इति डः । तथा पित्तास्रं करोति । कोठादीन् जयति ॥ ५९ ॥

**आक्षं स्वादु हिमं केश्यं गुरु पित्तानिलापहम् ।**

**आक्षमिति** । आक्षं वैभीतकं तैलं मधुरादिगुणम् ॥

---

१. 'ऐरण्डं तैलं'मिति मुद्रिताष्टाङ्गहृदये ।

**नात्युष्णं निम्बजं तिक्तं कृमिकुष्ठकफप्रणुत् ॥ ६० ॥**

निम्बं तैलमतिशयेनोष्णं न भवति । किञ्चिदुष्णमित्यर्थः । तथा कृमिकुष्ठकफनाशनमतिशयेन ॥ ६० ॥

**उमाकुसुम्भजं चोष्णं त्वग्दोषकफपित्तकृत् ।**

उमेति । उमा अतसी, धान्यविशेष इत्यन्ये । तत्सम्भवं, कौसुम्भजं तैलमुष्णवीर्यं त्वग्दोषादिकृत् । तैलान्तराणि सम्बोध्यानि ॥

तिलं तैलं वरं तेषु कौसुम्भमवरं मतम् ॥

वसामज्जवर्णनं चतुःस्नेहान्तर्भूतत्वात् —

**वसा मज्जा च वातघ्नौ बलपित्तकफप्रदौ ॥ ६१ ॥**
**मांसानुगस्वरूपौ च विद्यान्मेदोऽपि ताविव ।**

वसेत्यादि । वसा नाम तनुमेदोरूपः शुद्धमांसस्नेहः । मज्जा च धातुः । तौ वातं नाशयतः । बलपित्तकफांश्च कुरुतः । बलमांसकफप्रदाविति वा पाठः । मांसानुगस्वरूपौ च यस्य प्राणिनः सम्बन्धिनौ तन्मांससदृशौ वीर्येण । आगमश्चात्र —

"यथामांसं च शैत्यौष्ण्ये वसामज्ज्ञोश्च निर्दिशेत् ।"

इति । स्वमांसगुणयोगिनाविति वा । वसाभेदाः सङ्ग्रहोक्ताः । मेदोऽपि ताविव वसामज्जासदृशं विद्यात् । मेदसः पृथक्करणं चतुःस्नेहानन्तर्भूतत्वात् । इति तैलवर्गः ॥

तीक्ष्णोष्णादिगुणप्रायं तैलवर्गोक्त्यनन्तरम् ।
वर्गतन्त्रावशिष्टं तन्मद्यमद्य निगद्यते ॥

मद्यं किमिति चेत् —

"द्राक्षेक्षुर्माक्षिकं शालिरुत्तमा व्रीहिपञ्चमाः ।
मद्याकरा यत् तेभ्योऽन्यत् तन्मद्यप्रतिरूपकम् ॥"

**दीपनं रोचनं मद्यं तीक्ष्णोष्णं तुष्टिपुष्टिदम् ॥ ६२ ॥**

**सस्वादुतिक्तकटुकमम्लपाकरसं सरम् ।**
**सकषायं स्वरारोग्यप्रतिभावर्णकृल्लघु ॥ ६३ ॥**

**नष्टनिद्रातिनिद्रेभ्यो हितं पित्तास्रदूषणम् ।**
**कृशस्थूलहितं रूक्षं सूक्ष्मं स्रोतोविशोधनम् ॥ ६४ ॥**
**वातश्लेष्महरं युक्त्या पीतं विषवदन्यथा ।**

दीपनमित्यादि । सर्वं मद्यं दीपनादिगुणयुक्तम् । तुष्टिर्मनःपरितोषः (पुष्टिः शरीरपोषः) ते ददाति जनयति । 'आतोऽनुपसर्गे कः' इति कप्रत्ययः । तथा ईषन्मधुरतिक्तकटुकम् । अम्लौ पाकरसौ यस्य तदेवम् । त(दा ? था) ईषत्कषायम् । स्वरादीन् करोति । सर्वद्रव्याणामारोग्यार्थमुपदिश्यमानत्वात् सिद्धेऽपि पुनरारोग्यकृदित्युक्तमतिशयार्थम् । प्रतिभा बुद्ध्युन्मेषः । तथा नष्टनिद्रेभ्यो नरेभ्योऽतिनिद्रेभ्यश्च हितं सर्वमेव मद्यं, प्रभावात् । एवं कृशस्थूलयोरपि । नष्टनिद्रस्यातिनिद्रस्य चाहारविशेषाद् वैपरीत्यं करोतीत्यन्ये । अथवा तैलोक्तन्यायेन नष्टनिद्राणामतिनिद्राणां कृशानां स्थूलानां च हितमिति शमनेषु मुख्यत्वमुच्यते । अथवा मद्यानां बहुत्वात् यत्किञ्चिन्मद्यं सुरादि श्लेष्मादिवर्धनं तन्नष्टनिद्रेभ्यो हितं निद्राकरत्वाद्, यच्च मार्द्वीकादि मद्यं श्लेष्मादिहन्तृ तच्च अतिनिद्रेभ्यो हितम् । 'नष्टनिद्रादीनां युक्त्या हितमि'तीन्दुः । सूक्ष्मं सूक्ष्मस्रोतोगामि । तथा स्रोतो विशोधयति । तथा वातश्लेष्महरं युक्त्या मात्रादिकया पीतमेवङ्गुणं भवति । युक्तिस्तु मदात्ययचिकित्सिते वक्ष्यमाणा । अन्यथा अयुक्त्या पीतं सद् विषतुल्यं भवति ॥

**गुरु त्रिदोषजननं नवं जीर्णमतोऽन्यथा ॥ ६५ ॥**

गुर्वित्यादि । नवमकिञ्चित्कालातिक्रान्तं तन्मद्यं सर्वं गुरु त्रिदोषकरं च भवति । नवमनतीतसंवत्सरमित्यन्ये । जीर्णं पुराणं किञ्चित्कालातिक्रान्तम् । अतो नवादन्यथा लघु त्रिदोषहरं चेत्यर्थः ॥ ६५ ॥

**पेयं नोष्णोपचारेण न विरिक्तक्षुधातुरैः ।**
**नात्यर्थतीक्ष्णमृद्वल्पसम्भारं कलुषं नच ॥ ६६ ॥**

पेयमिति । तच्च मद्यमुष्णोपचारेण न पेयम् । उष्णो वेश्माहारादिक उपचार उपचरणं यस्य तेन । विरिक्तेन कृतविरेचनेन न पेयमदोषसात्म्यादिति[1] भावः । तैक्ष्ण्यात् क्षुधार्तेन न पेयम् । तथा अतितीक्ष्णमतिमृदु च मद्यं न पेयम् । अल्प-

---

१. 'ति वा भा' क. पाठः.

सम्भारमलगोपदंशं न पेयम् । अथवा यद्यावता सम्भारेण लोके प्रसिद्धेन संध्रियते सन्धीयते सुरादिकं, तद्पे(यं?)क्षयैवाल्पसम्भा(रान्न? रं न) पेयम् । तथा कलुषमस्वच्छं च न पेयम् ॥ ६६ ॥

अनन्तरं मद्यविशेषा उच्यन्ते —

**गुल्मोदरार्शोग्रहणीशोषहृत् स्नेहनी गुरुः ।**
**सुरानिलघ्नी मेदोसृक्स्तन्यमूत्रकफावहा ॥ ६७ ॥**

गुल्मेति । सुरा गुल्मादिहृत्, तथा स्नेहयतीति स्नेहनी, वातनाशिनी च, मेदःप्रभृतीनावहति च । सुरा पिष्टकृता ॥ ६७ ॥

**तद्गुणा वारुणी हृद्या लघुर्तीक्ष्णा निहन्ति च ।**
**शूलकासवमिश्वासविबन्धाध्मानपीनसान् ॥ ६८ ॥**

तद्गुणेति । वारुणी प्रसन्ना एव । सुरोक्ता गुणा यस्याः सा तद्गुणा । अनन्तरोक्तसुरासमगुणा । 'या मधुना बहुजलेन क्रियते, सा वारुणी'ति पाठ्यकारः । 'वारुणी घनश्वेता सुरे'तीन्दुः । तथा हृद्या हृदयाय हिता तथा लघुस्तीक्ष्णा च । तथा शूलादीन् निहन्ति । स्रोतसामुपलेपेन दोषादीनामवहनं विबन्धः । वारुण्या अधोभागो जगलः, जगलस्याधोभागो मेदकः, पानोयेन मद्यकल्कापीडने वक्कसः । तेषां सुतरामनुपयोगित्वाद् गुणा नेहोक्ताः । सङ्ग्रहे तूक्ताः ॥ ६८ ॥

**नातितीव्रमदा लघ्वी पथ्या वैभीतकी सुरा ।**
**व्रणे पाण्ड्वामये कुष्ठे न चात्यर्थं विरुध्यते ॥ ६९ ॥**

**विष्टम्भिनी यवसुरा गुर्वी रूक्षा त्रिदोषला ।**

नातितीव्रेत्यादि । विभीतकानामियं वैभीतकी सुरा । नातितीव्रो मदो यस्याः सैवम्, अतितीव्रं मदं न जनयतीत्यर्थः । व्रणादिषु चान्यमद्यवन्न विरुध्यते ॥

**यथाद्रव्यगुणोऽरिष्टः सर्वमद्यगुणाधिकः ॥ ७० ॥**
**ग्रहणीपाण्डुकुष्ठार्शःशोफशोषोदरज्वरान् ।**
**हन्ति गुल्मकृमिप्लीहान् कषायकटुवातलः ॥ ७१ ॥**

यथेत्यादि । अरिष्टः बहुद्रव्यसिद्धतोयेन यो गुडेन क्रियते । 'अरिष्टः सन्धान' इतीन्दुः । यो योऽरिष्टो यैर्यैर्द्रव्यैः सिद्धः, तेषां तेषां गुणाननुगच्छति । सर्वैर्दीपनादिभिर्मद्यगुणैरधिकः । तन्त्रान्तरे चोक्तं —

"मद्याकराधिकद्रव्यखदिराद्यात्मकत्वतः ।
यथाद्रव्यगुणोऽरिष्टः सर्वमद्यगुणाधिकः ॥"

इति । तथा ग्रहण्यादीन् रोगान् हन्ति । तथा कषायकटुको वातलश्च ॥ ७१ ॥

**मार्द्वीकं लेहनं हृद्यं नात्युष्णं मधुरं सरम् ।**
**अल्पपित्तानिलं पाण्डुमेहार्शःकृमिनाशनम् ॥ ७२ ॥**
**अस्मादल्पान्तरगुणं खार्जूरं वातलं गुरु ।**

मार्द्वीकं मृद्वीकारसेन यत् क्रियते । तल्लेहनादिगुणयुक्तम् । तथा अल्पौ पित्तानिलौ यस्य तदेवम् । अन्यमद्यापेक्षया स्वल्पौ करोतीत्यर्थः । तथा पाण्ड्वादीनां विशेषः ॥

**शार्करः सुरभिः स्वादुहृद्यो नातिमदो लघुः ॥ ७३ ॥**

सुरभिः सुगन्धिः । तथा स्वादुश्च हृद्यश्च स्वादुहृद्यः ॥ ७३ ॥

**सृष्टमूत्रशकृद्वातो गौडस्तर्पणदीपनः ।**

सृष्टेत्यादि । गुडसम्बन्धी गौडः सृष्टमूत्रत्वादिगुणयुक्तः । तर्पणश्चासौ दीपनश्च तर्पणदीपनः ॥

**वातपित्तकरः शीधुः स्नेहश्लेष्मविकारहा ॥ ७४ ॥**

शीधुरिक्षुरसकृतः पक्वेक्षुरसकृतः अपक्वेक्षुरसकृतश्चेति द्विधा । वातपित्तकरः । तथा स्नेहविकारं श्लेष्मविकारं च हन्ति । 'ब्रह्मभ्रूणवृत्रेषु' इत्यत्र चतुर्विधस्य नियमस्य प्रायिकत्वात् क्विप् ॥ ७४ ॥

**मेदःशोफोदरार्शोघ्नस्तत्र पक्वरसो वरः ।**

**मेद** इति । तथा मेदआदिघ्नः । तत्र तयोः शीध्वोर्मध्ये पक्वरसः पक्वेक्षुरसः (हरिणमे? परिणते)क्षोः[2] रसेन कृतः वरः श्रेष्ठः । अथवा तत्र शीधुषु मध्ये पक्वरसो मेदःशोफोदरार्शांसि हन्ति श्रेष्ठश्च भवतीत्यरुणदत्तः । अर्शोघ्न इति 'अमनुष्यकर्तृके च' इति टच् । शीधुरिति मृद्वीकाखर्जूरशर्कराधातकी-प्रभृतींश्च संस्कारद्रव्याणि चैकत्र संस्थाप्य क्रियते । पक्वरस इति मृद्वीकादीनां कषायमावाप्य क्रियते इति पाठ्यकारः ॥

**छेदी मध्वासवस्तीक्ष्णो मेहपीनसकासजित् ॥ ७५ ॥**

---

१. 'ख' इति मुद्रिताष्टाङ्गहृदयपाठः. २. 'मो' ख. पाठः.

मध्वासवो माक्षिकेण सन्धीयते माधवको नाम मद्यविशेषः। छेदी तीक्ष्णो मेहादिनाशनः। 'मध्वासवो द्विगुणे जले मध्वासुत्य खदिरासनधवादि-संस्कृते क्रियते' इति पाठ्यकारः॥ ७५॥

मद्यसादृश्याच्छुक्तमाह—

**रक्तपित्तकफोत्क्लेदि शुक्तं वातानुलोमनम्।**
**भृशोष्णतीक्ष्णरूक्षाम्लहृद्यं रुचिकरं परम्॥ ७६॥**
**दीपनं शिशिरस्पर्शं पाण्डुदृक्कृमिनाशनम्।**

रक्तेत्यादि। अपेयापानलालसैर्मद्रसौवीरादिदेशस्थितैर्मद्यवदेवान्यत् क्रियते (शुक्तमिति?) गुडादिभिर्गौडादिभिश्च भूरिजलसंमिश्रैस्तच्छुक्तमिति कथ्यते। 'शुक्तमिति गुडाधातकीतोयान्येकत्र भाजने कृत्वा क्रियते' इति पाठ्यकारः। शुक्तं रक्तादीन् क्लेदयति। वातानुलोमनं मार्गान्तरेभ्यः समानीय स्वमार्गप्रतिपन्नं वातं करोति। अतिशयेनोष्णादिगुणं, तथा हृद्यम्। तथा परमतिशयेन रुचिकरम्। 'रुचिकरं रसमि'त्यसद्गुरवः पठन्ति। तथा दीपनम्। शिशिरः स्पर्शो यस्य तदेवम्। पाण्ड्वादिघ्नम्॥

**गुडेक्षुमद्यमार्द्वीकशुक्तं लघु यथोत्तरम्॥ ७७॥**

गुडेत्यादि। तच्च शुक्तं चतुर्विधं गुडशुक्तादिभेदेन। गुडशुक्तादीनां चतुर्णां यथोत्तरं लाघवं विद्यात्। गुडकृताच्छुक्तादिक्षुरसकृतं शुक्तं लघु, इक्षुशुक्तान्मद्यशुक्तं लघु, सर्वमद्यशुक्तान्मार्द्वीकं शुक्तं लघु भवति। अन्ये यद् ब्रुवते गुडमद्यशुक्तादिक्षुमद्यशुक्तं लघु इक्षुमद्यशुक्तान्मार्द्वीकमद्यशुक्तं ल(घ्व?-घ्विति। स)[1]र्वस्तु पक्षो युक्त इति निर्णीतः। तथाच स[redacted]हे—

"धातकीगुडतोयानि कारणं मद्यशुक्तयोः॥"

इति॥ ७७॥

**कन्दमूलफलाद्यं च तद्वद् विद्यात् तदासुतम्।**

कन्देति। तथा तदासुतं गुडशुक्ताद्यासुतं कन्दादि तद्वद् विद्यात् आसवनशुक्तसमानगुणं जानीयात्। यथोत्तरं लघ्वित्यर्थः। आदिग्रहणात् काण्डत्वक्पत्रादिपरिग्रहः। तदासुतमिति तेषु गुडशुक्तादिष्वासुतं विन्यस्तमिति प्रायशोऽर्थः। एकजातीयमेककन्दं गुडशुक्तादिक्षिप्तं यथोत्तरं लघ्वित्यर्थः। पिपासवः कुक्षिम्भरयः प्राणिनः कन्दकाण्डत्वक्पत्रादिकमागृह्य तद्रस-

१. 'स' इति मुद्रिताष्टाङ्गहृदये पाठः

लौल्यात् तत्रैव निक्षिपन्ति । तत् सर्वं पथ्यमपथ्यमपि तद्गुणमेव जानीयात् । शुक्तेनात्यु(त्तुषु ? त्कृष्ट)शक्तिना परित्य[1]ज्य निजं स्वभावं वशीकृत्यात्मरूपतां नीयत इत्यर्थः ।

"कन्दमूलफलाद्यांश्च तद्वद् विद्यात् तदासुतान् ।"

इति वा पाठः ॥

अम्लत्वरोचनादिगुणसामान्यादन्यदपि शाण्डाक्यादिकं ब्रवीति —

**शाण्डाकी चासुतं चान्यत् कालाम्लं रोचनं लघु ॥ ७८ ॥**

**शाण्डाकीत्यादि** । या शाकादीनि क्वथितान्यासुत्य क्रियते सा शाण्डाकी । सा चान्यच्चानुक्तमासुतमासवजातं कालेनाम्लमम्लीभूतम् अनेनैव हेतुना सुतरां तत्संस्कारमधिकरोति । तच्च रोचनं रुच्यं लघु च भवति । यद् द्रवे शुष्काण्यासुत्य क्रियते तदासवम् । शाण्डाकीलक्षणमुक्तं सारमुष्टौ —

"शाकं च सर्षपादीनां मूलकादेस्तु मूलकम् ।
संस्वेद्य पिष्ट्वा चालोड्य धान्याम्लेनानुभावितम् ॥
शुण्ठीजीरकराज्याद्यैः पुनरम्लत्वमागतम् ।
शाण्डाकी नाम सा ज्ञेया पिष्टपिण्याकसम्भवा ॥"

इति । अपरे शाण्डाकीमिति पठन्ति । शाण्डाकी वटकं हृदिकृत्य द्रवरूपायाः शाण्डाक्यास्त्वासवनकाल एवैकलोलीभावो भवति । तस्मात् तद्गुणस्य पृथक् कथने को लाभ इति । शाण्डाकीं च तथा विद्यादिति अन्वयः । अन्यच्च गुडशुक्ताद्यासुतं मण्डमोदकपृथुकादिकं मांसादिक(वो ? मे)तच्च तद्गुणं जानीयात् कालाम्लमित्यर्थं मन्यमानाः । पाठ्यकारस्तु — "मूलकसर्षपशाकादिकृता शाण्डाकी' । तन्त्रान्तरे चोक्तं —

"जम्बीरवार्यालुलिते पिण्याके श्यानतां गते ।
कैडर्यपत्रसंयुक्ता लशुनेन च मूर्च्छिता ॥
सर्षपैर्जीरकैश्चैव संस्कृता गुडतां गता ।
शाण्डाकी नाम सा ज्ञेया पिष्टपिण्याकसम्भवा ॥"

इति । आसुतं चान्यदिति । सुवीरमलादिषु प्रदेशेषु शुक्तलोलुपाः कुक्षिम्भरयः सर्वं द्रव्यजातं शुक्तेऽभिषुवन्ति । तदासुतं सर्वं गुरु लघु च स्वगुणं परित्यज्य

---

१. 'त्य' ख. पाठः.

शुक्तगुणमेवाम्लीकरोतीत्यर्थः" इत्याह । तत्पक्षे तु केचित् कालाम्लमित्येतद् धान्याम्लस्य नयन्ति, कालेनाम्लत्वात् । पाठ्यकारस्तु तदनुपपन्नमित्याह काले- नाम्लत्वस्य मद्यशुक्तसौवीरकतुषोदकादीनामपि विद्यमानत्वात् सर्वेषामेव धा- न्याम्लत्वं सम्भाव्येतेति वदन् । तस्मात् स कोलाम्लमिति पठति सुपक्वविद- ग्धस्य पक्वकोलस्य यथाम्लता, तथाम्लतासंयुक्तमेवाविपन्नं धान्याम्लमित्यर्थं, वदन्नेव ॥ ७८ ॥

मद्यसादृश्याच्छुक्तमुक्त्वा पुनः शुक्तसदृशं धान्याम्लमाह —

**धान्याम्लं भेदि तीक्ष्णोष्णं पित्तकृत् स्पर्शशीतलम् ।**
**श्रमक्लमहरं रुच्यं दीपनं वस्तिशूलनुत् ॥ ७९ ॥**
**शस्तमास्थापने हृद्यं लघु वातकफापहम् ।**

धान्याम्लमित्यादि । धान्याम्लं काञ्जिकं, रक्तादिभिः शूकधान्यैः व- रकहस्तिश्यामाकादिभिश्च तृणधान्यैर्वितुषैः कुलत्थादिभिः शिम्बिधान्यैश्च क्रि- यते धान्याम्लमिति । तच्चापि शुक्तरूपत्वादत्रैवोच्यते —

"धातकीगुडतोयानि कारणं मद्यशुक्तयोः ।"

धान्याम्लस्य केवलं धान्यजल(ए ? मे)व कारणं, तस्य काञ्जिकमिति संज्ञा । तत् पुरीषभेदि । तथा तीक्ष्णं, तथोष्णवीर्यं, तथा पित्तकृत् , स्वभावेनैव स्पर्श- शीतलं स्पर्शशीतलत्वाद् बहिः सेचने हितम् । अत्र महायानोक्तिः —

"हस्तपादशिरोदाहं तथाक्ष्णोश्च श्रमं क्लमम् ।
निहन्ति[1] निद्रां कुरुते धान्याम्लं सेवितं बहिः ॥"

इति । व्यायामादिना तान्तत्वं श्रमः, निर्व्यायामादेस्तान्तत्वं क्लमः, तौ हरति । वस्तिशूलं च जयति । आस्थापने निरूहे शस्तं श्रेष्ठम् । वातकफापहं च । हन्तेः 'अन्येष्वपि दृश्यते' इति डः ॥

तीक्ष्णोष्णादिगुणसामान्यप्रसङ्गे मद्यवर्ग एव मूत्रवर्गमनित्योभयोर्द्रवत्वेऽप्याह —

**मूत्रं गोजाविमहिषीगजाश्वोष्ट्रखरोद्भवम् ॥ ८० ॥**
**पित्तलं रूक्षतीक्ष्णोष्णं लवणानुरसं कटु ।**
**कृमिशोफोदरानाहशूलपाण्डुकफानिलान् ॥ ८१ ॥**
**गुल्मारुचिविषश्वित्रकुष्ठार्शांसि जयेल्लघु ।**

---

१. 'तीं' ख. पाठः.

मूत्रमित्यादि । गवादीनां मूत्रं पित्तलत्वादिगुणयुक्तम् । तत्र लवणो-ऽनुरसः रसो यस्य तदेवम् । आनाहो वायुना जठरापूरः । गवादीनां स्त्रीणां मूत्रं ग्राह्यम् । गजादीनां पुंसाम् । एके तु लघुतरत्वात् स्त्रीमूत्रस्यैव ग्रहण-मिच्छन्ति । गोमूत्रस्य पूर्वमुपन्यासात् प्राधान्यं ज्ञेयम् । सङ्ग्रहे त्वपरेऽपि गुणा विशेषेणोक्ताः —

"विविकास्थापनालेपस्वेदादिषु च पूजितम् ।
दीपनं पाचनं भेदि तेषु गोमूत्रमुत्तमम् ॥
श्वासकासहरं छागं पूरणात् कर्णशूलजित् ।
दद्यात् क्षारे किलासे च गजवाजिसमुद्भवम् ॥
हन्त्युन्मादमपस्मारं कूर्मा(र्मो? र्मे)हं च रासभम् ।"

इति । मूत्रं मानुषं तु विषापहम् ॥

**तोयक्षीरेक्षुतैलानां वर्गैर्मद्यस्य च क्रमात् ॥ ८२ ॥**
**इति द्रवैकदेशोऽयं यथास्थूलमुदाहृतः ॥ ८२½ ॥**

तोयेत्यादिना सङ्ग्रहश्लोकमाह । इत्यनन्तरोक्तेन प्रकारेण तोया-दीनां वर्गैः क्रमेण द्रवाणामेकदेशो यथास्थूलं प्रधानानतिक्रमेण उदाहृतः उक्तः । मद्यस्य चेति पृथगुपन्यासाद् एतद् द्योतयति—मद्यं कदाचिदपि न से-व्यमिति । तर्हि कथमुक्तमिति चेत् । प्रसङ्गात् । अपिच वैचित्र्यं दर्शयितुं च । तथाचोक्तं सङ्ग्रहे —

"उपदिष्टे विचित्रेऽस्मिन् वक्तव्यार्थानुरोधतः ।
कर्तव्यमेव कर्तव्यं प्राणाबाधेऽपि नेतरत् ॥"

इति । (आह?) सङ्ग्रहवचनस्यानर्थक्यं पुनरुक्तदोषाद् गुणान्तरादर्शनाच्च । उच्यते । असन्देहसाकल्याभिधानसुखावबोधावधारणनिश्चयबलाधाननिगमनार्थः सङ्ग्रहश्लोकः । इह तावद् विस्तरेण संशय्यमानमर्थं सङ्ग्रहे वा विविन-क्तीत्यादि व्याख्येयम् । यूषरससूपपेयादयः परस्तात् कृतान्नप्रसङ्गाद् वक्ष्यन्ते ॥ ८२½ ॥

इति हृदयबोधिकायां पञ्चमोऽध्यायः ॥

---

शुभं भूयात् ।

## अथ षष्ठोऽध्यायः ।

अन्नपानविधौ प्रकृतेऽल्पवक्तव्यत्वादन्नसंस्काराद्युपयोगित्वात् पूर्वं द्रवद्रव्यमुक्त्वान्न-मुच्यते । हृद्याकारस्तु —

"द्रवद्रव्यं च तोयादि नित्यसेव्यं निरूपितम् ।
इदानीं द्रवसंस्कार्यमन्नं निर्णेतुमीहते ॥"

इत्याह ।

### अथातोऽन्नस्वरूपविज्ञानीयमध्यायं व्याख्यास्यामः ।

**अथात** इत्यादि । अद्यत इत्यन्नम् । अन्नस्य भोज्यादिभेदेन चतुर्विधस्य स्वरूपं स्वभावो(प ? रस)वीर्यविपाकप्रभावकर्मादि तस्य विज्ञानमवगमः । तस्मै हितोऽध्यायः अन्नस्वरूपविज्ञानीयः । द्रव्यशब्दश्चाप्रयुक्तोऽप्यर्थस्य गम-कत्वादध्याहार्यः मध्यमपदलोपाख्यया तन्त्रयुक्त्या तेनान्नद्रव्यस्वरूपविज्ञानीय इति द्रष्टव्यम् । तथा हि — पूर्वस्मिन्नध्याये मन्दमतिप्रबोधनाय प्रयुक्तो द्रव्य-शब्दः । आचार्या हि वैचित्र्येण ग्रन्थरचनां विदधति । तत्र प्राक् स्वरूपशब्दो न निर्दिष्ट इह च द्रव्यशब्दः । अथ चोभयमपि प्रयुक्तमेव गम्यते मध्यपद-लोपाख्यया तन्त्रयुक्त्या अन्तपदलोपाख्यया च । अद्यते यत् तदन्नं धान्यमां-सादि । धान्यं च द्विधा शूकशिम्बिजधान्यभेदेन । तत्र प्राधान्याच्छूकधान्यस्य प्रागुपन्यासः । प्राधान्यं चास्य बहूपयोगित्वात् । शिम्बिधान्यस्य तु व्यञ्जनार्थेन स्वल्पोपयोगित्वात् प्रायेणापथ्यत्वाच्चाप्राधान्यम् ।

**रक्तो महान् सकलमस्तूर्णकः शकुनाहृतः ।**
**शारामुखो दीर्घशूको रोध्रशूकः सुगन्धिकः ॥ १ ॥**
**पतङ्गास्तपनीयाश्च ये चान्ये शालयः शुभाः ।**
**स्वादुपाकरसाः स्निग्धा वृष्या बद्धाल्पवर्चसः ॥ २ ॥**
**कषायानुरसाः पथ्या लघवो मूत्रला हिमाः ।**
**शूकजेषु वरस्तत्र रक्तस्तृष्णात्रिदोषहा ॥ ३ ॥**

**रक्त** इत्यादि । अथवा अद्यते भक्ष्यते यत् तदिति शाकफलादिकम् ।

"वर्गैः सप्तभिरादिष्टं सर्वमन्नं प्रकीर्त्यते ।
वेदादिषु प्रयोगस्य दृष्टत्वात् साधुता मता ॥

अन्नशब्दस्य धात्वादिचिन्तना नैव विद्यते ।
अत्रौदनयवाग्वादेरन्ने मुख्यत्वसम्मतिः ॥
तदुपादानशाल्यादेरत एव पुरोग्रहः ॥"

पाठ्यकारस्तु — अन्नेषु शूकधान्यं प्रमाणं तत्रापि शालयस्तस्मात् त एव पूर्वं प्रक्रम्यन्ते इत्याह । रक्तादिशालयो मालवादिषु जाताः सुखं ज्ञातुं न (चा ? पा)र्यन्ते पर्यायान्तरेणापि न प्रसिद्धाः । अपि च एते शालिविशेषादयः स्वनामानुगताकारास्तस्माद् देशान्तरेऽपि स्वनामानुगतार्थयैव भाषया प्रसिद्धाः । एकस्मिन् देशे एकस्यैव द्रव्यस्य बहवो भाषाविशेषाः सन्ति नानाजातिविशिष्टाः नानाजनपदविशिष्टाः नानाग्रामविशिष्टाः नानापत्तनविशिष्टाः । तद् यथा — वन्याश्चण्डाला एकं ब्रुवते ग्राम्याश्चण्डाला एकं ब्रुवते समुद्रानुपवासिनोऽन्यत् । एवं प्रायो ब्राह्मणानामपि एकस्यैव द्रव्यस्य भाषानानात्वं विद्यते । इत्येवमादिदुर्ज्ञेयत्वाच्छालीनां व्रीहीणां शिम्बिधान्यानां संस्कृतानां धान्यानां मांसानां शाकानां फलानामौषधानां च भिषक्पुत्रपरम्परया पठितया प्रसिद्धयैव भाषया लिख्यन्ते । रक्तम् (ചെഞ്ചാലി) महान् (പെരുഞ്ചാലി) कलमः (കളപാരിച്ചാലി) मगधादिषु प्रसिद्धः । तूर्णकः (കട്ടിഴി[1]) काश्मीरेषु प्रसिद्धः । शकुनाहृतः (കിള്ളികാരി[2]) मगधेषु प्रसिद्धः । बुद्धोत्पादकाले उत्तरकुरुभ्यो हंसैरानीतो विस्तरं गतः अत एव शकुनाहृत इत्यन्वर्थसंज्ञः । शारामुखः (വിരിച്ചാരി) स तु कृष्णशूकः शुक्लाकारः । दीर्घशूकः (നെട-വാലിച്ചാലി) लोध्रशूकः (വെൺവാലിച്ചാലി) सुगन्धिकः (നറുഞ്ചാലി) पतङ्गाः (കിളിക്കൊള്ളി[3]) तपनीयाः (പൊൻവണ്ണച്ചാലി)

अन्ये रक्तम् (ചെന്നെല്ല്) कलमम् (കളപ്പാരിച്ചെന്നെല്ല്) इत्यादि वदन्ति । इतरेतरयोगार्थः प्रथमश्चकारः । ये चेत्यत्र यच्छब्देन प्रसिद्धार्थवाचिना कृषीवलजनप्रसिद्ध्या शालिगुणनिर्णयः कर्तव्य इति सूचयति । चशब्देन संग्रहोक्ताः शालयः सूच्यन्ते । अन्ये शालयः शुभा इति प्रसिद्धा एवंविधा बोध्याः । रक्तादयस्तपनीयान्ताः समानगुणा इति रक्ताद्यास्तपनीयान्ता अन्ये च ये देशकालादिना रक्तादिसदृशाः शालयस्ते सर्वे मधुरविपाकरसत्वादियुक्ताः । बद्धं ग्रथितमल्पं च वर्चः पुरीषं कुर्वन्तीति बद्धाल्पवर्चसस्त एव

१. 'ഴ' २. 'ഹം' ३. 'ള്ളരി' ख. पाठः.

कारणे कार्योपचारादुक्ताः । कषायोऽनुरसो येषां त एवम् । पथ्याः स्वभावत एव शरीरस्य हिताः । मूत्रला मूत्रकारिणः । हिमाः शीतवीर्याश्च । ये चान्ये शालय इति क्षुण्णे सितत्वमेव शालिलक्षणम् । उक्तं च —

क्षुण्णः सितः स्मृतः शाली रक्तो व्रीहिरुदाहृतः ।

इति ।

भूमिबीजबलादीनां भेदाद् भिन्नास्तु शालयः ।
व्रीहयस्तृणधान्यानि शाकाद्याश्च यतस्ततः ॥
तत्स्वरूपपरिच्छित्तिरन्वयव्यतिरेकतः ।

इति च ॥

तत्र तेषु महाशालिकलमादिषु मध्ये रक्तो रक्तशालिसंज्ञो शूकजेषु मध्ये वरिष्ठः । तृष्णादींश्च दोषान् निहन्ति । अस्य च प्रागुपादानेनैव वरत्वे लब्धे वरग्रहणं युक्त्याग्र्यसंग्रहार्थम् । तथा —

वर्षासु दिव्यनादेये परं तोये वरावरे ।

इति । तथा 'गव्ये क्षीरघृते श्रेष्ठ' इति । तथा 'वरोऽत्र मुद्ग' इत्यादीनि चान्यानि प्रदेशान्तरेष्वयमवोचदाचार्यः । शूकजेष्विति शूकशब्देन कणिशाभिधानस्याग्रदेशस्य ग्रहणं गोपुच्छाकारस्य, न व्रीह्यग्रजनितस्य सूक्ष्माकारस्यावयवस्य । 'शूकैरिवावृतः कण्ठ' इत्यादौ सूक्ष्माकारस्य ग्रहणम् ॥ ३ ॥

**महांस्तं चानुकलमस्तं चाप्यनु ततः परे ।**
**यवका हायनाः पांसुवाप्यनैषधकादयः ॥ ४ ॥**

**स्वादूष्णा गुरवः स्निग्धाः पाकेऽम्लाः श्लेष्मपित्तलाः ।**
**सृष्टमूत्रपुरीषाश्च पूर्वं पूर्वं च निन्दिताः ॥ ५ ॥**

**महानिति** । महान् तं चानु तं च रक्तमनु महान् । रक्तशालेः किञ्चिद्धीनो महाशालिरित्यर्थः । महांस्तस्यान्विति वा पाठः । रक्तशालेः पश्चान्महाशालिर्वर इति । तं च महान्तमनु कलमः महत्संज्ञात्कलमः किञ्चिद्धीन इत्यर्थः ॥

ततोऽनन्तरं परे परास्तूर्णकादयः कर्मप्रवचनीयानुवृत्त्यावरा उत्तरोत्तरं हीना इत्यर्थः । रक्तशालिर्मेदुराणां हितः —

"रक्तशालिस्त्रिदोषघ्नस्तृष्णामेदोनिवारणः ।
महाशालिः परं वृष्यः कलमः श्लेष्मपित्तहा ॥"

इति ॥

यवकादयोऽपि शालिविशेषा एव । अशुभाः । स्वादवस्तथोष्णादि-गुणाः । तथा सृष्टे मूत्रपुरीषे यैस्त एवम् । पूर्वं पूर्वं च निन्दिता यो यस्मात् पूर्वः स तस्मान्निन्दितः । तेन यवकः सर्वेभ्यो विगर्हितः । पाठ्यकारस्तु — अनुक्तेषु शालिविशेषेषु शुभेषु यवकादयः किञ्चिद्गुणैर्न्यूना इत्याह । तथा अनुक्तेषु कालीमोहिन्यादिष्वशुभेषु शालिषु यथा त्याज्यत्वं तथा यवकस्यापि त्याज्यत्वं विद्यते प्रायेणेति पूर्वं पूर्वं च निन्दिता इत्युक्तवान् । इति चाह — शालीनां शालयः कुर्वन्त्यनुकारं गुणागुणैः । यवकं (യവച്ചെന്നെൽ) हायनं (വിളച്ചെന്നെൽ) पांसु (പൊടിച്ചെന്നെൽ) वाप्यं (കൈരവ-ച്ചെന്നെൽ) नैषधं (വേഴച്ചെന്നെൽ) आदिशब्देन चम्पकपत्तिकादयो गृह्यन्ते ॥ ५ ॥

**स्निग्धो ग्राही गुरुः स्वादुस्त्रिदोषघ्नः स्थिरो हिमः ।**
**षष्टिको व्रीहिषु श्रेष्ठो गौरश्चासितगौरस्तः ॥ ६ ॥**

स्निग्ध इत्यादि । व्रीहिषु सर्वेषु मध्ये षष्टिको नाम व्रीहिः श्रेष्ठो रक्तशालिरिव शालिषु । षष्टिरात्रिपरिपाकेन षष्टिक (ഞവിര) इति संज्ञा । तथा स्निग्धादिगुणयुक्तः । षष्टिको नाम व्रीहिः स्निग्धादिगुणयुक्त इति वान्वयः । स्थिर इति शरीरस्थैर्यकरः जराश्रमक्लमग्लानिहरः । अत एव रसायनप्रयोगे ज्वरादौ च तत्र तत्र क्षामवपुषामुपदिष्टः । स्थिरः शरीरे अव्यापनशील इति हाटकः । षष्टिको द्विविधः गौरः असितगौर इति । तत्र गौरः सितवर्णः कृष्णगौरवर्णात् षष्टिकात् श्रेष्ठः । तथा परतन्त्रवचः —

शीतो गुरुस्त्रिदोषघ्नो मधुरो गौरषाष्टिकः ।
किञ्चिदूनोऽसित ………………… ॥

इति । असितगौरयोर्गौरः श्रेष्ठ इति केचित् । (അസിതം പടയൻ) ॥ ६ ॥

**ततः क्रमान्महाव्रीहिकृष्णव्रीहिजतूमुखाः ।**
**कुक्कुटाण्डकलाबाक्षपारावतकसूकराः ॥ ७ ॥**

**वरकोद्दालकोज्वालचीनशारददुर्दराः ।**
**गन्धनाः कुरुविन्दाश्च गुणैरल्पान्तराः स्मृताः ॥ ८ ॥**

तत इति । ततस्तस्मात् षष्टिकान्महाव्रीह्यादयः कुरुविन्दान्ताः पञ्चदश व्रीहयः क्रमात् गुणैरल्पान्तरा अल्पविशेषाः ईषदीषद्गुणैर्हीना इत्यर्थः । तेन षष्टिककुरुविन्दयोर्महदन्तरम् । व्रीहयो विशिष्टाः शूकधान्याः । महाव्रीहिः (ചെന്നെല്‍) कृष्णव्रीहिः (കരനെല്‍) जतूमुखम् (പുഴുക്കണ്ണി) कुक्कुटाण्डम् (കോഴിപ്പൂടന്‍) लाबाक्षम् (ഉളിമുകത്തി) पारावतम् (പാറാ-പ്പറത്തി) सूकरम् (പന്നിക്കട്ടന്‍) वरकम् (കരിംകുറുവ) उद्दालकम् (കരുകില്‍പൂത്താഴ) उज्ज्वालम् (വലനെല്‍) चीनम् (ചീരെറനിനി) शारदः (ചെങ്ങാട്ടന്‍) दुर्दरः (നംരനെല്‍) गन्धनम् (പേരും പാണ്ടി) कुरुविन्दम् (കുറാല്‍നെല്‍)॥ ८ ॥

**स्वादुरम्लविपाकोऽन्यो व्रीहिः पित्तकरो गुरुः ।**
**बहुमूत्रपुरीषोष्मा त्रिदोषस्त्वेव पाटलः ॥ ९ ॥**

स्वादुरिति । अन्यो व्रीहिः एभ्यः षष्टिकादिभ्योऽनुक्तो व्रीहिः स्वादुर्मधुररसः अम्लविपाकित्वात् पित्तकरः । कफकरश्च वातहरश्च गुरुत्वाद् । बहुमूत्रपुरीषोष्मा चेत्युपचारात् । अस्य स्निग्धत्वादयो गुणाः अनुक्तेषु व्रीहिषु ग्राह्याः । पाटलो नाम व्रीहिः (പാതിരിപ്പൂവല്ലന്‍) स तु त्रिदोष एवेत्युपचारात् । एवकारोऽतिशयख्यापनार्थः अतिशयेन त्रिदोषकर इत्यर्थः । अतित्रिदोषलत्वेनास्याभ्यवहारनिषेधं करोति । अत एव च रसादीन् नाभ्यधादस्य शास्त्रकारः । केषाञ्चित् पक्षे एकपाटलः । एकपाटलम् (ഓരപ്പൂവന്‍)

अनन्तभेदभिन्नानां व्रीहीणामवधारणम् ।
कृषीवलमुखादेव न सर्वमिह कथ्यते ॥ ९ ॥

शूकजत्वात् तृणधान्यमाह —

**कङ्कुकोद्रवनीवारश्यामाकादि हिमं लघु ।**
**तृणधान्यं पवनकृल्लेखनं कफपित्तहृत् ॥ १० ॥**

कङ्ग्विति। कङ्ग्वादितृणधान्यं हिमं शीतवीर्यम्। लेखनं धातुःस्रोतः-श्लिष्टं कफं विलिख्य नाशयति। तैक्ष्ण्याद् धातून् विकर्षति वा। कफपित्त-हृदित्यनेन कषायमधुररसत्वं रूक्षत्वं चानुक्तमप्येषां सिध्यति। हिमरूक्ष-कषायत्वैर्वातलम्। वातलत्वात् बद्धविण्मूत्रत्वं च सिध्यति। तथा चोक्तम्—

ततश्चानेकधा प्रायः पवनो यत् प्रकुप्यति।
अन्नपानौषधं तस्य युञ्जीतातोऽनुलोमनम्॥

इति। सङ्ग्रहे तु स्पष्टं कृत्वैते गुणा एषामुक्ताः—

कफपित्तहरा रूक्षाः कषायमधुरा हिमाः।
वातला बद्धविण्मूत्रा लघवो लेखनात्मकाः॥

इति। कङ्गुः (തിന) कोद्रवम् (വരക്) नीवारः (വരിനെല്ല്) श्यामाकम् (ചാമ) आदिशब्देन जूर्णाह्वगर्दभीतोयश्यामाकहस्तिश्यामाकमधूलिकागवेधु-कादीनां ग्रहणम्॥ १०॥

सामान्येन तृणधान्यमुक्त्वा विशेषमाह —

**भग्नसन्धानकृत्तत्र प्रियङ्गुर्बृंहणी गुरुः।**
**कोरदूषः परं ग्राही स्पर्शशीतो विषापहः॥ ११॥**

भग्नेति। तत्र तेषु तृणधान्येषु मध्ये प्रियङ्गुः कङ्गुः भग्नस्य सन्धानं करोति। सुश्रुते तूक्तं —

रक्ताः पीताश्च कृष्णाश्च श्वेताश्चैव प्रियङ्गवः।
यथोत्तरं प्रधानाः स्युः स्निग्धाः कफहराः सराः॥

इति। कोरदूषः कोद्रवः परं ग्राही अत्यर्थं सङ्ग्रहणः विषापहो विषहरः। लेपात् प्रायशः। हृद्यालङ्कारो 'विषावह' इति पठति विषं मदं जनयति विषा-वहः। कोरदूष इति अकृष्टपच्यं तृणधान्यमन्यदपि भवति तन्मदकरं भवतीति नात्र सङ्गृह्यते। नीवारस्य श्लेष्मकृत्त्वं विशेषगु(ण? णः)वचनं हि —
नीवारः श्लेष्मलो गुरुरि'ति॥ ११॥

यवादीनां विशेषगुणा उच्यन्ते —

**रूक्षः शीतो गुरुः स्वादुः सरो विड्वातकृद्यवः।**
**वृष्यः स्थैर्यकरो मूत्रमेदःपित्तकफाञ्जयेत्॥ १२॥**

**पीनसश्वासकासोरुस्तम्भकण्ठत्वगामयान् ।**
**न्यूनो यवादन्ययवो रूक्षोष्णो वंशजो यवः ॥ १३ ॥**

रूक्ष इति । यवो रूक्षादिगुणयुक्तः विड्वातकरः । तथा मूत्रादींस्त्वगामयान्तान् जयेत् ।

अ(व ? न्य)यवो नाम शूकधान्यविशेषो यवसदृशः यवान्न्यूनः किञ्चिद्धीनैर्यवगुणैर्युक्तः ॥

वंशोद्भवो यवो वंशबीजः यवाकारत्वाद् यवशब्दोक्तिः स रूक्षोष्णो भवति ।

"उष्णाः सराः वेणुयवाः कषाया वातपित्तलाः ।"

इति ॥ १३ ॥

**वृष्यः शीतो गुरुः स्निग्धो जीवनो वातपित्तहा ।**
**सन्धानकारी मधुरो गोधूमः स्थैर्यकृत्सरः ॥ १४ ॥**

वृष्य इति । गोधूमो वृष्यादिगुणः । जीवन ओजोऽभिवर्धनः । तथा वातपित्तहा । सन्धानकारी भग्नस्योरःप्रभृतेः सन्धानं करोति । चरके तूक्तं —

स्थैर्यकृत् सकषायश्च बल्यः श्लेष्मविकारनुत् ।
सन्धानकृद् वातहरो गोधूमः स्वादुशीतलः ॥

इति ॥ १४ ॥

**पथ्या नन्दीमुखी शीता कषायमधुरा लघुः ।**

पथ्येति । नन्दीमुखी गोधूमविशेषः (ഞാറൽ) (കാഞ്ഞാലി) सा पथ्या शरीराय हिता सेव्येत्यर्थः । शीता शीतवीर्या ॥

इति शूकधान्यवर्गः ॥

अथ शिम्बिधान्यमुच्यते — शूकधान्यानामुपसेचनत्वात् । (उपसेचनं व्यञ्जनं ?)

**मुद्गाढकीमसूरादि शिम्बिधान्यं विबन्धकृत् ॥ १५ ॥**
**कषायं स्वादु सङ्ग्राहि कटुपाकं हिमं लघु ।**
**मेदःश्लेष्मास्रपित्तेषु हितं लेपावसेकयोः ॥ १६ ॥**

मुद्गेति । शिम्बी (കോശപ്പുട്ടിൽ) शिम्ब्यां धान्यं मुद्गादि शिम्बिधान्यम् । अथवा शिम्बः कोशः सोऽस्यास्तीति शिम्बिधान्यमिति व्याकारः । मुद्गं (ചെറുപയറ്) आढकी (തുവര) मसूरम् (ചണംപയറ) आदि-

शब्देन मङ्गल्यमकुष्टकचणकादीनां ग्रहणम् । विबन्धकृत् स्रोतसां न तु पुरीषादीनां यतः सङ्ग्राहीत्यत्रैव पठति शास्त्रकृत् । सङ्ग्राहिलक्षणमुक्तं तन्त्रान्तरे—

भेदि तत्पिण्डितान् भावान् शकृदाद्यान् भिनत्ति यत् ।
विपरीतमतो ग्राहि तच्च स्तम्भनमुच्यते ॥

इति । तथा कषायं स्वादु । हिमं शीतवीर्यम् । तथा मेद आदिषु हितं पथ्यम् । प्रकृतत्वादभ्यवहारे तथा लेपावसेकयोश्च । हितमिति चशब्दो लुप्तनिर्दिष्टः । लेपः प्रदेहः अवसेकः परिषेकः । सङ्ग्रहे चोक्तं—

पित्तासृक्कफमेदस्सु सूपालेपादियोजनात् ।

इति । कषायशीतरूक्षत्वेन कटुविपाकत्वेन च वातकृत्त्वं शिम्बिधान्यस्य शास्त्रकृतोक्तमेव । अत एवेदमुपपन्नं मुद्गोऽल्पचल इति । यदि हि धान्यस्य मारुतकृत्त्वं सम्भाव्येत तदेतद् वक्तुं युज्यते । वातकृत्त्वे च सत्याध्मानकारित्वमुपपन्नमेव । अतः सङ्ग्रहेऽऽध्मानकारित्वमुक्तम् । वचनं हि —

कषायस्वादुलघवो विबन्धाऽध्मानकारिणः ।
रूक्षा बद्धमलाः शीता विपाके कटुकाहिताः ॥
विष्टम्भिनो वातकराः सर्वे स्युः शिम्बिसम्भवाः ।

इति । सामान्यगुणाः ॥ १६ ॥

**वरोऽत्र मुद्गोऽल्पचलः कलायस्त्वतिवातलः ।**
**राजमाषोऽनिलकरो रूक्षो बहुशकृद्गुरुः ॥ १७ ॥**

अथ विशेषं निर्दिशति — वर इत्यादिना । अत्र शिम्बिधान्येषु मध्ये मुद्ग उत्तमः । तथा अल्पं चलं पवनं करोतीत्यल्पचलः । कलायम् (കഛല) तुव्र्यतिरेके विशेषे वा कलायस्तु अतिशयेन वातलः सर्वेषु शिम्बिधान्येषु वातकृत्तमः । राजमाषः कलायादधिको नेति । राजमाषः (വെള്ളം-പയറു) अनिलकरः अन्यशिम्बिधान्यादतिवातकर इत्यर्थः । अन्यथा शिम्बिधान्यसामान्यलक्षणेन वातमात्रकरणस्य लब्धत्वादनिलकरग्रहणं न कुर्यात् । एवं रूक्षोऽतिशयेन । संग्रहे चोक्तं —

"राजमाषो गुरुर्भूरिशकृद्रूक्षोऽतिवातलः ।

इति । बहुशकृत् करोतीति बहुशकृद् । गुरुश्च ॥ १७ ॥

**उष्णाः कुलत्थाः पाकेऽम्लाः शुक्राश्मश्वासपीनसान् ।**
**कासार्शःकफवातांश्च घ्नन्ति पित्तास्रदाः परम् ॥ १८ ॥**

**उष्णेति** । कुलत्था उष्णादिगुणा उष्णवीर्याः शुक्रादीन् घ्नन्ति । **अश्म** अश्मरी । आद्यन्तलोपात् शुक्राश्म । शुक्राश्मरीति इन्दुः । पित्तास्रदाः **परम**तिशयेन रक्तपित्तकराः । कषायस्वादुसंग्राहित्वं शिम्बिधान्यसामान्यलक्षणे-नैषां वेद्यम् । दृष्टिनाशनत्वं चोष्णवीर्यत्वेन च रक्तपित्तकरत्वेन च । सङ्ग्रहे तु **स्पष्टमुक्तं** —

कषायस्वादुरूक्षोष्णाः कुलत्था रक्तपित्तलाः ।
पीनसश्वासकासार्शोहिध्मानाहकफानिलान् ॥

घ्नन्ति शुक्राश्मरीं शुक्रं दृष्टिं शोफं तथोदरम् ।
ग्राहिणो लघवस्तीक्ष्णा विपाकेऽम्ला विदाहिनः ॥

इति ॥ १८ ॥

**निष्पावो वातपित्तास्रस्तन्यमूत्रकरो गुरुः ।**
**सरो विदाही दृक्शुक्रकफशोफविषापहः ॥ १९ ॥**

**निष्पाव** इति । निष्पावो राजशिम्बिः वातादिकरः सरः स्रंसनो (भृङ्गा ? दृगा)दीनपहन्ति । सङ्ग्रहोक्तं चाम्लपाकत्वं कषायमधुरत्वं चेह नोक्तम् । यतोऽम्लविपाकित्वं विदाहित्वादेवास्योक्तं कषायस्वादुत्वं च शिम्बिधान्यसा-मान्यलक्षणेनैव । कृष्णात्रेयस्त्वाह —

निष्पावा मधुरा रूक्षाः सकषाया विदाहिनः ।
उदावर्तेषु शस्यन्ते गुरवो वातपित्तलाः ॥

इति । कुलत्थाढक्योर्महायाने विशेष उक्तः — 'कुलत्थास्तु कफवातहरा गुल्मशूलघ्नाः । आढकी पित्तकफे शस्ता वातकरी रूक्षा मेहहिते'ति ॥ १९ ॥

**माषः स्निग्धो बलश्लेष्ममलपित्तकरः सरः ।**
**गुरूष्णोऽनिलहा स्वादुः शुक्रवृद्धिविरेककृत् ॥ २० ॥**

**माष इति** । माषः स्निग्धो बलादिकरः । बल्यो धातुपुष्टिकरत्वात् । **अनेन यत् किञ्चिद्** धातुपुष्टिकरं तद् बल्यं भवतीति दर्शितं **भवति** । मल-

करः पुरीषकरः । शुक्रस्य वृद्धिं बहुत्वं शुक्रस्यैव विरेकं बहिः प्रेरणं च करोति ॥ २० ॥

**फलानि माषवद्विद्यात् काकाण्डोलात्मगुप्तयोः ।**

**फलानीति** । काकाण्डोला (ചെറുവള്ളിപ്പയർ) आत्मगुप्ता (നാ-യ്ക്കുരണ) तयोः फलानि माषवत् माषसमानगुणानि जानीयात् । काकाण्डोला कटभीव ।

**उष्णस्त्वच्यो हिमः स्पर्शे केश्यो बल्यस्तिलो गुरुः ॥ २१ ॥**
**अल्पमूत्रः कटुः पाके मेधाग्निकफपित्तकृत् ।**

उष्ण इति । तिल उष्णवीर्यः । अल्पमूत्रः किञ्चिन्मूत्रमीषन्नाशयेदित्यन्ये । त्वच्यकेश्यबल्या हितार्थे यत्प्रत्ययान्ताः । स्निग्धत्वमनिलघ्नत्वमधुरकषायकटुतिक्तरसत्वं नानाजातित्वं चेहास्य ग्रन्थकृता लाघवान्नोक्तम् । संग्रहे तूक्तमेव —

स्निग्धोष्णतिक्तकटुककषायमधुरस्तिलः ।
त्वच्यः केश्यो गुरुर्वृष्यः स्पर्शशीतोऽनिलापहः ॥
अल्पमूत्रः कटुः पाके मेधाग्निकफपित्तकृत् ।
कृष्णः प्रशस्तस्तमनु शुक्लस्तमनु चारुणः ॥

इति । अन्ये तु अनया युक्त्या संग्रहोक्तमर्थं संगृह्णते । स्निग्धत्वं तावत् तिलस्य तैलेषु मुख्यस्य स्नेहस्य योनिभूतत्वात् सिद्धम् । कफपित्तकृत् इति वचनात् स्निग्धत्वाच्च सामर्थ्यलब्धं वातघ्नत्वम् । शिम्बिधान्यसामान्यगुणकथनेन कषायस्वादुत्वं लब्धमिति । एतदेवोररीकृत्य सद्योव्रणप्रतिषेधे वक्ष्यति —

स्निग्धोष्णतिक्तमधुरकषायः स सर्वजित् ।

इति । महाभोजे त्वेवमुक्तम् — 'तिलास्तु व्रण्याः प्रमेहघ्ना बल्या उष्णवीर्याश्च' इति ॥

**स्निग्धोमा स्वादुतिक्तोष्णा कफपित्तकरी गुरुः ॥ २२ ॥**
**दृक्शुक्रहृत्कटुः पाके तद्वद्बीजं कुसुम्भजम् ।**
**माषोऽत्र सर्वेष्ववरो यवकः शूकजेषु च ॥ २३ ॥**

**स्निग्ध इति** । उमा अतसी स्निग्धा स्वादुतिक्ता उष्णवीर्या । तया उमया तुल्यं वर्तते तद्वत् । उमासमानगुणं कुसुम्भबीजमित्यर्थः ॥

अत्र शिम्बिधान्येषु माषो अश्रेष्ठः अपथ्यत्वात् । वातहरत्वेऽपि निन्द्यत्वं माषस्य । यवकः शूकजेष्ववरः । शालिमुद्गयोः शूकशिम्बिवर्गे मुख्यत्वमुक्तम् । अमुख्यग्रहणमायुर्वेदतन्त्रशैली ॥ २३ ॥

**नवं धान्यमभिष्यन्दि लघु संवत्सरोषितम् ।**
**शीघ्रजन्म तथा सूप्यं निस्तुषं युक्तिभर्जितम् ॥ २४ ॥**

इदानीं गुरुत्वलघुत्वे निरूपयति — **नवमित्यादि** । नवं प्रत्यग्रं धान्यमभिष्यन्दि आभिमुख्येन स्यन्दयति तच्छीलम् । मालिन्येन स्रोतसां स्रुतिरूपं श्लेष्माणं करोतीत्यर्थः । अर्थात् पुराणमनभिष्यन्दि । संवत्सरोषितं वर्षातीतं लघु भवति । नवं चार्थाद् गुर्वित्यनुक्तमप्युक्तं भवति । कीदृक्कालं नवत्वमिति चेत् षण्मासात्पूर्वम् । अभिष्यन्दनक्रियाकरणेन सर्वं धान्यं षण्मासात् प्राग्गुर्वित्यर्थः । तन्त्रान्तरेऽप्युक्तम् —

"आमासषट्कं धान्यानां गुरुताव्यभिचारिणी ।
ततः परं गुरुत्वस्य क्रमशो हानिरिष्यते ॥"
वर्षं स्थितं सर्वमन्नं परित्यजति गौरवम् ।
न तु त्यजति तद् वीर्यं वीर्यं मुञ्चत्यतः क्रमात् ॥

इति । वर्षातीतं धान्यं क्रमान्निजां शक्तिमुत्सादयति । शीघ्रेत्यादि । लघ्वित्यनुवर्तते । सूप्यं शिम्बिधान्यं मुद्गादि यच्छीघ्रजन्म आचिरकालपक्वं तल्लघु भवति । सूप्यं (അലകലെ ളള്) तथा युक्त्या भर्जितं भृष्टं सन्निस्तुषं विगततुषं लघु भवति । अरुणदत्तो निस्तुषं युक्तिभर्जितं लघ्वित्यन्वयं वदति । गुरुत्वलघुत्वयोरापेक्षिकगुणत्वादेकस्य स्वरूपमजहत एवान्यापेक्षया गुरुत्वमन्यापेक्षया लघुत्वं च युक्तं च । ये तु लघुगुणं न मन्यन्ते ते पचनकर्मानुमेयं गुरुत्वमिच्छन्ति । तत्पक्षेऽपि गुरुत्वलघुत्वे सापेक्षे निर्वोढुं शक्यते । आयुर्वेदे चिराचिरपाकग्राह्ये गुरुत्वलघुत्वे । तदुक्तम् —

अन्नपानविधावुक्तं यद् द्रव्ये गुरु लाघवम् ।
वह्निनैव तु जानीयात् पचनात् तच्चिराचिरात् ॥

इति । समाग्नेरेतत् । उक्तं च —

विष्टम्भाटोपवद् वक्त्रविशोषणविदाहवत् ।
समाग्नेर्यदहोरात्रात् परं पाकं प्रपद्यते ॥

तदन्नं गुरु विज्ञेयं विपरीतं लघु स्मृतम् ।

इति शिम्बिधान्यवर्गः ॥ २४ ॥

उक्तयोर्धान्ययोः संस्कृतयोरेवोपयोग इति कृतान्नवर्ग आरभ्यते । हाटकस्त्वाह— "इति धान्यानां स्वरूपमुक्तम् । अनन्तरोक्तादीनि रक्तादीनि सत्स्वपि स्वरूपगुणेषु संयोगसंस्कारादिविशेषेण गुणान्तरयोगमपि यान्ति तद्व्युत्पादनार्थं कृतान्नवर्गारम्भः" इति । सुधाकारस्तु —

पाकाद् गुणान्तरोत्पत्तिरुपयोगश्च शक्यते ।
धान्यानामिति पक्वान्नवर्गोऽयमुपवर्ण्यते ॥

इत्याह ।

**मण्डपेयाविलेपीनामोदनस्य च लाघवम् ।**
**यथापूर्वं शिवस्तत्र मण्डो वातानुलोमनः ॥ २५ ॥**
**तृड्ग्लानिदोषशेषघ्नः पाचनो धातुसाम्यकृत् ।**
**स्रोतोमार्दवकृत्स्वेदी सन्धुक्षयति चानलम् ॥ २६ ॥**

मण्डेत्यादि । मण्डादीनां लाघवं यथा पूर्वं विज्ञेयं तेन ओदनमपेक्ष्य लघ्वी विलेपी ततोऽपि पेयेत्यनेन क्रमेण लघुतमत्वं मण्डस्य वेद्यम् । एते मण्डादयश्चत्वारो लघवः । यथापूर्वत्वाभावान्न चेदस्य मण्डादिलघुत्वमोदनस्य । चाति शब्दस्तस्य लघुत्वाकर्षणार्थः । अन्यथा समस्तानां त्रयाणामेवेति शङ्का स्यात् । ओदनस्य पूर्वत्वाभावान्न लघुत्वमिति केचित् । ओदनस्य पृथग्ग्रहणमुपादानोपयोगप्रदर्शनार्थं मण्डादयो लाजाद्युपा(यानां ? दानाः) भूयिष्ठमातुरसेव्याश्च न तण्डुलोपादानाः । ओदनस्तण्डुलोपादान एव स्वस्थसेव्यश्च भूयिष्ठमिति । मण्डादयो लाजोपादानास्त(त:)ण्डुलोपादानाश्च न तथौदनस तण्डुलोपादान एवेत्यस्य न समासकरणमिति हाटकः । तथा च मुनिः —

"शृतः पिप्पलिशुण्ठीभ्यां युक्तो लाजाम्बुदाडिमैः ।
मण्डोऽयं दीपयत्यग्निम् .... .... .... ॥"

इति । यथोक्तं—

द्रव्येभ्योऽर्धफलं दत्त्वा तोयस्य प्रस्थमावपेत् ।
अर्धशेषं गृहीत्वा तत्कर्षौ द्वौ दाडिमस्य च ॥
युक्तं सैन्धवविश्वा(भिसैन्धना ? द्वधा)न्यकः शाणमात्रकैः ।
द्विकर्ष(मात्र)र्लाजैश्च भूयः संकथितं च तत् ॥

पिप्पलीजीरकाभ्यां च शाणकेनावचूर्णितम् ।
पेयास्वेष विधिः कार्यो डाडिमादिकृतास्वपि ॥

इति । पाठ्यकारस्तु — मण्डादिलक्षणमेवं वदति — मण्डकं = (കഞ്ഞി-ത്തെളി) पेया=(കഞ്ഞി) विलेपी = (കുഴാച്ചഞ്ഞി) ओदनं = (ചോറ്)

इति ॥ अत्र वचनं हि —

सिक्थैर्विरहितो मण्डः पेया सिक्थसमन्विता ।
बहुसिक्था विलेपी स्यादोदनो विगतद्रवः ॥

इति । यवागूर्विरलद्रवेति वा पाठः । अन्ये तु मण्डलक्षणं पेयालक्षणं चान्यथैवेच्छन्ति—

लाजाम्बुसैन्धवकणाधान्यनागरडाडिमैः ।
युक्तो विमृदितः पूतो मण्डः संस्कृत उच्यते ॥
निर्द्रव्या प्राकृता पेया तक्रडाडिमतण्डुलैः ।

इति । तत्र तेषु मण्डादिषु मध्ये मण्डः सिक्थहीनः शिवः शुभः पथ्य इत्यर्थः । तृषं ग्लानिं दोषशेषं चापहन्तीति 'अमनुष्यकर्तृके च इति टक् । दोषस्य शेषो दोषशेषः कृतवमनस्य कृतविरेचनस्य वा किञ्चिच्छेषो यो दोषः स दोषशेषः एष स ज्ञापकः कृतवमनविरेचनस्य दोषशेषकरणे । तेन वमनकर्मणि विरेचनकर्मणि वा कर्तव्येऽतियोगभयाद् दोषशेषः कार्यः इत्ययमर्थो युक्त्या प्रतिपादितः । वमनविरेचनाभ्यां निर्हृतदोषशेषघ्नः । तथा पाचनो धातुसाम्यकरश्च । दोषसाम्यकृदिति वा पाठः । स्रोतसां मार्दवं करोति । तथा स्वेदयतीति स्वेदी वह्निं च दीपयति ॥ २६ ॥

**क्षुत्तृष्णाग्लानिदौर्बल्यकुक्षिरोगज्वरापहा ।**
**मलानुलोमनी पथ्या पेया दीपनपाचनी ॥ २७ ॥**

क्षुदित्यादि । क्षुच्च तृष्णा च ताभ्यां या ग्लानिः तां च दौर्बल्यादींश्चापहन्ति या सैवम्भूता पेया पुलाकयुक्ता दौर्बल्यं कार्श्यं तथा मलान् वातादीननुलोमयति स्वमार्गस्थान् करोति पथ्या शरीरस्य हिता । दीपनी चासौ पाचनी चेति 'पुंवत् कर्मधारये'ति पुंवद्भावः । सामान्यपेयायाश्च तक्रडाडिमलाजादिसेविताया गुणनिर्देशोऽयं न तु विशिष्टाया ज्वरचिकित्सादिविहिताया इति द्रष्टव्यम् । तस्यास्तत्रैव द्रव्यविशेषग्रहणात् कर्मान्तरनिर्देशाच्च । हारकस्त्वाह — क्षुदित्यादि । इत्थंभूतं कर्म यानि द्रव्याणि

कुर्वन्ति तैरुपसंस्कृतायाः पेयाया अयं गुणसमुदायः संस्कारकद्रव्याणां पाठेन ग्रहणमकुर्वन् कर्माचक्षाण इदं दर्शयति — पेयासात्म्यानां पिप्पल्यादिद्रव्यैरभिसंस्क्रियते कुक्षिरोगपरिहारार्थं गुरुद्र .... .... अग्निदी .... च .... .... प्रागियमग्निसन्दीपनैराहारयोगिद्रव्यैः संस्कृता पातव्या। यथासात्म्यं यथाप्रकृति चेति । इति ॥ २७ ॥

**विलेपी ग्राहिणी हृद्या तृष्णाघ्नी दीपनी हिता ।**
**व्रणाक्षिरोगसंशुद्धदुर्बलस्नेहपायिनाम् ॥ २८ ॥**

**विलेपीति** । बहुसिक्था विलेपी हृद्या मनोनुकूला व्रणवतश्चाक्षिरोगवतश्च संशुद्धादीनां हिता व्रणाक्षिरोगशब्दौ मत्त्वर्थीयाकारान्तौ । संशुद्धः कृतवमनविरेचनः ॥

द्रव्यसिद्धैर्जलैः कल्प्या मण्डाद्याः प्रायशो रुजि ।

इति ॥ २८ ॥

**सुधौतः प्रस्रुतः स्विन्नस्त्यक्तोष्मा चौदनो लघुः ।**
**यश्चाग्नेयौषधक्वाथसाधितो भ्रष्टतण्डुलः ॥ २९ ॥**
**विपरीतो गुरुः क्षीरमांसाद्यैर्यश्च साधितः ।**

**सुधौत इति** । ओदनः सुष्टु धौतः सम्यक् प्रक्षालिततण्डुलः प्रस्रुतगालितपक्वावशिष्टद्रवः (सु?)स्विन्नः पत्रादिपिहिता स्यस्थाल्यादिस्थोऽङ्गारनिहितः । त्यक्तोष्मा त्यक्तबाष्पो लघुर्भवति ऊष्मा बाष्पो जलभागो गुरुत्वहेतुः । केचित् सिद्ध्युष्णस्य लाघवमभ्युपगच्छन्तः 'स्विन्नः अत्यक्तोष्माचेति' पठन्ति । यत्र चैषां पुनरुष्णप्रतिषेधः स सिद्धिशब्दस्याशयः । पाठद्वयेऽपि सोष्णत्वमिष्टम् । उक्तं च सूदशास्त्रे —

त्रिधौततण्डुलोऽम्भोभिस्त्रिगुणैः साधुपाचितः ।
निश्च्योतिताम्बुः सुस्विन्नः कवोष्णश्चौदनो लघुः ॥

इति ॥

सुधौतः प्रस्रुतः स्विन्नः सन्तप्तश्चौदनो लघुः ।

इत्याह — यश्चौदन आग्नेयौषधानां चित्रकादीनां क्वाथेन साधितः चित्रकादिसिद्धार्धावशिष्टजलपाचितः सोऽपि लघुः । त(था)भृष्टास्तण्डुला यस्मिन्नोदने सोऽपि लघुः । आश्विनसंहितायां भृष्टतण्डुलौदनस्य नियमः कृतः—

'भृष्टतण्डुलौदनः कफरोगजित् । आस्थापितमन्दाग्निवि(रुद्धा ? रि)क्तानां च हि-त'मिति । यथोक्तलक्षणादोदनाद् विपरीतः असुधौतादिर्गुरुः । क्षीरमांसादिभिः सह यश्च साधितः सोऽपि गुरुः । आदिशब्देन मुद्गमाषतिलशाकफलादीनां ग्रहणम् । क्षीरादिसाधितानां बल्यत्वमोदनानाम् । तथा चागमः —

मांसशाकवसातैलघृतमज्जफलौदनाः ।
बल्याः सन्तर्पणा हृद्या गुरवो बृंहयन्ति च ॥
तद्वन्माषतिलक्षीरमुद्गसंयोगसाधिताः ।

इति । मुद्गादिसंस्कृता यथाद्रव्यगुणा इति कृष्णात्रेयाभिप्रायः ।

**इति द्रव्यक्रियायोगमानाद्यैः सर्वमादिशेत् ॥ ३० ॥**

इतीत्यादि । इत्यनया दिशा सर्वं पूर्वोक्तं पेयादिकं वक्ष्यमाणं च भक्ष्यादिकं द्रव्यादिभिरादिशेत् । तच्च द्रव्यतो यथा — ओदनस्य रक्तशाल्यादिजस्य लाघवं यवकादिजस्य गौरवम् । क्रियातो यथा — साक्षादग्निसंस्कारात् शूल्यमांसस्य लघ्वादिगुणयोगः । अपरस्य त्वन्यथात्वं दृश्यते । तन्त्रान्तरे चोक्तं —

"वृष्यं चार्तिहरं बल्यं पथ्यं शूल्यामिषं लघु ।
अपथ्यं गुरु विष्टम्भि मांसं यच्च (सतो ? रसो)द्धृतम् ॥"

इति ।

'स्विन्नं मांसं गुरु स्तम्भि शूलीपक्वं त्रिदोषजित्'

इति । क्रिया संस्कार इत्यर्थः । संयोगाद् यथा — आग्नेयौषधक्वाथसाधितस्य लाघवं क्षीरादिसाधितस्य गौरवम् । मानतो यथा — बहुभिरल्पैश्च लघुभिर्युक्तो लघुरेव भवति । विपरीतैस्तु विपरीत एव । आदिग्रहणाद् देशादिपरिग्रहः जाङ्गलदेशोद्भवतण्डुलकृताः पेयादयो लघवः । आनूपदेशप्रभवतण्डुलकृता गुरव इत्यादि बोद्धव्यम् । हृद्याकारः पद्येनाह —

उच्यते द्रव्यतस्तावल्लघुप्रकृतिनिर्मितम् ।
गुरुप्रकृतिजं ज्ञेयं लघु तद्वत् क्रियावशात् ॥
अंगारपक्वाद् गुरुता कन्दुपक्वस्य दृश्यते ।
आग्नेयद्रव्यसंयुक्तं लघु स्यादन्यदन्यथा ॥

(नाम ? मान)तः पलिकादर्धपलिकं लघुतां व्रजेत् ।
आनूपदेशसंजातं गुरु जांगलदेशजात् ॥
ग्रीष्मजं लघु वर्षर्तुजातादिति यथाक्रमम् ;
गुरुत्वं च लघुत्वं च द्रव्यादेः परिकल्पयेत् ॥

इति । कृतान्नत्वादेव मांसरसादयः कथ्यन्ते ॥ ३० ॥

**बृंहणः प्रीणनो वृष्यश्चक्षुष्यो व्रणहा रसः ।**
**मौद्गस्तु पथ्यः संशुद्धव्रणकण्ठाक्षिरोगिणाम् ॥ ३१ ॥**

**बृंहण** इत्यादि । रसो मांसरस आदिपदलोपात् । (सं ? स) बृंहणादिगुणयुक्तः । कृताकृतस्य रसस्य चायं गुणनिर्देशो बोद्धव्यः — "रसो हि स्नेहशुण्ठ्यादियुक्तः कृत इत्यु(च्य)ते विपरीतस्त्वकृतः ।" हृद्याकारस्त्वाह — बृंहणादिगुणनिर्देशः प्रायशोऽकृतस्य मांसरसस्य । कृतस्य गुणास्तन्त्रान्तराद् ज्ञेयाः —

छागलं सक्थिजं मांसं शिरःस्थं (त्वैति ? तैत्ति)रं तथा ।
चतुष्पलोन्मितं सूक्ष्मकल्पितं क्षालितं जलैः ॥
पिप्पलीपिप्पलीमूलशुण्ठीचित्रकधान्यकैः ।
द्विशाणैः संयुतं तोये क्वाथ्यमर्धाढकोन्मिते ॥
मांसेऽस्मिन् द्विपलं तत्र डाडिमात् कुट्टितात् क्षिपेत् ।
तं रसं मर्दितं पूतं हिंगुसैन्धवजीरकैः ॥
युक्तं सुधूपितं पथ्यं शुद्धानां शुद्धिकाङ्क्षिणाम् ।
कृशानां व्याधिमुक्तानाम् …….. ॥

इत्यादि ।

मौद्गः रस इत्यनुवर्तते यूषः व्रणिनां कण्ठरोगिणामक्षिरोगिणां च पथ्यः मुद्गयूषस्यैवं विधानमुक्तं तन्त्रान्तरे —

पलद्वयद्वयससुमुद्गकल्पितः
पलाष्टकत्रिचतुरवारिपाचितः ।
पलाष्टकः पटुकटुहिंगुबोधितो
रसोत्तमः सकलगदापहो नृणाम् ॥

इति । अस्य च संस्कृतस्य विधानमुक्तं —

मुद्गानां द्विपलं तोये श्रृतमर्धाढकोन्मिते ।
पादस्थं मृदितं पूतं डाडिमस्य पलेन तु ॥
युक्तं सैन्धवविश्वाह्वधान्यकैः पादकार्षिकैः ।
कणाजीरकयोश्चूर्णशाणैकेनावचूर्णितम् ॥
संस्कृतो मुद्गयूषोऽयं पित्तश्लेष्मोत्थरोगनुत् ।

इति ।

अकृतात् कृतयूषाच्च रसाच्च जलसाधितात् ॥
स्नेहाम्लपटुयुक्ताच्च पूर्वः पूर्वो लघुर्मतः ।

इति ॥ ३१ ॥

वातानुलोमी कौलत्थो गुल्मतूनिप्रतूनिजित् ।
तिलपिण्याकविकृतिः शुष्कशाकं विरूढकम् ॥ ३२ ॥
शाण्डाकीवटकं दृग्घ्नं दोषलं ग्लपनं गुरु ।
रसाळा बृंहणी वृष्या स्निग्धा बल्या रुचिप्रदा ॥ ३३ ॥

वातेति । कौल(स्था ? त्थो) रसो यूषो वातमनुलोमयति गुल्मादींश्च जयति तूनिप्रतूनिरोगौ गुल्मनिदाने वक्ष्यमाणलक्षणौ । तिलस्य विकृतिः कृसरादिः । पिण्याकस्य विकृतिर्वटकादिः । केचित् तिलपिण्याकस्यैव विकृतिरिति वदन्ति । तथा शुष्कशाकं निस्स्नेहसिद्धं शाकम् । विरूढकं अङ्कुरितभृष्टसस्यम् । शाण्डाक्यामासुतं मुद्गमाषादिवटकं शाण्डाकीवटकम् । हृद्याकारः पाठ्यकारश्च शाण्डाक्यासवद्रव्यकृतं वटकमितीत्याहतुः । एतत् सर्वं दृग्घ्नं त्रिदोषकरं ग्लपनं ग्लानिकरं कर्शनमित्यर्थः । रसाला करमथितेन मरिचशर्करादियुक्तेन दध्ना कृता(൩൭ഛ്ച) बृंहणी देहस्य बृंहणत्वकरी ॥ ३२, ३३ ॥

श्रमक्षुत्तृट्क्लमहरं पानकं प्रीणनं गुरु ।
विष्टंभि मूत्रलं हृद्यं यथाद्रव्यगुणं च तत् ॥ ३४ ॥

श्रमेति । पानकं शीतकषायं (വെള്ളംകാടി) तत् श्रमादिहरं तथा प्रीणनं मनःप्रीतिकरं यथाद्रव्यगुणं च स्वद्रव्यगुणेन च युक्तं येन येन द्रव्येण क्रियते तत्तद्गुणं भजते । पर्पटादीनां लाघवादि(ह्र)गुणा नोक्ताः ॥ ३४ ॥

* प्रभूतेति । माषसूपः (ഉഴുന്നുപരിപ്പ്) प्रभूतमाभ्यन्तरं मलं पुरीषं करोतीति प्रभूताभ्यन्तरमलः माषाणां बहुमलत्वे उक्तेऽपि अन्याभ्यस्ताद्विकृतिभ्यः सूपस्यातिशयख्यापनार्थं वचनम् ॥

विद्यादित्यादि । यूषरससूपशाकानां यथोत्तरमेव गौरवं विद्यात् । द्रव्यगुणसाम्येऽपि यूषाद् रसो गुरुः । रसात् सूप इत्यादि । तथा तनुसान्द्राम्लस्वादुषु चैतेषु यथोत्तरं गौरवं विद्यात् । एतदुक्तं भवति तनुभ्यो रसादिभ्यः सान्द्रा घना गुरवः सान्द्रेभ्योऽम्लाः । अम्लेभ्यश्च मधुरा इत्यर्थः । पाठ्याकारो हाटकश्चैवमाहतुः — गुणमुद्दिश्य निरूपिते एभ्यस्तनुभ्यो रसादिभ्यः सान्द्रा गुरवः । रसमुद्दिश्याम्लेभ्यो मधुरा इत्यर्थ इति । तन्त्रान्तरे चोक्तं—

पिशितेन रसस्तत्र यूषो धान्यैः खलः फलैः ।
मूलैश्च तिलकल्काम्लप्रायः काम्पलिकः स्मृतः ॥

ज्ञेयाः कृताकृतास्ते तु स्नेहादियुतवर्जिताः ।
अल्पमांसादयः स्वच्छा दकलावणिकाः स्मृताः ॥

अकृतात् कृतयूषाच्च रसाच्च जलसाधितात् ।
स्नेहाम्लपटुयुक्ताच्च पूर्वः पूर्वो लघुर्मतः ॥

सूपस्तक्रादिभिः सिद्धः स्वाद्वम्लो बृंहणः परम् ।
तं सरोगो न चाश्नीयान्न चाल्पाशी कथञ्चन ॥

इति ॥

**लाजास्तृड्च्छर्द्यतीसारमेहमेदःकफच्छिदः ।**
**कासपित्तोपशमना दीपना लघवो हिमाः ॥ ३५ ॥**
**†पृथुका गुरवो बल्याः कफविष्टंभकारिणः ।**
**धाना विष्टंभिनी रूक्षा तर्पणी लेखनी गुरुः ॥ ३६ ॥**

**लाजा** इति । लाजाः =(മലർ) ॥ ३५ ॥

---

* "प्रभूताभ्यन्तरमलो माषसूपः परं स्मृतः ।
विद्याद् यूषे रसे सूपे शाके चैव यथोत्तरम् ॥
गौरवं तनुसान्द्राम्लस्वादुष्वेषु पृथक् तथा ।"

इति सार्धमधिकं पद्यं व्याख्यात ऊह्यते ।

† एतदारभ्य पद्यद्वयस्य सुन्दरीसम्मतस्य व्याख्यात्र न दृश्यते ।

सक्तवो लघवः क्षुत्तृट्श्रमनेत्रामयव्रणान् ।
घ्नन्ति सन्तर्पणाः पीताः सद्य एव बलप्रदाः ॥ ३७ ॥
नोदकान्तरिता न द्विर्न निशायां न केवलान्
न भुक्त्वा न द्विजैश्छित्वा सक्तूनद्यान्न वा बहून् ॥ ३८ ॥

सक्तव इति । सक्तवो लघवः क्षुदादीन् घ्नन्ति तथोदकेन पीताः सन्तर्पणाः । उदकेन पीताः सद्य एव बलं कुर्वन्ति । पानात् सद्य एव बलप्रदा इति वा पाठः । तांश्चोदकान्तरितान् जलेन व्यवहितान् नाद्यात् । अन्यभोजनेषु हि अन्तरा पानं विहितं न तथा सक्तुषु कार्यमिति बोधयति । तथा न द्विः द्वौ वारौ नाद्यात् । न निशायां रात्र्याम् । न केवलानुदकादिरहितान् । न भुक्त्वा अन्यदोदनादि । न द्विजैश्छित्वा दन्तैः करस्थाः पिण्डीः छित्वा नाद्यादित्यर्थः । अत्र प्रतिपदं नञ्ग्रहणेन बहुदोषत्वं दर्शयतीति पञ्चि(कां ? कायाम् ।) बहूंश्च सक्तून् नाद्यात् । तन्त्रान्तरोक्तं रूक्षत्वं वातलत्वं च सक्तूनामिह नोक्तं लघुत्वादिनैवानुगतत्वात् । ननु रूक्षवातलत्वात् सक्तूनां सन्तर्पणा इत्यनुपपन्नं सद्य एव बलप्रदा इत्येतद(प्यु ? प्ययु)क्तं भुक्तोप्याहारः परिणतो धातुपुष्टये । नान्यथा । अत्राचक्ष्महे — प्रभावादुभयमप्येतद्युक्तं सक्तूनामयं ह्यचिन्त्यः प्रत्यक्षवेद्यः प्रभावो यत् पीताः सन्तर्पयन्ति । सद्य एव च बलं प्रयच्छन्ति तथाच मद्यमपरिणतमेव मदं जनयति तस्मात् सन्तर्पणत्वं बलप्रदत्वं चैषामुपपन्नमेव । हाटकस्त्वाह — एषां रूक्षवातलत्वात् तर्पणत्वं नोपपन्नमिति चेत् । न । पीता इति वचनात् । अम्लादिभिर्द्रव्यैर्मिश्रितास्तर्पयन्ति सद्यश्च बलमावहन्ति । शुष्कास्त्वतो विपरीता इति । यद्येवं सद्यो बलकरत्वमेषामनुपपन्नं, कस्माद्, उपयुक्तो ह्याहारः परिणतो धातुपुष्टये कल्पत इति । ब्रूमः । प्रभावात् । किञ्च वाजीकरणान्यपरिणतानि कर्मकराणि दृश्य(न्तै ? न्ते) मद्यं च पीतमात्रं मदयति परिणतौ त्वस्य मदव्यावृत्तिः । यथा वास्थापनानुवासनाञ्जनाच्छादनस्नानशुक्लवस्त्रादीनामनुपयुक्तानां जाठराग्निना अपक्वानां शरीरपुष्टौ सामर्थ्यं दृष्टमिति न्यासे । तन्त्रान्तरे चोक्तं —

तुल्याज्यसक्तुप्राशस्तु वृष्यो भेदी रसायनम् ।
तृट्छर्दिश्रमनुन्मन्थः शीतस्तृष्णानिवर्तकः ॥
प्रमेहक्षयकुष्ठानि न च स्युर्मन्थपायिनाम् ।
निचयात् कठि(नो ? ना) गुर्वी पिण्डी प्रोक्ता मृदुर्लघुः ॥

सक्तूनां द्रवतायोगाल्लघ्वीयस्यवलेहिका ।

लाजसक्तुकृतापि स्या(द्विलेपि ! द् विलेपी) तु गरीयसी ॥

इति ॥ ३८ ॥

पिण्याको ग्लपनो रूक्षो विष्टम्भी दृष्टिदूषणः ।

पिण्याक इति । पिण्याकोऽक्षोळतिलादीनां निष्पीडितः कल्कः । (പിണ്ണാക്ക്) ग्लपनो ग्लानिकरः ग्लपन इति गायतेर्णिजन्तात् "ग्लास्नाव-नुवमां च" इति मित्त्वात् ह्रस्वत्वम् । बाहुलकात् कर्तरि (च्यु ! ल्युट्) । तथा विष्टम्भी दृष्टिविकारकृच ॥

वेसवारो गुरुः स्निग्धो बलोपचयवर्धनः ॥ ३९ ॥

वेशेति । वेशवारो नागरधान्याजाजिहिङ्गुघृतादिसंस्कृतं सूक्ष्मच्छिन्नं मांसम् । (ഗങ്കാളി) बलवर्धनः शरीरोपचयवर्धनश्च ॥ ३९ ॥

मुद्गादिजास्तु गुरवो यथाद्रव्यगुणानुगाः ।

मुद्गेति । मुद्गादिजास्तु वेशवारा ये सूक्ष्मच्छिन्नमुद्गवटकादिभिः क्रियन्ते लोके पूरणा इति प्रसिद्धाः ते गुरवः यथाद्रव्यगुणानुगाः प्रकृतिद्रव्य-गुणाः येन येन क्रियन्ते तस्य तस्य गुणाननुगच्छन्ति वेशवारगुणं च भजन्ते । आदिशब्देन माषमसूरादीनां शिम्बिधान्यानां ग्रहणम् ।

मांसं सुकुट्टितं सूक्ष्मरजीभूतं च भर्जितम् ।

घृतेन हिङ्गुमरिचधान्यजीरकचूर्णवत् ॥

वेशवारत्वमाप्नोति मुद्गमाषादिजास्तथा ।

वेशवारास्तु गुरवो बृंहणा बलवर्धनाः ॥

इति ॥

कुकूलकर्परभ्राष्ट्रकन्द्वङ्गारविपाचितान् ॥ ४० ॥

एकयोनीन् लघून् विद्यादपूपानुत्तरोत्तरम् ।

कुकूलेत्यादि । अपूपान् कुकूलादिसिद्धान् एकयोनीनेककारणान् एक-प्रकृतिनिर्मितानिति यावद् । अग्निसम्बन्धातिशयानुरूपेण उत्तरोत्तरमुत्तरानति-क्रमेण लघून् विद्यात् तेन कुकूलपकात् सजातीयादपूपात् कर्परपको लघुः कर्परपकात् तु भ्राष्ट्रपक इत्यादि । भस्मगोमयचूर्णादिविहितोऽग्निः कुकूलकः (വെണ്ണീറാൽ) बाष्पस्वेद इत्यन्ये ।

"दीपज्वालितवह्नित्वं कपालकर्हि कर्परम् ।"

(കാര)

आहूनामाग्निसन्तापादग्निवर्णं च मृन्मयम् ॥

(ഇടയടപ്പു്)

कन्दुः स्यात् सुबहुच्छिद्रो वह्निज्वालाप्रवेशकम् ।

(വട്ട)

अज्वालो दग्धकाष्ठोऽग्निर्विधूमोऽङ्गार उच्यते ॥

(തെരളപ്പു്)

तेष्वेतेषु विपक्वस्य लघुता स्याद् यथोत्तरम् ।
अपूपप्रभृतेरेकद्रव्यसम्भूतियोगिनः ॥

एकयोनिग्रहणं भिन्नयोनेः समलाघवशङ्कानिरासार्थम् । एकोऽपूपो गुरुशालियोनिः कुकूलपक्वोऽन्येन लघुशालियोनिना कुकूलपक्वेनैव लाघवे समः तथा एको लघुशालियोनिः कुकूलपक्वोऽन्यो गुरुशालियोनिः कर्परपक्वश्च समावित्यर्थः । अनया च कल्पनया सर्वमूह्यम् ॥

अपूपे लघुताहेतुर्यः स शाकफलादिषु ।
सर्वेषु तुल्यो बोद्धव्यः कश्चिदुक्तिरुदाहृतिः ॥

इति कृतान्नवर्गः ॥

---

कृतान्नवर्गादनन्तरं मांसशाकयोस्त(द्व ? श्व)ञ्जनभूतयोर्निर्देशः । तत्रापि प्राधान्यान्मांसवर्गस्य पूर्वं निर्देशः । प्राधान्यं च मांसस्य भक्तेन सह प्रचुरोपयोगेऽ(प्र ? प्य)दोषात् । शाकस्य तु बहूपयोगे दोषं वक्ष्यति —

"शाकावराग्रभूयिष्ठमत्युष्णलवणं त्यजेद् ।"

इति ॥

अपि च —

केवलं भक्ष्यमन्नस्य व्यञ्जनं चक्षुषेऽहितम् ।
पथ्यं बलकरं मांसम् ...................... ... ॥

इति तद्वर्गवर्णनामानन्त्याद् व्यक्तिभेदानां न प्रतिव्यक्ति मांसानां रसगुणादिनिर्णयः शक्यते । तेन सामान्यं किञ्चिदवलम्ब्य तत्स्वरूपं निर्दिदिक्षुः प्राणिनो वर्गीकरोति —

हरिणैणकुरङ्गर्श्यगोकर्णमृगमातृकाः ॥ ४१ ॥

---

१. 'ब न ला' क. पाठः,

शशशम्बरचारुष्कशरभाद्या मृगाः स्मृताः ।
लाववर्तीकवार्तीररक्तवर्त्मककुक्कुराः ॥ ४२ ॥
कपिञ्जलोपचक्राख्यचकोरकुरुबाहवः ।
वर्तको वर्तिका चैव तित्तिरिः क्रकरः शिखी ॥ ४३ ॥
ताम्रचूडाख्यबकरगोनर्दगिरिवर्तिकाः ।
तथा शारपदेन्द्राह्ववारटाश्चेति विष्किराः ॥ ४४ ॥

हरिणेत्यादि । हरिणादयो दश मृगसंज्ञाः स्मृताः । स्वयमेव भक्षणं मृगयन्त इति मृगाः । तथा चोक्तं —

पाशबन्धास्तु पशवो मृगास्त्वाहारमार्गणाः ।

इति । एणहरिणावाकृत्या सदृशौ । केवलं ताम्रवर्णो हरिणः । कृष्णवर्णस्त्वेणः । हरिणः = (പുള്ളിമാൻ) एणः = (കേഴമാൻ) कुरङ्गः = (കറാൽമാൻ) ऋश्यः = (മരമാൻ) गोकर्णः = (വെരുളൈവമാൻ) मृगमातृकः = (മാന്താമാൻ) शशः = (മുയൽ) शम्बरः = (മറിമാൻ) चारुष्कः = (ഭതാൽ കൊമ്പൻ) शरभः = (എട്ടടിമാൻ) आदिशब्देन सङ्ग्रहोक्ताः कालपुच्छकादयो गृह्यन्ते ॥

लावादयो वारटान्ता एकविंशतिः विकीर्य भक्षणाद् विष्किराः । (കൊത്തിച്ചിതറിത്തിന്നുമവ) उक्तं च —

"विकीर्य भक्षणात् पद्भ्यां विष्किरः शकुनिर्मतः ।"

इति । ननु किमेकत्रोक्तं वर्तको वर्तिका चेति न बर्हिणीत्येवमादि । ब्रूमः ।

"गौरवं लिङ्गसामान्ये पुंसां स्त्रीणां च लाघवम् ।"

इति । एष धर्मो नास्ति वर्तकयोः, किं तर्हि स्त्रीणां पुरुषाणां चाविशेष इति । उत वा वर्तको वर्तिका चेति जात्यन्तरं न तु वर्तकस्य स्त्री वर्तिका यथा बलाका शारिकेति पुंस्यपि स्त्रीलिङ्गत्वावेशात् । जात्यन्तरमेवेदं स्त्रीलिङ्गनिर्देशो मक्षिकादिवत् इति न्यासे । लावः=(പീവൽ) (वाती ? वर्ती)कः=(കുതികലക്കി) (वार्तिकं ? वार्तीरः) = (കരംപുള്ള്) रक्ते वर्त्मनी यस्यात्यर्थं स रक्तवर्त्मकः = (ചെങ്ങലി) कुर्कुरः = (കക്കറാപ്പുള്ള്) कपिञ्जलः = (കപിഞ്ചാരിപ്പുള്ള്) उपचक्रः=(തേററപ്പട) चकोरः = (ചെംപോത്ത്) (कुरुबाहु ? करुबाहुः)= (വാവിൽ) वर्तकः=(കാട) वर्तिका= (കാടയടിയാൻ) तित्तिरिः = (തിത്തരിയപ്പുള്ള്) क्रकरः =(ഇരവാച്ചാത്തൻ) शिखी=

(മയിൽ) "ग्रीवादिभ्यश्च" इतीनिः । ताम्रचूडाख्यः=(കോഴി) बकरः = (കൊത്തിം) गोनर्दः = (കാക്കത്തമ്പുരാൻ) गिरिवर्तिका = (അരി-ക്കണ്ണംപീച്ചി) शारपदः = (പീതച്ചെഞ്ഞാലി) इन्द्राभः = (വാഴപ്പ-ഴത്തി) वारटः = (വണ്ണാത്തിപ്പുള്ള്.) ॥ ४४ ॥

जीवंजीवकदात्यूहभृङ्गाह्वशुकसारिकाः
लट्वा कोकिलहारीतकपोतचटकादयः ॥ ४५ ॥
प्रतुदाः

जीवमित्यादि । जीवञ्जीवकादयो दश प्रतुदाः । प्रतुद्य तुण्डेनाहृत्य धा-न्यादेर्भक्षणात् प्रतुदाः । आदिशब्देन संग्रहोक्ताः खञ्जरीटकपारावतादयो गृह्यन्ते । जीवंजीवकः = (വംവട്ടച്ചാവൽ) । दात्यूहः = (നത്ത്) भृङ्गाह्वः = (കടന്നച്ചാത്തൻ) शुकः= (കിളി) शारिका =(കാകിൽ) (പഞ്ചവണ്ണ-ക്കിളി) इति केचित् । लट्वा (കട്ടഉടപ്പൻ) कोकिलः=(കുയിൽ) हारीतः (വൈപ്പുറാവ്) कपोतः= (മാടപ്രാവ്) चटकः = (കുരികിൽ.) ॥

भेकगोधाहिश्वाविदाद्या विलेशयाः ।

भेकेति । भेकादयश्चत्वारो बिलेशयाः बिले भूगर्भे बाहुल्येन शयनाद् बिलेशयाः =(പൊത്തിൽ കിടക്കുമവ) । अलुगयं समासः । 'शयवासवासिष्वकालाद्'ति । भेकः = (പൊക്കാത്തവള) गोधा = (ഉടുമ്പ്) अहिः = (പാമ്പ്) श्वावित् = (ഏയ്യൻ) (മുള്ളൻപന്നി) श्वाविडित्यपपदम् । श्वाविदाद्या इति पाठः । आदिशब्देन श्वेतश्यामशल्यकादयो गृह्यन्ते ॥

गोखराश्वतरोष्ट्राश्वद्वीपिसिंहर्क्षवानराः ॥ ४६ ॥
मार्जारमूषिकव्याघ्रवृकवभ्रुतरक्षवः ।
लोपाकजम्बुकश्येनचाषवान्तादवायसाः ॥ ४७ ॥
शशघ्नीभासकुररगृध्रोलूककुलिङ्गकाः ।
धूमिका मधुहा चेति प्रसहा मृगपक्षिणः ॥ ४८ ॥

गोखरेत्यादि । गवादय एकोनत्रिंशत् प्रसहाः प्रसह्य बलादाहृत्य भक्षणात् प्रसहाः । (വലിഞ്ഞുഭക്ഷിക്കുമവ) मृगाश्च पक्षिणश्च मृगपक्षिणः केचि-न्मृगाः केचित् पक्षिणश्चेत्यर्थः । गौः = (പശു) खरः =(കഴുത) अश्वतरः = (കൊക്കറകഴുത) उष्ट्रः=(ഒട്ടകം) अश्वः= (കുതിര) द्वीपी=(പുള്ളിപ്പുലി) सिंहस्य भाषा सिंह एव । ऋक्षः= (കരടി) वानरः = (കുരങ്ങ്) मार्जारः=

टकः = (ഞണ്ട്) कुम्भीरकर्कटा इति पाठः । शुक्तिः = (ചിപ്പി) शङ्खः = (ചങ്ക്) उद्रुः = (നീർനാ) शम्बूकः (ഞമിഞ്ഞ) शफरी = (വരാൽമീൻ) पाश्नि = (ആരൽമീൻ) चन्द्रिका = (തിങ്കൾമീൻ बुल्रुकी = (കൊഴു മീൻ) नक्रः = (ചുറാവ്) मकरः = (മകരമീൻ) शिंशुमारः = (മുതല) तिमिङ्गिलः = (തുരിമീൻ) १ चिलिचिमः = (ചെമ്മീൻ) आदिशब्देन चित्रपदपाण्ड्वादयो गृह्यन्ते । चशब्दोऽनुक्तकदलकपर्दकादिसमुच्चयार्थः ।

इत्यष्टाभिः प्रकारैस्तन्त्रकारा मांसमाहुः । इत्यनेन प्रकारेण मांसमष्टविधं जगुरिति ह्याकारः ॥ ५०, ५१, ५२ ॥

**योनिष्वजावी व्यामिश्रगोचरत्वादनिश्चिते ।**

**योनिष्विति** । योनिषु पूर्वोक्तास्वष्टसु मांसयोनिषु मृगविष्किरप्रतुदबिलेशयप्रसहमहामृगाप्चरमत्स्याख्यासु मध्ये अजा चाविश्च अजावी छागारे(श्री ? श्रे) ते व्यामिश्रगोचरत्वान्मिश्रविषयत्वादनिश्चिते अनिर्णीते न हि जांगल एव चरतोऽजावी नियमेन नानूपे वा किन्तु जाङ्गलेऽपि देशे वर्तेते अनूपेऽपि । प्रसह्य भक्षणं बिलेशयनं धन्वानूपसञ्चारित्वमित्याहाराचाराव्यवस्थाभिर्वर्गेष्वकल्पिते । अजावी इति स्त्रीलिङ्गनिर्देशोऽत्र विवक्षित एव । केचित्वनिश्चिताविति जगदुः पुल्लिंगोऽत्र विवक्षित इति मन्यमानाः । मिश्रगोचरत्वादिति हे(त्वे ? तु)वादादन्येषामपि व्यभिचारिणां वर्गेष्वनिश्चितत्वं ज्ञेयमिति दर्शयति । ननु यद्येवं तित्तिरिरपि विष्किरयोनौ न वक्तव्यः व्यामिश्रगोचरत्वात् । स हि धन्वानूपविचारी प्रथितः । ब्रूमः । तत्स्वभावत्वात् । य(द्यु ? द्यप्यु)भयचरोऽयं तथापि जांगलस्वभावत्वाज्जांगलोऽयम् । विकीर्यभक्षणाच्च विष्किरत्वं तित्तिरेर्निश्चितं निमित्तमस्ति तस्माज्जांगल एव युक्तः 'स हि नियमेन द्वावपि धन्वानूपौ सेवते न ह्येकानिषेवी । जातुचिदुभयगुणत्वम् । अजावी तु कदाचिद् धन्वनिषेविणौ कदाचिदानूपनिषेविणावि'ति न्यासे । उभयगुणत्वेऽपि तित्तिरेर्विकीर्यभक्षणक्रियया जांगलेषु विष्किरेषु पाठ इति हाटकः । हरिणादीनां च किरातादिभ्यो नानादेशप्रसिद्धाः संज्ञा वेद्याः । पाठ्यकारस्त्वाह — अष्टग्रहणं नियमार्थं धान्वन्तरीयाः पुनरेनकप्रकारं पठन्ति । अयं पुनराचार्यो युक्त्या सकलमतमप्यंगीकृत्य मृगविष्किरप्रतुदान् जांगले नियुक्तवान् महामृगाप्चरमत्स्यानानूपे नियुक्तवान् मध्यौ बिलेशयप्रसहौ साधारणे नियुक्तवान् ।

---

१. 'राजी' इति पदं द्रष्टव्यं न दृश्यते । २. 'त्वापादा' इति पाठः.

अजावी अनिश्चिते । उभयचरं तित्तिरिं जांगले नियुक्तवान् स्निग्धगुरुत्वादिगुणसंयुक्तोऽपि लावादिवत् स्वास्थ्यानुवृत्तिं कुरुते । अजावी पुनरत्यन्तबृंहणत्वादियुक्ते शशादिवच्छोषहरे च । तस्मादनिश्चित इति ॥

वर्गीकृतानामेव स्वरूपकथनोपयोगि संज्ञान्तरमाह —

**आद्यान्त्या जाङ्गलानूपा मध्यौ साधारणौ स्मृतौ ॥ ५३ ॥**

**आद्यान्त्या** इत्यादि । आदौ भवा आद्यास्त्रयो वर्गा मृगविष्किरप्रतुदाख्या जांगलचारित्वाज्जांगलशब्दवाच्याः । एवमन्ते भवा अन्त्यास्त्रयो महामृगाऽप्चरमत्स्या आनूपशब्दवाच्याः । मध्यौ द्वौ वर्गौ बिलेशयप्रसहौ साधारणसंज्ञौ जांगलानूपचारिणावित्यर्थः । मिश्रवर्गौ च । मध्याविति द्विवचनश्रवणादाद्यानामन्त्यानां च त्रित्वं परिशेषानुमानात् सिध्यति ॥ ५३ ॥

**तत्र बद्धमलाः शीता लघवो जाङ्गला हिताः ।**
**पित्तोत्तरे वातमध्ये सन्निपाते कफानुगे ॥ ५४ ॥**

**तत्रेति** । तत्र तेषु जांगलानूपसाधारणेषु मध्ये जांगला बद्धमला मलं पुरीषं बद्धं ग्रथितं कुर्वन्ति शीतवीर्या लघवः सन्निपाते च हिताः । किंभूते पित्तोत्तरे अधिकपित्ते वातमध्ये मध्यवाते तथा कफानुगे कफोऽनुगोऽबलो हीनो यस्मिन् स्वल्पकफे । कषायस्वादुविशदा इति संग्रहे वचनात् जांगलानां स्वादुकषायरसत्त्वमध्याहार्यम् । अथवा स्वादुकषायत्वादिकमिहैषां युक्त्योक्तमित्यरुणदत्तः । आश्विनसंहितायामेणमांसमेवमुक्तम् —

"ऐणेयं मधुरं मांसं लघु वृष्यं त्रिदोषजित् ।"

इति ॥ ५४ ॥

**दीपनः कटुकः पाके ग्राही रूक्षो हिमः शशः ।**
**ईषदुष्णा गुरुस्निग्धा बृंहणा वर्तकादयः ॥ ५५ ॥**

**तित्तिरिस्तेष्वपि वरो मेधाग्निबलशुक्रकृत् ।**
**ग्राही वर्ण्योऽनिलोद्रिक्तसन्निपातहरः परम् ॥ ५६ ॥**

**दीपन** इत्यादि । शशोऽग्निदीपनः पाके कटुकः अत्यर्थं ग्राही शीतवीर्यश्च शीतत्वं च यावत् जाङ्गलपरिसमाप्तिस्तावत् सर्वे औष्ण्येन गुरुत्वेन स्निग्ध-

त्वेन च ईषत् स्वल्पं युक्ताः। व्याकारस्त्वाह —

"प्रोक्तवर्गस्वरूपाणां विशिष्टाः स्युः शशादयः।
तेषां निकृष्य कथ्यन्ते रसकर्मगुणादयः॥
आजांगलसमाप्तेः स्युर्वर्तकप्रभृतेर्गुणाः।
ईषदुष्णगुरुस्निग्धबृंहणत्वात् तथा मताः॥
ईषच्छब्दश्चतुर्ष्वेषु सम्बन्धी परिगृह्यते।" इति

वर्तकादारभ्याजाङ्गलपरिसमाप्तेः सर्वे पक्षिणो गृह्यन्ते इति केचित्। ईद्विधेषु तेष्वपि मध्ये तित्तिरिर्गुणैः श्रेष्ठः स्निग्धोष्णगुरुबृंहणत्वेनोभयगु-(णम? णोऽ)स्यास्तीति। मेधादिकरश्च। तथा ग्राही वर्ण्यो वाताधिकसन्निपातहरश्च। स च तित्तिरिर्धन्वनि जांगले अनूपे च देशे विचरत्यतः स्निग्ध उष्णो गुरुर्बृंहणश्च 'समानौ मरुधन्वानौ' इत्यमरसिंहः। 'जलप्रायमनूपं स्याद्' इति च। धन्वानूपविचारित्वादिति हेतुग्रहात् परे देशद्वि(ती? त)यसञ्चारा बोद्धव्याः कुक्कुटादयः॥ ५५, ५६॥

**नातिपथ्यः शिखी पथ्यः श्रोत्रस्वरवयोदृशाम्।**

नातीत्यादि। शिखी बर्ही नातिपथ्यः श्रोत्रादीनां पथ्यः। वयसः स्तम्भनकारित्वेन पथ्यः। वयसः शीघ्रपरिणामरक्षण इति॥

**तद्वच्च कुक्कुटो वृष्यः**

तद्वदिति। तद्वन्मयूरवत् कुक्कुटो मयूरतुल्यगुणो वृष्यश्च॥

**ग्राम्यस्तु श्लेष्मलो गुरुः॥ ५७॥**

**मेधानलकरा हृद्याः क्रकराः सोपचक्रकाः।**
**गुरुः सलवणः काणकपोतः सर्वदोषकृत्॥ ५८॥**

ग्राम्य इत्यादि। ग्राम्यो जनपदचरः पुनः कुक्कुटः श्लेष्मलो गुरुश्च। आश्विनसंहितायामेवमुक्तम् —

गुरूष्णः स्निग्धमधुरो बल्यः स्याद् ग्राम्यकुक्कुटः।
गुल्मघ्नं कौक्कुटं मांसं चक्षुष्यं हितमर्शसि॥

इति।

क्रकरा उपचक्रकाश्च मेधामग्निं च कुर्वन्ति। हृद्याश्च। काणकपोतः = (കാട്ടുപ്രാവ്.) गुरुरीषल्लवणः त्रिदोषकृच्च॥ ५८॥

**चटकाः श्लेष्मलाः स्निग्धा वातघ्नाः शुक्रलाः परम् ।**

**चटके**त्यादि । चटकाः श्लेष्मलाः अतिशयेन शुक्रकृतश्च ॥

**गुरूष्णस्निग्धमधुरा वर्गाश्चातो यथोत्तरम् ॥ ५९ ॥**

**मूत्रशुक्रकृतो बल्या वातघ्नाः कफपित्तलाः ।**

**गुरूष्णे**त्यादि । अतो जाङ्गलवर्गत्रयादनन्तरं विलेशयाद्याः पञ्च वर्गा यथोत्तरं गुर्वादिगुणाः । यो यस्मादुत्तरो वर्गः स तस्माद् गुरुत्वादिभिरधिक इत्यर्थः । तथा यथोत्तरमेव मूत्रशुक्लकृतो बल्या वातघ्नाः श्लेष्मपित्तलाश्च ॥

**शीता महामृगास्तेषु क्रव्यादाः प्रसहाः पुनः ॥ ६० ॥**

**लवणानुरसाः पाके कटुका मांसवर्द्धनाः ।**

**जीर्णार्शोग्रहणीदोषशोषार्तानां परं हिताः ॥ ६१ ॥**

एवं वर्गपञ्चकस्य सामान्यगुणानुक्त्वा अपवादमाह—**शीता** इत्यादि । तेषु वर्गेषु मध्ये महामृगाः शीतवीर्याः । ये क्रव्यं मांसं भुञ्जते मार्जारगृध्रोलूकादयः ते च प्रसहाश्चेति कर्मधारयः ते लवणानुसराः पाके कटुका मांसवर्धनाश्चातितराम् । जीर्णार्शःप्रभृत्यार्तानामतिशयेन हिताः चक्षुष्याश्च । **इन्दु**याकारस्त्वाह—

शीता महामृगास्तेषु वर्गेषु महामृगेषु काकाक्षिवदुभयत्रान्वयः तेषु ये उष्णाः ते पश्चात् कथ्यन्त इति वाक्यशेषः क्रव्यं मांसमश्नन्ति ये ते क्रव्यादप्रसहा व्याघ्रादयः । पुनर्विशेष इति ॥

अष्टवर्गाभिधानान्ते प्रागजावी निरूपितौ ।
अजावीनां च विज्ञेया गुणाः प्रसहवर्गवत् ॥
अद्य प्रसहवर्गेषु पाठादेषोऽर्थ इष्यते ॥

इति ॥ ६१ ॥

**नातिशीतं गुरु स्निग्धं मांसमाजमदोषलम् ।**

**शरीरधातुसामान्यादनभिष्यन्दि बृंहणम् ॥ ६२ ॥**

**आजं** मांसं नातिशीतवीर्यं नातिगुरु नातिस्निग्धं साधारणमित्यर्थः नातिशब्दावत्रेषदर्थे यदि तु प्रतिषेधमात्रमभीष्टमभविष्यदाचार्यस्य ततो नञ एव केवलस्योपादानमकरिष्यत् । तस्मादीषदर्थ एव विवक्षितः । अत एवादोषलं दोषाणां सामान्यं नाशयति पथ्यमत्यर्थम् । नञ् विपरीतार्थे । तथा च हारीतः—

" त्रिदोषनुद् देहधातुसामान्याच्छागलं लघु ।"

इति ॥

अन्ये तु चरकमतमनुसरन्त एवं वदन्ति अदोषलमिति नञीषदर्थेऽल्पदोषलमित्यर्थः यथा (अनुदरा बाले)ति । शरीरस्य धातुः प्रकृतत्वान्मनुष्यशरीरस्य मांसाख्यो यो धातुः तस्य सामान्यात् तुल्यत्वादाजं मांसमनभिष्यन्दि बृंहणं च । अभिष्यन्दकराणां बृंहणत्वं भूमितोयगुणाधिक्यात् । (अन्यषां) बृंहणप्राप्तिं निषेधति । गुणकृतं चाऽत्र सामान्यं गृह्यते न द्रव्यकृतं द्रव्यकृते हि सामान्ये गृह्यमाणे तुरगोरगादिमांसमपि पुरुषशरीरधातोर्मांसाख्यस्य मांसत्वेन समानं भवतीति तदप्यनभिष्यन्दि बृंहणं च स्यात् न केवलमाजं मांसम् । मांसग्रहणं चात्रोपलक्षणार्थम् । न केवलमाजं मांसं पुरुषशरीरधातुना मांसाख्येन तुल्यं यावदन्येऽपि ये छागशरीरगता धातवस्तेऽपि । मनुष्यशरीरधा(तूनां तु ? तुना) तुल्यगुणास्तेऽप्यनभिष्यन्दिनो बृंहणाश्च । द्व्याकारस्तु शरीरधातुसामान्यादिति मनुष्यशरीरधातुभिः सामान्याद् रसादिभिस्तुल्यत्वादनभिष्यन्दीत्याह । सामान्यादिति हेतुग्रहणेनाजामानुषयोः सामान्यं (बा ? बो)धयति । अनया भङ्ग्या पुरुषमांसस्याप्याचार्येण गुणा उक्ताः । मांसग्रहणस्योपलक्षणत्वादाजानामितरधातूनामपि कायधातुसाम्यं वेद्यम् । अनेन 'मानुषमांसस्यापि स्वरूपं निरूपितमि'ति न्यासे । हाटकस्तु — शरीरधातुसामान्याददोषलमित्यन्वयं वदति ।

त्रिदोषनुद् देहधातुसामान्याच्छागलं लघु ।

इति वचनात् । ननु बृंहणं यद् द्रव्यं तद् भौमाप्यमपि च अपामेव साधरणो धर्मः स्रवणरूपः तत् कथमनभिष्यन्दीत्युक्तम् । ब्रूमः द्रव्यप्रभावात् । ईदृशोऽयं द्रव्यप्रभावो यद् बृंहणमपि द्रव्यमनभिष्यन्दीति । मनुष्यशरीरवर्णनं[1] किमर्थमिति चेत् शा(स्त्रं ? स्त्र) व्याप्त्यर्थमिति ब्रूमः ।

गोखराश्वोष्ट्रमहिषसृगालश्वादिजं पलम् ।
निन्दितं धर्मशास्त्रज्ञैर्गोमांसमतिगर्हितम् ॥
शास्त्रार्थव्याप्तये मांसं तदेतस्मिन् निरूप्यते ।
अतिनिन्दितमप्येतन्मांसमेवं गुणोदयम् ॥

---

१. 'ना' ख. पाठः.

इत्यत्र दृश्यते नायं विधिस्तल्लक्षणं प्रति ।
श्येनादियागा विहिताः वेदे निरयहेतवः ॥
अग्राह्यमेवमन्धाद्यैर्वृत्ताचारादि दर्शितम् ।
नन्द्युद्दालकिपाञ्चालमल्लनागादिभिः स्वके ॥
कामसूत्रे विनिर्दिष्टाः कामिनामशुभाः क्रियाः ।
विषविश्वस्तघातादि नीतिशास्त्रे विधीयते ॥
असंभाव्याश्च वज्राद्या योगा होरादिदर्शिताः ।
शास्त्रार्थव्याप्तये तेषु तादृगर्थनिरूपणम् ॥
तद्वदत्रापि गोमांसनरमांसादिवर्णना ॥

**विपरीतमतो ज्ञेयमाविकं बृंहणं तु तत् ।**
**शुष्ककासश्रमात्यग्निविषमज्वरपीनसान् ॥ ६३ ॥**
**कार्श्यं केवलवातांश्च गोमांसं संनियच्छति ।**
**उष्णो गरीयान्महिषः स्वप्नदार्ढ्यबृहत्वकृत् ॥ ६४ ॥**
**तद्वद्वराहः श्रमहा रुचिशुक्रबलप्रदः ।**
**मत्स्याः परं कफकराः चिलिचीमस्त्रिदोषकृत् ॥ ६५ ॥**

अत आजमांसाद् विपरीतमाविकं मांसम् । अनुष्णमस्निग्धमगुरु सदोषमभिष्यन्दि चेति । बृंहणत्वस्यापि विपर्यये प्राप्ते तदपवादमाह — बृंहणं तु तदिति । तुशब्दोऽवधारणे बृंहणमेव तदित्यर्थः । खरनादे त्वेवमुक्तं —

"शीतलं मधुरं स्निग्धमाविकं बृंहणं गुरु ।"

इति ।

गोमांसं शुष्ककासादीन् नाशयति । विषमज्वरः सततादिः । केवलवाता अन्यदोषासंयुक्तवाताः ॥

महामृगेषूष्णं दर्शयति — महिष उष्णवीर्यः गुरुतरः स्वप्नादींश्च करोति । गुरुशब्दादीयसुनि "प्रियस्थिर —" इत्यादिना गरादेशः । दार्ढ्यमङ्गस्य । "वर्णदृढ —" इत्यादिना ष्यञ् ॥

वराहः सूकरः तद्वन्महिषवत् गुणैर्ज्ञेयः श्रमहा रुच्यादिप्रदश्च ॥

मत्स्याः परं कफकरा इति विशेषगुणोक्तिः ।

"गुरूष्णस्निग्धमधुरा वर्गाश्चातो यथोत्तरम् ।"

इत्यनेन लक्षणेनातिगुरूष्णस्निग्धमधुरत्व(मि? म)तिशुक्रमूत्रकृत्त्वमतिवल्यत्व-मतिवातघ्नत्वमतिश्लेष्मपित्तलत्वं च मत्स्यानामुक्तम्। परमित्यनेन मत्स्या अति-शयेन कफकरा इति बोधयति। परशब्दोऽतिशयार्थः। पित्तकरत्वमप्याह। सङ्ग्रहे तु स्पष्टमुक्तम्—

कफपित्तकरा मत्स्याः परं पवननाशनाः।

इति।

चिलिचीमसंज्ञो मत्स्यस्त्रिदोषकरः स (चां? चा)गोचरे दुर्विषये शैवल-कर्दमादौ चरति॥

लावरोहितगोधैणाः स्वे स्वे वर्गे वराः परम्।

लावादयः स्वे स्वे वर्गे अतिशयेन वराः। तत्र लावो विष्किरेषु श्रेष्ठः। रोहितो मत्स्येषु वरः। गोधा विलेशयेषु वरा। एणस्त्वतिशयेन मृगेषु वरः। अन्येषामपि वरत्वं सङ्ग्रहे दर्शितम्—

''एणः कुरङ्गो हरिणः शशो लावः कपिञ्जलः।
तित्तिरिः क्रकरो गोधा श्वाविद् गृध्रो मृगाधिपः॥
बर्हिणः शारिका न्यङ्कुर्हंसो रोहितकच्छपौ।
वर्मीति चाग्र्या वर्गेषु प्रवरास्तेष्वपि स्मृताः॥
लावैणगोधाः सिंहाश्च निन्दितो गौः स दर्दुरः।
ऋश्यः काणकपोतश्च शेषमुक्तं यथायथम्॥

इति। मृगविष्किरप्रतुदेषु जाङ्गलेषु विष्किराणां पथ्यतमत्वं चक्षुर्हितत्वं ज्ञाप-यितुमत्र लावस्य प्रथमग्रहणम्। आनूपवर्गान्त्यस्य मत्स्यवर्गस्यापथ्यत्वे रोहितस्य पथ्यत्वं बोधयितुमत्र द्वितीयग्रहणम्। लघुत्वाद् रुच्यत्वाद् विषहरत्वाच्च गोधायाः पथ्यतया तृतीयग्रहणम्। एणस्य वर्गद्वितीयस्य वरत्वग्रहणाद्धारिणस्य तत्तुल्यतां ख्यापयति। (गृहे? मृगे)षु एणो मुख्यः ऋश्योऽमुख्यः 'अभ्यर्हितं पूर्वमि'ति न्यायेन श्रेष्ठस्य प्रथमग्रहणमश्रेष्ठस्य पश्चाद् ग्रहणं प्राप्तम्। यत्रा-न्यथा क्रियते तत्र पथ्यापथ्ययोः साधारणं वक्ष्यति। विष्किरेषु लावस्य वरत्वं क्रमप्राप्तमुक्तमिति वर्गस्य यथोक्तगुणसद्भावः। प्रतुदेषु शारिका मुख्या कपो-तोऽमुख्यस्ततोऽप्यमुख्यः काणकपोतः। विलेशयेषु भेकोऽपथ्यतमः गोधा श्रेष्ठा बिलेशयमात्रस्यापथ्यत्वं ख्यापयितुं दर्दुरस्यावरतरस्य प्रथमग्रहणेन क्रमः कृतः।

प्रसहेषु सिंहः श्रेष्ठः। गौरश्रेष्ठः। मत्स्येषु रोहितचिलीचिमौ वरावरौ अनयोर्वर्गयो-र्यथोक्तगुणयोगित्वं निर्देशवैषम्याभावात्। एवमुक्तेषु केषाञ्चित् परतन्त्रोक्ता गुणा वर्ण्यन्ते ॥

गोधा विपाके कटुका........ मधुरा रसे।
वातपित्तप्रशमनी बृंहणी बलवर्धनी ॥
गोधा नियच्छति विषं मूषिकः शुक्रवर्धनः।
पित्तघ्नं मौषिकं वर्ण्यं चक्षुष्यं शोषिणां हितम् ॥
स्नेहनं बृंहणं बल्यं शूलघ्नमनिलापहम्।

इति ॥

प्राह्याप्राह्यविभाग दर्शयति —

**मांसं सद्योहतं शुद्धं वयःस्थं च भजेत्त्यजेत् ॥ ६६ ॥**
**स्वयं मृतं कृशं मेद्यं व्याधिवारिविषैर्हतम्।**

मांसमित्यादि। मांसं सद्योहतं भजेत् सद्योहतस्य मृगादेर्मांसं भजे-दित्यर्थः। तथा शुद्धं कचस्नावमलास्थ्यादिरहितं तथा वयसि तिष्ठतीति वयःस्थं यद्यपि सर्वं मांसं वयःस्थमेव तथापीह वयःस्थमित्युक्त्या शोभनं वय इति गम्यते। तस्माद् यूनः प्राणिनः सम्बन्धि मांसं भजेत् न बालवृद्धयो-रिति। वयःस्थं यौवनस्थं सम्पूर्णधातुत्वादिति हाटकः ॥

त्यजेदित्यादि। मृ(गं? तं) स्वयं मृतं न भजेत् अविज्ञातस्वरूपेण व्याधिना मृतस्य प्राणिनो यन्मांसं तत् त्यजेदित्यर्थः। कृशं दुर्बलं न भजेत्। तथा मेद्यमतिशयेन मेदुरं मांसं त्यजेत्। भृशं मेद्यमिति पठन्ति केचित्। तथा विज्ञातस्वरूपेण व्याधिना विषेण वारिणा च हतं निर्जीवीकृतं मांसं त्य-जेत्। सुदुर्गन्धमगोचरचरं च त्यजेत् ॥

एकजातीयस्य मृगादेर्मांसस्यावयवभेदेन गुरुत्वलघुत्वे निरूपयति —

**पुंस्त्रियोः पूर्वपश्चार्धे गुरुणी गर्भिणी गुरुः ॥ ६७ ॥**
**लघुर्योषिच्चतुष्पात्सु विहङ्गेषु पुनः पुमान्।**
**शिरःस्कन्धोरुपृष्ठानां कट्याः सक्थ्नोश्च गौरवम् ॥ ६८ ॥**
**तथामपक्वाशययोर्यथापूर्वं विनिर्दिशेत्।**
**शोणितप्रभृतीनां च धातूनामुत्तरोत्तरम् ॥ ६९ ॥**

मांसाद्गरीयो वृषणमेढ्रवृक्कयकृद्गुदम् ।

पुंस्त्रियोरित्यादि । पुंस्त्रियोरस्य पूर्वपश्चार्धे यथासंख्यं गुरुणी । पुरुषस्य पूर्वार्धं गुरु । स्त्रियाः पश्चार्धं गुरु । शरीरस्य पूर्वार्धं नाभेरूर्ध्वम् । पश्चार्धं नाभेरधः । गर्भिणी च गुरुः गर्भिणीमांसं गुर्वित्यर्थः । तस्याः पश्चार्ध(मि ? म)तिगुरु । चत्वारः पादा येषां ते चतुष्पादाः तेषु चतुष्पात्सु गवादिषु मध्ये स्त्री लघुः । चतुष्पादिति (संख्यासु) पूर्वस्येत्याद्यन्तलोपः । विहगेषु पक्षिषु तु पुमान् लघुः । शिरःप्रभृतीनां मांसानां यथापूर्वं गुरुत्वं निर्दिशेत् । एवं सक्थ्यादिमांसेभ्यः शिरोमांसं गुरुतरमित्यवतिष्ठते । पृष्ठानामिति पाठः । आमपक्वाशययोश्च यथापूर्वं गुरुत्वं निर्दिशेत् । तेन पक्वाशयादामाशयो गुरुः । शोणितप्रभृतीनां धातूनां उत्तरोत्तरं गौरवं निर्दिशेत् । तेन रक्तान्मांसं गुरु मांसान्मेद इत्यादि । मांसाद् गरीयो वृषणादिकम् अत्राप्युत्तरोत्तरमित्यनुवर्तते। तेन मांसाद् गुरुतरो वृषणः तस्मान्मेढ्रो यावत्सर्वगरिष्ठं गुदं निर्दिशेत् । वृषणमेढ्रवृक्कयकृद्गुदमिति । प्राण्यङ्गद्वन्द्वत्वादेकवद्भावादेकवचनम् ॥

गुरूण्यण्डानि बालानां कषायमधुरं पलम् ।
वृद्धानां स्नायुभूयिष्ठमवृष्यं गुरु दोषलम् ॥

इति संग्रहे पठितम् ।

इति मांसवर्गः ॥

---

'अन्नोपयोगसापेक्षमथ शाकं निरूप्यते' ॥

शाकं पाठासठीश्रूषासुनिषण्णसतीनजम् ॥ ७० ॥

त्रिदोषघ्नं लघु ग्राहि सराजक्षववास्तुकम् ।

शाकमित्यादि । शाकमिति पत्रपुष्पफलनाळकन्दादीनामुपदंशरूपाणां केषाञ्चिद्द्रव्यरूपाणां चाख्या (ഇലക്കറി) इति भाषा । हाटकस्त्वाह शाकशब्देन पाकात् (पूर्वा यथावटमने अवस्थान्तरो वटमने ?) च विकारमापन्नानां पाठादीनां पत्रकन्दमूलादीनि गृह्यन्ते आगमो हि —

चतुर्थः शाकवर्गोऽयं पत्रकन्दफलाश्रयः । इति ।

पाठादिजं शाकस(सं ! सकं) त्रिदोषहरं लघ्वादिगुणं च । पाठा =(പാഠ) सठी =(കർച്ചൂരം) श्रूषा =(നിലവാക) सुनिषण्णो जलमध्ये भवति पत्रै-र्भांगेरीतुल्यः =(നീരാരൽ) सतीनं =(ചണ്ണ) राजक्षवं = (കാട്ടുഉഴുന്ന്) वास्तुकं=(വസ്തൂച്ചീര) ॥

सुनिषण्णोऽग्निकृद्वृष्यस्तेषु

सुनिषण्ण इत्यादिविशिष्टगुणोक्तिः । तेषु मध्ये सुनिषण्णः स्वस्ति-काख्यः अग्निकृद् वृष्यश्च ॥

राजक्षवः परम् ॥ ७१ ॥

ग्रहण्यर्शोविकारघ्नः वर्चोभेदि तु वास्तुकम् ।
हन्ति दोषत्रयं कुष्ठं वृष्या सोष्णा रसायनम् ॥ ७२ ॥
काकमाची सरा स्वर्या चाङ्गेर्यम्लाग्निदीपनी ।
ग्रहण्यर्शोऽनिलश्लेष्महितोष्णा ग्राहिणी लघुः ॥ ७३ ॥

राजक्षवोऽत्यर्थं ग्रहण्यर्शोविकारघ्नः । वास्तुकस्तु वर्चसः पुरीषस्य भेदी भेदनः । हन्तीत्यारभ्य स्वर्येत्यन्तं काकमाचीगुणाः । काकमाची =(കരി-ന്താളി) त्रिदोषघ्नी कुष्ठनाशिनी वृष्या सोष्णा किञ्चिदुष्णवीर्या स्वास्थ्यसं-वाहकत्वेन च रसायनसादृश्याद् रसायनम् । सरा विरेचनी स्वराय हिता स्वर्या । चाङ्गेरी=(പുളിയാരൽ) क्षुद्राम्लिका अम्ला अग्निदीपनी ग्रहण्या-दिषु हिता उष्णवीर्या ग्राहिणी लघुश्च ॥ ७१—७३ ॥

पटोलं सप्तलारिष्टशार्ङ्गेष्टावल्गुजाऽमृताः ।
वेत्राग्रं बृहती वासा कुन्तली तिलपर्णिका ॥ ७४ ॥
मण्डूकपर्णी कर्कोटकारवेल्लकपर्पटाः ।
नाडीकलायं गोजिह्वा वार्ताकं वनतिक्तकम् ॥ ७५ ॥
करीरं कूलकं नन्दी कुचेला शकुलादनी ।
कठिल्लं केम्बुकं शीतं सकोशातककर्कशम् ॥ ७६ ॥
तिक्तं पाके कटु ग्राहि वातलं कफपित्तजित् ।

पटोलादिकं कर्कशान्तमष्टाविंशतिसम्मितं शाकं शीतं शीतवीर्यं तिक्तं विपाके कटु कफपित्तहरं च । पटोलं = (പടവലം) सप्तला =(ചമ്മലത)

अरिष्टं =(വേപ്പ്) शार्ङ्गेष्टा = (കരുവ്വൂലി) अवल्गुजा = (കാർകോകി-ലരി) अमृता = (ചിററമൃത) वेत्रो वंशसदृशस्तस्याग्रं = (ചൂരമ്പു) बृहती= (ചെറുവഴുതിന) वाशा = (ആടലോടകം) कुन्तली = (കാട്ടു ചിററ ള്ള) तिलपर्णिका=(നെയ്യുണ്ണി) मण्डूकपर्णी = (പടങ്ങാരം ?) (മുത്തിൾ) कर्कोटः = (പാവിൽ) कारवेल्लः = (കൈപ്പ) पर्पटः शीतवीर्याख्यः नाळीकलायं = (കരിഞ്ചെണ്ണു) गोजिह्वा = (കൊഴപ്പ) (താറാ) (കോഴി-കറിഞ്ഞി) इत्यपरे । वार्ताकं = (തക്കാരിവഴുതിന) वनतिक्तकं = (ചുണ്ട) करीरं = (അഗസ്ത്രി) कूलकं = (കയ്യൻപടവലം) नन्दी = (ന-ന്ദ്യാർവട്ടം) कुबेला = (കഴഞ്ചിൽ) पाठभेदः इतीन्दुररुणदत्तश्च । शकु-लादनी = (നറുംപാണൽ) रोहिणी इति केचित् । कठिल्लं = (തവിഴാമ) केबुकं = (തിങ്ങള്ളരി) शीतं चन्दनमिति लोके पठ्यते । शीतवीर्यमिति हाटकाह्वयः कोशातपत्रं (പട്ടിൽപീരം) कर्कशं = (പെരും പീരം) ॥

तिक्तशाकादिसामान्यगुणमुक्त्वा केषाञ्चिद् गुणकर्मविशेषमाह —

हृद्यं पटोलं क्रिमिनुत् स्वादुपाकं रुचिप्रदम् ॥ ७७ ॥
पित्तलं दीपनं भेदि वातघ्नं बृहतीद्वयम् ।
वृषं तु वमिकासघ्नं रक्तपित्तहरं परम् ॥ ७८ ॥
कारवेल्लं सकटुकं दीपनं कफजित्परम् ।
वार्ताकं कटुतिक्तोष्णं मधुरं कफवातजित् ॥ ७९ ॥
सक्षारमग्निजननं हृद्यं रुच्यमपित्तलम् ।

तिक्तमपि हृदयप्रीतिकरणात् पटोलं हृद्यम् । मुनिना तूक्तं —

पटोलपत्रं पित्तघ्नं वल्ली चास्य कफापहा ।
फलं त्रिदोषशमनं मूलं चास्य विरेचनम् ॥

इति । बृहतीद्वयं स्थूलबृहती वहोतिकाख्या । क्षुद्रबृहती कण्टकारिकाख्या । तदेतदुभयं पित्तकरमग्निदीपनं भेदि शकृदादीनाम् । वृषं वाशा छर्दिकासौ हन्ति । रक्तपित्तं चात्यर्थं जयति । कारवेल्लमीषद्रसे कटुकमग्निदीप्तिकरमतिश्ले-ष्मघ्नम् । वार्ताकं रसे कटुतिक्तमधुरमुष्णवीर्यं सह क्षारेण वर्तते सक्षारं किञ्चि-त्क्षारत्वयुक्तमग्निजननं हृद्यं हृदयाय हितं रुच्यं रुचिकृत् अपित्तलं नञीषदर्थे किञ्चित्पित्तकरमित्यर्थः । अथवा अपित्तलं न च पित्तं करोति यथा वातश्लेष्मघ्नं न तथा पित्तघ्नमित्यर्थः । ननु सह क्षारेण वर्तते सक्षारमित्येवं कथमुक्तम् ।

यावता क्षारं द्रव्यम् । यथा च प्रागुक्तं 'क्षरणात् क्षारः' इत्यादि । न च द्रव्यं द्रव्येण सह वर्तते । तथाच गुणानामेवायं धर्मो यद् द्रव्याश्रितत्वं नाम । तस्मात् सक्षारमित्ययुक्तमिव मन्यामहे । अत्राचक्ष्महे । क्षारशब्देनात्र क्षारधर्म उपलक्ष्यते विस्रावणाद्यात्मकः यद्वशात्सक्षारमिति द्रव्यं व्यपदिश्यते तस्मात् सक्षारमित्युपपन्नम् । हाटकोऽपि सक्षारं स्रवणाद्यात्मकत्वात् क्षरयतीति क्षारशब्दव्यपदेश इत्याह ॥

**करीरमाध्मानकरं कषायस्वादुतिक्तकम् ॥ ८० ॥**

करीरं गूढपत्राख्यमाध्मानकरं रसेन कषायमधुरतिक्तम् । वायुना जठरापूरणमाध्मानम् ॥

**कोशातकावल्गुजकौ भेदनावग्निदीपनौ ।**

अनयोश्च पित्तहर्तृत्वं वातकफघ्नत्वं च यथाक्रमं वेद्यम् । एवं गुणभेदस्तन्त्रान्तरेषु पाठादिति ॥

**तण्डुलीयो हिमो रूक्षः स्वादुपाकरसो लघुः ॥ ८१ ॥**
**मदपित्तविषास्रघ्नो गृञ्जनं वातपित्तजित् ।**
**स्निग्धं शीतं गुरु स्वादु बृंहणं शुक्रकृत्परम् ॥ ८२ ॥**

तण्डुलीयः = (ചെറുചീര) सः शीतवीर्यो रूक्षः स्वादुपाकरसो लघुर्मदादिनाशनश्च ॥

गृञ्जनं = (പനർമുതങ്ങ) वातपित्तहृत् स्निग्धादिगुणयुतमति शुक्रकृच्च । गृञ्जनं मदादिजित् शुक्रकृच्चेति व्याख्याकारः ॥ ८१, ८२ ॥

**गुर्वी सरा तु पालक्या मदघ्नी चाप्युपोदका ।**
**पालक्यावत्स्मृतश्चुच्चुः स तु संग्रहणात्मकः ॥ ८३ ॥**

पालक्या = (ചെഞ്ചീര) गुर्वी तथा सरा शकृदादीनां भेदनी । तुशब्दः पिच्छिलत्वादीनां सङ्ग्रहोक्तानां समुच्चयार्थः ॥

पालक्या पिच्छिला गुर्वी श्लेष्मला भेदनी हि(मेति सं)ग्रहे । व्याख्याकारो गुर्वी सरा चेति पठति । चशब्दः सङ्ग्रहोक्तगुणसमुच्चयार्थः । उपोदका = (വാശ)(भ ? मद)घ्नी मदनाशिनी । अपिशब्दाद् गुर्वी सरा च । अपि-

शब्दः पालक्यागुणसमुच्चयार्थः इति हृद्याकारः । चशब्देन द(ग्धं ? ग्ध)व्रण-हरत्वं समुच्चिनोति । तथोक्तं (महाभो)जे —

"पालक्या पिच्छिला शीता द(ग्धं ? ग्ध)व्रणहरी गुरुः ॥"

इति । चुच्चुः = (നീർചീര) सः पालक्यासदृशो गुणैः स्मृतः इत्यतिदेशेन श्लेष्मलत्वादिसिद्धिः स पुनश्चुच्चुः सङ्ग्रहणात्मको न भेदनः । अतिदेशेन भेदनत्वसिद्धिरित्यतस्तन्निषेधाय संग्रहणार्थे तद्वचनम् ॥ ८३ ॥

**विदारी वातपित्तघ्नी मूत्रला स्वादु शीतला ।**
**जीवनी बृंहणी कण्ठ्या गुर्वी वृष्या रसायनम् ॥ ८४ ॥**

विदारी= (മുതക്കൻ) वातपित्तहरा मूत्रलादिगुणयुक्ता रसायनं च । विदार्याः कन्दस्यैवायं गुणनिर्देशो युक्त्या बोध्यः । तथा च मुनिः —

"जीवनो बृंहणो वृष्यो बल्यः शस्तो रसायनम् ।
विदारिकन्दः कण्ठ्यश्च मूत्रलः स्वादुशीतलः ॥"

इति ॥ ८४ ॥

**चक्षुष्या सर्वदोषघ्नी जीवन्ती मधुरा हिमा ।**

जीवन्ती = (അടകൊതിയൻപാല) चक्षुष्यादिगुणयुक्ता । मधुरा अमधुरा चेति द्विविधा जीवन्ती । या मधुरा सा एवं गु(ण ? णा) शीतवीर्या च । या त्वमधुरा सा एभिर्गुणैः किञ्चिदूना । तथा चोक्तं सङ्ग्रहे —

"चक्षुष्या सर्वदोषघ्नी जीवन्ती मधुरा हिमा ।
शाकानां प्रवरा न्यूना द्वितीया किञ्चिदेव तु ॥"

इति ।

"जीवन्त्याः शाकमुख्यायाः वर्गमध्ये विधानतः ।
शाकवर्गस्य सर्वस्याप्यपथ्यत्वं प्रकाश्यते ॥
जीवन्ती बृंहणी गुर्वी शुक्रला स्वादु शीतला ।
शाकानां प्रवरा पथ्या द्रव्यत्वादेव नो गुणैः ॥
शाकं सर्वं स्वतोऽपथ्यं न गुणैः पथ्यतां व्रजेत् ।
प्रत्यनीकपरिच्छित्तिसमानानीकवेदनम् ॥
द्रव्यस्वरूपनिर्णीतेः[1] फलं विद्वद्भिरुच्यते ।"

1. 'निर्णीतैरिति' इत्यत्रायां दृश्यते.

[illegible]माह –

कूश्माण्डतुम्बकालिङ्गकर्कार्वार्वारुतिंडिशम् ॥ ८५ ॥
तथा त्रपुसचीनाकचिर्भटं कफवातकृत् ।
भेदि विष्टंभ्यभिष्यन्दि स्वादुपाकरसं गुरु ॥ ८६ ॥

कूश्माण्डेत्यादि । कूश्माण्डादिकं कफवातकृद् गुरु च । कूश्माण्डं (കുമ്പളം) तुम्बं=(ചുര) कालिङ्गः=(കമട്ടി) कर्कारुः=(കക്കരി) उर्वारुः=(വെള്ളരി) तिंडिशं=(കോവ) त्रपुसं=(തവുന്നാ) चीनाकं=(വട്ടച്ചുര) चिर्भटं=(വ[illegible]യവെള്ളരി) ॥ ८५, ८६ ॥

वल्लीफलानां प्रवरं कूष्माण्डं वातपित्तजित् ।
बस्तिशुद्धिकरं वृष्यं त्रपुसं त्वतिमूत्रलम् ॥ ८७ ॥

अत्र विशेषमाह — वल्लीफलानां मध्ये तु कूश्माण्डं वरम् । तथा वातपित्तहरं बस्तिशुद्धिकरं वृष्यं च । कूश्माण्डस्यान्यवल्लीफलापेक्षया प्रवरत्वं, न शाकवर्गे वरग्रहणमेतत् । वरा शाकेषु जीवन्तीति वक्ष्यमाणत्वात् । अन्ये तु रसायनत्वाद् वरत्वमिच्छान्ति । तथोक्तं भोजे —

"शीर्णवृन्तं कुष्यफलं परिसंवत्सरोषितम् ।
अपस्मारहरं वृष्यं मदघ्नं च रसायनम् ॥"

इति । त्रपुसं पुनरतिमूत्रलम् । अतिग्रहणाद् वल्लीफलानामन्येषामपि मूत्रलत्वं त्रपुसस्य विशेषेण मूत्रलत्वमित्यर्थः ॥ ८७ ॥

तुम्बं रूक्षतरं ग्राहि कालिङ्गैर्वारुचिर्भिटम् ।
बालं पित्तहरं शीतं विद्यात्पक्वमतोऽन्यथा ॥ ८८ ॥

तुम्बमलाबुसंज्ञं रूक्षतरमेव कालिङ्गाद्यपि रूक्षम् । तुम्बमतिशयेनेत्यर्थः । अतिशयार्थे तरप् तमप् च । तथा ग्राहि । सर्वाणि तु सामान्यगुणोक्त्या भेदीन्येव । चरकमुनिमतानुसारिणस्त्वेवं व्याचक्षते — तुम्बं रूक्षतरं कालिङ्गोर्वारुचिर्भिटं ग्राहीति । कालिङ्गादि बालं (सत्रियम्?) असम्पूर्णरसादि पित्तहरं शीतवीर्यं च । तदेव पक्वं जरठमतो बालादन्यथा विपरीतं पित्तकरमुष्णवीर्यं चेत्यर्थः ॥ ८८ ॥

शीर्णवृन्तं तु सक्षारं पित्तलं कफवातजित् ।
रोचनं दीपनं हृद्यमष्ठीलानाहनुल्लघु ॥ ८९ ॥

शीर्णेत्यादि । वृन्तं फलबन्धनसंस्थानं शीर्णमतिपाकाद् विदलितं शुष्कं यस्यातिपक्वमिति यावत् तथाविधं पूर्वोक्तं कालिङ्गादि सक्षारमीषत्क्षारं सलवणमिति हृद्याकारः । (क्षार इति सूक्ष्मक्रिय इति वदन्?) पित्तकरं कफवातघ्नं च रुचिकरम् । अष्ठीलामानाहं च हन्ति । अष्ठीलानाहौ वक्ष्यमाणलक्षणौ

"घनोष्ठीलोपमो ग्रन्थिरष्ठीलोर्ध्वं समुन्नतः ।"

इति ।

"साटोपमत्युग्ररुजमाध्मानमुदरे भृशम् ।"

इत्यादि च ॥ ८९ ॥

कन्दशाकमुच्यते

मृणालबिसशालूककुमुदोत्पलकन्दकम् ।
नन्दीमाषककेलूटशृङ्गाटककशेरुकम् ॥ ९० ॥
क्रौञ्चादनाङ्गलोड्यं च रूक्षं ग्राहि हिमं गुरु ।

मृणालेत्यादि । मृणालादिशाकमेकादशभेदं रूक्षं सङ्ग्रहणं शीतवीर्यं गुरु च । मृणालं द्विविधं स्थूलं सूक्ष्मं च । तत्र स्थूलं मृणालम् । इतरद् बिसम् । सूक्ष्मं मृणालं स्थूलं बिसमित्यन्ये । 'मृणालं पद्मकन्दः बिसं पद्मजटे'ति हृद्याकारः । वलयाकारः श्वेतो मृणालः हरितः कण्टकयुक्तो बिस इति केचित् । मृणालं=(താമരവളയം) बिसं=(താമരത്തണ്ട്) शालूकं=(നീർച്ചേമ്പ്) पद्ममूलमित्यरुणदत्तः । कुमुदोत्पलयोः कन्दः । कुमुदकन्दः = (ആമ്പൽകിഴങ്ങ്) उत्पलकन्दो रक्तोत्पलकन्दः । उत्पलं = (ചെങ്ങഴനീര്) नन्दीमाषकः=(കല്ലിൻചേമ്പ്) अथवा नन्दी, तुण्डिकेरिका माषको वास्तुकः । केलूटं = (നിമിനിക്കിഴങ്ങ്), (നീർച്ചേമ്പ്) विस्सकसंज्ञ[1] उदुम्बरभेद इत्यरुणदत्तः । शृङ्गाटकं त्रिकोणाकृति जलोद्भवं कन्दं = (വൻകൊട്ടക്കിഴങ്ങ്) कशेरुकं = (കഴിമുത്തങ്ങ) क्रौञ्चादनं = (തണ്ണീരാമ്പൽ) धान्यकन्द इति हाटकः । अङ्गलोड्यं पद्मबीजं पद्माक्षं = (താമരമൊട്ട്) इति पाठ्यकारः ॥

---

1. 'हिस्सक' इति मुद्रितग्रन्थपाठः.

पत्रशाकमाह —

कलम्बु नालिका मार्षा कुटिञ्जरकुतुम्बकम् ॥ ९१ ॥
चिल्लीलट्वाकलोणीकाकुरूटकगवेथुकम् ।
जीवन्तझुञ्झ्वेडगजयवशाकसुवर्चलम् ॥ ९२ ॥
आलुकानि च सर्वाणि तथा सूप्यानि लक्ष्मणा ।
स्वादु रूक्षं सलवणं वातश्लेष्मकरं गुरु ॥ ९३ ॥
शीतलं सृष्टविण्मूत्रं प्रायो विष्टभ्य जीर्यति ।
स्विन्नं निष्पीडितरसं स्नेहाढ्यं नातिदोषलम् ॥ ९४ ॥

कलम्ब्वित्यादि । कलम्बादिकं मधुरम् । ईषल्लवणं शीतवीर्यं मूत्रं पुरीषं च सृजति बहिः क्षिपति विष्टभ्य उदरप्रदेशे पिण्डीभूय जीर्यति पाकं गच्छति प्रायोग्रहणमेषां मध्ये किञ्चिन्नैवं स्वरूपमिति ज्ञापनार्थम् । विष्टभ्य शब्दं कृत्वेति हृद्याकारः । कळम्बु = (വലിയവേള) नाळिका = (ചെറുവേള) मार्षा = (ചെറുചെഞ്ചീര) मार्ष इत्यकारान्त इति पाठ्यकारः । अथवा नाळिकामार्ष इत्येको वा । सर्वथा माषस्यानुपपत्तिः । सूप्यानीति वक्ष्यमाणत्वात् । कुटिंजरं=(കുക്കിൽ) कुतुम्बकं=(കരുത്തുമ്പ) चिल्ली= (ചെഞ്ചീര) लट्वाकं= (കരംകമ്പളം) लोणीका= (ഉപ്പുകറി) कुरूटकं= (വേലിപ്പരുത്തി) गवेथुकं = (തിരുന്നി) जीवन्तो बृहद्गान्धारः, रक्तनालो वास्तुकः । झुञ्झुः कुञ्जीरकः । एलगजः प्रपुन्नाटः । हृद्याकारो जीवन्तचुच्च्वेलकज इति पठति । तत्पक्षे चुच्चुश्चुच्चुपर्णी । सङ्ग्रहपाठं दृष्ट्वा तथा वदति सः । तथाच सङ्ग्रहः —

"जीवन्तश्चुच्चुपर्णी च प्रपुन्नाटः कुठेरकः ।"

इति । चुच्चुपर्ण्याश्चुच्चुरिति पर्यायान्तरस्यापि विद्यमानत्वात् । कस्तुरिति लता कस्तूर्याः पर्यायस्य विद्यमानत्वादन्ये जीवन्तकस्त्वेलकजा इति पठन्ति । उक्तं च गोपालिकायाम् —

"कस्तुः पिच्छिलयष्टिश्च मारपुष्पी च कथ्यते ।
कस्तूरिकेति विज्ञेया तस्याः पिप्पलिका बुधैः ॥"

इति । अन्ये तु द्वितीयां जीवन्तीमपेक्ष्य जीवन्ती गुर्व्येलकजा इति पठन्ति । तदत्यन्तानुपपन्नम् । जीवन्तशब्देन न जीवन्तीरूरीगृह्यते यतः — अपिच

सङ्ग्रहे जीवन्तीं संप्रोच्य द्वितीयामपि तत्रैवाभिधाय पुनर्जीवन्तं प्रोक्तवान् । अतः सर्वथा जीवन्तक इत्यनुपपन्नं व्यर्थस्तु शब्दः प्राप्नोति यतः । पाठ्याकारस्तु जीवन्तकं=(തണ്ടപുവന്ന വസ്തൂച്ചീര) एलकजं=(തകര) इत्याह । यवस्य शाकं यवशाकं = (ചീര) ह्रस्वपत्रा चिल्ली । सुवर्चला =(ഒഴംപു-ഞെരിഞ്ഞിൽ) आलुकानि च सर्वाणि नानाविधानि रक्तालुकमधुरालुकादिभेदेन तेषूक्तानि कन्दोपयोज्यानि (തൊണ്ടിച്ചേമ്പ് വാകച്ചേമ്പ് നീലച്ചേമ്പ് പൊരുഷചേമ്പ് ചെറുചേമ്പ്) इत्यादीनि । केचिदालुपानीति पठन्ति । सूप्यानीति मुद्गमाषकुलस्थादीनां पत्राणि । लक्ष्मणा=(തിരുതാളി) मधुयष्टिका वा । एतच्च सर्वं स्विन्नं सजलपक्वनिष्पीडितरसं निश्शेषत्यक्तजलं स्नेहाढ्यं बहुस्नेहसिद्धं घृततैलादिसिक्तं भर्जितं पक्वं च नातिदोषलं नात्यपथ्यम् । एवं संस्कृतमपि दोषलमेव शाकमित्यर्थः । सुश्रुते चोक्तं —

"संस्कृतं वेशवारेण स्नेहाढ्यं शाकमिष्यते ।
राजिकाशुक्तभक्तादिसंस्कारं चानुयोजयेद् ॥"

इति । वेशवारेण संस्कृतमणुशो दलितं शाकं सभक्तं सडाडिमं च । उक्तं च सारमुष्टौ —

"अणुशो दलितं शाकं विपाच्य जलसंयुतम् ।
निष्पीड्य त्यक्तसलिलं स्नेहयुक्तं पुनः पचेत् ॥
राजिकाहिङ्गुमरिचशुण्ठीडाडिमसाधितम् ।
न दोषकरमत्यर्थं न विष्टम्भि च रोचनम् ॥"

इति ।

स्विन्नं निष्पीडितरसमिति पत्रशाके प्रोक्तं पत्रशाकस्य बहुसंस्कारार्हत्वात् । तथोक्तं भोजे —

"कन्दमूलफलादीनां शाकानां संस्क्रिया समा ।
पत्रशाकं तु सर्वेभ्यो बहु संस्कारमर्हति ॥"

इति ॥ ९१—९४ ॥

**लघुपत्रा तु या चिल्ली सा वास्तुकसमा मता ।**

लघुपत्रचिल्ल्यादयः पञ्च पथ्या इत्याह — लघुपत्रा जात्यैव सूक्ष्मपत्रा वा चिल्ली यवशाकविशेषः सा तु वास्तुकसमा गुणैर्मता ।

**तर्कारीवरणं स्वादु सतिक्तं कफवातजित् ॥ ९५ ॥**

तर्कारी= (മുഞ്ഞ) वरणं = (നീർമാതളം) समाहारेण तयोर्द्वन्द्वः । एतच्च स्वादु किञ्चित् तिक्तं कफवातघ्नं च ॥ ९५ ॥

**वर्षाभ्वौ कालशाकं च सक्षारं कटुतिक्तकम् ।**
**दीपनं भेदनं हन्ति गरशोफकफानिलान् ॥ ९६ ॥**

वर्षाभ्वौ द्वौ पुनर्नवौ = (തെട്ടിലയും ചാരടയും) तथा कालशाकं = (കരുവേപ്പ് കാട്ടുപാരണ്ട) कृष्णनिम्बाकृतिः क्षुद्रशाकविशेषः । किञ्चित् क्षारं रसेन कटुतिक्तं गरादींश्च हन्ति । गरो वक्ष्यमाणलक्षणः । कठिल्लोऽपि च वर्षाभूः स च प्रागुक्तगुणः । तथाच निघण्डुः—

"पुनर्नवौ विशाखश्च कठिल्लश्च सिनाडिका ।
वृश्चीवः क्षुद्रवर्षाभूर्दीर्घपत्रः कठिल्लकः ॥
पुनर्नवोऽपरः क्षुद्रः श्म्यामण्डलपत्रकः ।
श्वेतमूलो वर्षकेतुर्महावर्षाभुरुच्यते ॥"

इति ॥ ९६ ॥

करीरशाकमाह —

**दीपनाः कफवातघ्नाश्चिरिबिल्वाङ्कुराः सराः ।**

दीपना इत्यादि । चिरिबिल्वः पूतीकरञ्जः तस्याङ्कुराः प्ररोहाः (ആവിൽക്കതന്ന) सरा अनुलोमनाः ॥

**शतावर्यङ्कुरास्तिक्ता वृष्या दोषत्रयापहाः ॥ ९७ ॥**

शतावर्यङ्कुराः=(ശതാവരിക്കതന്ന) वृष्याः शुक्रकृतः । चिरिबिल्व-शतावर्यङ्कुरयोः पथ्यत्वम् ॥ ९७ ॥

**रूक्षो वंशकरीरस्तु विदाही वातपित्तलः ।**
**पत्तुरो दीपनस्तिक्तः प्लीहार्शःकफवातजित् ॥ ९८ ॥**

वंशकरीरो वंशाङ्कुरः = (മുളംകൂമ്പ്) रूक्षादिगुणः ॥

पत्तुरः—

"मत्स्याक्षकस्तु पत्तूरः पत्रजः प्रिय इत्यपि ।"

दीपनः तिक्तरसः प्लीहादिजित् ॥ ९८ ॥

**कृमिकासकफोत्क्लेदान् कासमर्दो जयेत्सरः ।**

कासमर्दः सरः कृम्यादींश्च हन्ति । उत्क्लेदः स्रोतसां मालिन्येनार्द्रत्वम् । कासमर्दः = (പൊന്നാവീരം) ।

**रूक्षोष्णमम्लं कौसुम्भं गुरु पित्तकरं सरम् ॥ ९९ ॥**

कौसुम्भं शाकं = (കയ്യംപില) रूक्षादिगुणमुष्णवीर्यं च ॥ ९९ ॥

**गुरूष्णं सार्षपं बद्धविण्मूत्रं सर्वदोषकृत् ।**

सार्षपं शाकं सर्षपपत्रं = (ചെറുകടുകിന്നില) गुरु उष्णवीर्यं तथा विशं मूत्रं च बध्नाति त्रिदोषकृच्च । सक्षारत्वं मधुररसत्वं स्निग्धत्वं चास्यानुक्तमपि बोद्धव्यम् । वचनं हि —

"सक्षारं मधुरं स्निग्धमुष्णं गुरु च सार्षपम् ।"

इति सङ्ग्रहे । सुश्रुते तूक्तं —

"कफघ्नं सार्षपं शाकमासुरं शाकमेव च ।"

इति ।

**यद्बालमव्यक्तरसं किञ्चित्क्षारं सतिक्तकम् ॥ १०० ॥**
**तन्मूलकं दोषहरं लघु सोष्णं नियच्छति ।**
**गुल्मकासक्षयश्वासव्रणनेत्रगलामयान् ॥ १०१ ॥**
**स्वराग्निसादोदावर्तपीनसांश्च**

यद् बालमित्यादि । मूलको नाम कन्दविशेषः । मूलकं = (മുള്ളങ്കി) (കിഴങ്ങ്) मूलकस्य बालवृद्धशुष्काणां पृथगुपयोगदर्शनम् । पृथगेव गुणानाह — यन्मूलकं बालमभिनवावस्थमव्यक्तरसमस्पष्टास्वादं किञ्चित्क्षारं ईषत्क्षारगुणयुक्तं कार्यतोऽनुमीयमानं ईषल्लवणमिति ह्यध्याकारः । तथा सतिक्तमीषत्तिक्तं रसनेन्द्रियस्य किञ्चिदुद्वेजकं तन्मूलकं दोषाणां हरं दोषहरं नान्यावस्थम् । बालमूलकं दोषहरमित्यनेनास्य विशिष्टा बालावस्था दोषहरत्वेन नियम्यते । न सर्वं बालावस्थं दोषहरमपि त्वीदृग्रूपमित्यर्थः । अन्ये तु दोषयोर्हरं दोषहरमित्यत्र समासं कृत्वा वातश्लेष्मघ्नत्वमेवास्य प्रतिजानते । यतः किञ्चिदुष्णवीर्यत्वात् पित्तकर्तृत्वमस्यास्त्येव । किञ्चित् तिक्तकरसोपेतत्वेन पित्तकर्तृत्वमस्य व्याहर्तुं न युक्तम् । वक्ष्यति हि —

"रसं विपाकस्तौ वीर्यं प्रभावस्तान् व्यपोहति ।"

इति । एवञ्चैतन्मूलकं वातश्लेष्मघ्नमेव युक्तं न तु पित्तहृच्चेति तेषामभिप्रायः ।

एतन्मूलकं गुल्मादीन् नियच्छति पीनसांश्चेति चशब्दः समुच्चये । अन्यानप्येवंप्रायान् रोगान् नियच्छति । सुश्रुतश्च —

"सर्वदोषहरा लघ्वी कण्ठ्या मूलकपोतिका ।"

इति । यद्भेदान्तरमस्ति तदप्यत्रैव बालमूलकलक्षणान्तर्भूतमिति तन्त्रकृतेह पुनर्नोक्तम् ॥

महत्पुनः ।

**रसे पाके च कटुकमुष्णवीर्यं त्रिदोषकृत् ॥ १०२ ॥**

**गुर्वभिष्यन्दि च**

**महदित्यादि** । प्रथमं मूलकमित्युक्ते मूलकं बालमवगृह्यते महत् पुनर्वृद्धं परिणतं अव्यक्तरसादिलक्षणावस्थां विहाय यत् स्थूलमुपचयसम्पन्नं व्यक्तरसं च सम्पद्यते तच्च रसविपाकयोः कटुकमुष्णवीर्यं त्रिदोषकृद् गुर्वभिष्यन्दि च भवति । न तु जीर्णं वृद्धमित्युच्यते । मध्यमावस्थस्यात्र ग्रहणम् अतिजरठस्य स्वादुपाकित्वमुक्तं सङ्ग्रहे—'महत् पुनः गुरूष्णं कटुकं स्वादुविपाकं सर्वदोषकृदि'ति वृद्धस्य च मूलकस्यानेका अवस्थाः सम्भवन्ति । तत्र चास्याद्यावस्थायां किञ्चिद् दोषकृत्त्वमन्त्यावस्थायामतिशयेन दोषकरत्वं वेद्यम् ॥ १०२ ॥

**स्निग्धस्विन्नं तदपि वातजित् ।**

**स्निग्धेत्यादि** । अपिशब्द एवार्थे तदेव महन्मूलकं स्निग्धस्विन्नं वातजित् । स्निग्धं च स्विन्नं चेति स्निग्धस्विन्नं न त्वस्निग्धस्विन्नमात्रमित्यर्थः ॥

**वातश्लेष्महरं शुष्कं सर्वमामं तु दोषलम् ॥ १०३ ॥**

**वातेत्यादि** । सर्वं बालं वृद्धं च तन्मूलकं शुष्कं सद् वातश्लेष्महरम् । आममनग्निपक्वं पुनर्मूलकं हरितशाकत्वेन यद् भक्ष्यते तद् दोषलम् । सर्वमित्यत्राप्यनुवृत्तिकृतेन सम्बन्धेन सम्बध्यते । तेनादोषळस्य बालस्याप्यामस्य दोषलत्वं न तु वृद्धस्यैवेत्यर्थः । अग्निसिद्धं तु यथास्वरूपमुक्तम् । पाठ्याकारस्त्वेवमाह — बालस्यात्यन्तगुणमुक्त्वा पुनः सर्वमामं तु दोषलमित्युक्तं तत् कथमिति चेत् शुष्कमेव सर्वदा प्रयोज्यमिति सूचयितुम् । तुशब्दो वृद्धशु(क्र ? ष्क)मूलकाद् बालामस्य वरत्वं सूचयतीति ॥ १०३ ॥

**कटूष्णो वातकफहा पिण्डालुः पित्तवर्धनः ।**

पिण्डालुः = (പിണ്ടാലി), (ഇറച്ചിക്കിഴങ്ങ്) इति केचित् । कटुको रस वीर्ये चोष्णो वातकफघ्नः पित्तकरश्च ॥

कुठेरशिग्रुसुरससुमुखासुरिभूस्तृणम् ॥ १०४ ॥
फणिज्झार्जकजम्बीरप्रभृति ग्राहि शालनम् ।
विदाहि कटु रूक्षोष्णं हृद्यं दीपनरोचनम् ॥ १०५ ॥
दृक्शुक्रकृमिहृत्तीक्ष्णं दोषोत्क्लेशकरं लघु ।

कुठेरादिसालनं सालनं=(പച്ചക്കറി) सङ्ग्राहि विदाहि विदहनशीलं कटुकं रसपाकयो रूक्षमुष्णवीर्यं हृद्यमग्निदीपनं रोचनं च तथा दृगादिहृत्, तीक्ष्णम् । दोषान् वातादीनुत्क्लेशयति कोपयति स्थानाच्चालयति । लघु च । सालनमामोपदंशो येन सहान्नं भोक्तुं युज्यते लवणजलाधिवासितं (ഉപ്പു-കറി) सालनमित्यन्ये उभयथा भक्षणं सूदशास्त्रे चोक्तं —

"आमं पक्वं च सम्भक्ष्यं मांसादेरधिवासनम् ।
दीपनं रोचनं ग्राहि भूस्तृणादिकमिष्यते ॥"

इति । कुठेरं=(കഞ്ചകം) शिग्रु=(മുരിങ്ങ) सुरसः कृष्णतुलसी=(തിരുത്തുവ) सुमुखं=(അനിച്ചം) आसुरि = (ചെറുകടുക) भूस्तृण = (പൂതണക്ക്) फणिज्जं=(മണിക്കഞ്ഞതകം) आर्जकं= (കമ്മംകഞ്ചകം) जम्बीरं =(ജോ-നകനാരകം) प्रभृतिशब्देन सङ्ग्रहोक्ता गृह्यन्ते —

"धान्यतुम्बुरुशैलेययवानीशृङ्गिवेरकाः ।
पर्णसो गृञ्जनोऽजाजी गण्डीरं गजपिप्पली ॥
फणिर्जार्जकजम्बीरखराह्वाकालमालिकाः ।
दीप्यकः क्षवको द्वीपी बस्तगन्धोऽतिबद्धविट् ॥
रसे पाके च कटुकं दोषोत्क्लेशकरं लघु ।
विदाहि रूक्षं तीक्ष्णोष्णं शुक्रदृक्कृमिनाशनम् ॥
वर्गो हरितकाख्योऽयमुपदंशे प्रयुज्यते ।
वासनो व्यञ्जनानां तु हृद्यो रोचनदीपनः ॥"

इति । अस्य चाग्निपक्वस्योपयोगे गुणविशेषप्रादुर्भावः ॥

हिध्माकासश्रमश्वासपार्श्वरुक्पूतिगन्धहा ॥ १०६ ॥
सुरसः सुमुखो नातिविदाही गरशोफहा ।

सुरसो हिध्मादिहा पूतिगन्धं दौर्गन्ध्यं सौगन्ध्यापादाद्धन्ति । सुमुखो तिविदही ईषद् विदाहकरः गरादिहरश्च ॥

आर्द्रका तिक्तमधुरा मूत्रला न च पित्तकृत् ॥ १०७ ॥

आर्द्रका आर्द्रा धनिका=(പച്ചക്കൊത്തംപാല) (ക്കുക്കിൽ) इति केचित् । तिक्तमधुरा मूत्रकरी पित्तं च न करोति । ईषत्पित्तकृदित्यसद्गुरवः ॥ १०७ ॥

लशुनो भृशतीक्ष्णोष्णः कटुपाकरसः सरः ।
हृद्यः केश्यो गुरुर्वृष्यः स्निग्धो रोचनदीपनः ॥ १०८ ॥
(भग्नसन्धानकृद्बल्यो रक्तपित्तप्रदूषणः)
किलासकुष्ठगुल्मार्शोमेहःकृमिकफानिलान् ।
सहिध्मपीनसश्वासकासान् हन्त्यस्रपित्तकृत् ॥ १०९ ॥

लशुनः = (ഉള്ളി) अतितीक्ष्णोऽत्युष्णवीर्यः कटुपाकरसः सरो भेदी हृद्यादिगुणयुक्तश्च किलासादीन् हन्ति रक्तपित्तं च करोति । किलासं श्वित्रम् । लशुनकन्दस्यैवायं गुणनिर्देशो बोध्यः । पत्रदण्डयोर्[1]मधुरत्वाद् भृशोष्णतीक्ष्णत्वानुपपत्तिः । तथोक्तं सङ्ग्रहे —

"पत्रे सक्षारमधुरो मध्ये मधुरपिच्छिलः ।
तीक्ष्णोष्णो लशुनः कन्दः कटुपाकरसः सरः ॥"

इत्यादि ॥ १०८, १०९ ॥

पलाण्डुस्तद्गुणान्यूनः श्लेष्मलो नातिपित्तलः ।
कफवातार्शसां पथ्यः स्वेदेऽभ्यवहृतौ तथा ॥ ११० ॥

पलाण्डुस्ताम्राकारः = (ഈരുള്ളി) तद्गुणात् लशुनगुणान्न्यूनः किञ्चिद्धीनगुण इत्यर्थः । तथा श्लेष्मलः अतिपित्तं च न करोति । कफवातार्शसां कफवातजानामर्शसामिति वा । स्वेदने भक्षणे च प्रभावात् पथ्यः ॥ ११० ॥

तीक्ष्णो गृञ्जनको ग्राही पित्तिनां हितकृन्न सः ।

गृञ्जनको लशुनाकारः कन्दविशेषः । उदीच्य(ते ? न्ते) प्रसिद्धः । (വെള്ളുള്ളി) इति भाषा । गृञ्जनं = (ഉരങ്ങ) इति पूर्वं हरितवर्गे पठितं तीक्ष्णो ग्राही पित्तिनामहितश्च ॥

दीपनः सूरणो रुच्यः कफघ्नो विशदो लघुः ॥ १११ ॥
विशेषादर्शसां पथ्यः

---

1. 'पत्रमध्ययो'रित्यरुणदत्तः ।

सूरणो नाम कन्दविशेषः । (ഓല) वन्यमिति केचित् । दीपनो रुच्यः श्लेष्मघ्नो विशदो वैशद्यकरः अर्शसामतिपथ्यश्च ॥

भूकन्दस्त्वतिदोषलः ।

भूकन्दः कुस्फोटाख्यः कन्दविशेषः प्रावृडादौ भूवृक्षादिषु जायते । स चात्यर्थं दोषलः । अत्रानुक्ताः कन्दविशेषाः सर्वे रोहिण्यादय आलुपवज्ज्ञेयाः । तदुक्तं भोजे —

"आलुपानि त्वसङ्ख्यानि कन्दयोग्यानि सर्वशः ।
दिशानया विभज्येत कृष्णकन्दस्तु मेहहा ॥"

(കരിംകിഴങ്ങ്) ॥

**पत्रे पुष्पे फले नाले कन्दे च गुरुता क्रमात् ॥ ११२ ॥**
**वरा शाकेषु जीवन्ती सर्षपास्त्ववराः परम् ।**

पत्र इत्यादि । शाकहरितकयोः पत्रादीनां यथोत्तरं क्रमाद् गुरुत्वं तेन पत्रशाकमपेक्ष्य पुष्पशाकं गुरु ततः फलशाकं ततो नालशाकं सर्वेभ्यः कन्दशाकमतिगुरु । एवं हरितशाकेष्वपि गुरुत्वं वेद्यम् । बाहुल्येन चैतदुक्तं मूलके वैपरीत्याद् दृश्यते हि मूलकस्य कन्दे लघुत्वम् अत एव मुनिरप्याह — 'मूलके तु बिपर्यय' इति । व्याख्याकारस्तु पुष्पे पत्र इति पठति —

"पुष्पाद् गुरुतरं पत्रं पत्राद् गुरुतरं फलम् ।
फलान्नालं ततः कन्द इति विद्यादपि क्रमात् ॥"

चशब्दो व्यतिरेके अत्र पञ्चविधे शाके गुरुताया भेदोऽस्ति मूलके कन्दो लघुरिति । ननु शाकस्य पाञ्चविध्यं कथं दशविधमुच्यते । तथा —

"कन्दमूलकरीराग्रफलपुष्पप्ररूढकम् ।
त्वक्पत्रकवकं चेति शाकं दशविधं स्मृतम् ॥"

इति । अस्यार्थः — कन्दो नाम भूगर्भे निक्षिप्तं यत् पूर्वस्वरूपापरित्यागेनाङ्कुरादीन् जनयति, मूलं पूर्वरूपपरित्यागेन, करीरं वेणुकरमर्दादेरग्रभागः, अग्रं वेत्रादेः, फलं कदल्यादेः, पुष्पं सर्वस्य, प्ररूढमंकुरितं, त्वक् कूश्माण्डादेः, पत्रं चिल्ल्यादेः, कवकं भूकन्दः, दशविधमिति नालजटादेरन्तर्भावार्थमुच्यते । पन्चविधे पुष्पादौ सर्वमन्तर्भवति ।

"भूकन्दकन्दमूलानां सजटानां तथैकता ।
त्वग्दण्डवल्लिनालानामेकत्वमपि सम्मतम् ॥

फलमेव दशाभिन्नमप्ररूढप्ररूढकम् ।
अंकुराग्रकरीराणां प्रसूनस्यापि चैकता ॥
ततः पञ्चविधं शाकं पुष्पादिकमुदीर्यते ।
जीवन्ती वास्तुकं पाठाशठीश्रूषापुनर्नवाः ॥
राजक्षवः काकमाची मत्स्याक्षः सुनिषण्णकः ।
दश शाकानि पथ्यानि पत्रग्राह्याणि भूयसा ॥
प्राधान्येन फलग्राह्यं कूश्माण्डादिकमिष्यते ।
फलपत्रपरिग्राह्यः प्रपुन्नाटः सशिग्रुकः ॥
प्रायः कन्दपरिग्राह्या विदारीमूलकादयः ।
नालपत्रपरिग्राह्याश्चिल्लिकाः स्वस्तिकादयः ॥
अस्तं व्यस्ताभिधानं तु शाकवर्गेऽत्र साशयम् ।
पुष्पपत्रफलादौ यत् स्वरूपमुपवर्णितम् ॥
तस्यानुक्तस्वरूपे च तद्वर्गे परिचिन्तनम् ।
अस्येदमेवं संग्राह्यं नेदमस्येति लोकतः ॥
ज्ञेयं शाकं च दिङ्मात्रं शास्त्रमेवमदर्शयत् ।"

शाकानां हरितशाकानां च, येषामिह पर्याया नोक्ताः तेषां सद्वैद्येभ्योऽवगन्तव्याः ।

अथ वरावरत्वं निर्धारयति —

"शाकेषु मध्ये जीवन्ती वरा सर्षपाः पुनरवराः ॥"

इति शाकवर्गः ॥

---

फलानामाहारकाले शाकेभ्योऽल्पोपयोगित्वात् शाकवर्गादनन्तरं फलवर्ग उच्यते । अथवा शाकमुक्त्वा पृथगुपयोगीनि फलान्याह — अथवा,

"भोजनान्तोपयोग्यत्वात् फलवर्गो विधीयते ।"

इति हाटकः । खरनादे चोक्तं — 'भुक्तावसाने फलं भुज्यत इति फलवर्गोऽभिधीयते । इति । अथवा—

"भुक्ताभुक्तदशाद्यं फलमत्र निगद्यते ।
अ(न्नं ? न्न)व्यञ्जनता चास्य खलादेः प्रकृतित्वतः ॥"

फलानां द्राक्षा श्रेष्ठा । ततः सैवादौ गृह्यते --

द्राक्षा फलोत्तमा वृष्या चक्षुष्या सृष्टमूत्रविद् ॥ ११३ ॥
स्वादुपाकरसा स्निग्धा सकषाया हिमा गुरुः ।
निहन्त्यनिलपित्तास्रतिक्तास्यत्वमदात्ययान् ॥ ११४ ॥
तृष्णाकासश्रमश्वासस्वरभेदक्षतक्षयान् ।

द्राक्षेत्यादि । द्राक्षा = (മുന്തിരിങ്ങാപ്പഴം) सर्वेषु फलेषूत्तमा । अनेनैवं फलवर्गे द्राक्षाया वरग्रहणमपि तन्त्रितम् । वृष्यादिगुणयुक्ता सकषाया ईषत्कषाया हिमा शीतवीर्या अनिलादीन् क्षयान्तान् हन्ति स्निग्धत्ववृष्यत्वसृष्टविण्मूत्रत्वैरुदावर्तहरत्वमनुक्तमप्यस्या वेद्यम् । चरके तूक्तमेव ॥

उद्रिक्तपित्तान् जयति त्रीन् दोषान् स्वादु डाडिमम् ॥
पित्ताविरोधि नात्युष्णमम्लं वातकफापहम् ।
सर्वं हृद्यं लघु स्निग्धं ग्राहि रोचनदीपनम् ॥ ११६ ॥

'डाडिमो द्विविधः स्वादुरम्ल' इति (താളിമാതളം) स्वादु डाडिममुद्रिक्तपित्तांस्त्रीन् दोषान् जयति । उद्रिक्तं पित्तं येषां त्रीन् दोषान् अधिकपित्तं सन्निपातं जयतीत्यर्थः । पित्तव्यतिरेकेण त्रिदोषाभावेऽपि वाचोयुक्तिरेषोपपद्यते त्रयो दोषा वातपित्तश्लेष्माणः समुदिता यत्र तत्र पित्तस्याधिक्येनान्वितस्य शमनं करोतीति त्रिदोषहरं पित्तस्यातिशयेन नाशनमित्यर्थः । मधुरस्य डाडिमस्य पूर्वकथनं प्राधान्यख्यापनार्थम् । अम्लडाडिमं पित्ताविरोधि न च पित्तं कुरुते न चातिपित्तं शमयति । अत एवैतद् वातकफापहमुक्तम् । नात्युष्णवीर्यं च स(र्वे?र्वं) मधुरं (अम्लं च) डाडिमं हृद्यादिगुणयुक्तम् । उभयमित्यनुक्त्वा सर्व(मपी?मि)त्युक्तं स्वाद्वम्लमपि डाडिमं त्रिधत इति सूचनार्थम् । प्रस्तुतानेकार्थवचनः सर्वशब्दोऽसामर्थ्यवचनः ।

"स्वाद्वम्लभेदो द्राक्षाया अपि डाडिमवद् भवेत् ।
विशेषान्मधुरं मुख्यं किञ्चिन्न्यूनं तदम्लकम् ॥
फलादीनां गुणाः प्रोक्ता एते देशादिभेदतः ।
भिद्यन्ते तानवहितो युक्तिज्ञः परिकल्पयेत्" ॥ ११५,११६ ॥

मोचखर्जूरपनसनालिकेरपरूषकम् ।
आम्राततालकाश्मर्यराजादनमधूकजम् ॥ ११७ ॥

सौवीरबदरांकोलफल्गुश्लेष्मातकोद्भवम् ।
वातामाभिषुकाक्षोळमुकूलकनिकोचकम् ॥ ११८ ॥
उरूमाणं प्रियालं च बृंहणं गुरु शीतलम् ।
दाहक्षतक्षयहरं रक्तपित्तप्रसादनम् ॥ ११९ ॥
स्वादु पाकरसं स्निग्धं विष्टंभि कफशुक्रकृत् ।

मोचादि प्रियाळान्तं द्वाविंशतिविधं फलं बृंहणादि गुणयुक्तम् । मोचं=(വാഴപ്പഴം) खर्जूरं=(ഈത്തപ്പഴം) पनसं=(ചക്കപ്പഴം) प्रायश: सर्वेऽपि गृह्णन्ते । नाळिकेरं=(തേങ്ങ) परूषकं=(ചിററീന്തൽ) आम्रातं=(അമ്പഴം) तालं=(കരിമ്പനപ്പഴം) काश्मर्यं=(കുമിഴ്) राजादनं=(പഴമുൺപാല) मधूकजं=(ഇലിപ്പപ്പഴം) सौवीरं=(ചിററിലന്ത) बदरं=(ഇലന്ത) अङ्कोलं=(അഴിഞ്ഞിൽ) फल्गु=(പേയത്തി) श्लेष्मातकं=(നറുവരി) वातामं=(കുരുമാവ്) अभिषुकं=(നീർവെട്ടി) अक्षोळं=(അക്രോട്ടുക) मुकूलकं=(പൂവം) दन्तिफलम् । निकोचकं=(വാ-ഴ്റാവ്) सरळफलं वा । उरूमाणं=(മരവാഴ) काश्मर्यं बदरविशेष इति हारकः । पियालं=(മുരൾ) प्रियालमिति सर्वे पठन्ति ।

"एतस्य फलजातस्य बृंहणाद्याः क्रियाः समाः ।
अत्र यस्य विशेषोऽस्ति स निष्कृष्यापि कथ्यते ॥"

फलं तु पित्तलं तालं सरं काश्मर्यजं हिमम् ॥ १२० ॥
शकृन्मूत्रविबन्धघ्नं केश्यं मेध्यं रसायनम् ।
वातामाद्युष्णवीर्यं तु कफपित्तकरं सरम् ॥ १२१ ॥
परं वातहरं स्निग्धमनुष्णं तु प्रियालजम् ।
प्रियालमज्जा मधुरो वृष्यः पित्तानिलापहः ॥ १२२ ॥
कोलमज्जा गुणैस्तद्वत्तृट्छर्दिःकासजिच्च सः ।

फलमित्यादि । तालस्य फलमपि तालम् । एतत् पित्तकरमुष्णवीर्यत्वात् सरं च काश्मर्यजं फलं शीतवीर्यादिगुणं 'परं काश्मर्यजं हिममि'ति वा पाठः । परमतिशयेन हिमं शीतवीर्यमिति । वातामादीनां गुणविशेषप्रदर्शनार्थं

निर्धारणम् । तुर्विशेषे । शीतवीर्यत्वमेव । वातामाभिषुकादिकमुष्णवीर्यं कफपित्त-करं परमतिशयेन वातघ्नं च स्निग्धं च । आदिशब्देन सप्तमस्य प्रियालस्य प्राप्तमुष्णवीर्यत्वं निषेधति अनुष्णं तु प्रियालजमिति । प्रियालाज्जातं प्रियालजं फलमनुष्णं शीतवीर्यं तुर्विशेषे शीतवीर्यत्वमेव विशेषः बृंहणत्वादि सर्वं समा-नम् । प्रियालस्य मज्जा अस्थ्यन्तरस्थं मधुरादिगुणयुक्तः । कोलो बदर एव तस्य मज्जा गुणैस्तद्वत् प्रियालमज्जासदृशः स तृडादिजिच्च ॥

फलान्तराण्याह —

पक्वं सुदुर्जरं बिल्वं दोषलं पूतिमारुतम् ॥ १२३ ॥
दीपनं कफवातघ्नं बालं ग्राह्युभयं हि तत् ।

पक्वमित्यादि । विल्वं = (കൂവളം.) पक्वं जरठं बिल्वस्य फलं सुदुर्जरमतिगुरु पूतिमारुतं च दुर्गन्ध्यपानवातकृत् । उद्गारादौ दुर्गन्धिमारुतं करोतीत्यस्मद्गुरवः । अभ्यवहृतेन बिल्वफलेन दुर्गन्धो वायुः प्रवर्तते बाल-मसम्पूर्णमनुपचितं बिल्वं बिल्वफलं दीपनमग्नेः कफवातघ्नमुभयं पक्वं बालं च ग्राहि मूत्रपुरीषादेः संग्रहणात्मकम् । उक्तवांश्च —

"गुर्वग्निसादकृद् बिल्वं दोषलं पूतिमारुतम् ।
पक्वं बालं पुनस्तीक्ष्णं पित्तलं लघु दीपनम् ॥
वातश्लेष्मघ्नमुष्णं च स्निग्धं ग्राह्युभयं तु तत् ॥"

इति ॥

कपित्थमामं कण्ठघ्नं दोषलं दोषघाति तु ॥ १२४ ॥
पक्वं हिध्मावमथुजित्सर्वं ग्राहि विषापहम् ।

कपित्थमित्यादि । कपित्थं = (വിളാവ്.) आमपक्वं कपित्थं कण्ठघ्नं कषायरसत्वात् कण्ठस्रोतोविबन्धकृत् । स्वरसादकृद् इतीन्दुः । 'कण्ठो गलेऽन्तिके शब्दे' इति वैजयन्ती । दोषलं त्रिदोषकरम् । पक्वं कपित्थं दोष-घाति । हिध्माछर्दिहरम् । सर्वमामं पक्वं च कपित्थं ग्राहि विषापहं च । आमकपित्थस्य कषायत्वं कण्ठघ्नत्वादम्लत्वं चाम्लवर्गपाठादवगन्तव्यम् । पक्वस्य च मधुरत्वं सुप्रसिद्धमितीहैतन्नोक्तम् । उक्तवांश्च —

"कपित्थमामं कण्ठघ्नं कषायाम्लं त्रिदोषकृत् ।
पक्वं रूच्यं कषायाम्लं स्वादु हिध्मावमिप्रणुत् ॥"

दोषघ्नं षाडवारिष्टरागयुक्तिषु पूजितम् ।
विषघ्नमुभयं ग्राहि कापित्थं फलमादि(शेदि)ति ॥"

रसविशेषे च नानाविधानि कपित्थानि सन्ति । अरुणदत्तोऽप्याह— आमकपित्थकथनेन च तथाविधानि कषायाम्लस्वभावानि कपित्थानि विविधानि सदैवामकपित्थगुणानि वेद्यानि । पक्वकपित्थकथनेन तथाविधानि माधुर्यानुविद्धानि सदा पक्वगुणानि वेद्यानि इति ॥

**जांबवं गुरु विष्टंभि शीतलं भृशवातलम् ॥ १२५ ॥**
**सङ्ग्राहि मूत्रशकृतोरकण्ठ्यं कफपित्तनुत् ।**

जाम्बवं फलं गुर्वादिगुणयुक्तं मूत्रशकृतोश्च संग्रहणं कण्ठाय च हितं न । कफपित्तजिच्च । जम्बु =(ഞാവൽ.) जाम्बवमिति 'जम्ब्वा वा' इत्यण्प्रत्ययस्य पुष्पफलादिषु तुल्यत्वेऽपि फलप्रकरणपठितत्वात् फलमेव गृह्यते ॥

वातेत्यादि आम्रफलस्य त्र्यवस्थस्याप्युपयोगदर्शनात् तथैव गुणानाह—

**वातपित्तास्रकृद्बालं बद्धास्थि कफपित्तकृत् ॥ १२६ ॥**
**गुर्वाम्रं वातजित्पक्वं स्वाद्वम्लं कफशुक्रकृत् ।**

आम्रमिति वक्ष्यमाणेन सम्बन्धः । आम्रं =(മാവ്.) आम्रफलं बालं सद्वातपित्तास्रकृद् बालं =(ഉണ്ണിമാങ്ങ.) बद्धास्थि सञ्जातास्थि मध्यमावस्थमाम्रम्=(അണ്ടിവച്ചത്.) कफपित्तकृत् । पक्वमाम्रं =(പഴം.) गुर्वादिगुणयुक्तं स्वाद्वम्लं कफशुक्रकृच्च । पक्वस्यापि केवलाम्लस्य पित्तकरत्वमुक्तवान्—

"बालं कषायकट्वम्लं रूक्षं वातास्रपित्तकृत् ।
सम्पूर्णमाम्रमम्लं च पित्तं पित्तकफप्रदम् ॥
स्वादु साम्लं गुरु स्निग्धं मारुतघ्नं च पित्तदम् ।
हृद्यं पर्यागतं श्लेष्ममांसशुक्रबलप्रदम् ॥"

इति ॥

**वृक्षाम्लं ग्राहि रूक्षोष्णं वातश्लेष्महरं लघु ॥ १२७ ॥**

वृक्षाम्लं तिन्त्रिणीकं =(വാളൻപുളി.) ग्राह्यादिगुणयुक्तम् । अस्य च ग्राहित्वमपक्वावस्थायामवगन्तव्यं न तु पक्वावस्थायां तथा दर्शनात् ।

शम्या गुरूष्णं केशघ्नं रूक्षं पीलु तु पित्तलम् ।
कफवातहरं भेदि प्लीहार्शःक्रिमिगुल्मनुत् ॥ १२८ ॥
सतिक्तं स्वादु यत्पीलु नात्युष्णं तत्त्रिदोषजित् ।

शम्या इत्यादि । प्रकरणबलादत्र षष्ठ्याः सङ्कोचः क्रियते फलापेक्षया षष्ठी । शम्याः फलं गुरूष्णवीर्यं केशघ्नं च रूक्षं च । शमी=(വന്നി) पीलु=(ഉക.) तुशब्दः पीलुभेदं द्योतयति । पीलुफलं तु पित्तलं यावद् गुल्मनुत् कटुपाकरसं चेत्यनुक्तमपि ग्राह्यमस्य । ईषत् तिक्तमधुरं च यत् पीलु तन्नात्युष्णवीर्यं त्रिदोषजिच्च ॥

त्वक्तिक्तकटुका स्निग्धा मातुलुङ्गस्य वातजित् ॥ १२९ ॥
बृंहणं मधुरं मांसं वातपित्तहरं गुरु ।
लघु तत्केसरं कासश्वासहिध्मामदात्ययान् ॥ १३० ॥
आस्यशोषानिलश्लेष्मविबन्धच्छर्द्यरोचकान् ।
गुल्मोदरार्शःशूलानि मन्दाग्नित्वं च नाशयेत् ॥ १३१ ॥

मातुलुङ्गस्य त्वङ्मांसकेसराणां पृथगुपयोगदर्शनात् पृथगेव गुणानाह — मातुलुङ्गं=(മാതളനാരകം.) मातुलुङ्गफलस्य त्वक् तिक्तकटुकरसा कटुविपाका च स्निग्धा वातघ्नी च । हृद्याकारस्तु अस्निग्धा मातुलुङ्गस्य वातकृदिति अकारप्रश्लेषं कृत्वा पठति अस्निग्धा रूक्षा अतो वातकृदिति वदन् । उक्तं च सारमुष्टौ —

"रूक्षा त्वङ्मातुलुङ्गस्य गुर्वी मारुतकोपनी ।
कटुपाका कफघ्नी च कटुतिक्तरसा मता ॥"

इति ।

चरकेऽप्युक्तं —

"गुर्वी त्वक् तस्य कटुका मारुतस्य प्रकोपनी ।"

इति । अन्येषां फलानां त्वचो विशेषगुणाभावादनुक्तिः । मातुलुङ्गस्य त्वक्केसरयोरन्तरं मांसं बृंहणादिगुणम् । तस्य मातुलुङ्गस्य केसरमन्तःकेसरं लघु कासादि मन्दाग्नित्वान्तान् नाशयति ॥ १३०,१३१ ॥

भल्लातकस्य त्वङ्मांसं बृंहणं स्वादु शीतलम् ।
तदस्थ्यग्निसमं मेध्यं कफवातहरं परम् ॥ १३२ ॥

भल्लातकं =(ചേരു) तस्य त्वङ्मांसं त्वक् च मांसं च । त्वग्गतं

मांसमिति केचित् । बृंहणं मधुरं शीतलं च । तस्य भल्लातकस्यास्थि तदस्थि अग्निसमं तीक्ष्णत्वेनाग्निवत्स्फोटकर्तृत्वात् । अथवा अग्निश्चित्रकस्तस्य गुणदोषकर्तृतया तुल्यं तथा मेधायै हितं अतिशयेन कफवातघ्नम् ॥ १३२ ॥

**स्वाद्वम्लं शीतमुष्णं च द्विधा पारावतं गुरु ।**
**रुच्यमत्यग्निशमनं रुच्यं मधुरमारुकम् ॥ १३३ ॥**

पारावतं =(ഒപാറനാരകം) स्वाद्वम्लभेदेन द्विविधं यथासङ्ख्यं शीतमुष्णं च मधुरं शीतवीर्यमाम्लमुष्णवीर्यम् उभयमपि गुर्वादिगुणयुक्तम् । अथवा यथासम्भवं सम्बन्धो मधुरं गुर्वत्यग्निशमनं च अम्लं तु रुच्यमिति । रुच्यमित्यादि । मधुरं स्वादुगुणयुक्तमारुकमपक्वं रुचिकरं भवति । अपक्वस्यैवायं गुणो वेद्यः । आरुकं=(ഉറൂപ്പ്ളം.) ॥ १३३ ॥

यस्मादाह —

**पक्वमाशु जरां याति नात्युष्णं गुरु दोषलम् ।**

पक्वमित्यादि । पक्वं सद् आशु द्रागेव परिणामं याति सुजरमित्यर्थः तथा नात्युष्णगुरुदोषलं किञ्चिदुष्णवीर्यं किञ्चिद् गुरु किञ्चिद् दोषलं च । दोषलमपथ्यम् । अम्लस्यारुकस्य गुणा वक्ष्यन्ते । आरुकं जातिभेदेन चतुर्विधं तथाहि सङ्ग्रहे —

"आरुकं वीरसेनञ्च वीराचीनारुकं तथा ।
विद्याज्जातिविशेषेण तच्चतुर्विधमारुकम् ॥"

इति ।

**द्राक्षापरूषकं चार्द्रमम्लं पित्तकफप्रदम् ॥ १३४ ॥**
**गुरूष्णवीर्यं वातघ्नं सरं च करमर्दकम् ।**

द्राक्षा परूषकं चार्द्रमशुष्कमम्लं सत् पित्तश्लेष्मकरं गुरूष्णवीर्यं वातघ्नं सरं च । करमर्दं=(കാരൊവ്) तदप्येवंगुणम् । अनम्लमन्यथेत्यवगम्यते । द्राक्षादीनां द्विविधो भेदः तत्राम्लान्येव श्लेष्मपित्तप्रकोपीनि मधुराणि तु वातपित्तप्रशमनानि ॥

**तथाम्लं कोलकर्कन्धूलकुचाम्रातमारुकम् ॥ १३५ ॥**
**ऐरावतं दन्तशठं सतूदं मृगलिण्डिकम् ।**
**नातिपित्तकरं पक्वं शुष्कं च करमर्दकम् ॥ १३६ ॥**

तथाम्लमित्यादि । यथा परूषकदाडिमादीनां द्वैविध्यं तथा कोलादीनामपि अम्लं सत् कोलादिकं मृगलेण्डिकान्तं तथेति द्राक्षादिवद् गुणैर्ज्ञेयमित्यर्थः । कर्कन्धू ह्रस्वा बदरी=(ചെറുതുടലി.) लिकुचं=(ഒരു വി.) अम्लमेवारुकमेवंगुणं मधुरं हि पूर्वमुक्तम् । ऐरावतं नारङ्गं=(ചെറു. നാരകം. दन्तशठं=(ചളിർ?) (ചോനകനാരകം) इति हाटकादयः । सम्रुदं=(ഞാരൽ.) मृगलिण्डिकं=(ഓട.) ऐरावतादि नातिपित्तकरं नात्यर्थं पित्तं करोति तथा करमर्दकं च पक्वं शुष्कं नातिपित्तकारि ॥ १३६ ॥

दीपनं भेदनं शुष्कमम्लिकाकोलयोः फलम् ।
तृष्णाश्रमक्लमच्छेदि लघ्विष्टं कफवातयोः ॥ १३७ ॥

अम्लिकाकोलयोः फलम् अम्लिकाफलं कोलफलं च शुष्कं सद् दीपनादिगुणयुक्तं कफवातयोश्च पथ्यम् । अम्लिका = (പിണർപുളി.) अनेन अम्लिकाकोलकरमर्दानां शुष्काणामेवोपयोगो न्याय्य इति सूचयति । अम्लिकाकोलयोरिति पाठः ॥ १३७ ॥

फलानामवरं तत्र लकुचं सर्वदोषकृत् ।

फलानां सर्वेषां मध्ये लिकुचमवरमप्रधानं त्रिदोषकरं च । अपरावरग्रहणं तन्त्रशैली तस्याः प्रयोजनम्—

"मध्ये स्थितानां द्रव्याणां गुणशक्त्यादिकल्पनम् ।
तन्त्रे क्वचित्किञ्चिदुक्तमन्यस्मिन्नन्यदीरितम् ॥
विरोधवदिवाभाति तत् सर्वं मनसानिशम् ।
विचार्य वैद्यो बहुवित् परिहारे प्रवर्तताम् ॥
अनेकावान्तरा जातिः पक्वापक्वतया भिदा ।
देशकालादिभिश्चित्रश्च द्रव्याणां भेदहेतवः ॥"

सम्प्रति यादृशं फलं शाकं च त्याज्यं तदुपदिशन्नाह—

हिमानिलोष्णदुर्वातव्याललालादिदूषितम् ॥ १३८ ॥
जन्तुजुष्टं जले मग्नमभूमिजमनार्तवम् ।
अन्यधान्ययुतं हीनवीर्यं जीर्णतयापि च ॥ १३९ ॥
धान्यं त्यजेत्तथा शाकं रूक्षसिद्धमकोमलम् ।
असंजातरसं तद्वच्छुष्कं चान्यत्र मूलकात् ॥ १४० ॥
प्रायेण फलमप्येवं तथामं बिल्ववर्जितम् ।

हिमेत्यादि। अथवा इत्यन्नस्वरूपविज्ञाननिष्पत्तौ धान्यादिकमसमा-हृत्य हिमानिलेत्यादिनोच्यते —

"हिमादिदूषितं धान्यं शाकं फलमपि त्यजेत्।
इति वर्ज्यत्वहेतूनां समत्वादत्र वर्णना॥"

एवंविधं धान्यं त्यजेत्। दूषितशब्दः प्रत्येकमभिसम्बध्यते। धान्यं केदारस्थं हिमेन दूषितं त्यजेत् तथा अनिलेनातिप्रवृद्धेन दूषितमुष्णेनातादिना दुर्वातेन पुरोवातादिना तथा व्यालानां सर्पादीनां लालया दूषितं त्यजेत्। आदिशब्देन शवकोथादीनां परिग्रहः। तथा जन्तुभिः कृम्यादिभिर्जुष्टं सेवितम्। जले मग्नमाशिखं मग्नम्। अभूमिजं विपरीतभूमिजं या यस्योचिता भूमिस्ततोऽन्या विपरीता। अनार्तवम् अप्रा(सं? प्तसमयं) यस्मिन्नृतौ यस्य धान्यस्योत्पत्तिः प्रसिद्धा ततोऽन्यस्मिन्नुत्पादितमित्यर्थः। तल्लक्षणं च रसादीनामपरिपूर्णत्वेन विज्ञेयम्। तथा अन्येन विजातीयेन धान्येन युक्तं केदारजम्। तथा अतिजीर्णतया अतिपुराणत्वेन हीनवीर्यं नष्टशक्ति धान्यं त्यजेत्। तथा शाकमपि त्यजेत् किं भूतं रूक्षसिद्धं निःस्नेहसिद्धं अथवा रूक्षेण काञ्चिकादिना सिद्धम्। अकोमलम् अतिजरठम्। अथवा (स? स्व)तः संस्कारतो वा कठिनम्। असञ्जातरसमपरिपूर्णस्वरूपम्। तद्वत् सर्वं शुष्कं शाकं त्यजेत्। अन्यत्र मूलकात्। शुष्कमूलकं भजेदेव यथा सर्वं शाकं शुष्कं त्यजेत्। द्राक्षापरूषकादीनां शुष्काणामपि पथ्यत्वादत्याज्यत्वज्ञापनार्थं प्रायोग्रहणम्। तथाममप्राप्तपाकं सत् सर्वं फलं त्यजेदिति वर्तते। विल्वं वर्जयित्वा। विल्वमाममपि पथ्यत्वाद् भजेदित्यर्थः अत्र यथायोगं पूर्ववद्योज्यम्॥

इति फलवर्गः॥

---

फलवर्गादनन्तरं विविधौषधवर्गारम्भस्यायं सम्बन्धः। फलादनन्तरं प्रायेणाप्याहारोपयोगित्वात् तत्रापि लवणानां पूर्वमुपन्यासो युक्तः सुतरामुपयोगित्वादित्याह —

"अन्नत्वमौषधत्वं च सर्वेषामस्ति यद्यतः।
निरयोपयोगिकत्वाच्च विविधौषधवर्गना॥
लवणौषधमन्येभ्यः प्रधानमिति तत्पुरः।
प्रोक्तं नालवणं किञ्चिन्मांसाद्यमपि भक्ष्यते॥"

विष्यन्दि लवणं सर्वं सूक्ष्मं सृष्टमलं विदुः ॥ १४१ ॥
वातघ्नं पाकि तीक्ष्णोष्णं रोचनं कफपित्तकृत्।

विष्यन्दीत्यादि। सर्वं लवणं=(ഉപ്പ്) विष्यन्द्यादिगुणयुक्तं विदुर्जानन्ति सद्वैद्या इति शेषः। विशेषेण स्यन्दयति—तच्छीलं विष्यन्दि। स्त्यानस्य कफादिसङ्घातस्य विलायनं स्यन्दनं ह्यपां क्रिया अम्बुतेजोजनितस्य लवणस्याम्बुक्रिया युज्यते। शरीरगतानामाप्यानां भावानां स्रवणं करोतीत्यर्थः। अनुक्तमप्युभयतो भागित्वं लवणस्य वेद्यम्। कथम्, अधोभागिषु विरेचनेषु 'अम्बु तेज' इति वचनात् सलिलाग्निभूयिष्ठत्वाल्लवणस्योदककृतान्निम्नगत्वादुपयोगः ऊर्ध्वभागेषु वमनेषु अग्निकृतादूर्ध्वगमनत्वादुपयोगः। तथा चागमः—अधोभागोर्ध्वभागेष्वित्यादि। सूक्ष्मं सूक्ष्मस्रोतोगामि सृष्टं मलं मूत्रपुरीषादि येन तत् सृष्टमलं तथा वातापहं पाकि अन्नव्रणादीनां पाककारि तीक्ष्णममृदु मरिचादिवद् उष्णमुष्णवीर्यं लवणमित्याश्रयापेक्षया नपुंसकत्वं रसापेक्षया पुंस्त्वं च ॥

इति सामान्यमुक्त्वा विशेषमाह—

सैन्धवं तत्र सस्वादु हृद्यं वृष्यं त्रिदोषनुत् ॥ १४२ ॥
लघ्वनुष्णं दृशः पथ्यमविदाह्यग्निदीपनम्।



सैन्धवमित्यादि। तत्र तेषु लवणेषु मध्ये सैन्धवम्=(ഇന്തുപ്പ്) ईषन्मधुरं हृद्यं वृष्यं लघु त्रिदोषघ्नम् अनुष्णं किञ्चिदुष्णं दृष्टेः पथ्यं अविदाहि किञ्चिद् विदाहि अग्निदीपनं च। सामान्यगुणाश्च विष्यन्दिसूक्ष्मसृष्टमलत्वरोचनत्वान्यस्य सन्त्येव ॥

लघु सौवर्चलं हृद्यं सुगन्ध्युद्गारशोधनम् ॥ १४३ ॥
कटुपाकं विबन्धघ्नं दीपनीयं रुचिप्रदम्।

लघ्वित्यादि। सौवर्चलं=(തുവർച്ചിലയുപ്പ്.) लघु हृदयाय हितं सुगन्धि उद्गारं दुष्टं शोधयति तथा विबन्धं स्रोतसां हन्ति ॥

ऊर्ध्वाधःकफवातानुलोमनं दीपनं विडम् ॥ १४४ ॥
विबन्धानाहविष्टम्भशूलगौरवनाशनम्।

विडं=(വിളയുപ്പ്.) ऊर्ध्वमधश्च कफवातावनुलोमयति यथासंख्यमूर्ध्वं प्रवर्तयेत् कफमधो वातं प्रवर्तयति। तथा दीपनं विबन्धादि(घ्नं) च ॥

विपाके स्वादु सामुद्रं गुरु श्लेष्मविवर्धनम् ॥ १४५ ॥

सामुद्रं=(വരക്കാരുപ്പ്.) मधुरविपाकं गुरु श्लेष्मवर्धनं च ॥ १४५॥

सतिक्तकटुकक्षारं तीक्ष्णमुत्क्लेदि चौद्भिदम् ।

भूमिमुद्भिद्य यद् भवति तदौद्भिदम् = (ഉവരുപ്പ്.) ईषत् तिक्तकटुक्षारं उत्क्लेदि च रक्तं मांसं च क्लेदयति । क्लेशीति पाठे दोषोत्क्लेशकरम् ॥

कृष्णे सौवर्चलगुणा लवणे गन्धवर्जिताः ॥ १४६ ॥

कृष्णे लवणे सौवर्चलगुणा लघ्वादयो गन्धेन वर्जिताः सौगन्ध्येन रहिताः सन्तीति शेषः । कृष्णं=(കാരുപ്പ്) ॥ १४६ ॥

रौमकं लघु पांसूत्थं सक्षारं श्लेष्मलं गुरु ।

रौमकं लवणं=(രൊമയുപ്പ്.) लघु । पांसूत्थं सिकतालवण=(പൊടി-യുപ്പ്.) ईषत् क्षारं श्लेष्मलं गुरु च ॥

लवणानां प्रयोगे तु सैन्धवादिं प्रयोजयेत् ॥ १४७ ॥

लवणानामित्यादिपाठसिद्धं लवणानां प्राधान्यं परिभाषया द्रढयति । लवणानां प्रयोगे सैन्धवमादिं कृत्वा प्रयोजयेत् । अन्यत्र प्रदेशे लवणानि द्वित्राणि त्रिचतुराणि वा यत्र यत्र प्रदेशे विनियुज्यन्ते तत्र तत्र सैन्धवमादिं कृत्वा प्रयोज्यानि । यथा हिङ्ग्वाद्ये चूर्णे द्विपटु इत्युक्तं तत्र सैन्धवसौवर्चले प्रयोज्ये । एवमन्यत्रापि वेद्यम् । उक्तं च —

"वरं सौवर्चलविळे सामुद्रौद्भिदकृष्णकम् ।
रौमकं पांसुजं हीनं लवणं क्रमशो मतम् ॥
एकं द्वे त्रीणि चत्वारि पञ्च षट् सप्त चेति यः ।
विधिर्लवणयोगेषु स यथापूर्वमिष्यते ॥"

खरनादेऽप्युक्तं —

"सैन्धवं सारसं पाक्यं सौवर्चलमथोद्भिदम् ।
पूर्वं पूर्वं गुणोत्कृष्टमौष्ण्यमेषां यथोत्तरम् ॥"

इति । रौमकपांसुजयोः पथ्यतरत्वादनुक्तिः तयोरपि गुणा उष्णादयः समाः सारसं सौवर्चलं पाक्यं लवणम् । इत्थमुक्तमपि सर्वलवणमवस्थाविशेषात् सर्वत्र

प्रधानमेव मूत्रपयसोरिव द्रष्टव्यम् । सैन्धवादिमिति केचित् पठन्ति । अस्मद्गुरवस्तु सैन्धवादीति क्रियाविशेषणमाहुः ॥ १४७ ॥

लवणानां क्षारशक्तिमत्त्वात् क्षाराणां लवणरसत्वाच्च लवणानन्तरं क्षारवचनं—

गुल्महृद्ग्रहणीपाण्डुप्लीहानाहगलामयान् ।
श्वासार्शःकफकासांश्च शमयेद्यवशूकजः ॥ १४८ ॥

गुल्मेत्यादि । यवशूकजो यवक्षारः. यवस्य शूकनालतुषादीन् दग्ध्वाद्भिः संस्राव्य पक्त्वा घनीभूतो यवक्षार इत्युच्यते स गुल्मादीन् शमयति ॥ १४८ ॥

सम्प्रति स्वर्जिकाक्षारादीनामपि गुणानाह —

क्षारः सर्वश्च परमं तीक्ष्णोष्णः कृमिजिल्लघुः ।
पित्तासृग्दूषणः पाकी छेद्यहृद्यो विदारणः ॥ १४९ ॥
अपथ्यः कटुलावण्याच्छुक्रौजःकेशचक्षुषाम् ।

क्षार इत्यादि । क्षारः सर्वश्च स्वर्जिकादिः । स्वर्जिका दन्तीचित्रकादि दग्ध्वा यत् क्रियते सः स्वर्जिकाक्षारः तद्वत् चित्रकतिलनालादीनपि दग्ध्वा क्षाराः क्रियन्ते । लवणहीने देशे क्षारा लवणीभवन्ति रोगेषु गुणात् । क्षरयतीति क्षारः । परममतिशयेन तीक्ष्णोष्णः पित्तासृजी दूषयति । पाकी पाककारी । छेदी भेदः श्लेष्मादिग्रन्थीनाम् । तथा अहृद्यो हृदयाय न हितः अतितीक्ष्णत्वात् । हृद्याकारस्तु छेद्यो भेद्य इति पठति । छेद्यः छेदनकृत् करणार्थे तद्धित इति वदति सः । विदारणः पक्वगण्डादीनाम् । कटुलावण्यात् शुक्रादीनामपथ्यः ॥

लवणवदन्नसंस्कारकत्वाद्धिङ्गुकथनं —

हिङ्गुवातकफानाहशूलघ्नं पित्तकोपनम् ॥ १५० ॥
कटुपाकरसं रुच्यं दीपनं पाचनं लघु ।

हिंग्वित्यादि । हिङ्गु वातादिघ्नं पित्तप्रकोपनं कट्वादिगुणयुक्तं च ॥

नित्योपयोगविषयत्वात् त्रिफलादेरुक्तिः—

कषाया मधुरा पाके रूक्षा विलवणा लघुः ॥ १५१ ॥
दीपनी पाचनी मेध्या वयसः स्थापनी परा ।
उष्णवीर्या सराऽऽयुष्या बुद्धीन्द्रियबलप्रदा ॥ १५२ ॥
कुष्ठवैवर्ण्यवैस्वर्यपुराणविषमज्वरान् ।
शिरोऽक्षिपाण्डुहृद्रोगकामलाग्रहणीगदान् ॥ १५३ ॥

सशोषशोफातीसारमेदमोहवमिक्रिमीन् ।
श्वासकासप्रसेकार्शःप्लीहानाहगरोदरम् ॥ १५४ ॥
विबन्धं स्रोतसां गुल्ममूरुस्तम्भमरोचकम् ।
हरीतकी जयेद् व्याधींस्तांस्तांश्च कफवातजान् ॥ १५५ ॥

कषायेत्यादि । हरीतकी=(കടുക്ക.) कषाया कषायरसा । कषायरसत्वात्
१ कटुविपाकित्वं प्राप्तमित्यत आह—मधुरा पाक इति । विलवणेति । लवणरसं वर्जयित्वा शेषाः पञ्च रसा अस्याः सन्तीति वेदयति लवणव्यतिरिक्तपञ्चरसोपेतेत्यर्थः । ननु कषायेत्यनर्थकं यतः पञ्चसु रसेषु लवणहीनेषु मध्ये कषायोऽनुप्रविष्ट इति । अस्त्येवैतत् । कषायत्वस्यातिशयख्यापनाय । अतिशयेन कषा(य ? यो) रसोऽस्यामस्तीत्यर्थः । चरकेऽप्युक्तं —

"हरीतकीं पञ्चरसामुष्णामलवणां शिवाम् ।"

इति । दीपनी अग्नेः पाचनी आमादेः दोषाणां वा मेध्या मेधायै हिता वयसः स्थापनी परं कालकृता शरीरावस्था यौवनादिर्वयः तस्य परमतिशयेन स्थापनी स्थितिकारिणी जरया विना वयःस्थापनीत्यर्थः । उष्णेत्येतावतैवोष्णवीर्येत्यस्यार्थस्य लब्धत्वाद् वीर्यग्रहणमतिशयोष्णवीर्यज्ञापनार्थम् । सरा भेदिनी आयुष्या आयुषे हिता । बुद्धिः प्रज्ञा इन्द्रियाणि चक्षुरादीनि तेषां बलं प्रददाति सैवम् । कुष्ठादीन् रोगान् जयेत् तांस्तांश्च कफवातजान् पित्तजातानिति च वाच्यं त्रिदोषघ्नत्वात् । खरनादे त्वेवमभ्यधायि —

"स्वाद्वम्लभावात् पवनं कटुतिक्ततया कफम् ।
कषायमधुरत्वाच्च हन्ति पित्तं हरीतकी ॥"

इति । कफवातजानेव हन्ति न पित्तजानित्यरुणदत्तादयः । श्लोकालङ्कारे हरीतक्युत्पत्तिश्च कथिता —

"पपात बिन्दुर्मेदिन्यां शक्रस्य पिबतोऽमृतम् ।
ओषधीनां ततः श्रेष्ठा प्रादुर्भूता हरीतकी ॥"

इति । उष्णगुणत्वाद् उष्णवीर्यत्वाच्च कफवातहरत्वं कषायादियोगेऽपि हरीतक्या इति व्याकारः । अवान्तरभेदादेका वातहरान्या वातकरेत्येके । तथा च तद्भेदः —

"बिन्दवः पतिताः सप्त शक्रस्य पिबतोऽमृतम् ।
मनुष्याणां हितार्थाय ततो जाता हरीतकी ॥

विजया रोहिणी चैव पृथुनामा तथाऽमृता ।
जीवन्ती त्रिवृता चैवाप्यभया चेति सप्तमी ॥
अलाम्बुग्रीवा विजया चतुरङ्गी तु रोहिणी ।
शुष्कत्वक् पृथुनामा च मांसला चामृता तथा ॥
सुवर्णवर्णा जीवन्ती पञ्चाङ्गी त्रिवृता स्मृता ।
अभया कृष्णवर्णा स्यादित्येताः सम्प्रकीर्तिताः ॥
विजया वातरोगेषु रोहिणी सन्निपातिके ।
पृथुनामा कफं हन्ति पित्तं हन्त्यमृता तथा ॥"

इत्यादि ॥

**तद्वदामलकं शीतमम्लं पित्तकफापहम् ।**

तद्वदित्यादि । आमलकं = (നെല്ലിക്ക.) तया हरीतक्या तुल्यं वर्तत इति तृतीयान्ताद् वतिः । हरीतकीसमानगुणमामलकीफलमिति यावत् । अतिदेशेऽर्धं ग्राह्यमिति न्यायः । तस्य विशेषमाह — शीतं शीतवीर्यम् । अम्लमम्लरसम् । अम्लरसत्वेऽपि पित्तकफापहम् । कृष्णात्रेयस्त्रि-दोषहरमित्याह —

"अम्लभावाज्जयेद् वातं पित्तं माधुर्यशैत्यतः ।
कफं रूक्षकषायत्वान्मुख्यमामलकीफलम् ॥"

इति । सुश्रुतेऽप्युक्तम् —

"चक्षुष्यं सर्वदोषघ्नं वृष्यमामलकीफलम् ।"

इत्यादि ॥

**कटुपाकं हिमं केश्यमक्षमीषच्च तद्गुणम् ॥ १५६ ॥**

अक्षमक्षस्य फलं = (താന്നിക്ക.) कटुविपाकं शीतवीर्यं केशेभ्यो हितम् । ईषत् तद्गुणमामलकगुणम् । आमलकादपि किञ्चिद्धीनमित्यति-देशनार्थः । तद्गुणं हरीतकीधात्रीसमानगुणमिति हाटकः । हरीतकीगुणमि तीन्दुः । हरीतक्यादीनां स्थूलसूक्ष्मादिभेदेनानियतस्वरूपत्वादुपयोज्यानां प्र-माणमुच्यते अक्षं तावत् कर्षप्रमाणं ग्राह्यम् । अक्षमित्यन्वर्था हीयं संज्ञा अक्ष-मात्रत्वादेव । तथा च धन्वन्तरिणाख्यातम् । 'विभीतकः कर्षफल' इति । आमलकमर्धकर्षप्रमाणं हरीतकी द्विकर्षप्रमाणा उक्तं च —

"त्रिकर्षमाना विजया कर्षमानं विभीतकम् ।
तदर्धमाना धात्री स्यान्मुख्यं मानमुदाहृतम् ॥"

इति । अन्यत्राप्युक्तं —

"नवा स्निग्धा घना वृत्ता गुर्वी क्षिप्ता तथाम्भसि ।
निमज्जेद् या प्रशस्तत्वाद् गुणकृत्सा प्रकीर्तिता ॥
नवादिगुणयुक्तत्वं तथैकस्मिन् द्विकर्षता ।
हरीतक्याः फले यत्र त्रयं तच्छ्रेष्ठमुच्यते ॥"

इति । तथा तन्त्रान्तरे —

"अभयैका योजनीया द्वावेव विभीतकौ ।
धात्रीफलानि चत्वारि त्रिफलेऽयं प्रकीर्तिता ॥"

इति । तस्मान्नियतप्रमाणत्वं त्रिफलायाः स्थितम् ॥ १५६ ॥

**इयं रसायनवरा त्रिफलाक्ष्यामयापहा ।**
**रोपणी त्वग्गदक्लेदमेदोमेहकफास्रजित् ॥ १५७ ॥**

इयमिति त्रिफलापेक्षम् । पारिभाषिकी त्रिफलेति । इयमीदृशी त्रिफला हरीतक्यामलकविभीतकसमाहारः रसायनवरा चक्षूरोगघ्नी रोपणी व्रणानाम् । त्वग्गदाः कुष्ठादयः क्लेदो व्रणानां स्रावः प्रमेहो मेहः अस्रं रक्तं तानि जयति ॥ १५७ ॥

**सकेसरं चतुर्जातं त्वक्पत्रैलं त्रिजातकम् ।**

**सकेसरमित्यादि** । त्वक् च =(ഇലവർങ്ങം) पत्रं च= (പച്ചില) एला च = (ഏലത്തരി) त्वक्पत्रैलम् । अस्य किं नामेत्याह — त्रिजातकम् । योगास्त्वक्पत्रैलानां त्रिजातकसंज्ञम् । त्वक्पत्रैलं सकेसरं नागकिञ्जल्कसंयुक्तं चतुर्जातसंज्ञम् । द्वयमप्येतत् पित्तप्रकोपि तीक्ष्णादिगुणयुक्तम् । हृद्याकारस्त्वाह — 'चातुर्जातत्रिजातकयो'र्गुणमाह —

"कासश्वासहरं रुच्यं लघु श्लेष्मविनाशनम् ।"

इति ॥

**पित्तप्रकोपि तीक्ष्णोष्णं रूक्षं दीपनरोचनम् ॥ १५८ ॥**
**रसे पाके च कटुकं कफघ्नं मरिचं लघु ।**

पित्तप्रकोपीत्यादिमरिचगुणा इति । रसे पाके च कटुकं मरिचं कफघ्नं लघु मरिचस्य रसग्रहणाल्लब्धे कटुपाकित्ववचनमतिशयार्थम् ॥

श्लेष्मला स्वादुशीतार्द्रा गुर्वी स्निग्धा च पिप्पली ॥ १५९ ॥
सा शुष्का विपरीतातः स्निग्धा वृष्या रसे कटुः ।
स्वादुपाकानिलश्लेष्मश्वासकासापहा सरा ॥ १६० ॥
न तामत्युपयुञ्जीत रसायनविधिं विना ।

श्लेष्मलेत्यादि । आर्द्रा अशुष्का पिप्पली = (തിപ്പലി.) श्लेष्मला स्वादुरसा शीता शीतवीर्या । स्वादुपाकेति केचित् । स्निग्धा च । सा पिप्पली च शुष्का अतः पूर्वोक्ताया आर्द्रायाः सकाशाद् विपरीता शीतविपर्ययेणोष्णा गुरुविपर्ययेण लघुः स्निग्धगुणस्यात्र न वैपरीत्यम् । स्निग्धेत्युक्तत्वात् । तथा वृष्या रसे कटुश्च । कटुरसत्वाच्च कटुपाकत्वं प्राप्तमित्याह—स्वादुपाका तथा अनिलादीन् हन्ति । एवंविधामपि तां पिप्पलीं नात्युपयुञ्जीत । रसायनविधिं विना । पिप्पलीं वर्धमानादिरसायनवि धेनै ? धान ए वातिशयेनोपयुञ्जीत । पिप्पली वर्धमानादिभीरसायन एवातिशयोपयोगः ॥

नागरं दीपनं वृष्यं ग्राहि हृद्यं विबन्धनुत् ॥ १६१ ॥
रुच्यं लघु स्वादुपाकं स्निग्धोष्णं कफवातजित् ।

नागरमित्यादि । नागर=( ചുക്ക്.) दीपनं दीपनादिगुणं ग्राहि विशः । तथा विबन्धनुत् स्रोतः शोधनकृत् ॥

तद्वदार्द्रकमेतच्च त्रयं त्रिकटुकं जयेत् ॥ १६२ ॥
स्थौल्याग्निसदनश्वासकासश्लीपदपीनसान् ।

तद्वदित्यादि । आर्द्रकम् =(ഇഞ്ചി.) तद्वन्नागरसमानगुणमेव । एतच्च त्रयं मरिचपिप्पलीनागराख्यं त्रिकटुकसंज्ञं स्थौल्यादीन् जयेत् ॥

चविका पिप्पलीमूलं मरिचाल्पान्तरं गुणैः ॥ १६३ ॥

चविकेत्यादि । चविका=(കാട്ടുമുളക്) पिप्पलीमूलं च= (കാട്ടുതിപ്പലിവേര്) मरिचात् स्तोकविशेषं गुणे भवति । कटुरसविपाकं कफघ्नं लघूष्णवीर्यं चेत्यर्थः । गुणशब्देन रसविपाकादयोऽपि पारतन्त्र्याद् गृह्यन्ते न तु पारिभाषिका एव गुरुत्वलघुत्वादयः । कफवातघ्नत्वं चानयोर्वेगं इष्टाकारो मरिचाल्पान्तरं गुणैः पित्तकरत्वादिभिरित्याह ॥ १६३ ॥

चित्रकोऽग्निसमः पाके शोफार्शःक्रिमिकुष्ठहा।

चित्रकः = (കൊടുവേലി) अग्निसमः पाके अत्यन्तोष्ण इत्यर्थः। तथाच शोफादीन् हन्ति॥

पञ्चकोलकमेतच्च मरिचेन विना स्मृतम्॥ १६४॥
गुल्मप्लीहोदरानाहशूलघ्नं दीपनं परम्।

पञ्चकोलकमित्यादि। एतच्च पूर्वोक्तं मरिच(हरि? रहि)तं पिप्पली-पिप्पलीमूलचव्यचित्रकनागराख्यं पञ्चकोलकसंज्ञं स्मृतं वैद्यतन्त्रे। कोलशब्दः कटुकवाची तथा गुल्मादिघ्नमतिदीपनं च। नित्योपयोगो योग्यत्वात् स्वस्थ-रक्षणकर्मसु स्याच्चेति॥

पञ्चमूलानां प्रस्तावात् गुणवर्णना—

बिल्वकाश्मर्यतर्कारीपाटलाडुंडुकैर्महत्॥ १६५॥
जयेत्कषायतिक्तोष्णं पञ्चमूलं कफानिलौ।

बिल्वेत्यादि। बिल्वादीनामुपलक्षणे तृतीया। बिल्वादिभिरुपलक्षितं महत्पञ्चमूलसंज्ञं कफानिलौ जयेत्। तच्च कषायतिक्तरसमुष्णवीर्यं च कषाय-तिक्तरसत्वेऽपि वातहरत्वमुष्णवीर्यत्वात्। बिल्वं श्रीफलं =(കൂവളം) काश्मर्यं= (കുമിഴ്) तर्कारी =(മുഞ്ഞ) पाटला = (പാതിരി) डुण्डुकं = (പലകപ്പയ്യാനി) इति। गुरुबृहदनल्पमिति पर्यायाः महत्पंचमूलं त्वचं विहाय ग्राह्यम्। ह्रस्वमतोऽन्यथा तथोक्तं भोजे —

"पञ्चमूलं च विश्वं च निस्त्वचं कथयेन्नृप!।
गोपिकामजशृङ्गीं च चित्रकं चाप्यथोऽन्यथा॥"

इति॥

ह्रस्वं बृहत्यंशुमतीद्वयगोक्षुरकैः स्मृतम्॥ १६६॥
स्वादुपाकरसं नातिशीतोष्णं सर्वदोषजित्।

ह्रस्वमित्यादि। पञ्चमूलमिति वर्तते। ह्रस्वं कनीयो लघ्वल्पमिति पर्यायाः। ह्रस्वं पञ्चमूलं बृहत्यादिभिः बृहतीद्वयं बृहती कण्डकारिका च। अंशुमतीद्वयं—शालिपर्णी पृश्निपर्णी च =(ഓരിലയും മൂവിലയും) गोक्षुरकः = (ഞെരിഞ്ഞിൽ) बृहतीद्वयं = (വഴുതിന രണ്ടും) इति पाठ्याकारः। अरुणदत्तस्तु —'इदं ह्रस्वं पञ्चमूलं स्वादुपाकरसं नाति-शीतं नात्युष्णं सर्वदोषजित्'॥

बलापुनर्नवैरण्डसूर्प्यपर्णीद्वयेन तु ॥ १६७ ॥
मध्यमं कफवातघ्नं नातिपित्तकरं सरम् ।

बलादिभिः पञ्चभिर्मध्यमं मध्यमाख्यं पञ्चमूलम् । एतच्च कफवातघ्नं नातिपित्तकरं सरं च । बला = (കുറുന്തോട്ടി) पुनर्नवं = (ചാരണ) एरण्डं = (ആവണക്ക്) सूर्प्यपर्णीद्वयं मुद्गपर्णी माषपर्णी च ॥

अधुना चतुर्थं पञ्चमूलमाह —

अभीरुवीराजीवन्तीजीवकर्षभकैः स्मृतम् ॥ १६८ ॥
जीवनाख्यं च चक्षुष्यं वृष्यं पित्तानिलापहम् ।

अभीरुवीरेत्यादि । अभीरुवीरादिभिर्जीवनाख्यमोजोवृद्धिकरं पञ्चमूलं चक्षुष्यादिगुणयुक्तम् । अभीरुः = (ശതാവരി) वीरा = (കാകോളി) जीवन्ती जीवकम् । ऋषभकम् = (ഇടവകം.)

पञ्चमं पञ्चमूलमाह —

तृणाख्यं पित्तजिद्दर्भकाशेक्षुशरशालिभिः ॥ १६९ ॥

तृणाख्यमित्यादि । तृणाख्यं तृणसंज्ञं पञ्चमूलं दर्भादिभिः पित्तजित् । दर्भः = (ദർഭ) काशः = (ആററുദർഭ) इक्षु = (കരിമ്പ്) शरं = (ആറ). ॥ १६९ ॥

सम्प्रति सुखग्रहणार्थं संग्रहश्लोकमाह —

शूकशिंबीजपक्वान्नमांसशाकफलौषधैः ।
वर्गितैरन्नलेशोऽयमुक्तो नित्योपयोगिकः ॥ १७० ॥

शूकेत्यादि । शूकधान्यादिभिर्वर्गितैरयमन्नस्य लेश एकदेश एवोक्तः सर्वमन्नमनुक्तमशक्यत्वात् । किं बहुना, पथ्यापथ्यावनेन स्यातां दिङ्निदर्शनमेतत् । नित्योपयोगो विद्यते यस्य स नित्योपयोगिकः । सदा नित्योपयोगवानित्यर्थः । मात्रायोगक्रियादेशकालावस्थादिविशेषाच्चोक्तानामपि द्रव्याणामन्यथात्वं दृष्टम् । तथाच सङ्ग्रहे —

"निषेव्यमाणं तिलशो विषमप्यमृतायते ।
कुष्ठं तत्कार्यपि तिलो हन्ति भल्लातकैः सह ॥"

इत्यादि । शास्त्रकृता ग्रन्थगौरवभिया स्पष्टं कृत्वा नोक्तम् । प्रदेशान्तरेषु युक्त्या च प्रतिपादितम् । इति ॥ १७० ॥

इति श्रीदासपण्डितविरचितायां हृदयबोधिकायां षष्ठोऽध्यायः ॥

---

## अथ सप्तमोऽध्यायः ।

अन्नपानस्य च स्वरूपं शरीरसन्धारणार्थं प्रागुक्तम् । एवं विज्ञातस्वरूपं पथ्यम- (पथ्यम? पिचा)न्नपानं विषाद्युपहृतं रोगाय मरणाय वा सम्पद्यते । अतस्तद्रक्षणार्थमध्यायारम्भः ।

### अथातोऽन्नरक्षाध्यायं व्याख्यास्यामः ।

"अन्नस्य रक्षणोपदेशादन्नरक्षेत्युच्यते ।
उक्तान्नस्य विषादिभ्यो रक्षा सम्प्रति कथ्यते ॥
अध्यायोऽपि तदुक्तित्वादन्नरक्षेति नामतः ।"

इति हृद्याकारः । पथ्यमप्यन्नं विषजुष्टं चेद् रोगाय मृत्यवे वा स्याद् अतोऽन्नरक्षामाह इति पाठ्यकारः ॥

अन्नरक्षा भिषगायत्ता कथमिति चेत् । विषजुष्टाहारं परीक्षितुं स एव समर्थः तदुक्तं सौश्रुते —

"माहानसिकवोढारः सूपौदनिकपौपिकाः ।
भवेयुर्वैद्यवशगा ये चाप्येऽप्यत्र केचन ॥"

इति ।

अतो भिषक्परिग्रहार्थमाह —

**राजा राजगृहासन्ने प्राणाचार्यं निवेशयेत् ।
सर्वदा स भवत्येवं सर्वत्र प्रतिजागृविः ॥ १ ॥**

राजेत्यादि । राजा नृपः राजमात्रो वा प्राणाचार्यं प्रशस्तवैद्यं राजगृहासन्ने निवेशयेत् स्वगृहनिकटे स्थापयेत् आवासयेदित्यर्थः । उक्तवांश्च— "कुलीनं स्निग्धमाप्तमास्तिकमार्यमार्यपरिग्रहं दक्षं दक्षिणं निभृतं शुचिमनुद्धतम(ना? न)लसमव्यसनिनमनहंकृतमकोपनमसाहसिकं वाक्यार्थावबोधकुशलं निष्णातमष्टाङ्गे यथाम्नायमायुर्वेदे सुविहितयोगक्षेमं सन्निहितागदादियोगं (सात्म्यज्ञं च) प्राणाचार्यं परिगृह्णीयाद् इति । एवं कृते सति यो गुणः स्यात् तमाह — सर्वदेति । एवं कृते सति स प्राणाचार्यः सर्वदा सर्वकालं रात्रिन्दिवमथवा भोजनासनशयनादिकालं च सर्वत्रान्नपानशयनमाल्यरत्नभोजनवसनेन्धनादौ नित्यसेव्ये वस्तुनि प्रतिजागृविर्दत्तावधानो भवति । कृतप्रत्यवेक्षः सन्नित्यर्थः । प्रभुविषयमेतत् । वैद्यं प्रत्याह — अन्नेत्यादि ॥ १ ॥

अथवा ननु किमेवं क्रियत इत्याह —

अन्नपानं विषाद्रक्षेद्विशेषेण महीपतेः ।
योगक्षेमौ तदायत्तौ धर्माद्या यन्निबन्धनाः ॥ २ ॥

अन्नेत्यादि । महीपतेः सम्बन्ध्यन्नपानं विषाद् विषसंस्पर्शाद् विशेषेणातिशयेन रक्षेत् । अन्नपानमित्युपलक्षणम् । शयनवस्त्रमाल्यादीनामपि रक्ष्यत्वात् । अथवा विशेषशब्दस्य काकाक्षिवदुभयत्रान्वयः अन्नपानं विशेषेण रक्षेत् । अन्यच्च माल्यादिकं विशेषेण महीपतेः अन्येषां च सर्वेषामिति । किमर्थं नृपान्नपानादि विशेषेण रक्ष्यमित्याह । योगेत्यादि । योगोऽन्नपानादिभिः सम्बन्धः । क्षेमस्तेषामन्नादीनां चोराद्युपद्रवेभ्यो रक्षणम् । द्वावपि एतौ तदायत्तौ राजाधीनौ । 'अधीनो निघ्न आयत्त' इति पर्यायाः । हाटको 'यदायत्तावि'ति पठति यच्छब्देन राजा परामृश्यते इति वदन् । योगोऽनवाप्तद्रव्यलाभः । क्षेमस्तद्रक्षेति ह्याकारः । धर्माद्या धर्मार्थकाममोक्षा यन्निबन्धना योगक्षेमनिबन्धना निबन्धनं कारणम् ॥ २ ॥

विषदुष्टस्य भक्तस्य लक्षणमाह —

ओदनो विषवान् सान्द्रो यात्यविस्राव्यतामिव ।
चिरेण पच्यते पक्वो भवेत् पर्युषितोपमः ॥ ३ ॥
मयूरकण्ठतुल्योष्मा मोहमूर्च्छाप्रसेककृत् ।
हीयते वर्णगन्धाद्यैः क्लिद्यते चन्द्रकाञ्चितः ॥ ४ ॥

ओदनमित्यादि । विषवानोदनः सान्द्रो विलेप्याकारः तथा विस्रावयितुं शक्यो वि(स्रोषो ? स्राव्यः) नैवं योऽसावविस्राव्यः तस्य भावः अविस्राव्यता तामिव याति । विस्रावयितुमशक्य इति यावत् । चिरेण कालेन पच्यते पक्वमात्र एव पर्युषितोपमो भवेत् । पर्युषितं विगताहोरात्रं भक्तमुपमा यस्य स एवम् । सद्योऽवतारितोऽपि निरूष्मा स्तब्धः स्यादित्यर्थः । तस्य चौदनस्य पक्वस्य सम्बन्धी मयूरकण्ठतुल्योष्मा मोहादीन् करोति मयूरकण्ठवन्नानावर्णो मयूरकण्ठतुल्यः स चासावूष्मा चेति । ऊष्मा बाष्पः । अन्ये ओदनो मयूरकण्ठतुल्योष्मा तथा मोहादिकृदूष्मा घ्राणेनेति वदन्ति । पक्वस्यौदनस्य मयूरकण्ठतुल्यो बाष्पः प्रसरति स च मोहादीन् कुरुत इति सद्बृहादिदर्शनलम्पटाः । मयूरकण्ठतुल्योष्ममोहमूर्च्छाप्रसेककृत् इत्येकपदमोदनविशेषणं चेति पण्डितः । नेत्रश्रोत्रयोः शक्तिभ्रंशो मूर्च्छा । तथासावोदनो वर्णगन्धाद्यैर्हीयते । आदि-

शब्देन रसादीनां ग्रहणम् । क्लिद्यते क्लिन्नो भवति तथा चन्द्रका मयूरपक्षप्र-देशाः तैराचितो भवति नानावर्णैर्मण्डलैः समन्तात् चित इत्यर्थः । जलक्षिप्त-तैलबिन्दुसदृशैश्चन्द्रकैराचित इति हाटकादयः ॥ ३,४ ॥

व्यञ्जनानां परीक्षणमाह—

व्यञ्जनान्याशु शुष्यन्ति ध्यामक्वाथानि तत्र च ।
हीनातिरिक्ता विकृता छाया दृश्येत नैव वा ॥ ५ ॥

फेनोर्ध्वराजीसीमन्ततन्तुबुद्बुदसम्भवः ।
विच्छिन्नाविरसा रागाः खाण्डवाः शाकमामिषम् ॥ ६ ॥

व्यञ्जनानीत्यादि । व्यञ्जनानि वार्ताकादीनि दधितक्रदाडिमादि-संस्कृतानि रसादयश्च तानि विषवन्ति आशु क्षिप्रं शुष्यन्ति तथा ध्यामो मलिनः क्वाथो येषां तान्येवम् । क्वाथः पच्यमानस्योर्ध्वे प्रवृत्तः फेनः । श्यामक्वोथा-नीति वा पाठः । तत्र च तेषु व्यञ्जनेषु छाया मुखादीनां प्रतिबिम्बं सा हीना स्वप्रमाणवर्णादिना अथवातिरिक्ताधिका विकृता भुजाविहीना वा दृश्यते । पूर्वावस्थाप्रच्युतिर्विकृतिः । नैव वा कीदृश्यपि छाया दृश्यते । न चेदमरिष्टं सनिमित्तत्वात् । तेष्वेव व्यञ्जनेषु फेनादीनां सम्भवः । छायाशब्देन कान्ति-रुच्यते इत्यन्ये । ऊर्ध्वराजयः उपरि विविधा राजयो रेखाः । रागा द्राक्षादि-कृता ऋतुचर्योक्तलक्षणा । विच्छिन्नविरसा भवन्ति क्वचिद्रसो दृश्यते क्व-चिन्नेति विच्छिन्नत्वम् । विरसत्वं विगतरसत्वम् । एवं षाडवेऽपि । शाकं चामिषं च विच्छिन्नं स्थाने स्थाने त्रुट्यद्विरसं च भवति । विषप्रभावादिति सर्वत्र वाच्यम् । आमिषं मांसम् ॥ ५,६ ॥

नीला राजी रसे ताम्रा क्षीरे दधनि दृश्यते ।
श्यावा पीताऽसिता तक्रे घृते पानीयसन्निभा ॥ ७ ॥

काली मद्याम्भसोः क्षौद्रे हरित्तैलेऽरुणोपमा ।
पाकः फलानामामानां पक्वानां परिकोथनम् ॥ ८ ॥

द्रव्याणामार्द्रशुष्काणां स्यातां म्लानिविवर्णते ।
मृदूनां कठिनानां च भवेत् स्पर्शविपर्ययः ॥ ९ ॥

माल्यस्य स्फुटिताग्रत्वं म्लानिर्गन्धान्तरोद्भवः ।
ध्याममण्डलता वस्त्रे शतनं तन्तुपक्ष्मणाम् ॥ १० ॥

धातुमौक्तिककाष्ठाश्मरत्नादिषु मलाक्तता।
स्नेहस्पर्शप्रभाहानिः सप्रभत्वं तु मृन्मये॥ ११॥

नीलेत्यादि। रसे मांसरसे विषवति नीला नीलवर्णा राजी दृश्यत इति योज्यम्। राजिरिति इकारान्तो वा। क्षीरे ताम्रा ताम्रवर्णा। (राजीति सर्वत्र प्रकृतं) तथा आमानां फलानां पाकः। पक्वानां तु परिकोथनं शतनं भवति। आर्द्रशुष्काणां द्रव्याणां यथासंख्यं म्लानविवर्णते स्याताम्। आर्द्राणां मूलबिसादीनां म्लानता शुष्कभासत्वं शुष्काणां शुण्ठीहरिद्रादीनां विवर्णता श्यावत्वादिलक्षणा तथा मृदूनां कठिनत्वं कठिनानां मृदुत्वमिति स्पर्शविपर्ययः स्यात्। माल्यं पुष्पं तस्य स्फुटिताग्रत्वं विशीर्णाग्रत्वं भवति तथा म्लान्युद्भवो म्लानता गन्धान्तरोद्भवः सौगन्ध्यनाशोऽन्यगन्धसम्भवश्च। वस्त्रे प्रावरणादिके ध्याममण्डलता मलिनमण्डलसम्भवः स्यात् ध्यामानि मलिनानि मण्डलानि वृत्तानि तेषां भावस्तत्ता। तन्तूनां पक्ष्मणां च वस्त्रसम्बन्धिनामेव शतनं शातः पातः स्यात्। पक्ष्म पार्श्ववर्ति सूत्रम्। धातुः सुवर्णादिः। मौक्तिकं मुक्ता अस्य रत्नेभ्यः पृ(थु? थग्)ग्रहणं प्राचुर्येण भूषणत्वात्। काष्ठं दारु अश्म पाषाणं रत्नानि वज्रमरतकादीनि। आदिशब्देन शङ्खशुक्त्यादिग्रहणं तेषु मलाक्तता मलोपदिग्धत्वं तेषामेव धात्वादीनां स्नेहस्पर्शप्रभाहानिः। मृन्मये भाण्डे तु निष्प्रभे सप्रभत्वम्॥ ७—११॥

विषदः श्यावशुष्कास्यो विलक्षो वीक्षते दिशः।
स्वेदवेपथुमांस्तब्धो भीतः स्खलति जृम्भते॥ १२॥

विषद इत्यादि। विषं ददातीति विषदो नरः श्यावं शुष्कमास्यं यस्य स एवंविधो भवेत्। तथा विलक्षः अस्पष्टदृष्टिः सन् दिशः पश्यति। स्वदोषाशङ्कया स्वेदवेपथुयुक्तः स्तब्धो भीतः स्खलितगतिः स्याज्जृम्भणं च कुरुते। उपलक्षणं चेदं तत्कालभाविनीनां क्रियाणां संग्रहोक्तानाम्। वेपथुः कम्पः। नृपाज्ञात्वरया केचिदपराधान्तराद् वा अनवस्थितसत्त्वाः समाचरन्त्येवम्॥ १२॥

अतोऽग्न्यादिभिः परीक्षेत यथा—

भक्ष्याद्यं सविषं त्वग्निरेकावर्तः स्फुटत्यति।
शिखिकण्ठाभधूमार्चिरनर्चिर्वोग्रगन्धवान्॥ १३॥

प्राप्याऽन्नमित्यादि। अग्निस्तु सविषमन्नं प्राप्य एकावर्तः संहतज्वालावान् मुसलाकृतिर्ज्वलति। स्फुटस्याति अतिशयेन चटचटायते। शिखिनो बर्हिणस्य कण्ठेन तुल्ये धूमार्चिषी यस्य स एवम्। अनर्चिर्ज्वालारहितो वा स्यात्। उग्रगन्धः कुणपगन्धः तद्वान्॥ १३॥

स्नेहलवणयोगादपि चाग्निरित्थं स्यादतो वयोभिः परीक्षान्तरं दर्शयन्नाह—

म्रियन्ते मक्षिकाः प्राश्य काकः क्षामस्वरो भवेत्।
उत्क्रोशन्ति च दृष्ट्वैतच्छुकदात्यूहसारिकाः॥ १४॥
हंसः प्रस्खलति ग्लानिर्जीवंजीवस्य जायते।
चकोरस्याक्षिवैराग्यं क्रौञ्चस्य स्यान्मदोदयः॥ १५॥
कपोतपरभृद्दक्षचक्रवाका जहत्यसून्।
उद्वेगं याति मार्जारः शकृत् मुञ्चति वानरः॥ १६॥
हृष्येन्मयूरस्तद्दृष्ट्या मन्दतेजो भवेद्विषम्।
इत्यन्नं विषवज्ज्ञात्वा त्यजेदेव प्रयत्नतः॥ १७॥
यथा तेन विपद्येरन्नपि न क्षुद्रजन्तवः।

म्रियन्त इत्यादि। सविषमन्नमिति वर्तते। मक्षिकाः सविषमन्नं प्राश्य विपद्यन्ते। प्राश्येत्यादि। काकः सविषमन्नं भुक्त्वा क्षामस्वरो मन्दस्वरः स्यात्। शुकादय एतद् विषं दृष्ट्वा उत्क्रोशन्ति। उत्क्रोशनमुच्चैः कूजनम्। शुकः कीरः दात्यूहः कोरङ्गुरुकः शारिका शरारुः। एवं हंसः प्रस्खलति प्रस्खलितगतिः स्यात्। तथा जीवञ्जीवस्य ग्लानिः कान्तिहानिर्जायते। तथा चकोरस्याक्षिवैराग्यमक्षिविरागता विगतरक्तवर्णत्वं भवति। क्रौञ्चस्य मदोद्भूतिः स्यात्। उक्तं च कामन्दकीये—

"चकोरस्य विरज्येते नयने विषदर्शनात्।
सुव्यक्तं माद्यति क्रौञ्चो म्रियते मत्तकोकिलः॥"

इति। कपोतादयोऽसून् जहति प्राणांस्त्यजन्ति। मार्जारः पृषदंश उद्विजते। वानरः शकृत् सृजति। मयूरः तद्विषं दृष्ट्वा हृष्येत् सहर्षो भवेत्। तद्दृष्ट्या मयूरावलोकनेन तद्विषं मन्दतेजो हीनवीर्यं भवेत्। मयूरादीनां विषहराणां पोषणं विधेयमित्यर्थः। चाणक्ये चोक्तं—मयूरनकुलपृषतोत्सर्गाः सर्पान्

भक्षयन्तीति । इत्यन्नं सविषमित्यादि । इत्यनेन प्रकारेण सविषमन्नं ज्ञात्वा त्यजेदेव । अन्नमित्युपलक्षणं सर्वं विषदुष्टं त्याज्यं यथा येन प्रकारेण त्यज्यमानेन तेन विषेण क्षुद्रजन्तवोऽपि मक्षिकादयो न विपद्येरन् न नश्येयुः तथा त्यजेत् । क्षुद्रजन्तवोऽपि किं पुनर्महान्त इत्यपिशब्दार्थः । क्षुद्रजन्तवोऽस्थिहीनाः कीटमशकमक्षिकादयः केवलपापकर्मजनिताः ॥

स्पृष्टे तु कण्डूदाहोषाज्वरार्तिस्फोटसुप्तयः ॥ १८ ॥
नखरोमच्युतिः शोफः सेकाद्या विषनाशनाः ।
शस्तास्तत्र प्रलेपाश्च सेव्यचन्दनपद्मकैः ॥ १९ ॥
ससोमवल्कतालीसपत्रकुष्ठामृतानतैः ।
लालाजिह्वौष्ठयोर्जाड्यमूषा चिमिचिमायनम् ॥ २० ॥
दन्तहर्षो रसाज्ञत्वं हनुस्तम्भश्च वक्त्रगे ।
सेव्याद्यैस्तत्र गण्डूषाः सर्वं च विषजिद्धितम् ॥ २१ ॥

स्पृष्ट इति । सविषेऽन्ने हस्तेन स्पृष्टे सति कण्ड्वादयः स्युः । मुख-हस्तादिस्पृष्टे इत्यरुणदत्तः । ऊषा प्रादेशिको दाहः । सर्वदाहस्तु दाहः । आर्तिः शूलम् । सुप्तिरङ्गस्याचैतन्यम् । नखरोमच्युतिर्नखरोमशातनम् । ननु नखशातः केवलवातरोगेषु पठितः विषेण च संनिपातकोपनमुक्तं तत् कथमेतदुच्यते जात्यन्तरभूत एवायं विषनिमित्त इत्यदोषः । तत्र तेषु विषस्पर्शजेषु रोगेषु सेकाद्याः शस्ता यतो विषनाशनाः । प्रलेपाश्च हिताः कैः सेव्यादिभिः । प्रलेप-श्चेति वा पाठः ॥

सविषेऽन्ने वक्त्रगे मुखप्राप्ते सति लाला विशेषेण भवति । जिह्वौष्ठयो-र्जाड्यं भवति । ऊषादयः स्युः । चिमिचिमायनमणुप्राणिपरिसर्पणप्रतीतिः । रसाज्ञत्वं जिह्वा रसं न चेतयत इत्यर्थः । हन्वोः स्तम्भश्च स्यात् तत्र पूर्वोक्तैः सेव्याद्यैर्गण्डूषा हिताः । गण्डूष इति वा पाठः । सर्वं चान्यदपि यद् विषं जयति तद्धितम् ॥ १८—२१ ॥

आमाशयगते स्वेदमूर्च्छाध्मानमदभ्रमाः ।
रोमहर्षो वमिर्दाहश्चक्षुर्हृदयरोधनम् ॥ २२ ॥
बिन्दुभिश्चाचयोऽङ्गानां पक्वाशयगते पुनः ।
अनेकवर्णं वमति मूत्रयत्यतिसार्यते ॥ २३ ॥

तन्द्रा कृशत्वं पाण्डुत्वमुदरं बलसंक्षयः ।
तयोर्वान्तविरिक्तस्य हरिद्रे कटभींगुदम् ॥ २४ ॥
सिन्दुवारकनिष्पाववाष्पिकाशतपर्विकाः ।
तण्डुलीयकमूलानि कुक्कुटाण्डमवल्गुजम् ॥ २५ ॥
नावनाञ्जनपानेषु योजयेद्विषशान्तये ।
विषपीताय दद्याच्च शुद्धायोर्ध्वमधस्तथा ॥ २६ ॥
सूक्ष्मं ताम्ररजः काले सक्षौद्रं हृद्विशोधनम् ।
शुद्धे हृदि ततः शाणं हेमचूर्णस्य दापयेत् ॥ २७ ॥

विषान्ने आमाशयं प्राप्ते स्वेदादयः स्युः । अक्षिहृदयरोधनं स्तम्भनं बिन्दुभिर्नानावर्णैरङ्गानामाचयः समन्ताच्चयनम् । हृद्याकारस्तु बिन्दुभिश्च चयोऽङ्गेष्विति पठति बिन्दूनां चयनं शरीरे भवतीत्यर्थ इति वदन् । पक्वाशयगते तु विषान्ने "अनेकवर्णं वमति मूत्रयत्यतिसार्यते ।" तन्द्रादयश्च भवन्ति । तयोरामाशयपक्वाशयगतयोर्विषयोर्वशे वर्तमानस्य यथायोगं वान्तविरिक्तस्य पुंसो हरिद्रे कटभीङ्गुदादिकमौषधं नावनादिषु । कटभिः=(൦വ-ങ്കണ്ണി) इङ्गुदं=(ഓടൽ.) सिन्दुवारकं= (കരിനൊച്ചി.) वाष्पिका हिङ्गुपत्रिका । शतपर्विका वचा । तत्रामाशयगते मदनफलालाबुतुम्बीकोशातकीफलैर्मधुयुक्तैर्निष्पावाम्बुयुक्तैर्वमनं वान्तस्य स्नेहयित्वा विरेचनम् । पक्वाशयगते वमितस्यैव नीलिनीफलयुक्तेन घृतेन विरेचनम् ॥

एवमूर्ध्वमधश्च शुद्धाय विषपीताय पीतविषाय पुंसे "वाऽऽहिताग्न्यादिषु" इति परनिपातः । विषभुक्तायेति केचित् पठन्ति । काले योग्यकाले उपलक्षणं चेदम् । देशसाद्म्यादीनप्यवेक्ष्येत्यर्थः । काले प्रातरिति केचित् । सूक्ष्ममतिश्लक्ष्णं ताम्रचूर्णं समाक्षिकं दद्यात् किंभूतं हृद्विशोधनं हृद्विशुद्धिकरं हृदयविशुद्धये इत्यर्थः । ताम्ररजसा शुद्धे हृदि स्वलिङ्गैर्ज्ञाते ततोऽनन्तरं हेमचूर्णस्य शाणं कर्षचतुर्थांशं सक्षौद्रं दापयेद् वैद्यः । हेमचूर्णमपि सक्षौद्रमेव योज्यम् । शाणं=(ഏഴരക്കാണം.) (ഒന്നേകാൽപണത്തൂക്കം കാണം.) ॥ २२—२७ ॥

दत्ते सति यो गुणः स्यात् तमाह—

न सज्जते हेमपाङ्गे पद्मपत्रेऽम्बुवद्विषम् ।
जायते विपुलं चायुर्गरेऽप्येष विधिः स्मृतः ॥ २८ ॥

न सज्जत इत्यादि । हेम पिबतीति हेमपः तस्याङ्गे विषं न सज्जते कथं पद्मपत्रे जलमिव । सज्जतिः परस्मै भाषा पुनर्हि कर्मकर्तृत्वादात्मनेपदी जायते । न सजेद्धेमपस्याङ्गे इति पठन्ति केचित् । न सज्जेदित्यन्ये । पृथा पार्थाननुस्मरन्नित्यादौ यथा वयं लक्षणेन गुणेन गुणित्वमित्यर्थः । एष च विधिर्गरेऽपि स्मृतो यो वि(षेक्तः ? षोक्तः ।) स्त्रीभिः सौभाग्यलाभाय भर्तृषु प्रयुज्यमानमौषधं गरः = (കുട്ടവിഷം ) ॥ २८ ॥

विषप्रसङ्गात् तत्सदृशं विरुद्धमाहारमाह —

विरुद्धमपि चाहारं विद्याद्विषगरोपमम् ।
अनूपमामिषं माषक्षौद्रक्षीरविरूढकैः ॥ २९ ॥
विरुध्यते सह विसैर्मूलकेन गुडेन वा ।
विशेषात्पयसा मत्स्या मत्स्येष्वपि चिलीचिमः ॥ ३० ॥

विरुद्धमित्यादि । विरुद्धं चाहारं विषगरोपमं (रोगकरत्वाद्?) विद्यात् । गरोपमं रोगकरत्वाद् विषोपमं मरणकृत्वाद् । विषगरवद् विरुद्धाहारा अपि व्याधिमृत्युहेतव इत्यर्थः । वचनं हि सङ्ग्रहे —

"विस्फोटशोफमदविद्रधिगुल्मयक्ष्म-
तेजोबलस्मृतिमतीन्द्रियचित्तनाशान् ।
कुर्याद् विरुद्धमशनं ज्वरमस्रपित्त-
मष्टौ गदांश्च महतो विषवच्च मृत्युम् ॥"

इति । इन्दुकारस्त्वाह—"विरुद्धमपि चाहार"मिति चशब्देनाचारस्यापि विरोधः सूच्यते । आहारस्याचारस्यासेग्रहणेन नतु पूर्वोत्तरकालयोर्विरोध इति दर्शयति । महामृगवारिचरवारिशयास्व्यमानूपं मांसं माषादिभिः सप्तभिः सह विरुध्यते । अनूपमांसेष्वपि मध्ये विशेषादतिशयेन पयसा सह मत्स्या विरुध्यन्ते । स्वादुरसविपाकित्वान्महाभिष्यन्दित्वात् शीतोष्णवीर्यत्वाच्च परस्परविरुद्धे मत्स्यपयसी । मत्स्येष्वपि चिलीचिमाख्यो मत्स्यः पयसा सहात्यन्तं विरुद्धः । स पुनर्लोहिताक्षः सर्वतो लोहितराजिः प्रायो भूमौ चरति । (षो ? सो)ऽत्यभिष्यन्दितमत्त्वात् विस्फोटादीन् ज(न)यति आमविषं चेति । मत्स्येषु चिलीचिम इत्युक्तम् । अरुणदत्तोऽप्याह — एष चाहारोऽनिर्दिष्टः विकारकारी यथोक्तान् विस्फोटादीन् करोति । कालान्तरेण च चिकित्सा

विना प्राणानपि हरति। कश्चिच्च विरुद्धाहारो निर्दिष्टविकारकारी न मरणकारी यथा 'उपोदकातिसाराये'ति ॥२९, ३०॥

**विरुद्धमम्लं पयसा सह सर्वं फलं तथा।**

**विरुद्धमम्लमित्यादि**। पयसा सह सर्वं द्रवमद्रवं चाम्लद्रव्यं विरुद्धम्। सर्वग्रहणं द्रवाद्रवग्रहणार्थम्। द्रवं तक्रकाञ्जिकादि। अद्रवं चुक्रिकादि। अन्यथा पयसो द्रवसमानजातीयत्वात् काञ्जिकाद्येव द्रवद्रव्यं विरुध्येत न पुनश्चुक्रिकादिकमपि। ननु तृतीययैव सहार्थो लब्ध एव यथा 'वराहं श्वाविधा नाद्यादि'त्यत्र। तत् किं सहशब्देन। सत्यमेतत्। सहग्रहणं तु नियमार्थं सहग्रहणाद् यदैकध्यमेषामुपयोगस्तदैव विरोधः य(था? दा) त्वम्लेन गोरसादिना क्षीरशाकादिव्यञ्जनकरणार्थं पयः संस्क्रियते तदा तस्य द्रव्यान्तरत्वापत्तेर्न विरोधः तथा दधिक्षीरादिना घृतं पच्यते तत्राप्यविरोध एव द्रव्यान्तरत्वाद् इति ज्ञापयति। क्षीरे भुक्ते उत्तरका(लत्वं? ले) चाम्लं न योज्यं तथा चोक्तं सङ्ग्रहे--"सर्वं चाम्लं पयसा सहैकध्यं तदुत्तरं वा विरुद्धम्।" इति। अथवा सहग्रहणात्त्विदं लभ्यते। यदा द्रव्यान्तरासंपृक्ते केवलाम्लपयसी उपयुज्येते तदा विरुद्धे। अन्नादिद्रव्यान्तरेणोपयुक्तयोर्न विरोध इति ॥

अरुणदत्तस्तु—अपि च क्षीरे भुक्ते उत्तरकालमप्यम्लं न भोज्यमिति प्रतिपादनार्थं च सहग्रहणमित्याह। फलं तथेति फलमक्षोलादिकं च पयसा सह विरुद्धम्। सर्वशब्दोऽत्र न संबध्यते यतो न सर्वं फलं पयसा सहाभ्यवहर्तुं विरुद्धं किन्तूक्तमेव। यच्चरकमुनिपठितमा'म्राम्रातके'त्यादि। व्याकारस्त्वेवं वदति सर्वमम्लं दधितक्रादि पयसा सह विरुद्धं फलं तथा अम्लं फलं विरुद्धम्। आम्राम्रातकलिकुचकरमर्दमोचदन्तशठपारावतकर्कशभव्यजाम्बवतिन्त्रिणीकप्राचीनप्रभृतीनीति तदयुक्तम्। सर्वमम्लं फलं पयसा सह विरुद्धमित्युक्ते मुनिवचनेन विरोधो भवति। कथमिति एवमेवाह मुनिः—आम्राम्रातकमातुलुङ्गलिकुचकरमर्दमोचदन्तशठबदरकोशाम्रभव्यजाम्बवकपित्थतिन्त्रिणीकपारावताक्षोलपनसनालिकेरदाडिमामलकान्येवं प्रकाराणि चान्यानि पयसा सह विरुद्धानीति ॥

**तद्वत् कुलत्थवरककङ्गुवल्लमकुष्ठकाः ॥ ३१ ॥**

तद्वदित्यादि । तद्वत् फलवत्कुलत्थादयोऽपि पयसा सह विरुद्धाः । वरको व्रीहिभेदः वरकोद्दालकेति प्रागुक्तः । वेल्लमकुष्ठकौ शिम्बिधान्यविशेषौ । मकुष्ठकं = (മക്കുഞ്ഞുപയർ) उपलक्षणं चेदं माषनिष्पावावपि हि विरुद्धौ पयसा सहेति संग्रहे कथितौ ॥ ३१ ॥

**भक्षयित्वा हरितकं मूलकादि पयस्त्यजेत् ।**

भक्षयित्वेति । मूलकं कुठेरादि हरितकं भक्षयित्वा भुक्त्वा पयस्त्यजेत् हरितमेवोपयोगाद्धरितकं न पुनः (शा)कम् । मूलफलादि स्निग्धस्वि(द्धं ? न्नं) शाकपाकसाधनेन साधितं भुक्त्वा क्षीरं पिबेदिति नियतिः एतस्मादेव च ज्ञापकात् मूलकादीनामुभयरूपत्वं वेद्यम् । हरितकत्वं शाकत्वं च । तथा हि मूलकादीनां यदि शाकत्वप्रसिद्धिरेवाभविष्यत् ततो हरितकं मूलकादि भक्षयित्वेति तन्त्रकृन्नावक्ष्यत् तत्र कापेक्षा इति । तस्मान्मूलकस्य हरितकत्वं शाकत्वं च ज्ञेयम् । अन्ये हरितकं च मूलकादि च भक्षयित्वेति वदन्ति । यद्येवं

"साधयेच्छुद्धशुष्कस्य लशुनस्य चतुष्पलम् ।"

इति वचनात् कथं क्षीरेण सह लशुनस्य प्रयोगः ? ब्रूमः । तत्र न विरोधः अग्निपाकाद् द्रव्यान्तरत्वापत्तेः । अरुणदत्तोऽपि लशुनेन सह क्षीरस्य प्रयोगो य उक्तः स न विरुद्धोऽग्न्यादिसम्पर्काद् द्रव्यान्तरत्वापत्तेरित्याह । मत्स्यादिभिः सेवितं पयो विरुद्धं कुष्ठं चावहति । उक्तं च श्लोकालङ्कारे—

"मत्स्यमांसगुडमुद्गमूलकैः
कुष्ठमावहति सेवितं पयः ।
शाकजाम्बवसुरासवैश्च त-
न्मारयत्यबुधमाशु सर्पवत् ॥
वरकैः कङ्गुभिर्मत्स्यैः पिशितैश्च विदाहिभिः ।
पयो विरुद्धं शाकैश्च मुद्गाद्यैर्लवणैरपि ॥
मुद्गैर्मत्स्या विरुद्धाः स्युः .... ... ... ।"

इति ॥

**वाराहं श्वाविधा नाद्यादस्रा पृषतकुक्कुटौ ॥ ३२ ॥**
**आममांसानि पित्तेन माषसूपेन मूलकम् ।**

वाराहमित्यादि । श्वाविधा श्वाविन्मांसेन सह वराहमांसं नाद्यात् श्वाविडेत्यपपदम् । अग्रेऽपि नाद्यादिति क्रिया योज्या । यावत् त्यजेदिति

क्रियान्तरम् । पृषतकुक्कुटौ दध्ना सह नाद्यात् । वराहश्वा(विद्) दध्यादीनां विरोधः पाकवीर्ययोरिति श्लोकालङ्कारे । आमान्यपकानि अपरिपूर्णपाकानि मांसानि पित्तेन सह नाद्यात् । माषसूपेन सह मूलकं नाद्यात ॥

अविं कुसुम्भशाकेन बिसैः सह विरूढकम् ॥ ३३ ॥
माषसूपगुडक्षीरदध्याज्यैर्लकुचं फलम् ।
फलं कदल्यास्तक्रेण दध्ना तालफलेन वा ॥ ३४ ॥
कणोषणाभ्यां मधुना काकमाचीं गुडेन वा ।
सिद्धां वा मत्स्यपचने पचने नागरस्य वा ॥ ३५ ॥
सिद्धामन्यत्र वा पात्रे कपोतामुषितां निशाम् ।
मत्स्यानिस्तालितस्नेहसाधिताः पिप्पलीस्त्यजेत् ॥ ३६ ॥
कांस्ये दशाहमुषितं सर्पिरुष्णं त्वरुष्करे ।

अविमित्यादि । अविं मेषं कुसुम्भशाकेन सह नाद्यात् । अङ्कुरितधान्यं बिसैः सह । माषसूपादीनामन्यतमेन लिकुचफलम् । कदल्याः फलं तक्रेण सह दध्ना वा सह तालफलेन वा सह (कदलीफलं?) नाद्यात् । कणोषणाभ्यां भिन्नाभ्यां सह काकमाचीं नाद्यात् । एवं मधुना माक्षिकेण सह एवं गुलेन सह काकमाचीम् । मत्स्याः पच्यन्ते यस्मिन् भाण्डे तत्र वा सिद्धां पक्वां काकमाचीं केवलामपि नाद्यात् । नागरस्य वा पचने शुण्ठीपाकभाण्डे सिद्धां काकमाचीम् । अन्यत्रान्यस्मिन् वा यस्मिन् कस्मिंश्चिदपि भाजने सिद्धां कपोतां रात्रिमुषितां नाद्यात् । कपोता काकमाची । मत्स्या निरताल्यन्ते भर्ज्यन्ते येन स्नेहेन स मत्स्यनिस्तालितस्नेहः तत्र साधिताः पिप्पलीस्त्यजेद् विरुद्धत्वात् । नाद्यादिति प्रकृतत्वेऽपि त्यजेदिति वचनं नस्यालेपादिकमपि न कुर्यादिति प्रतिपादनार्थम् । उत्तरत्रापि त्यजेदित्यस्याचार्यस्याप्येतदेव तात्पर्यम् । मत्स्यनिस्तलनस्नेहसाधिता इति वा पाठः । कांस्ये कांस्यपात्रे दशरात्रमुषितं सर्पिस्त्यजेद् दशाहादर्वागविरुद्धमेव । अरुष्करे भल्लातकविषये उष्णं सर्वमन्नपानादिकं त्यजेत् । मधुमद्यदधिषु चोष्णं विरुद्धमित्यवगन्तव्यम् । वचनं हि— मधुमद्यदधिभल्लातकेषु चोष्णमिति । अथवा 'पेयं नोष्णोपचारेणे'त्यनेन मद्यस्योष्णं निषिद्धम् । उष्णमुष्णार्तमित्यादिना माक्षिकस्य । तथा दध्नो 'नैवाद्या-

मिति नैकोष्णमि'त्यादिग्रन्थेन । तस्मान्मधुमद्यदधिष्वप्युष्णं विरुद्धमित्यत्राचार्यो युक्त्या प्रत्यवोचत् ॥

मासो विरुध्यते शूल्यः कम्पिल्लस्तक्रसाधितः ॥ ३७ ॥

भास इति । भासः पक्षिविशेषः । शूल्यः शूले संस्कृतो मांसो विरुध्यते । शूल्य इति "शूलोखाद् यद्" इति यत् । शूलकप्रोतपाचितः इत्यर्थः । कम्पिल्लस्तक्रसाधितो विरुध्यते । सङ्ग्रहे चातोऽधिकमप्युक्तं सौवीरे(णे ? ण) ति(ल)शष्कुलिं क्षीरेण लवणं नवनीतेन शाकमित्यादि ॥ ३७ ॥

ऐकध्यं पायससुराकृसरान् परिवर्जयेत् ।

ऐकध्यमिति । ऐकध्यमेकत्र पायससुराकृसरांस्त्यजेत् कृसरास्तिलान्नं= (०4०० ८ ३०७ ०") ऐकध्यमिति 'एकाद् धमुञि धमुञ्' ॥

मधुसर्पिर्वसातैलपानीयानि द्विशस्त्रिशः ॥ ३८ ॥

एकत्र वा समांशानि विरुध्यन्ते परस्परम् ।

मध्वित्यादि । मध्वादीनि समांशानि तुल्यप्रमाणानि मिथो विरुध्यन्ते कथं द्वे वा त्रीणि वा एकत्र वा सर्वाणि यथा मधुसर्पिषी मधुवसे मधुतैले मधुसर्पिर्वसा इत्यादि । ननु यद्येवं विरोध उच्यते तत् कथमगस्त्यलेहे —

"कुडवं च पृथग् घृतात् ।

(तैलात्) सपिप्पलीचूर्णात् सिद्धशीते च माक्षिकाद् ॥"

इति घृततैलमधूनां तुल्यांशानामुपयोगः । ब्रूमः । केवलानां मध्वादीनां समांशानामुपयोगो विरुद्धो नतु द्रव्यान्तरसंयुक्तानामपि हि द्रव्यान्तरसंयोगे तेषां संयोगसंस्कारादिवशाद् विशिष्टगुणान्तरोत्पत्तिर्दृष्टा । तस्मादगस्त्यलेहादौ द्रव्यान्तरसंयोगसंस्कारादिवशाद् विशिष्टगुणान्तरोत्पत्त्या न विरोधः ॥

भिन्नांशे अपि मध्वाज्ये दिव्यवार्यनुपानतः ॥ ३९ ॥

मधुपुष्करबीजं च मधुमैरेयशार्करम् ।

मन्थानुपानः क्षैरेयो हारिद्रः कटुतैलवान् ॥ ४० ॥

भिन्नांश इत्यादि । भिन्नांशे अपि मध्वाज्ये दिव्यवार्यनुपानतोऽनुपानेन विरुध्येते । तृतीयार्थे तसिल् । अपिशब्दो न केवलं समांशे इत्यर्थः । मधु

१. 'त्याचा' ख. पाठः.

माक्षिकं पुष्करबीजं च ऐकध्यं विरुध्यते। तथा मधु मार्द्वीकं मैरेयः खर्जूरासव-शार्करः शर्करया कृतं मद्यमेकत्रोपयुक्तं विरुध्यते। क्षैरेयः पायसो मन्थानुपानो विरुध्यते। मन्थो निर्जलमथितं तक्रं सः अनुपानं यस्य स एवम्। क्षैरेय इति 'क्षीराद् ढञ्' इति ढञ्। हारिद्रो भूप्रसवः शाकविशेषः सर्पच्छत्रानुकारी पीताभासः कटुतैलवान् सर्षपतैलभृष्टो विरुद्धः ॥ ४० ॥

**उपोदकातिसाराय तिलकल्केन साधिता।**

उपोदकेति। उपोदका तिलकल्कः पिण्याकः तेन साधिता अतिसाराय भवति। न मरणकरत्वं विरुद्धाहारस्य कस्यचिद् व्याधिकर(त्व)मिति प्रागुक्तम्। तादर्थ्ये चतुर्थी। अत्रार्थो निमित्तं तस्मै इदं तदर्थं तदर्थमेव तादर्थ्यम्। तेनातिसारे कारणमित्ययमर्थो जायते॥

**बलाका वारुणीयुक्ता कुल्माषैश्च विरुध्यते ॥ ४१ ॥**
**भृष्टा वराहवसया सैव सद्यो निहन्त्यसून्।**

बलाकेति। बलाका पक्षिविशेषः वारुण्या प्रसन्नया युक्ता विरुध्यते। कुन्मासैश्च सह विरुध्यते। कुन्मासो नातिस्विन्नमुद्गादिरिति हाटकाङ्कः। मुद्गकृतोपदंशविशेषः कुन्मास इत्यन्ये। कुन्माषैरिति वा पाठः। सैव बलाका वराहवसया भृष्टा सद्यस्तत्क्षणादेव मारयति॥

**तद्वत्तित्तिरिपत्राढ्यगोधालावकपिञ्जलाः ॥ ४२ ॥**
**ऐरण्डेनाग्निना सिद्धास्तत्तैलेन विमूर्च्छिताः।**

तद्वदित्यादि। तित्तिर्यादय ऐरण्डेनाग्निना एरण्डकाष्ठाग्निना सिद्धाः तत्तैलेन एरण्डतैलेन विमूर्च्छिता बहुशो भृष्टास्तद्वद् बलाकावत् सद्यो जीवित-हराः। पत्राढ्यो मयूरः॥

**हारीतमांसं हारिद्रशूलकप्रोतपाचितम् ॥ ४३ ॥**
**हारिद्रवह्निना सद्यो व्यापादयति जीवितम्।**
**भस्मपांसुपरिध्वस्तं तदेव च समाक्षिकम् ॥ ४४ ॥**

हारीतमांसमिति। हारीतस्य पक्षिविशेषस्य मांसं हरिद्रारञ्जितशूलकेन प्रोतमासक्तं च तत्पाचितं हरिद्रावह्निना हरिद्राग्निना पाचितं सद्यो हन्ति। तदेव हारीतमांसं भस्मना पांसुभिश्च परिध्वस्तं प्रतिसारितं समाक्षिकं च सद्यो जीवितं व्यापादयति।

"विरुद्धं विस्तरेणोक्तं सङ्ग्रहे तच्च गृह्यताम् ।
शास्त्रान्तरेषु यत् प्रोक्तं तत्सर्वं च निरूप्यताम् ॥"

सङ्ग्रहे चोक्तम् —

"कुशाग्रियधियामेतदुदाहरणमात्रकम् ।
उपनीतमलं विद्वान् सर्वत्र क्रमते यतः ॥"

इति ॥ ४४ ॥

द्रव्यानन्त्यप्रतिपत्त्या अशेषविरुद्धसङ्ग्रहः कर्तुमशक्य इति व्याप्ति लक्षणमाह —

**यत्किञ्चिद्दोषमुत्क्लेश्य न हरेत्तत्समासतः ।**
**विरुद्धं शुद्धिरत्रेष्टा शमो वा तद्विरोधिभिः ॥ ४५ ॥**

यत्किञ्चिदित्यादि । हृद्याकारोऽप्याह —

"अनन्तत्वाद् विरुद्धान्नं न साकल्येन पठ्यते ।
किन्तु लक्षणतो ज्ञानं भवतीति तदुच्यते ॥"

इति । यत्किञ्चिदन्नपानं दोषं वातादिकमुत्क्लेश्य स्वस्थानात्सञ्चाल्य न हरेद् बहिर्निष्कासयेत् तत्समासतः संक्षेपतो विरुद्धम् । इत्थमन्नपानयोर्विरोध उक्तः । भेषजस्य नोक्तः । वचनं हि — 'अन्नपानद्रव्यविरोधैकदेशो बाहुल्येनोपयोगी कथितः । भेषजद्रव्याणां तु यथोपदेशमेव प्रयोगो न्याय्यतरस्तद्विरोधः पुनरतिप्रसङ्गभयान्नोक्तः । न च तद्विज्ञानमेकतो भद्रमि'ति । तस्मादागमेनैव भेषजोपयोगो न र(स्या ? सा)द्यालोचनेनेत्यर्थः । तथा च सुश्रुते —

"अमीमांस्यान्यचिन्त्यानि प्रसिद्धानि स्वभावतः ।
आगमेनोपयोज्यानि भेषजानि विचक्षणैः ॥
हेतूनां तु सहस्रेण नाम्बष्ठादिर्विरेचयेत् ।
तस्मात् तिष्ठेत मतिमानागमे(ष्वकु ? नतु)हेतुषु ॥"

इति । अथ वा यत्किञ्चिदन्नपानमौषधं वा दोषानुत्क्लेश्य न हरेत् तद्विरुद्धमिति भेषजस्यापि विरोध उक्त इत्यरुणदत्तादयः । शुद्धिरत्रेष्टा । अतो विरुद्धे उपयुक्ते विरुद्धाहारकृते वा विकारे शुद्धिर्वमनविरेकादिरूपा इष्टा कार्या । क्लिष्टस्य दोषस्य वमनादिभिर्निर्हरणादारोग्योत्पत्तिरिति । शुद्धिर्वमनाविरेचनरूपा इष्टा कार्येति हृद्याकारः । अत्र विरुद्धे उपयुक्ते इति पाठ्याकारः । शमो वा तद्विरोधिभिरिति न केवलं शुद्धिरिष्टा शमश्चेष्टः । कैस्तद्विरोधिभिस्तेषां वैरोधिककुपितानां दोषाणां तत्कृतानां वा विकाराणां प्रतिपक्षयातैरौषधैश्शमनं कार्यम् ॥ ४५ ॥

न च शोधनशम(ने ? न) एतेषकम इत्या: —

द्रव्यैस्तैरेव वा पूर्वं शरीरस्याभिसंस्कृतिः ।

द्रव्यैरित्यादि । देशाद्यपेक्षया भविष्यद्विरुद्धाशनशङ्कयाभिदमाह द्रव्यै- रित्यादीति हाटकः । तैः शोधनानन्तरं प्रयोगान्तरात् प्रथमं नित्यसेव्यत्वेन विहितैस्त्रिफलामृतामुद्गदिव्योदकघृतादिभिर्देहस्य संस्कारः कर्तव्यः ।(विरुद्धाश- जनाद् ?) द्रव्यैस्तैरेव नित्यसेव्यतया विहितैर्विरुद्धाहारजनितरोगविरोधिभिः सं- स्कारो विरुद्धाहारलाभात् पूर्वमेव विधेयः त्रिदोषहरैर्द्रव्यैर्भाविदेहस्य न कश्चिद् रोगः स्यादित्यर्थः । वाशब्दो नियमार्थः । तैरेव ज्ञातस्वरूपैर्देहस्य संस्कृतिः कार्यैव नान्यैरविदितैः । केचित् तु तैरेव विरुद्धाहारकुपितदोषप्रतिपक्षैर्द्रव्यैरित्याहुः । अरुणदत्तस्त्वाह — तैरेव वैरोधिकप्रतिपक्षभूतैर्द्रव्यैः पूर्वं प्रथमं शरीरस्या- (पि ? भि)संस्कृतिः सा च विरुद्धाहारकृते विकारे प्रशस्ता यथा माक्षिक- हरीतक्यादिना पित्तश्लेष्महरेण सततशीलनादिभिः संस्कृते देहे पित्तश्लेष्मकरं विरुद्धमुपयुक्तं सद् विकर्तुमशक्तम् । एतदुक्तं भवति — विरुद्धप्रतिपक्षगुण- वता द्रव्येण देहस्तथा दार्ढ्यं ग्राहितो यथा विरुद्धमपि द्रव्यं विकारं कर्तुं नालम् इति । केचिदेवं वर्णयन्ति तस्य तथा स्वरोगकारणस्य विरुद्धाशनस्य सर्वैर्गुणैर्विपरीतानि यानि द्रव्याणि तैर्विरुद्धाशनजेषु रोगेषु विस्फोटादिषु शमः कार्यः । अथ वा देशविशेषाद्यपेक्षया भविष्यद्विरुद्धाशनशङ्कया तैरेव भवि- ष्यद्विरुद्धाशनगुणविपरीतैर्द्रव्यैः शरीरस्याभिसंस्कृतिः संस्कार इष्टः यथा वि- रुद्धमप्यन्नं स्वगुणैर्विपरीतगुणैः संस्काराद् देहे दुर्बलं सदरोगाय भवति । पाठ्याकारस्त्वाह — शुद्धिरत्रेष्टा अत्र विरुद्धे उपयुक्ते शुद्धिरिष्टा तद्विरोधिभि- रिति प्रतिविषनामधेयाः । तद्विरोधिभिः प्रतिविषैर्द्रव्यैस्तैरेव वा इत्यत्रापि विरुद्धैरेव, यतो विरुद्धैरेव शरीरसंस्कारे कृते विरुद्धकृतो दोषो न भवति । अपि तु गुण एव । "निषेव्यमाणं तिलशो विषमप्यमृतायते" इति न्यायात् । तथा प्रोक्तं चरकेऽपि — "तथाविधैर्वा द्रव्यैः पूर्वमभिसंस्कारः शरीरस्य चे"ति । भवति चात्र

"विरुद्धाशनजान् रोगान् प्रतिहन्ति विरेचनम् ।
अन्नं[1] संशमनं चैव पूर्वं चाहितसेवनम् ।

इति । अपरे तद्विरोधिशब्देन रसायनानि वदन्ति —

---

१. 'स' ख. पाठः.

"लाभोपायो हि शस्तानां रसादीनां रसायनम् ।"

इति । (यः स्म? यस्माद्) द्रव्यैस्तैरेवेत्यत्रापि रसायनमेवेच्छन्ति । अपिच — 'रसायनाप्यायितशरीरस्य देहमन्तकोऽपि बाधितुं न समर्थः किं पुनर्विषादय इति यस्माद्' इति सारकर्तुः । अत्र प्रोक्तेष्वर्थेषु तथाविधैरिति विरुद्धसमाहि परामृश्य(न्ते) विरुद्धैरेव पूर्वसंस्कारो व्याध्यनुत्पत्तिहेतुरिति सात्म्याहारप्रायतया पक्ष उद्भासितः सोऽस्माभिरुपेक्षितः । एवं व्यायामेत्यादिना सात्म्यत्वेनैवावगतत्वात् इत्याह ॥

विरुद्धं सेवितं न च रोग उत्पन्नस्तत् कथमिति चेत् तत्रोत्तररूपमेतदाह —

व्यायामस्निग्धदीप्ताग्निवयःस्थबलशालिनाम् ॥ ४६ ॥
विरोध्यपि न पीडायै सात्म्यमल्पं च भोजनम् ।

व्यायामेत्यादि । व्यायामो विद्यते येषामित्यर्श आदित्वादच् । वयसि तिष्ठन्तीति वयस्थाः तरुणा वय इति मुख्यत्वाद् यौवनं गृह्यते । बलेन शालितुं श्लाघयितुं शीलं येषां ते बलशालिनः श्लाघनीयबलाः स्निग्धवृष्याहारैः सात्म्याः । व्यायामिनां विरोध्यपि भोजनं स्वल्पकालोपयुक्तं न पीडायै भवति न रोगोत्पत्तये भवति । एवं स्निग्धादीनां चतुर्णां प्रत्येकं सम्बन्धः । व्यायामेन स्निग्धेन च स्निग्धद्रव्यशीलनेन दीप्ताग्न(यो) ये तेषामिति हाटकः । व्यायामीति वा पाठः । तथा विरुद्धमप्यन्नं यदभ्यासाद्यपेक्षया सात्म्यं सात्म्यीभूतं तथाल्पमात्रया च यद् भोजनं तच्च विरुद्धमपि न पीडायै इति योज्यम् ॥

अथ यच्च(प्य?)पथ्यमपि सात्म्यतां प्राप्तं किं त्याज्यं न वा त्याज्यं कथं चापथ्यं[3] त्याज्यमित्याह —

पादेनापथ्यमभ्यस्तं पादपादेन वा त्यजेत् ॥ ४७ ॥

पादेनेत्यादि । हाटकोऽपि सात्म्यानामुदर्कदोषाणामपथ्यानां कथं त्यागः कार्यः असात्म्यानां कथं शीलनमित्याहेत्याह—सात्म्यं विरुद्धान्नमपि न पीडाकरं चेत् तदभ्यसनीयमेवेत्याशङ्क्य तत्परित्यागः कर्तव्य इत्युपरिष्टाद् वक्तुकामः प्रथमं त्यागक्रममाह — पादेनेत्यादिना इति ह्याकारः । पाठ्याकारोऽप्याह — देशान्तरं प्राप्य वाऽमाप्य वा विरुद्धः सेवितस्तेन बाधा च

१. 'ह', २. रविहारसा', ३. 'चाप्यप', ४. 'वा बि' ख. पाठः.

माभूत् तदानीमग्निबलादिना तर्हि पुनरपि तेनैव वर्तितव्यं ननु अथवान्यथे-त्यत्राशङ्कायां परिहारं च तत्र क्रमं च ब्रूते — पादेनेति । अभ्यस्तमपथ्यं पादेन त्यजेत् । पादश्चतुर्थो भागः अभ्यस्तं शीलितमभ्यासेन सादृम्यतां गत-मिति यावत् । अपथ्यमहितमन्नपानं वा लङ्घनप्लवनजागरणस्वप्नादिकं वा चे-ष्टितम् । अभ्यस्तं सत् पादेन त्यजेत् अहितफलत्वात् । तद्धि शरीरोचितमप्य-पथ्यत्वाद् उदर्के दोषाय सम्पद्यते न गुणाय । यदि तु तदपथ्यमत्यन्तसात्मी-भूतं यस्मिन् चतुर्थांशेनापि (त्या ? त्य)ज्यमाने शरीरबाधा शङ्क्यते तदा पाद-पादेन त्यजेदिति वाशब्दार्थः । पादपादः पादस्य चतुर्थो भागः षोडशांश इति यावत् । अभ्यस्तविषयमेतत् ॥ ४७ ॥

निषेवेत हितं तद्वदेकद्वित्र्यन्तरीकृतम् ।

निषेवेतेत्यादि । तेन तुल्यं वर्तते तद्वत् तेनैव क्रमेण पादेन पाद-पादेन वा हितं निषेवेत शीलयेत् । यावानंशोऽपथ्यस्य त्यक्तस्तावत् पथ्येन पूरणीयः । हाटकोऽप्याह — यथयमभ्यस्तस्योचितस्याहितस्य पादमपोद्धृ-त्यानुचितस्य हितस्य पादम(वि ? व)चार्यमाणं न क्षमते सोढुं तर्हि तस्यापि चतुर्थभागक्रमेणावचारणीयः नोत्सृष्ट(व्या ? व्य) इत्यर्थ इति । केन क्रमेणैतद् द्वयमप्यपथ्यपथ्यरूपं त्याज्यं निषेव्यं वेत्याह — एकद्वित्र्यन्तरीकृतमिति क्रियाविशेषणम् । एकश्च द्वौ च त्रयश्च तैरन्तरीकृतम् । एकद्वित्रिभिरन्नकालैर्व्यव-धानं कृत्वा अपथ्यं पादेन पादपादेन वा त्यजेत् । एकस्य द्वयोस्त्रयाणां चा-न्नकालानामन्तरावस्थानं कृत्वा त्याज्यं सेव्यं चेति ह्याकारः । अत्रान्नकालपद-योर्लोपः । एतदेव स्पष्टं कृत्वोच्यते अपथ्यात्पाटलव्रीह्यादेरभ्यस्तात् पादमेकं त्यक्त्वानुचितात् पथ्याद्रक्तशाल्यादेस्तमेव पादं दत्त्वा चतुष्पात्त्वं सम्पाद्य योज्यम् । एवमन्नकालमेकमतिवाहयेत् । एवं पादेनापथ्यमभ्यस्तं त्यक्तं भवति । पथ्यं चानुचितं निषेवितं भवति । ततो द्वितीयेऽन्नकाले सर्वमपथ्यं योजनी-यम् । एवमेकान्नकालेनाप(थ्या ? थ्यपा)दोऽन्तरीकृतः । ततस्तृतीयेऽप्युचिता-दपथ्यात् पादद्वयमपास्यानुचितात् पथ्यात् पादद्वयमुपयोज्यम् । ततश्चतुर्थे स-र्वमपथ्यं भोज्यम् । पञ्चमे च । एवमन्नकालद्वयेन पथ्यपादद्वयमन्तरीकृतम् । ततः षष्ठेऽन्नकाले पादमुचितादपथ्यात् पादत्रयमनुचितात् पथ्याद् भुक्त्वा सप्तमाष्टमनवमान्नकालेषु सर्वमपथ्यं भोज्यम् । एवमन्नकालत्रयेण पथ्यपादत्रयम-न्तरीकृतम् । ततो दशमेऽन्नकाले सर्वं पथ्यमेव सेवनीयम् । पादपादेनाप्ययमेव

क्रमः । स्पष्टार्थं च दिक् प्रदर्श्यते । यथा यवकादेः षोडशांशं त्यक्त्वानुचिताच्छाल्यादेः पथ्यात् पादपादद्वयं दत्त्वा चतुष्पात्त्वं सम्पाद्य सेव्यम् । ततश्चतुर्थे पञ्चमे चान्नकाले सर्वमपथ्यं भोज्यम् । ततः षष्ठेऽन्नकाले अनुचितात् पथ्यात पादपादत्रयमुचितादपथ्यात् पादपादास्त्रयोदशेति योज्यं ततः सप्तमाष्टमनवमान्नकालेषु सर्वमपथ्यं भोज्यम् । एवं कालत्रयेणान्तरीकृतम् । ततो दशमेऽन्नकाले पथ्यादनुचितात् पादपादाश्चत्वारः अपथ्यपादपादा द्वादशेति योज्यम् । तत एकादशेऽन्नकाले सर्वमपथ्यं भोज्यम् । एवमेकेनान्नकालेनान्तरीकृतमेवमन्नकालद्वयान्तरीकृतमन्नकालत्रयान्तरीकृतं च तावद् योज्यं यावत् पथ्यस्य षोडश पादाः सेव्यतया सम्पद्यन्ते । अरुणदत्तोक्तिरियम् ।

इन्दूक्तिर्विलिख्यते — अपथ्यादुचितादेकं भागं(पादं)रोगी बलाद्यपेक्षया पादपादं वा प्रथमदिवसे त्यजेत् । स च चतुर्भागः पथ्यादनुचितात् सेव्यः ततो द्वितीयेऽह्नि सर्वमेवापथ्यम् । ततस्तृतीयेऽह्नि अपथ्यस्य त्रय एव भागाः पथ्यस्यैको भाग इत्येकदिवसान्तरितम् । चतुर्थादिषु दिवसेष्वेवमेव । आ उपयुज्यमानचतुर्भागसात्मीभावात् । ततश्चोर्ध्वं द्व्यन्तरम् । किमुक्तं भवति । चतुर्थे भागे पथ्यस्य सात्मीभूतेऽपथ्यादुचिताद् द्वितीयो भागस्त्याज्यः । तेनार्धमपथ्यस्यार्धं पथ्यस्य तस्मिन् दिने भवति । द्वितीये दिवसे सात्मीभूतचतुर्भाग एव योज्यः । एवं तृतीये चतुर्थे च पुनरर्धमात्रमेवं द्विदिनान्तरितम् । एवं पञ्चमादिदिवसेष्वपि आ अर्धसात्मीभावात् । ततस्त्र्यन्तरितं । सात्मीभूतेऽर्धे तृतीयो विभागोऽपथ्यात् त्याज्यः । पथ्याच्च सेव्यः । तस्मिन् दिने पथ्यस्य भागास्त्रयः अपथ्यस्यैको भागः । द्वितीये द्विवसे सात्मीभूतपथ्यापथ्ययोरर्धमर्धम् । एवं तृतीये चतुर्थे च । पञ्चमे पुनश्चतुर्थो भागोऽपथ्यस्य भागास्त्रयः पथ्यस्येति त्र्यन्तरितम् । एवं षष्ठादिषु दिवसेष्वा भागत्रयसात्मीभावात् । ततः सर्वमेव पथ्यम् । एवमेकद्वित्रिदिनादिक्रमेणासात्म्यं सात्म्येनान्तरयितव्यम् । पाठ्याकारस्तु एकद्वित्र्यन्तरीकृतमिति एकदिनं द्विदिनं त्रिदिनं वान्तरीकृत्य त्यागसेवे एकमाहारकालमित्यादि ये केचिदित्याह । एकद्वित्रिदिनान्तरमिति वा पाठः तथा च संग्रहः —

"अपथ्यं सात्म्यमन्नं च चेष्टा द्वादशधा त्यजेत् ।
भजेच्च द्वादशः पथ्यमेकद्वित्रिदिनान्तरम् ॥"

इति ।

"लङ्घनं प्लवनं यात्रा(यां) धावनं स्वप्नजागरे ।"

स्त्रीभाष्यहास्यचिन्ताश्च यानयानं .... .... .... ....

इति द्वादश चेष्टास्त्याज्यत्वेनोक्ताः । एकस्मिन् पादे एको दिवसोऽन्तरीकर्तव्यः द्वयोः पादयोर्द्वौ दिवसौ त्रिषु पादेषु त्रयश्च दिवसा इति द्रष्टव्यमिति पञ्जिकायाम् । हाटकस्त्वाह — एकं भागमेकं च दिवसमन्तरीकृत्य स क्रमः सपादेन । एवं द्व्यन्तरत्र्यन्तरयोरपि । तदेवमत्र प्रयोगः प्रथमे दिवसे त्रीन् भागानहितस्योचितस्य भागमेकमनुचितस्य पथ्यस्य भुक्त्वा द्वितीयेऽह्नि सर्वमपथ्यमश्नीयात् । एवमेको भागो एकश्च दिवसोऽन्तरीकृतो भवति । तृतीये द्वौ भागौ पथ्यस्य चापथ्यस्य चाश्नीयात् । एवं चतुर्थे दिवसेऽपि । पञ्चमे दिवसे प्रथमदिवसशीलितस्य पथ्यस्यैकभागं त्रीनपथ्यस्य । एवं द्वौ भागौ द्वौ च दिवसावन्तरीकृतौ । ततः षष्ठे त्रीन् भागान् पथ्यस्यैकमपथ्यस्य । एवं सप्तमेऽष्टमे च । ततो नवमे भागद्वयं शीलनीयं पथ्यस्य चापथ्यस्य च । एवं त्रयो भागास्त्रयश्च दिवसा अन्तरीकृताः । दशमे चतुरो भागान् पथ्यस्यैव । तथैकादशे द्वादशे त्रयोदशे चतुर्दशे त्रीन् भागान् पथ्यस्यैकमपथ्यस्य । एवं चत्वारो भागाश्चत्वारो दिवसा अन्तरीकृताः । ततः पथ्यमेव व्युच्छेदेनाश्नीयात् । एवं पादपादेऽपि द्रष्टव्यम् । केचिदेकान्नकालद्व्यन्नकालत्र्यन्नकालान्तरीकृतमिति ब्रुवत इति । अन्ये मन्यन्ते — प्रथमे दिवसे भागः पथ्यात् सेव्यः शेषमपथ्यम् । द्वितीये सर्वमपथ्यम् । तृतीये पुनरेको भाग एकान्तरितः । चतुर्थे द्वौ । पञ्चमे एकः षष्ठे च । सप्तमे पुनर्द्वाविति द्वौ द्व्यन्तरौ । अष्टमे त्रयः । नवमे द्वौ दशमे तद्वदेकादशे च । द्वादशे पुनस्त्रय इति त्र्यन्तरिताः । ततस्त्रयोदशात् प्रभृति सर्वं पथ्यमेवेति । अन्ये पुनरन्यथा वर्णयन्ति । अपथ्यं सात्म्यं भुञ्जानः पथ्यभोजनेच्छुरेकदिवसमपथ्यस्य भागत्रयं पथ्यस्य चैको भागः । द्वितीये सर्वमेवापथ्यमित्येकान्तरितम् । तृतीये द्वौ पथ्यस्य द्वावपथ्यस्य च । एवं चतुर्थेऽपि । पञ्चमे पुनरपथ्यभागत्रयं चतुर्थो भागः पथ्यस्य । एवं द्व्यन्तरम् । ततः षष्ठदिवसे त्रीन् भागान् पथ्यस्य एकमपथ्यस्य । एवं सप्तमेऽष्टमे च । नवमे पुनर्द्वौ द्वौ भागौ । दशमे चतु(र्थो ? रो )ऽपि पथ्यस्य । तद्वदेकादशे द्वादशे त्रयोदशे च । चतुर्दशे पुनस्त्रयो भागाः पथ्यस्य भागोऽपथ्यस्यातः पञ्चदशात् प्रभृति सर्वं पथ्यमेव भोज्यम् । अनयोरेव पक्षयोर्युज्यमानत्वमिव मन्यामहे । तथा च शास्त्रकृद्भिरेवर्तुसन्धौ चतुर्दशदिनमाना क्रमसमाप्तिरिष्टा । अस्मद्गुरवोऽप्येवमाहुः । अपथ्यं सात्म्यं भुञ्जानः पथ्य-

भोजनेच्छुः प्रथमे दिवसे त्रिपादमपथ्यमेकपादं पथ्यं च शीलयेत् द्वितीये दिवसे सर्वमपथ्यं तृतीये पुनः प्रथमादिवसवदेवमेकान्तरीकृतम्। चतुर्थे दिवसेऽर्धमपथ्यं अर्धं पथ्यं च। पञ्चमषष्ठयोः प्रथमदिवसवत्। सप्तमे पुनश्चतुर्थदिवसवद् इति द्व्यन्तरीकृतम्। अष्टमे दिवसे त्रिपादं पथ्यमेकपा(दं ? दम)पथ्यं च। नवमदशमैकादशेषु चतुर्थदिवसवत्। द्वादशे पुनरष्टमदिवसवद् इति त्र्यन्तरीकृतम्। ततस्त्रयोदशे सर्वं पथ्यं चतुर्दशात् प्रभृति सर्वं पथ्यमेवेति। सुधाकारस्त्वाह —प्रथमे दिवसेऽपथ्यस्य त्रीन् भागान् पथ्यस्यैकं द्वितीये सर्वमेवापथ्यं तृतीये पथ्यस्य द्वावपथ्यस्य च द्वौ चतुर्थे पथ्यस्यैको भागः अपथ्यस्य त्रयः पञ्चमेऽप्येवमेव षष्ठे पथ्यस्य त्रीन् भागान् अपथ्यस्यैकं सप्तमे द्वौ द्वौ पथ्यापथ्ययोः एवमष्टमे नवमे च दशमादारभ्य सर्वमेव पथ्यमिति।

"अपथ्यान्नपरित्यागे पथ्यान्नस्योपसेवने।
पथ्यापथ्यान्नयोगेन न तत् समशनं भवेत्॥
वैद्यबुद्धिप्रयुक्तत्वात् तत्र द्रव्यान्तरोदयः।
अपथ्यत्वं तु सन्त्यज्य पथ्यत्वमुपगच्छति॥
यदृच्छयोपयुक्तेषु द्रव्यादिषु विरुद्धता।
न बुद्धिपूर्वेष्वन्नेषु स्वस्थे समशनोद्भवः॥"

उक्तवांश्च—

"दोषादिवैपरीत्येन हरते रोगिणां रुजः।
ऐकध्यं दधिदुग्धादियोजना न विरुध्यते॥
योगादिभेदेनान्यत्वात् पथ्यानामप्यपथ्यता।
तद्भेदान्तरतस्तद्वद् विरोध्यपि निवर्तते॥"

इति॥

एवमनेन क्रमेणापथ्यपादास्त्यक्ताः पीडायै न भवन्ति पथ्यगुणाश्च संवर्धिताः स्थिरतां प्राप्नुवन्तीत्यत आह—

**अपथ्यमपि हि त्यक्तं शीलितं पथ्यमेव वा॥ ४८॥**
**सात्म्यासात्म्यविकाराय जायते सहसान्यथा।**

अपथ्यमित्यादि। हि यस्मात् सहसा क्रममिममनालोच्य अन्यथा उक्तवि(रु?)ध्यतिक्रमेणापथ्यमपि त्यक्तं सात्म्यविकाराय जायते पथ्यमेव वा

सहसा शीलितमसात्म्यविकाराय जायते सात्म्यासात्म्याभ्यां विकारः सात्म्यासात्म्यविकारः तस्मै हितः 'क्लृपि सम्पद्यमाने चतुर्थी'ति चतुर्थी ॥

क्रमेण स्वपथ्यस्यागपथ्यशीलने विधीयमाने गुणाय स्यातामिति दर्शयति —

**क्रमेणापचिता दोषाः क्रमेणोपचिता गुणाः ॥ ४९ ॥**
**नाप्नुवन्ति पुनर्भावमप्रकम्प्या भवन्ति च ।**

**क्रमेणे**त्यादि । त्यागक्रमप्रयोजनमाह इति **व्याकारः** । दोषा अपथ्याशनजाः क्रमेण पूर्वोक्तेनापचिताः क्षयं नीताः गुणाश्च पथ्योपयोगजाः क्रमेण पूर्वोक्तेनैवोपचिताः वृद्धिं नीताः सन्तः पुरुषाणां यथासंख्यमपुनर्भावं यान्ति दोषाः गुणाश्चाप्रकम्प्याः स्थिरा भवन्ति । अपचिताः क्षीणा दोषा उपचिता वृद्धा गुणाश्चेति **व्याकारः** ॥

साम्प्रतमहिताहारसेवनं सदा त्याज्यमिति सयुक्तिकं दर्शयति —

**अत्यन्तसन्निधानानां दोषाणां दूषणात्मनाम् ॥ ५० ॥**
**अहितैर्दूषणं भूयो न विद्वान् कर्तुमर्हति ।**

**अत्यन्ते**त्यादि । अथवा पादेनापथ्यमित्यत्र वक्तव्यंहेतुमत्राहेति **व्याकारः** । अत्यन्तमतिशयेन संनिधानं निकटत्वं येषां दोषाणां त एवं तेषामत्यन्तसंनिहितानामित्यर्थः । अनेनाभ्यस्तमपथ्यं परित्यज्य शीघ्रमन्यत् क्रमात् सेव्यमिति सूचयति । तथा दूषणात्मनां दूषणस्वभावानां दोषाणां पूर्वाभ्यस्तेनापथ्येन क्षोभो न जात इत्येतावता पुनरहितैराहारादिभिर्दूषणं कर्तुं विद्वान् पण्डितो नार्हति न युज्यते । ते दोषाः कदाचित् सहकारिकारणलाभे देहोच्छेदाय भविष्यन्तीत्यभिप्रायः । विद्वानिति विद्वान् खल्वागामिदोषदर्शनेन चिराभ्यस्तादप्यहिताद् विरन्तुं समर्थः नेतर इति दर्शयति ॥

एतत्प्रसङ्गेनैवेदमाह —

**आहारशयनब्रह्मचर्यैर्युक्त्या प्रयोजितैः ॥ ५१ ॥**
**शरीरं धार्यते नित्यमागारमिव धारणैः ।**

**आहारे**त्यादि । आहारप्रसङ्गात् तत्तुल्ये स्वप्नब्रह्मचर्ये कथयतीति **व्याकारः** । आहारशयनब्रह्मचर्यैर्युक्त्येति । शयनं स्वप्नः आहारादिभिर्युक्त्या अनूनाधिकताभिधानया शरीरसत्त्वाद्यनुसारेण प्रयोजितैः शरीरं सततं धार्यते ।

किमिव कैर्धारणैः स्तम्भैरगारं गृहमिव । संगृहेऽप्येवमेव प्रोक्तं 'त्रितयं चैत-दुपस्तम्भनमाहारः स्वप्नो ब्रह्मचर्यमि'ति । चरके चोक्तं —

"ब्रह्मचर्याशनस्वप्नैः त्रिस्थूणं कर्म धाम तत् ।"

इति । ब्रह्मचर्यमिति त्रिधा मुख्यमधमं मध्यमं च । उक्तं च —

"ब्रह्मचर्यं त्रिधा त्वेकं परदारादिवर्जनम् ।
मध्यमं त्वृतुगामित्वं परं स्यात् स्त्रीनिवृत्तता ॥"

इति । अत्राधमब्रह्मचर्यमङ्गीकृत्य प्रोक्तमिति मन्यामहे । शयनविधानमुक्त्वान-न्तरं ब्रह्मचर्यविधानं विवक्षुः ग्रामधर्मे त्यजेन्नारीमित्युक्तवान् यतः उपस्थनिग्र-हात्मकं मुख्यं ब्रह्मचर्यं तदुपरिष्टात् स्तूयते अनुमोदामहे ब्रह्मचर्यमिति । अन्ये त्वेवं वदन्ति 'स्त्रीसेवानिवृत्तिरेव ब्रह्मचर्यमिति कथ्यतेऽत्रापी'ति । तर्हि कथं ग्रामधर्मवचनमिति चेद् । ब्रूमः । यदा तु ग्रामधर्मेण विना न रतिरपत्यार्थिता वा तदा तदधिकारार्थं ग्रामधर्मविधानमुक्तवान् । एवमरुणदत्तादीनां मतम् । हाटकस्त्वाहारशयनाब्रह्मचर्यैरिति पठति । अब्रह्मचर्यं स्त्रीसेवा । इन्दुरप्याहारः स्वप्नोऽब्रह्मचर्यमित्यत्राकारप्रश्लेषं कृत्वार्थं प्रोक्तवान् । मादृशैरपि पठितोऽर्थः स एव ॥

आहारो वर्णितस्तत्र तत्र तत्र च वक्ष्यते ॥ ५२ ॥

आहारेत्यादि । तत्र तेषु त्रिषु मध्ये आहारो वर्णितः ऋतुचर्यायां द्रवान्नरूपविज्ञानीययोश्च तत्र तत्र शास्त्रप्रदेशे ज्वरचिकित्सादौ वक्ष्यते च ॥ ५२ ॥

शयनब्रह्मचर्ययोरित्विहैव विधिं वक्तुकाम आह —

निद्रायत्तं सुखं दुःखं पुष्टिः कार्श्यं बलाबलम् ।
वृषता क्लीबता ज्ञानमज्ञानं जीवितं न च ॥ ५३ ॥

निद्रेत्यादि । निद्राप्रशंसा । निद्रायत्तं निद्राधीनं सुखाद्यजीवितान्तम् । सुखमारोग्यं दुःखं रोगः पुष्टिः शरीरपोषः बलं चाबलं च बलाबलं जीवितं च न च जीवितकर्मकरणम् । विपक्षे नञ् सम्यक् सेवितायां गुणा असम्यक् सेवितायां दोषा भवन्तीति विरुद्धकार्योत्पत्तिरुपपन्ना ॥ ५३ ॥

साम्प्रतं दुष्टां निद्रां निर्दिशति —

अकालेऽतिप्रसङ्गाच्च न च निद्रा निषेविता ।
सुखायुषी पराकुर्यात् कालरात्रिरिवापरा ॥ ५४ ॥

अकाल इत्यादि । इन्दुव्याकारोऽपि अकाल इत्यादिना अयथासेवायां दोषोक्तिरित्याह । अकाले निषेविता अति च निषेविता न च निषेविता निद्रा सुखमारोग्यमायुर्जीवितं ते सुखायुषी पराकुर्यात् नाशयेत् । केव अपरा कालरात्रिरिव कालरात्रिर्मरणनिशा यमभगिनीति केचित् । सुखस्यायुषश्च नाशनात् कालरात्रिसादृश्यम् । पण्डितस्त्वपराः इति पठति अर्थः — अकाले सेविता अतिप्रसङ्गाच्च सेविता न च सेविता । तथा निषेविता च सम्यक् सेविता निद्रा हि सेवितासु मध्ये परा उत्तरा सम्यक् सेविता सुखायुषी कुर्यात् । अपरा अन्यास्तिस्रो निद्राः कालरात्रिरिव सुखायुषी नाशयेयुरित्यर्थः । निद्रायाः कालः सङ्ग्रहे प्रोक्तः —

"लोकादिसर्गप्रभवा तमोमूला तमोमयी ।
बाहुल्यात्तमसो रात्रौ निद्रा प्रायेण जायते ॥

श्लेष्मावृ(त्ते ? ते)षु स्रोतःसु श्रमादुपरतेषु च ।
इन्द्रियेषु स्वकर्मभ्यो निद्रा विशति देहिनम् ॥

सर्वेन्द्रियव्युपरतौ मनो नोपरतं यदा ।
विषयेभ्यस्ततः स्वप्नान् नानारूपान् प्रपश्यति ॥"

इति ॥ ५४ ॥

अथ निद्रागुणप्रसङ्गेन तत्प्रतिपक्षभूतस्य जागरणस्यापि गुणमाह —

रात्रौ जागरणं रूक्षं स्निग्धं प्रस्वपनं दिवा ।
अरूक्षमनभिष्यन्दि त्वासीनप्रचलायितम् ॥ ५५ ॥

रात्राविस्यादि । नच सेवितेति जागरणप्रसङ्गान्निद्राप्रतिद्वन्द्वितया च जागरणमाहेति इन्दुव्याकारः । अपिशब्दावत्र सामर्थ्यलब्धौ । अध्याहार्याविति केचित् । तेन रात्रावपि जागरणं रूक्षम् । दिवसे त्वाग्नेयत्वादतिशयेन रूक्षं कालेनाहितबलत्वात् । तथा प्रस्वपनं दिवापि स्निग्धं रात्रौ तु कालस्य सौम्यत्वात् अतिशयेन स्निग्धमित्यवशिष्यते । अपिशब्दाभ्यामन्तरेण तु रात्रावेव

जागरणं रूक्षं दिवा तु स्निग्धमित्यर्थो जायेत व्यवच्छेदफलत्वाद् वाक्यानाम् । एवं दिवस एव प्रस्वपनं स्निग्धम् । रात्रौ तु रूक्षमिति । न चैतद् युज्यते । यतो यदि जागरणं सदा रूक्षं नाभविष्यत् तत्कथमिदमुपपत्स्यते —

"बहुमेदःकफाः स्वप्युः स्नेहनित्याश्च नाहनि ।
विषार्तः कण्ठरोगी च नैव जातु निशास्वपि ॥"

इति । एषां ह्यपतर्पणमेव हितं यच्चापतर्पणं तदवश्यं रूक्षं तस्मादेतैरपतर्पण-स्वभावं जागरणमेव सेव्यम् । अपि च भाष्ययानादिक्लान्तादीनामपि सन्तर्पण-मेव हितं यच्च सन्तर्पणं तदवश्यं स्निग्धं तस्मादेतैः सन्तर्पणस्वभावमेव सदा प्रस्वपनं सेव्यम् । अपरं च पूर्वमेव व्याख्यानं युक्तं स्यादत्र । अपिशब्द उक्ते रात्रिदिवसयोर्जागरणं रूक्षं प्रस्वपनं स्निग्धमित्यर्थादवगम्यते तस्माज्जागरणं रूक्षं प्रस्वपनं स्निग्धमेवेति वक्तव्यम् । किमर्थं रात्रौ दिव(सेऽपि ? स इति) कालविशेषग्रहणम् । अत्रोच्यते । निशायामहनि च जागरणस्य रौ(क्ष्य ? क्ष्या)-विशेषेऽपि यत्र जागरणं दोषावहं तत्रैव रूक्षमुपन्यस्तवान् प्रस्वपनस्य स्नैग्धा-विशेषेऽपि यत्र तु बाधावहं तत्रैव स्निग्धमुपन्यस्तवान् । यत्रादोषावहत्वं त-त्रापरिहार्यत्वेनाप्रयोजनत्वाज्जागरोऽस्तीति जागरणं रूक्षं रूक्षाणां भावानां देहे वृद्धिकरम् । एवं प्रस्वपनम् । ननु स्नेहो गुणः स्वप्नस्य वा रूक्षः । किं तर्हि । यत् कर्मजातमाचरतः स्निग्धोपयोगादिवत् स्नेहार्थो निष्पद्यते । रूक्षो-पयोगादिवद् रूक्षार्थो वा तत्र स्निग्धरूक्षोपचारो भवेत् । अरुणदत्तोऽप्याह— प्रस्वपनजागरणक्रिययोरद्रव्ययोरपि रूक्षस्निग्धत्वमुपचारादुपपन्नम् । यथा रूक्षा द्रव्यं गुग्गुल्वादि कफमेदःप्रभृतीन् सौम्यान् भावान् क्षपयति । तथैव यथा जागरणमपि तत् क्षपयद्दृष्टम् । तदा तद्रूक्षकार्यकरणादरूक्षमपि रूक्षमित्युप-चर्यते । तथा प्रस्वपनम् । हृद्याकारस्त्वाह — रात्रौ सौम्यकाले रूक्षं जागरणं रूक्षदिवसेऽतिरूक्षमिति सिध्यति । प्रस्वपनमपि तथा रूक्षे काले स्निग्धं स्निग्धे-ऽतिस्निग्धमिति । अत्र विपर्ययस्तन्त्रयुक्तिः । जागरणस्वप्नयोः रूक्षत्वं स्निग्धत्वं चोपचर्यते इति । प्रचल इवाचरतीति क्यङन्तान्निष्ठा । आसीनस्योपविष्टस्य प्रचलायितमासीनप्रचलायितम् । आसननिद्रा मन्दनिद्रानिषेवणम् आसीन-प्रचलायितं न तु प्रस्वपनं सर्वसार्विकया । येन स्नेहनहेतुः स्यात् । रूक्षका-(र्य ? र्या)करणादरूक्षमनभिष्यन्दि । तुर्विशेषे । आसीनप्रचलायितं पुनरीदृग्रूप-मित्यर्थः ॥ ५५ ॥

यदि स्निग्धत्वादभिष्यन्दी दिवास्वप्नः तत् किं कदाचिदपि न कार्य इत्याह —

ग्रीष्मे वायुचयादानरौक्ष्यरात्र्यल्पभावतः ।
दिवास्वप्नो हितोऽन्यस्मिन् कफपित्तकरो हि सः ॥ ५६ ॥
मुक्त्वा तु भाष्ययानाध्वमद्यस्त्रीभारकर्मभिः ।
क्रोधशोकभयैः क्लान्तान् श्वासहिध्मातिसारिणः ॥ ५७ ॥
वृद्धबालाबलक्षीणक्षततृट्शूलपीडितान् ।
अजीर्णाभिहतोन्मत्तान् दिवास्वप्नोचितानपि ॥ ५८ ॥
धातुसाम्यं तथा ह्येषां श्लेष्मा चाङ्गानि पुष्यति ।

ग्रीष्म इत्यादि । इयाकारोऽपि दिवास्वप्नस्य कालमाह — ग्रीष्म इत्यादिनेत्याह । ग्रीष्मकाले दिवास्वप्नो हितः । यतस्तस्मिन् काले पवनचयो भवति । आदानस्य च परिपुष्टत्वादतिरौक्ष्यं भवति । (आदाने च उष्णत्वादतिरौक्ष्यं?) रात्रयश्च निद्रासमाप्तयेऽल्पयोगा भवन्ति । दिवास्वप्नश्च सन्तर्पणोऽन्यस्मिन् ग्रीष्मादन्यस्मिन् काले कफपित्तकरत्वादसेव्यः । कफपित्तकरो हि स इति प्रतिषिद्धस्य प्रतिषेधमाह — मुक्त्वेति । भाष्यादिक्लान्तादीन् दिवास्वप्नोचितांश्च वर्जयित्वा । अतिभाष्यादिक्लान्तादीनिति हाटकः । ग्रीष्मेऽन्यस्मिन्नपि काले दिवास्वप्न एषां हित एव तेषां दिवास्वप्नः कफपित्तकरो न भवति । यद्यपि कफपित्तकरत्वं तथापि न दोषः कुतः अपतर्पणस्य सन्तर्पणसाध्यत्वाद् यच्च सन्तर्पणं तदवश्यं स्निग्धमिति स्निग्धस्वभावं स्वपनं सेव्यमेव । यानमश्वादि । क्षतं खड्गादिविच्छेदः । अभिहतो लगुडादिना । दिवास्वप्नोचिताः शीलितदिवास्वप्नाः । तत्र अतिभाष्यादिक्लान्तानां पवनयोगात् स्वप्नोऽनुज्ञातः । श्वासहिध्मादीनां वेगविस्मरणार्थम् । श्लेष्मवृद्धिकरत्वात् श्लैष्मिकादन्यत्रातीसारे स्वप्नः । अथवा प्रभावाद्धितः । सर्वत्र वृद्धादीनां यथायथं तर्पणार्थम्[1] । अजीर्णानामल्पकालमाचरितेन स्वप्नेनातिवृद्धः कफोऽग्निस्थानमभिभूय[2] स्रोतांसि रुणद्धि । ततो न निर्या(दू ? नू)ष्मा जाठराग्निं सन्धुक्षयति दिवास्वप्नोचितानां धातुपुष्टिं कृत्वा आरोग्येण योजयति । अथवा तेषां ऋतुवैषम्यपरिहारार्थं दिवास्वप्नोऽनुमतः तथा चोक्तम् —

"उचितो हि दिवास्वप्नो नित्यं येषां शरीरिणाम् ।
वातादयः प्रकुप्यन्ति तेषामस्वपतां दिवा ॥"

---

१. 'दौं' ख. पाठः. २. 'मनभि' क. पाठः.

इति। आह। उचिताद् विरमेदिति पूर्वोक्तम्। इह दिवास्वप्नस्योचितस्यापि सेवा विहिता। तत् कतरद् वचोऽत्र प्रमाणम्। अत्राभिधीयते। यदि तस्मात् त्यज्यमानात् न स्यादन्य आरब्धस्तदा क्रमेणोचितमपथ्यं त्यजेत्। यदा तु स्यात् तदा न त्याज्यम्। तस्माज्जुष्यमाणाद् यस्माद् दोषकलङ्कयस्तमन्येनाहारादिना दोषविपरीतेनोपसमादधीत। पथ्याहारादिं दर्शयति। (बहु?) बहुदोषकरत्वं दिवास्वप्नस्य शीलज्ञे नैवमबहुदोषकरमिति भावः। ननु अजीर्णिनां दिवास्वप्नो न युक्तो दिवास्वप्नस्य कफवृद्धिकरत्वात्। कफवृद्ध्या चाग्निमान्द्यम्। अग्निमान्द्याचाजीर्णान्नस्यापाक इत्य(यु)क्तस्तेषां दिवास्वप्नः। अत्रोच्यते। दिवास्वप्नेनाजीर्णिनां धातुसाम्यं भवति धातुसाम्ये च सति स्वस्थानस्थितो दोषैरनुपहतो वह्निः पचनक्षमो भवति। कफस्तु वृद्धोऽपि नैतेषामग्निमान्द्यं विधत्ते। अपि त्वङ्गानामेव पुष्टिमा(या? दधा)ति। अत एवानन्तरमेवो(पचार? वाच) शास्त्रकारः 'धातुसाम्यं तथे'त्यादि। तथा कृते सति धातुसाम्यं वातादिसाम्यमन्यूनाधिकता। श्लेष्मणाङ्गानां पोषः उपचयः। तस्य स्वप्नस्य श्लेष्मकरत्वात् तत्करत्वं च सर्वक्रियोपरमात् स्वकरणात् कफस्य सञ्चयाद्॥

बहुमेदकफाः स्वप्युः स्नेहनित्याश्च नाऽहनि॥ ५९॥
विषार्तः कण्ठरोगी च नैव जातु निशास्वपि।
अकालशयनान्मोहज्वरस्तैमित्यपीनसाः॥ ६०॥
शिरोरुक्शोफहृल्लासस्रोतोरोधाग्निमन्दताः।
तत्रोपवासवमनस्वेदनावनमौषधम्॥ ६१॥
योजयेदतिनिद्रायां तीक्ष्णं प्रच्छर्दनाञ्जनम्।
नावनं लङ्घनं चिन्तां व्यवायं शोकभीक्रुधः॥ ६२॥
एभिरेव च निद्राया नाशः श्लेष्मातिसंक्षयात्।
निद्रानाशादङ्गमर्दशिरोगौरवजृम्भिकाः॥ ६३॥
जाड्यं ग्लानिभ्रमापक्तितन्द्रा रोगाश्च वातजाः।
यथाकालमतो निद्रां रात्रौ सेवेत सात्म्यतः॥ ६४॥
असात्म्याज्जागरादर्धं प्रातः स्वप्यादभुक्तवान्।

बह्वित्यादि। बहुमेदःश्लेष्माणः स्निग्धाहारशीलिनश्च श्रीष्मेऽप्यहनि

न स्वप्युः । विषार्तः कण्ठरोगी च रात्रिष्वपि कदाचिदपि न स्वप्यात् । विषार्तस्य निशास्वपि स्वपनप्रतिषेधः । तेन तमोमयेन स्वप्नेनाभिभूतस्य संज्ञानाशे तमोमयं विषमन्तरं लब्ध्वा संज्ञामभिभूय मारयेत् इति । पूर्वमेव रोगेण रुद्धे कण्ठे (स्था ?) दिवास्वप्नवृद्धेन कफेनातिमात्रं रोधादिति कण्ठरोगिणः स्वप्ननिवारणम् ॥

अविहितकाले स्वप्नं निन्दति — अकाले शयनं स्वप्नः अकालशयनं तस्मान्मोहादयः स्युः स्तैमित्यं निरुत्साहत्वम् । उक्तवांश्च —

"हलीमकः शिरोजाड्यं स्तैमित्यं गुरुगात्रता ।
ज्वरभ्रममतिभ्रंशस्रोतोरोधाग्निमन्दताः ॥
शोषारोचकहृल्लासपीनसार्धावभेदकाः ।
सकण्डूकोठपिठकाकासतन्द्रागलामयाः ॥
विषवेगप्रवृत्तिश्च भवेदहितनिद्रया ।
अपच्यमानो बाहुल्याद् स्रोतांस्यावृणुते कफः ॥
ततः स्रोतस्सु रुद्धेषु जायते गात्रगौरवम् ।
गुरुगात्रस्य चालस्यमालस्यादतिनिद्रता ॥"

इति ॥

अत्र च का चिकित्सेत्याह — तत्र तेष्वकालस्वप्नजेषु मोहादिषु यथायोगमुपवासाद्यौषधं योजयेत् । निद्रायाश्च बाहुल्येन रात्रिः काल इति पूर्वमुक्तम् । अतिनिद्रायां तस्यां तीक्ष्णानि वमनाञ्जननस्यानि योजयेत् । लङ्घनादि च । अतिनिद्राणामिति वा पाठः । एभिरेव तीक्ष्णप्रच्छर्दनादिभिः सम्यङ् निद्राया अपि नाशो भवति श्लेष्माख्यस्य च धातोरतिशयेनापचयात् ॥

सम्प्रति निद्रानाशजान् विकारानाचष्टे — सम्यङ्निद्राया नाशादङ्गमर्दादयो वातोत्थाश्च रोगाः स्युः । जाड्यं स्तैमित्यम् ॥

यतश्च सम्यक् सेविताया असम्यक् सेवितायाश्चानन्तरोक्ता गुणा दोषाश्च — अतोऽस्माद्धेतोः कालानतिक्रमेण सात्म्यतो यामद्वयं त्रयं वा निशि निद्रां भजेत् । अस्मादृश्याज्जागरादर्धेनासात्म्यजागरकालादर्धेन प्रातः स्वप्यात् । अभुक्तवान् अभुक्ते सति । अस्मादृश्यग्रहणेनैतद् द्योतयति । न सर्वस्य रात्रावसुप्तस्य जागरणकालादर्धेन दिवास्वप्न इष्यते । 'किं तर्हि यो

यावन्तमुचितं स्वपिति तस्मात्कालाद् यावन्तं कालं जागृयात् तावदर्धेनासौ स्वप्यात् । केचिद्धि स्वल्पनिद्राः स्वभावतो भवन्ति केचिदन्यथा' इति । तथा च क्षारपाणीये —

"यावत् कालं न सुप्तः स्याद् रात्रौ स्वप्नाद् यथोचितात् ।
अर्धमात्रं ततः कालाद् दिवास्वप्नः प्रशस्यते ॥"

इति ॥

**शीलयेन्मन्दनिद्रस्तु क्षीरमद्यरसान् दधि ॥ ६५ ॥**
**अभ्यङ्गोद्वर्तनस्नानमूर्धकर्णाक्षितर्पणम् ।**
**कान्ताबाहुलताश्लेषो निर्वृतिः कृतकृत्यता ॥ ६६ ॥**
**मनोनुकूला विषयाः कामं निद्रासुखप्रदाः ।**
**ब्रह्मचर्यरतेर्ग्राम्यसुखनिस्पृहचेतसः ॥ ६७ ॥**
**निद्रा सन्तोषतृप्तस्य स्वं कालं नातिवर्तते ।**

**शीलयेदित्यादि** । यो मन्दनिद्रो विरेकादिकारणेन वातकोपेन (वा) स क्षीरादीन् शीलयेत् । कान्ताबाहुलताश्लेषादयः काममत्यर्थं निद्रासुखहेतवः कान्ताबाहुलताश्लेषग्रहणमाश्लेषमात्रमेव निद्रासुखहेतुर्न तु व्यवाय इति दर्शनार्थम् । अत एवानन्तरं ब्रह्मचर्यरतेरित्यादि वचनम् । निर्वृतिर्नष्टदुःखस्यावस्थितिः । तदुक्तं —

"यद् वियुक्ततया स्थानं (के ? क्ले)शैर्नष्टैः शरीरिणः ।
व्यवसायस्य बुद्धेश्च दीपनी सा तु निर्वृतिः ॥"

इति । ब्रह्मचर्यरतेर्निद्रा स्वं कालं नातिवर्तते । ब्रह्मचर्यरतस्याप्यन्तरान्तरा मैथुनाभिलाषेण निद्रा निवर्तते इति ग्राम्यसुखनिःस्पृहचेतस इत्युक्तम् । तथा सन्तोषतृप्तस्य चिन्ताविषादादिरहितस्य ॥

क्रमप्राप्तमब्रह्मचर्यमाह —

**ग्राम्यधर्मे त्यजेन्नारीमनुत्तानां रजस्वलाम् ॥ ६८ ॥**
**अप्रियामप्रियाचारां दुष्टसङ्कीर्णमेहनाम् ।**
**अतिस्थूलकृशां सूतां गर्भिणीमन्ययोषितम् ॥ ६९ ॥**
**वर्णिनीमन्ययोनिं च गुरुदेवनृपालयम् ।**

चैत्यश्मशानाहननचत्वराम्बुचतुष्पथम् ॥ ७० ॥
पर्वाण्यनङ्गं दिवसं शिरोहृदयताडनम् ।
अत्याशितोऽधृतिः क्षुद्वान् दुःखिताङ्गः पिपासितः ॥ ७१ ॥
बालो वृद्धोऽन्यवेगार्तस्त्यजेद्रोगी च मैथुनम् ।

ग्राम्येत्यादि । ग्राम्यो धर्मः अतिजुगुप्सितो व्यापारो ग्राम्यधर्मः ग्राम्यधर्मस्थितानां व्यापारः । ग्राम्यधर्मे स्त्रीपुरुषयोमविषयेऽनुचानां त्यजेदित्यर्थः । तस्या गर्भग्रहणायोग्यत्वात् । तथा रजस्वलां त्यजेद् इति सर्वत्रानुवर्तते । रजस्वला नियतकालप्रवृत्तशोणिता तत्सेवया रोगोत्पत्तिरधर्मप्राप्तिश्च । अप्रियां रूपादिनानिष्टामप्रियाचारां या प्रियापि तद्विष्टमाचरति ताम् । दुष्टं व्याधिमलादिभिः सङ्कीर्णं सङ्कटं च मेहनं योनिर्यस्यास्तां त्यजेत् । दुष्टमेहना असृग्दरादिदूषितयोनिः । सङ्कीर्णमेहना प्रसवादिना भिन्नयोनिरिति हृद्याकारः । द्विजाङ्गनेति केचित् । अन्ययोनिमजागोमहिषवडवादियोनिं च त्यजेत् । तत्र म्लेच्छजातयो व्यवायं कुर्वते । योनिशब्दो जातिवाची वा । गुरुदेवनृपालयादींस्त्यजेत् तेषु स्त्रियं न गच्छेदित्यर्थः । आहननं वधस्थानं (सू)नानिग्रह(स्था ? स्था)-नाहननादीनि पर्यायान्तराणि । अन्ये त्वायतनेति पठन्ति । यक्षराक्षसपिशाचवनदेवतादीनामालयभूता वृक्षादय इति वदन्ति । सङ्ग्रहे तु "आघात" इति पठितम् । चत्वरस्त्रिपथः । पर्वाणि चतुर्थीषष्ठ्यष्टम्यमावास्यापौर्णमासीरविसङ्क्रान्त्यादीनि । तथानङ्गं त्यजेत् अङ्गं जघनं नाङ्गमनङ्गमङ्गसदृशं जघनकार्यनिर्वर्तनसमर्थं मुखादिकमुच्यते । दाक्षिणात्या हि मुखादिना रतिं कुर्वते तन्निषिध्यते । यथाह वात्स्यायनः —

"सुमृष्टकुण्डलमुखा युवानः परिचारकाः ।
केषाञ्चिदेतत् कुर्वन्ति नराणामौपरिष्टकम् ॥"

इति । मुखेन जघनकर्म औपरिष्टकमुच्यते । अथवानङ्गम् । अङ्गरहितं ग्रामधर्मं त्यजेत् । ग्रामधर्मस्याङ्गं मेहनमेव केचिन्मुखादिना रतिं कारयन्ति । काश्चिद् दन्तदारुशृङ्गादिकृतैरुपलिङ्गैः कण्डूत्यपनयं कुर्वते तदयुक्तम् । मेहनेनैव कार्यम् । तेनाधर्मप्राप्तिः प्रसिद्धा महाभारतादिष्वपि —

"अयोनौ च वियोनौ च पशुयोनौ च भारत! ।
पातयन्ति नराः शुक्रं ते वै निरयगामिनः ॥"

इति । दिवसं च त्यजेत् । दिने रतं न कुर्वीतेत्यर्थः । अन्येत्व(न)ङ्गदि...मिति पठन्ति । रतिरहस्येऽप्युक्तं —

"चुम्बन् गण्डतटीं मनोभवतिथौ मृद्नन् ससीत्कं कुचौ
कान्तां द्रावयते द्रुतं कररुहैश्छिन्दन् शनैः कन्धराम् ।"

इति । अनङ्गतिथिः पूर्वासंयुक्ता त्रयोदशी ॥

नन्दिकेश्वरसंहितायामपि प्रोक्तं —

"पूर्वात्रयोदशीयोगे यदा समरतं भवेत् ।
कलाविवादा विद्रुतायास्तदान्त्यामेति सा दशाम् ॥"(?)

इति । अहनि गोसर्गे मध्यन्दिनेऽर्धरात्रे पर्वदिनेष्वनङ्गेऽपि वेति संग्रहदर्शनात् (पूर्वमु)क्त एवार्थो युक्त इत्यस्मद्गुरूणां सिद्धान्तः । शिरोहृदयताडनं मूर्धवक्षोऽभिघातं च त्यजेत् तत्र ताडनं कामसूत्रविहितं यथाह पाञ्चालः —

"ललाटे पृष्ठदेशे च हृदयोपरि पार्श्वयोः ।
करेण ताडनं कुर्यात् तत् परं कामदीपनम् ॥"

इति । अत्र शिरोहृदययोर्महामर्मत्वाद् व्याधिर्मरणं वा स्यादिति विशेषेण निषिद्धम् । ननु विधिप्रतिषेधयोरनयोः कस्य प्रामाण्यमिति चेत् कामसूत्रे तद्भेदकथनमात्रमेव साध्यते न कर्तव्यमुच्यते उक्तं च —

"न शास्त्रमस्तीत्येतावान् प्रयोगे कारणं भवेत् ।
शास्त्रार्थान् व्यापिनो विद्यात् प्रयोगांस्त्वेकदेशजान् ॥"

इति । अत्याशिता(तो ? दयः) मैथुनं त्यजेयुः । 'अत्याशितोऽतिसुविहितः । अधृतिर्दुर्मना' इति हारकोऽरुणदत्तश्च । दुःस्थिताङ्गो दुःस्थितशरीरः दुस्थितमेहनो वा । अन्येवगार्तः पुरीषादिवेगातुरः । ननु क्षुद्वान् क्षुद्वेगार्त उच्यते । अ(न्यो ?)न्यवेगार्त इत्यनेनैवास्यार्थस्य लब्धत्वात् किं क्षुद्वानित्यनेन सत्यमेतत् । अतिशयार्थमेतद् यथा क्षुद्वेगार्तः स्त्रियं गच्छन्नतिशयेन पीडया बाध्यते न तथान्यवेगार्त इति ॥

ऋतुविशेषे निधुवनं नियमयति —

**सेवेत कामतः कामं तृप्तो वाजीकृतां हिमे ॥ ७२ ॥**
**त्र्यहाद्वसन्तशरदोः पक्षाद्वर्षानिदाघयोः ।**
**[illegible] ॥ ७३ ॥**

अपर्वमरणं च स्यादन्यथा गच्छतः स्त्रियम् ।
स्मृतिमेधायुरारोग्यपुष्टीन्द्रिययशोबलैः ॥ ७४ ॥
अधिका मन्दजरसो भवन्ति स्त्रीषु संयताः ।

सेवेतेत्यादि । तृप्तो वाजीकृतां वाजीकरणैः सञ्जाततर्पणः सन् कामतो यथेच्छया हिमे हेमन्तशिशिरयोः कामं मैथुनं सेवेत । वसन्ते शरदि च त्र्यहात् त्र्यहमतिक्रम्य मैथुनं सेवेत । वर्षाग्रीष्मयोः पक्षात् कामं सेवेत । वाजीकृतामिति सम्पदादित्वात् क्विप् । तृप्त इति "क्तोऽधिकरणे च ध्रौव्ये"त्यादिनाऽधिकरणे क्तः । "अधिकरणवाचिनश्च" इति षष्ठी । अन्यथा पठन्ति केचित् तन्निषेधार्थं लक्षणं विलिखितम् । दृप्त इत्यन्ये पठन्ति । हिमे हेमन्तर्ताविस्यरुणदत्तः । द्व्यहादित्यस्य ग्रन्थस्येन्दुर्व्याख्यानमुक्तवान् ॥

अन्यथा उक्ताद् विधेरन्येन प्रकारेण स्त्रियं गच्छतो व्यवायं कुर्वतो भ्रमादयः स्युः । बलादीनां क्षयः । पुंस्त्वं शुक्रम् । अपर्वणि अकाले मरणमपर्वमरणं पर्वशब्दः कालवाची । अत्र चशब्दात् किं पुनः शोषादय इत्यर्थः । अथवा चशब्दात् सङ्ग्रहोक्ता दोषा गृह्यन्ते —

"पुष्ट्यायुरोजःशुक्राणां क्षयं मेढ्राश्रयान् गदान् ।
वायोः कोपमधर्मं च मूढः प्राप्नोत्यतोऽन्यथा ॥
उत्तानो वेगधारी वा वृद्धिमेहाश्मशर्कराः ।
तिमिरादिगदोत्पत्तिर्मूर्धाद्याहननाद् ध्रुवम् ॥"

इति ॥

स्त्रीषु संयता यथोक्तविधिना स्त्रीः सेवमाना जितेन्द्रिया इत्यर्थः स्मृत्यादिभिरधिका अल्पजराश्च भवन्ति ॥

रतावसानानुष्ठेयमाह—

स्नानानुलेपनहिमानिलखण्डखाद्य-
शीताम्बुदुग्धरसयूषसुराप्रसन्नाः ।
सेवेत चानुशयनं विरतौ रतस्य
तस्यैवमाशु वपुषः पुनरेति धाम ॥ ७५ ॥

स्नानेत्यादि । रतस्य विरतौ व्यवायस्यान्ते यथौचित्येन स्नानादीन् सेवेत खण्डखाद्याः सिताढ्या भक्ष्याः । खण्डखाद्यं खण्डाच्छतं कणेत्यादीति

केचित् । रसो मांसरसः । अनुशयनमिति अनु पश्चात् स्नपनं च सेवेत । तस्यैवमाशु वपुषः पुनरेति धाम इति तस्य स्नानादिसेविनः शरीरस्य एवं कृते रतिक्षीणं धाम तेजः पुनरागच्छति जायते । गतं शुक्रं पुनरेवं कृते स्व-स्थानं प्राप्नोतीत्याह पाठ्यकारः धामेति शुक्रकारणे कार्योपचारादिति वदन् । व्यवायसेवया सद्यो बलहानिमुक्तवान्—

"स्त्रीसंसर्गाद्धि सद्यः स्यात् क्लीबता बलिनामपि ।"

इति । स्नानस्य वृष्यत्वमुक्तम् । अनुलेपनस्योक्तं सङ्ग्रहे —

"गन्धमालादिकं वृष्यमलक्ष्मीघ्नं प्रसाधनम् ।"

इति । हिमानिलो विशिष्टः पश्चिमदक्षिणादिवातः । उक्तं च —

"पश्चिमः शिशिरो हन्ति मूर्च्छां दाहं श्रमं भ्रमम् ।"

इत्यादि । हाटकस्तु वपुषो वय एति धाम्नेति पठति । एवंकृते धाम्ना ओजसा सह वय आगच्छति । आषोडशवर्षाद् बाल्यम् । आद्वात्रिंशद्वर्षाद् यौवनम् । आचत्वारिंशद् वर्षात् सर्वधात्विन्द्रियबलवीर्यसम्पूर्णता आसप्ततेः सम्पूर्णस्य शरीरस्य स्थितिः । सप्तत्यास्तूर्ध्वं स्थविरत्वं क्षीयमाणसर्वधात्विन्द्रिय-वीर्यत्वाज्जरदगारमिवावसीदति । एवं पुरुषस्य बाल्यादिवयोऽवस्थासु क्रिया-विशेषश्चोक्तः —

"न नस्यमूनसप्ताब्दे नातीताशीतिवत्सरे ।
आजन्ममरणं शस्तः प्रतिमर्शस्तु बस्तिवत् ॥"

इति वचनात् । एवं ग्रा(म ? म्य)धर्मस्यावस्थाविशेषापेक्षया सेवा विहिता । वचनं हि —

"न चोनः षोडशाद् वर्षात् सप्ततेः परतो न च ।
आयुष्कामो नरः स्त्रीभिः संयोगं गन्तुमर्हति ॥
अतिबालो ह्यसम्पूर्णसर्वधातुः स्त्रियो व्रजन् ।
उपतप्येत सहसा तटाकमिव काजलम् ॥
शुष्कं रूक्षं यथा काष्ठं जन्तुजग्धं विजर्जरम् ।
स्पृष्टमाशु विशीर्येत तथा वृद्धः स्त्रियो व्रजन् ॥"

"कामस्य तेजः परमं हि शुक्र-
माहाररसारादपि सारभूतम् ।
जितात्मना तत् परिरक्षणीयं
ततो वपुः सन्ततिरप्युदारा ॥"

इति ॥ ७५ ॥

अध्यायादौ प्रस्तुतमुपसंहरति —

**श्रुतचरितसमृद्धे कर्मदक्षे दयालौ**
**भिषजि निरवबन्धं देहरक्षां निवेश्य ।**
**भवति विपुलतेजःस्वास्थ्यकीर्तिप्रभावः**
**स्वकुशलफलभोगी भूमिपालश्चिरायुः ॥ ७६ ॥**

श्रुतेत्यादि । अथ वा एवं च पूर्वोक्तं हिताहितं सर्वं वैद्य एव वेत्ति तस्माद् राज्ञा तस्मिन् शरीररक्षा निवेश्येति दर्शयन्नाहेति हाटकः । श्रुतं शास्त्रश्रवणं चरितमाचारः ताभ्यां समृद्धे सम्पूर्णे तथा कर्मदक्षे क्रियाकुशले कृपालौ च भिषजि शरीररक्षणं निरवबन्धं निस्सन्दिग्धमथवा निरवबन्धं निर्विकल्पं विचार्येत्यर्थः । निर(व ? नु)बन्धमिति वा पाठः । निवेश्य निधाय भूमिपालो राजा विपुला विस्तीर्णास्तेजःस्वास्थ्यकीर्तिप्रभावा यस्य स एवम् । वर्णच्छाययोर्दीप्तिविशेषस्तेजःप्रभावो महिमा । तथा स्वकुशलफलभोगी स्वोचितसत्फलभोगवान् । स्वकुलोचितैः क्रियाफलैः भोगीत्यर्थः । कुशलशब्दः क्रियावाची । कौशलवाचीत्यन्ये । चिरायुश्च भवति । राज्ञस्तेजःप्रभृतीनि वैद्यायत्तानि आरोग्यमूलत्वात् । स्वकुलफलभोगीति आत्मनः पुराकृतानीहकृतानि च पुण्यफलान्यपि भिषगुक्तं पथ्यं भजतोऽपथ्यं त्यजत एव सफलानि भवन्तीत्यर्थः । चिरायुरित्यनेन पथ्यसेवायां कृतायामवश्यमकालमरणं न भवतीति ब्रुवते ॥ ७६ ॥

इति श्रीदासपण्डितविरचितायां हृदयबोधिकायां सप्तमोऽध्यायः ॥

---

## अथाष्टमोऽध्यायः ।

अन्नरक्षाध्यायादनन्तरं मात्राशितीयाध्यायारम्भो युक्तः यतो विषादिभ्यो रक्षितमन्नपानं हीनमात्रातिमात्राभ्यवहृतं जीवितोपघाताय सम्पद्यते । मात्रयाभ्यवहृतं प्राणिनां प्राणाय । पाठ्यकारोऽप्याह — विषाद् रक्षितमप्यन्नपानं हीनातिमात्रकं रोगाय मृत्यवे वा स्यात् । अतो मात्राशितीयमाह इति । सुश्रुतरविहितमप्यन्नपानं मात्रामनपेक्ष्य सेवितं रोगाय मरणाय वा भवति । अतो मात्राप्रदर्शनायाध्यायारम्भ इति हाटकः । अथेत्यानन्तर्ये । अत इति प्रस्तुताभिसम्बन्धे अशितमशनं भावे निष्ठा मात्रयाशितं मात्राशितं तस्मै हितो मात्राशितीयः । मात्राशब्दः परिमाणयुक्तिरल्पवाची दृश्यते । तथाप्यत्रायं परिमाणवाची । मात्रायाः प्रथमग्रहणेन प्राधान्यं दर्शयति । तत्प्राधान्यं चतुर्विधस्याप्याहारस्य हिताहितस्य तद्युक्तायुक्तस्य गुणदोषकरत्वात् ॥

**अथातो मात्राशितीयमध्यायं व्याख्यास्यामः ।**
**मात्राशी सर्वकालं स्यान्मात्रा ह्यग्नेः प्रवर्तिका ।**
**मात्रा द्रव्याण्यपेक्षन्ते गुरूण्यपि लघून्यपि ॥ १ ॥**

मात्राशीत्यादि । सर्वदा सर्वकालं स्वस्थ आतुरो वा पुरुषो मात्रया अशनशीलो भवेत् । अशितग्रहणेनाशितपीतलीढखादितं चतुर्विधमप्याहारमुपसंगृह्णाति । कुत इत्याह— हि यस्मान्मात्रा अग्नेर्जाठरस्य प्रवर्तिका स्वव्यापारेऽग्निप्रवृत्तिश्च देहस्थितिहेतुः तथा चोक्तं—

"अग्निमूलं बलं पुंसां बलमूलं हि जीवितम् ।"

इति । जाठराग्निस्थितिर्मात्राधीना । उक्तं च —

"रक्ष्योऽग्निर्मात्रया पथ्यमपथ्यत्वं प्रपद्यते ।
अपथ्यं पथ्यतां याति मात्रा देहस्य कारणम् ॥"

इति । मात्रास्तुतिः संग्रहे —

"मात्रया सेवितं मद्यं हन्ति रोगांस्तदुद्भवान् ।
निषेव्यमाणं तिलशो विषमप्यमृतायते ॥
हीनातिमात्रमशनं मरुन्निचयकोपनम् ।
भजतो विषरूपत्वं तुल्यांशे मधुसर्पिषी ॥"

---

१. 'आभ्य' क. ख. पाठः. २. 'म्भो युक्त इ' ग. पाठः.

इति । मात्रा द्राव्याण्यपेक्षन्ते मात्रास्तिस्रः गुर्वी लघ्वी मध्यमा च ताः कर्त्र्यः द्रव्याणि कर्माणि । अथ वा मात्राः कर्माणि द्रव्याणि कर्तॄणि । गुरूणि लघूनि चोभयरूपाणि च द्रव्याणि । उभयथा मात्रात्रित्वं सिध्यति पूर्वस्मिन् पक्षे द्रव्यापेक्षया मात्रा प्राप्नोति सूचयति । अन्यस्मिन्नतोऽपि मात्राशी स्यादिति मात्रायाः प्राधान्यं कथयति । अपेक्षन्ते इच्छन्ति । गुरूणि च लघूनि चेति एकेन चकारेण मध्यमद्रव्यं समुच्चीयते । गुरूण्यपि लघून्यपीत्यस्मद्गुरवः पठन्ति । तत्र गुरूणि पिष्टद्राक्षाक्षोलेक्षुमाषानूपमांसादीनि । लघूनि दिव्योदकरक्तशालिषाष्टिकमुद्गजाङ्गलमांसादीनि । हाटकस्तु मात्रामिति पठति ॥ १ ॥

तत्र गुरूणां लघूनां का मात्रेत्याह—

**गुरूणामर्धसौहित्यं लघूनां नातितृप्तता ।**
**मात्राप्रमाणं निर्दिष्टं सुखं यावद्वि जीर्यति ॥ २ ॥**

**गुरूणामित्यादि** । हृद्याकारस्तु[1] तेषां कीदृशी मात्रेत्याह — गुरूणां द्रव्याणामर्धसौहित्यमर्धतृप्तिः[2] गौरवतरतमादिभेदेन । सौहित्यं सुहितता तृप्तिः । अर्धशब्दः सम्पूर्तिवचनः लघूनां स्वभावलघूनां संस्कारलघूनां च नातितृप्तता नातितृप्तिः । किं तर्हि सौहित्यमात्रमेव । एतन्मात्राप्रमाणं निर्दिष्टम् । मात्रा ह्रस्वा मध्या महती च तस्याः प्रमाणं मात्राप्रमाणं । तत्र "मात्रा परिमाणं मानमिति" पर्यायाः । तस्यास्तु प्रमाणमुन्मानम् । एवं चात्र मात्राशब्दस्यापौनरुक्त्यमेव । अथ वा प्रमाणशब्दोऽत्रानुरूपार्थे । अनुरूपमात्रेत्यर्थ इति न्यासे । हृद्याकारस्त्वाह — लघूनां नातिकुक्षिता कुक्षिपूरणमात्रं मध्यमद्रव्यापेक्षमीषन्न्यूनता । अथ मध्यमद्रव्यावचनादयुक्तमिति चेत् । न । प्रमाणलभ्यत्वात् तस्य । अत्र शास्त्रे गुरुत्वलघुत्वयोः पाकापेक्षित्वात् चिराचिरकल्पनायामान्तरालिककालस्य मध्यमत्वमपि सिध्यति । यथा दीर्घह्रस्वयोरापेक्षिकयोरेकापेक्षया मध्यमत्वम् । घृतदिव्योदकादीनि क्वचिद् गुरूणि क्वचिल्लघूनि प्रोक्तानि । तेनापि मध्यमत्वमुपपन्नमविरोधात् । मात्राप्रमाणं निर्दिष्टं मात्रायाः परिच्छेद उक्तः । प्रमीयते येन तत् प्रमाणं प्रमितिरर्थपरिच्छित्तिः मात्रायाः प्रमेयत्वमर्धसौहित्यादेः प्रमाणत्वमिति । सुखं

---

१. 'हाटकस्तु', २. 'धांत्मतु' ग. पाठः .

यावद्धि जीर्यतीत्यनेन तदेव दृढीकरोति। हि यस्मात् तावत्परिमाणमाशितं सुखमविकृतिं कृत्वा जीर्यति परिणमति सुखजरणलक्षणमात्रेत्यर्थः। हि शब्दो हेतौ। चरके चोक्तं — सैषा भवत्यग्निबलापेक्षिणी मात्रा न च नापेक्षते द्रव्यं द्रव्यापेक्षया च त्रिभागसौहित्यमर्धसौहित्यं वा गुरूणामुपदिश्यते लघूनामपि च नातिसौहित्यमिति। अत्र त्रिभागसौहित्यमिति गुरूणां मात्रार्धसौहित्यमतिगुरूणामिति च। कथमर्धसौहित्यानतिसौहित्ययोरेककार्यत्वमिति चेत्। उच्यते।

"उपयुक्तं गुरुद्रव्यमर्धसौहित्यमात्रकम्।
लघुद्रव्यसमं पाकं याति तद्बलकारि चेत्॥"

इति शास्त्रदर्शनात्। स्यात्। अत्र किमर्थं प्रस्थादिमात्रा न परिगृह्यते। ब्रूमः अव्यापकत्वात् यदि प्रस्थं परिगृह्यते तत् तीक्ष्णाग्नेरतृप्तिकरं मन्दाग्नेर्बाधकं च स्यात्। अत एकेन लक्षणेन सर्वप्राणिनामरूपा मात्रा अग्न्यपेक्षया विहितेति हाटकः॥

उक्तप्रमाणविपरीताशने दोषमाह—

**भोजनं हीनमात्रं तु न बलोपचयौजसे।**
**सर्वेषां वातरोगाणां हेतुतां च प्रपद्यते॥ ३॥**
**अतिमात्रं पुनः सर्वानाशु दोषान् प्रकोपयेत्।**

भोजनमित्यादि। हीनमात्रं पुनरशनं न बलोपचयौजसे न बलाय न चोपचयाय न चौजसे। सर्वेषां च वातरोगाणां वक्ष्यमाणानां कारणतां गच्छति। कथमनशनेन पवनरोगः। अनशनेन बलहान्या अङ्गरौक्ष्येण च वायवीर्या रोगा भवन्ति। अथवा अनशनेन किट्टो न प्रचीयते कारणाभावात्। किट्टात् स्वेदमूत्रपुरीषवातपित्तश्लेष्माण इत्यागमः। तस्मात् क्षीयमाणस्य पित्तश्लेष्ममलप्रेरकस्य सर्वशरीरव्यापिनश्चेष्टानिमित्तभूतस्य पवनस्य स्वकर्महानिरेव रोगः। स्वकर्महान्या रोगान्तराणां च प्रादुर्भाव इति न्यासे।

अतिमात्रमशनं त्रीनपि दोषान् शीघ्रं प्रकोपयति॥

कुपिताश्च दोषा अलसकाख्यं विषूचिकाख्यं वा व्याधिं यथा कुर्वन्ति तथा दर्शयति —

**पीड्यमाना हि वाताद्या युगपत्तेन कोपिताः॥ ४॥**

**आमेनान्नेन दुष्टेन तदेवाविश्य कुर्वते ।**

**विष्टम्भयन्तोऽलसकं च्यावयन्तो विषूचिकाम् ॥ ५ ॥**

**अधरोत्तरमार्गाभ्यां सहसा वाजितात्मनः ।**

**पीड्यमाना** हीत्यादि । तेनापक्केनान्नेनाहारेण दुष्टेन वाताद्या हि यस्मात् पीड्यमाना विबध्यमाना रुद्धमार्गत्वाद् अत एव युगपदेककालं सर्व एव कोपितास्तदेव दुष्टमन्नमाविश्यालसकं कुर्वते । किं कुर्वन्तः । विष्टम्भयन्तो विशेषेण स्तम्भयन्तः । तदेव दुष्टमन्नं स्रोतःसु रु(द्धा ? न्धा)ना(म ? अ)लसकाख्यं रोगं कुर्वते । अथवा सहसा अनुचितवेगकाले च्यावयन्तस्तदेवान्नमूर्ध्वमधश्च बहिःप्रेरयन्तः अजितात्मनः असंयतचेतसः पुंसो विषूचिकां वा कुर्वते । सहसैवाजितात्मन इति वा पाठः ॥

**प्रयाति नोर्ध्वं नाधस्तादाहारो न च पच्यते ॥ ६ ॥**

**आमाशयेऽलसीभूतस्तेन सोऽलसकः स्मृतः ।**

प्रयातीत्यादिनैतदेव सविस्तरमाह— ऊर्ध्वं मुखेनाहारो न प्रयाति न चाधस्ताद् गुदेन प्रयाति । न चाहारः पच्यते आमाशये

"नाभिस्तनान्तरं जन्तोरामाशय इति स्मृतः ।"

इति । तस्मिन् अलसीभूत इवालसीभूतः । यथा अकर्मशीलः पुरुषोऽलस इत्युच्यते तथायमाहारोऽलसीभूतस्तिष्ठति तेन हेतुना रोगोऽलसः स्मृतः । तस्मादनुगता नामा ॥

विषूचिकायास्तु निर्वचनमाह —

**विविधैर्वेदनोद्भेदैर्वाय्वादिभृशकोपतः ॥ ७ ॥**

**सूचीभिरिव गात्राणि विध्यतीति विषूचिका ।**

**विविधैरित्यादि** । वाय्वादीनां त्रयाणामत्यन्तप्रकोपान्नानाप्रकारैर्वेदनोद्भेदैः पीडोत्पादनैर्यस्माद् गात्राणि सूचीभिरिव विध्यति । तस्माद् विषूचिकेत्युच्यते ।

विविधानां विकाराणां सङ्घातेनाथ वा मता ।

प्रायेण नरनाशस्य सूचिकेति विषूचिका ॥

इत्यन्ये ॥

**तत्र शूलभ्रमानाहकम्पस्तम्भादयोऽनिलात् ॥ ८ ॥**

**पित्ताज्ज्वरातिसारान्तर्दाहतृट्प्रलयादयः ।**

**तत्रेति** । अनन्तरप्रस्तुतायां विषूचिकायां यदा वातोऽधिको भवति तदा शूलादयो भवन्ति । आदिशब्देनाङ्गोद्वेष्टनमुखशोषादिपरिग्रहः । पित्ताधिक्यात् ज्वरादयः स्युः प्रलयो मूर्छातिशयः । 'प्रलयो नष्टचेष्टता' इत्यमरः । अन्ये प्रलपादय इति पठन्ति । प्रलपो मूर्छाप्रायः । प्रलाप इत्यन्ये । आदिशब्देन मदादिपरिग्रहः ॥

**कफाच्छर्द्यङ्गगुरुतावाक्सङ्गष्ठीवनादयः ॥ ९ ॥**

कफादधिकाच्छर्द्यादयः स्युः ष्ठीवनं प्रसेकः आदिशब्देन क्षवथ्वादीनां ग्रहणं दोषाणामन्यतमस्य वृद्धिराहारादिविशेषात् ॥ ९ ॥

**विशेषाद् दुर्बलस्याल्पवह्नेर्वेगविधारिणः ।**
**पीडितं मारुतेनान्नं श्लेष्मणा रुद्धमन्तरा ॥ १० ॥**
**अलसं क्षोभितं दोषैः शल्यत्वेनैव संस्थितम् ।**
**शूलादीन् कुरुते तीव्रांच्छर्द्यतीसारवर्जितान् ॥ ११ ॥**
**सोऽलसः ।**

**विशेषादित्यादि** । सर्वस्यैवाप्यतिमात्राशिनो मारुतेन पीडितमन्नं शूलादीन् करोति । विशेषतस्तु दुर्बलत्वादियुक्तस्य मारुतेन पीडितमन्नमन्तरा आमाशयमध्य एव श्लेष्मणा रुद्धं ऊर्ध्वमधश्च रुद्धमार्गमलसमलसीभूतं तथा दोषैः क्षोभितमाकुलितं अत एवातिपीडाकारित्वाच्छल्यत्वेनैव शल्यरूपत एव स्थितं तीव्रान् दुःसहान् शूलादीन पूर्वोक्तान् छर्द्यतीसारवर्जितान् कुरुते । छर्द्यतीसाराभ्यां हि विषूचिकोक्ता । सोऽलसः सः अलसो नामालसकविशेषः । दुर्बलो ह्यनुपचितधातुः पीडां सोढुमशक्तः । अल्पाग्नित्वादाहारं न सम्यग् जरयति वातमूत्रशकृतां वेगधारणशीलस्य वेगविधारणेन प्रतिहतो वायुर्विमार्गगः पित्तकफावपि विमा(र्गौ ? र्गगौ) कुरुत इत्यनेन विशेषादित्युक्तम् । अलं संक्षोभितमित्यपपाठः ॥

दण्डालसकं लिलक्षयिषुरिदमाह —

**अत्यर्थदुष्टास्तु दोषा दुष्टामबद्धखाः ।**
**यान्तस्तिर्यक्तनुं सर्वां दण्डवत्स्तंभयन्ति चेत् ॥ १२ ॥**
**स दण्डालसको नाम तं त्यजेदाशुकारिणम् ।**

अत्यर्थेत्यादि । चेद्यद्यर्थे अस्य त्वतिमात्राशिनः अलसादत्यर्थं दुष्टा

१. 'पि' ख. दा॰.

दोषा वातादयः तथा दुष्टामबद्धखाः पूर्वं प्रदुष्टेनामेन बद्धानि पूर्णानि खानि स्रोतांसि मार्गा यैस्ते एवम् । दुष्टानि आमबद्धानि स्रोतांसि यैरिति वा । तथा तिर्यक्स्रोतोभिर्गच्छन्तः कदाचिदस्य तनुं सर्वां सर्वाङ्गं शरीरं दण्डवद् यदि स्तम्भयन्ति दोषबलविशेषात् प्रसारणाकुञ्चनेन रहितां कुर्वन्ति तदा दण्डालसको नाम रोगो भवति । तं दण्डालसकं त्यजेत् । नोपक्रामेत् । यत आशुकारिणं आशु शीघ्रं स्वं कर्म मरणं करोति आशुकारी क्षिप्रं हन्तीत्यर्थः । दण्डकालसकं नाम तं त्यजेदित्यस्मद्गुरवः पठन्ति । दण्डकालकसंज्ञं त्यजेदिति हाटकः ॥

सम्प्रत्यामविषं निर्दिशति —

विरुद्धाध्यशनाजीर्णशीलिनो विषलक्षणम्[1] ॥ १३ ॥
आमदोषं महाघोरं वर्जयेद्विषसंज्ञकम् ।
विषरूपाशुकारित्वाद्विरुद्धोपक्रमत्वतः ॥ १४ ॥

विरुद्धेत्यादि । विरुद्धं प्रागुक्तं 'आनूपमामिषं माषक्षौद्रे'त्यादि । अध्यशनं संपूर्णभोजनानन्तरं भोजनं 'विद्यादध्यशनमि'त्यादिना वक्ष्यमाणलक्षणम् । अजीर्णं च त्रिविधं वक्ष्यति 'अजीर्णं च कफादाम'मित्यादि । विरुद्धादीन्येतानि प्रायेण शीलितुं शीलं यस्य तस्य पुंस आम 'ऊष्मणोऽल्पबलत्वेने'त्यादिना वक्ष्यमाणलक्षणो दुष्यति । तस्मिन् दुष्टे विषभुक्तस्येव या पीडोत्पद्यते तदाचार्या आमविषमाहुः । विषलक्षणं विषसदृशलक्षणं विषसदृशश्याववक्त्रत्वादिलक्षणयुक्तमित्यर्थः । महाघोरमतिकष्टं विषसंज्ञकं विषलक्षणत्वाद् विषाख्यं तमामदोषं वर्जयेत् न चिकित्सेत् । कुतः विषरूपत्वादाशुमरणकर्मकारित्वाद् विरुद्धोपक्रमत्वाच्च विषरूपो विषसदृशरूपः पीडाकर्तृत्वेनाशुकारित्वमाकालिकमरणकरणम् । विषे शीतोपक्रमो युक्तः आमे चोष्णोपक्रमो युक्त इति विरुद्धोपक्रमत्वम् । अथवा यदेकस्मिन् दोषे औषधमन्यस्मिन्नत्यर्थं विरुध्यत इति विरुद्धोपक्रमत्वम् । इन्दुस्तु आशु शीघ्रं स्वं कर्म मरणं कुर्वन्ति आशुकारिणः । तत्र हि दोषास्तथाविधं कोपमापद्यन्ते । यत्रैकस्मिन् दोष औषधमन्यस्मिन्नत्यर्थं विरुध्यत इति विरुद्धोपक्रमत्वमित्याह ॥ १४ ॥

साध्यस्यालसस्योपक्रममाह —

अथाममलसीभूतं साध्यं त्वरितमुल्लिखेत् ।
पीत्वा सोग्रापटुफलं वार्युष्णं योजयेत्ततः ॥ १५ ॥

---

१. 'णका' ख. पाठः.

स्वेदनं फलवर्तिं च मलवातानुलोमनीम् ।
नाम्यमानानि चांगानि भृशं स्विन्नानि वेष्टयेत् ॥ १६ ॥

अथेत्यादि । साध्यासाध्यज्ञानादनन्तरमिति केचित् । अरुणदत्तोऽपि अथेत्यानन्तर्ये इति पूर्वोक्तं साध्यासाध्यमवगम्यानन्तरमित्याह । हाटकोऽपि साध्यमिति ज्ञानानन्तरमेवेत्याह । असाध्यलक्षणमुक्तं संग्रहे —

"यः श्यावदन्तोष्ठनखोऽल्पसंज्ञ-
श्छर्द्यर्दितोऽन्तर्गतताम्रनेत्रः ।
क्षामस्वरः स्रस्तसमस्तसन्धि-
र्यायान्नरः सोऽपुनरागमाय ॥"

इति । आममपक्वमन्नं पूर्वोक्तसाध्यलक्षणसहितं त्वरितं द्रागुल्लिखेत् वमेद् आतुरः । किंभूतमामं अलसीभूतमलसकलक्षणतां गतं कथमुल्लिखेत् सोऽप्यापटुफलं वचालवणमदनफलयुक्तमुष्णं जलं पीत्वा वमेत् । ततो वमनानन्तरं स्वेदनं नानाविधं योजयेत् फलवर्तिं च मलवातानुलोमनीं योजयेत् । मदनफलप्रधानैर्विरेकद्रव्यैः कृता पिण्डी फलवर्तिः । उक्तं च —

"फलप्रधानैः कुम्भाद्यैर्मूत्रादिद्रवपेषितैः ।
पिण्डी कराङ्गुष्ठनिभा फलवर्तिरिति स्मृता ॥"
अपानमूत्रशकृतामप्रवृत्तौ रुजासु च ।
तां प्रयुञ्ज्याद् घृताभ्यक्तामक्ते पायौ विचक्षणः ॥"

अन्यत्राप्युक्तं —

"विपाच्य मूत्राम्लमधूनि दन्ती-
पिण्डीतकृष्णाविळधूमकुष्ठैः ।
वर्तिं कराङ्गुष्ठनिभां घृताक्तां
गुदे रुजानाहहरीं विदध्यात् ॥"

पाठ्याकारस्तु फलवर्तिरिति ।

शिरीषनक्ताह्वफणिर्जबीज-
त्रायन्त्यपामार्गफलानि वर्तिः ।
बस्तस्य मूत्रेण विषूचिकाघ्नी
प्रलेपनस्याञ्जनधूमयोगैः ॥

---

१. 'फलैश्च' इति संग्रहपाठः ।

इति सङ्ग्रहोक्तमङ्गीकुरुते । तत्र चामदोषे दोषवशादङ्गानि नाम्यमानानि सङ्कोच्यमानानि यदि भवन्ति ततस्तान्यत्यर्थं स्विन्नानि वस्त्रचर्मपट्टादिना वेष्टयेत् । आमदोषवशान्नाम्यमानानीति हाटकः ॥ १६ ॥

विसूच्यामतिवृद्धायां पार्ष्ण्योर्दाहः प्रशस्यते ।
तदहश्चोपवास्यैनं विरिक्तवदुपाचरेत् ॥ १७ ॥

विषूच्यां पूर्वोक्तायामतिवृद्धायां सत्यां पार्ष्ण्योरयःशलाकादिना दहेत् । एनं विषूचिकार्तं तदहो विषूचिकादिवसमुपवास्य लङ्घयित्वा विरिक्तवत् पेयादिक्रमेणोपाचरेत् अह इत्यत्यन्तसंयोगे द्वितीया ।

सामान्येनेति सिद्धोक्ता विषूच्यलसकक्रिया ।

इत्याकारोऽप्याह —

चिकित्सा विस्तरेणोक्ता संग्रहे त्वामपाचनी ।
सा योजनीया सकला संक्षेपोऽत्र विवक्षितः ॥

इति ॥ १७ ॥

तीव्रार्तिरपि नाजीर्णी पिबेच्छूलघ्नमौषधम् ।
आमसन्नोऽनलो नालं पक्तुं दोषौषधाशनम् ॥ १८ ॥

तीव्रार्तिरिति रोगप्राप्तं शूलहरौषधपानं निषेधति । तीव्रार्तिरतिदुःसहशूलः सन्नपि अजीर्णाशनः शूलहरमौषधं न पिबेत् । पूर्वोक्तं वमनकरमुष्णोदकमेव पिबेदित्यर्थः । शूलघ्नमित्युपलक्षणं छर्द्यतीसारघ्नमपि विषूचिकायां न पिबेत् । यस्मादामेन सन्नो मन्दीभूतोऽग्निर्दोषानौषधमजीर्णाशनं च युगपत् पक्तुं नालं न समर्थः एतेषां च दोषौषधाशनानां त्रयाणां सम्बन्धी यो विभ्रमो व्यापत्तिः सहसा कालमनवेक्ष्यैवातुरं निहन्यात् । न केवलमिदं गुणाय सम्पद्यते प्रत्युत दोषं करोतीति सूचनार्थमपि चेति कृतम् । केवलं गुणाय न सम्पद्यत इत्यपिशब्दार्थ इति हाटकः । अपि चेति पादसमुच्चये इतीन्दुः ॥

कदौषधं युञ्जीतेत्याह —

निहन्यादपि चैतेषां विभ्रमः सहसाऽऽतुरम् ।
जीर्णाशने तु भैषज्यं युञ्ज्यात् स्तब्धगुरूदरे ॥ १९ ॥

**दोषशेषस्य पाकार्थमग्नेः सन्धुक्षणाय च ।**

जीर्णाशन इत्यादि । जीर्णे अशनं यस्य तस्मिन् भेषज्यं औषधं युंज्याद् वैद्यः । तस्य लक्षणं स्तब्धगुरूदर इति निश्चलगुरुकोष्ठे अशनपाके दोषाणामपाके स्तब्धता निश्चलता गुरुता च उदरस्य यस्मात् तस्मात् तदानीं भेषजं योज्यम् । तदा प्रयोगस्य फलमाह — दोषशेषस्य पाकार्थे दोषैरजीर्णेन च सन्नस्य वह्नेर्दीपनाय ॥

तत्र च कीदृशमौषधं युञ्जीतेत्याह —

**शान्तिरामविकाराणां भवति त्वपतर्पणात् ॥ २० ॥**

**त्रिविधं त्रिविधे दोषे तत्समीक्ष्य प्रयोजयेत् ।**

शान्तिरित्यादि । आमजानां विकाराणां आलस्यजाड्याग्निमान्द्यादीनाम् । तुरवधारणे । अपतर्पणादेव शान्तिरुपशमो भवति । वक्ष्यति च — 'मेहामदोषातिस्निग्धेत्यादि लङ्घयेद्' इति । अत एव त्रिविधं त्रिप्रकारं तदपतर्पणं समीक्ष्य देशकालाग्न्यादीन् पर्यालोच्य त्रिप्रकारे दोषे वैद्यः प्रयोजयेत् ॥

एतदेव यथायोगमाह —

**तत्राल्पे लङ्घनं पथ्यं मध्ये लङ्घनपाचनम् ॥ २१ ॥**

**प्रभूते शोधनं तद्धि मूलादुन्मूलयेन्मलान् ।**

तत्रेत्यादि । तत्र तेषु त्रिषु मध्येऽल्पे दोषे लङ्घनमुपवासाख्यं पथ्यं लङ्घनस्याविशेषोक्तावुपवासः प्रगृह्यते । तेन ह्यनिलानलवृद्ध्याल्पदोषः शीघ्रं संशोष्य जीर्यते । मध्ये दोषे लङ्घनपाचनं पथ्यं लङ्घनमुपवासः पाचयतीति पाचनमन्नपानौषधं पचतोऽग्नेः प्रतिबन्धकनिषेधेन पाटवोपपादनत्वादतर्पणस्य पचनत्वं तस्माल्लङ्घनपाचनमतर्पणं मध्ये दोषे । प्रभूते दोषे शोधनं पथ्यं कुत इत्याह — हि यस्मात् तच्छोधनरूपमतर्पणं मलान्मूलादुन्मूलयेन्नाशयेत् । वक्ष्यति च—

"यदीरयेद् बहिर्दोषान् पञ्चधा शोधनं च तत् ।"

इत्यादि ॥

**एवमन्यानपि व्याधीन् स्वनिदानविपर्ययात् ॥ २२ ॥**

**चिकित्सेदनुबन्धे तु सति हेतुविपर्ययम् ।**

**त्यक्त्वा यथायथं वैद्यो युञ्ज्याद्व्याधिविपर्ययम् ॥ २३ ॥**

एवमित्यादि । यथा सन्तर्पणोत्थ आमदोषो निदानविपर्ययाच्चिकित्स्यते । एवमन्यानपि ज्वरादिविकारान् स्वनिदानविपर्ययाच्चिकित्सेत् सन्तर्पणोत्थमपतर्पणेन शीतोत्थमुष्णेन रूक्षोत्थं स्निग्धेनेत्यादि । अनुबन्धे तु सति एवमुपक्रम्यमाणेऽपि व्याधावनुबध्यमाने सति निदानविपरीतमौषधमपास्य यथायथमात्मीयं वक्ष्यमाणं व्याधिविपर्ययं भैषज्यं प्रयुञ्जीत यथा — मुस्ता-पर्पटकं ज्वरे तृषि जलं रजनी प्रमेहे शोफे आर्द्रकमित्यादि ॥ २३ ॥

न च हेतुव्याधिविपर्यययोरेव चिकित्सायामुपयोग इति दर्शयन्नाह —

**तदर्थकारि वा पक्वे दोषे त्विद्धे च पावके ।**
**हितमभ्यञ्जनस्नेहपानबस्त्यादि युक्तितः ॥ २४ ॥**

तदर्थकारि वेति । तच्छब्देन हेतुव्याधिविपर्ययौ गृह्येते निदानव्याधिविपर्ययसाध्यमर्थं रोगोपशमनलक्षणं कर्तुं शीलं यस्य तत् तदर्थकारि वा युञ्ज्यात् । यथा मदात्यये मद्यपानं 'छर्द्यां छर्दिरतीसारे विरेचनमित्यादि । वाशब्दः समुच्चयार्थः । न हेतुविपरीतमात्रेणैव कृतार्थतामालम्बेत इति त्रिविधमौषधं निर्दिश्यामचिकित्सामेवानुसरन्नाह — पक्के दोषे निरामे दोषे दीप्ते पावके च निरामत्वे दीप्ताग्नित्वे च समुदित एवाभ्यङ्गादि हितं युक्तितो मात्रया यथाग्निसादादि न भवति । तुः सङ्ग्रहोक्तां चिकित्सां विशेषयति —

"द्विक्षारजीर्णपिण्याककुष्ठारुष्करचित्रकैः ।
सशुक्तसैन्धवैस्तैलं सिद्धमभ्यञ्जने हितम् ॥
सुच्छर्दितविरिक्तस्य गात्रायामेऽतिदारुणे ।
भल्लातकमधूच्छिष्टसीसपिण्याकनागरैः ॥
घृततैलं पचेत् साम्लैस्तच्च खल्लीघ्नमुत्तमम् ।

आदिशब्देनाञ्जनोद्वर्तनादि सङ्ग्रहोक्तं गृह्यते ।

"व्योषं करञ्जस्य फलं हरिद्रामम्लं त्वचं वाप्यथ मातुलुङ्ग्याः ।
छाया विशुष्का गुलिकीकृतास्ता हन्युर्विषूचीं नयनाञ्जनेन ॥
त्वक्पत्ररास्नागरुशिग्रुकुष्ठैरम्लप्रपिष्टैः सवचाशताह्वैः ।
उद्वर्तनं खल्लिविषूचिकाघ्नं तैलं विपक्वं च तदर्थकारि ॥ २४ ॥

आमदोषविशेषत्वादजीर्णमप्याह —

**अजीर्णं च कफादामं तत्र शोफोऽक्षिगण्डयोः ।**
**सद्योभुक्त इवोद्गारः प्रसेकोत्क्लेशगौरवम् ॥ २५ ॥**

अजीर्णमित्यादि । कफादजीर्णमामं आमसंज्ञकं भवति । तत्रामाख्येऽजीर्णेऽक्षिकूटयोर्गण्डयोश्च शोफो भवति । गण्डशब्दोऽक्षिको(च ? श)वाचीति हृद्याकारः । सद्यो भुक्त इवाप्राप्तविदाहावस्थ इवोद्गारः । प्रसेकः प्रसक्तनिष्ठीवनम् । उत्क्लेशो दोषाणां स्वस्थानाच्चलनम् । गौरवं गात्राणाम् । अग्निप्रतिपक्षत्वेन कफस्याजीर्णकरणे प्राधान्यख्यापनार्थमग्रे निर्देशः । तदनन्तरं शीतत्वादामकरत्वं वायोरिति ॥ २५ ॥

अत आह—

**विष्टब्धमनिलाच्छूलविबन्धाध्मानसादकृत् ।**
**पित्ताद्विदग्धं तृण्मोहभ्रमाम्लोद्गारदाहकृत् ॥ २६ ॥**

विष्टब्धमिति । अनिलाद् विष्टब्धं नामाजीर्णं भवति । तच्च शूलादिकृत् । पित्ताद् विदग्धं नामाजीर्णमुत्पद्यते । तच्च तृडादियुक्तम् ॥ २६ ॥

त्रिविधस्यैवास्य चिकित्सामाह—

**लङ्घनं कार्यमामे तु विष्टब्धे स्वेदनं भृशम् ।**
**विदग्धे वमनं यद्वा यथावस्थं हितं भवेत् ॥ २७ ॥**

लङ्घनमित्यादि । तुरवधारणे । आमाख्ये अजीर्णे लङ्घनमेव कार्यं न वमनविरेचनादि । लङ्घनमुपवासः । विष्टब्धे स्वेदनं भृशं कार्यं भृशशब्देनैतद् द्योतयति पूर्वत्रापि स्वेदनं कार्यमत्र त्वत्यर्थमिति । विदग्धनाम्न्यजीर्णे वमनं कार्यम् । यद्वा लङ्घनस्वेदनवमनानां यथावस्थं यथा दोषोद्रेकं हितं भवेत् तदेव कार्यम् । अवस्थाविशेषेण वा सर्वमेतत् सर्वत्रापीत्यर्थः । यथा आमाजीर्णेऽपि स्वेदनवमने विदग्धेऽपि लङ्घनस्वेदने ॥ २७ ॥

एतत्प्रसङ्गादिदमाह —

**गरीयसो भवेल्लीनादामादेव विलम्बिका ।**
**कफवातानुविद्धामलिङ्गा तत्समसाधना ॥ २८ ॥**

गरीयस इत्यादि । गरीयसः प्रभूताद् अजीर्णादेव विलम्बिका नाम व्याधिरजीर्णविशेषः स्यात् कीदृशात् लीनात् स्रोतःसु श्लिष्टात् । धातुष्वनुश्लिष्टादिति हृद्याकारः । महास्रोतसि लीनाद् इतीन्दुः । सा च श्लेष्मवाताभ्यामनुविद्धा युक्ता आमलिङ्गा आमं नाम यदजीर्णं तत्सदृशलक्षणा आमनामाजीर्णसदृशलक्षणा यथा शोफोऽक्षिगण्डयोः सद्योभुक्त इवोद्गारः प्रसेकोत्क्लेशगौरवम् ।

इति। तत्समसाधना तेनामेन समं तुल्यं साधनं चिकित्सा यस्याः सैवम्। लङ्घनं कार्यमाम इति। हृद्याकारस्त्वाह — आमात् कफाजीर्णाद् विलम्बिका स्यात्। आमविष्टब्धलक्षणा तत्समसाधना तयोश्चिकित्सा चिकित्स्येति इति ॥ २८ ॥

जीर्णेऽप्याहारे कदाचिदाहारसारो रसोऽजीर्णः स्यात् तल्लक्षणमाह—

**अश्रद्धा हृद्व्यथा शुद्धेऽप्युद्गारे रसशेषतः।**
**शयीत किंचिदेवात्र सर्वश्चानाशितो दिवा ॥ २९ ॥**

**स्वप्यादजीर्णी सञ्जातबुभुक्षोऽद्यान्मितं लघु।**

**अश्रद्धेत्यादि**। शुद्धेऽप्युद्गारेऽन्नसम्बन्धिनि रसशेषतो रसशेषामाद् अन्नाश्रद्धा तथा हृद्व्यथा हृदयशूलं च भवतः गात्रगौरवं च। वचनं हि —

"आमं मधुरपाके तु विदग्धं चाम्ल एव तु।
विष्टब्धं कटुको विद्यादत्याहारस्य सेविनः॥

रसावशेषं जानीयाद् रसशेषं भिषग्वरः!
तेन गात्रगुरुत्वं स्यादन्नस्यानभिनन्दनम्॥

इति। तच्चिकित्सामाह— अत्र रसशेषामे अभुक्त्वा किञ्चिदेव शयीत स्तोकमात्रमेव स्वप्यात् नाजीर्ण इव प्रभूतम्। सर्वश्चाजीर्णी अनशितो दिवा स्वप्यात् यदि च सञ्जातबुभुक्षः स्यात् तदा स्तोकं लघु चाद्यात्। लघुशब्देन स्वभावलघूनां ग्रहणम्। ननु पूर्वमप्यजीर्ण्यभिद्रतोन्मत्तानि'त्यनेनैव वाक्येनाजीर्णिनो दिवा स्वप्नोऽनुज्ञात एव तत् किमिदानीं पुनरुक्तेन। ब्रूमः। विशेषार्थमिदं वाक्यं अभुक्तो दिवा स्वप्यादजीर्णीति तत्र तु सामान्यमुदितमशितानशितचिन्ता न कृतेति एवमत्रानशितमिति विशेषान्न पुनरुक्तिः। संजातबुभुक्षस्य लक्षणमुक्तं तन्त्रान्तरे —

उद्गारशुद्धिरुत्साहो वेगोत्सर्गो यथोचितः।
लघुता क्षुत्पिपासे च जीर्णाहारस्य लक्षणम्॥

इति॥

साम्प्रतं सामान्येनाजीर्णानां सर्वेषां लक्षणमाह —

**विबन्धोऽतिप्रवृत्तिर्वा ग्लानिर्मारुतमूढता ॥ ३० ॥**

अजीर्णलिङ्गं सामान्यं विष्टम्भो गौरवं भ्रमः।

विबन्ध इत्यादि। विबन्धोऽप्रवृत्तिर्मूत्रशकृतोः अतिप्रवृत्तिस्तयोरेव। ग्लानिः शरीरस्य। मारुतस्य मूढता प्रतिलोमता। विष्टम्भः कुक्षेराध्मानम्। गौरवं शरीरस्य। भ्रमो मोहः॥

अजीर्णस्याम्यान्यपि कारणान्याह—

न चातिमात्रमेवान्नमामदोषाय केवलम्॥ ३१॥

द्विष्टविष्टंभिदग्धामगुरुरूक्षहिमाशुचि।

विदाहि शुष्कमत्यम्बुप्लुतं वान्नं न जीर्यति॥ ३२॥

उपतप्तेन भुक्तं च शोकक्रोधक्षुधादिभिः।

नचेत्यादि। अतिमात्रं भुक्तमेवान्नं न केवलमामदोषाय किं तर्हि द्विष्टादि चान्नं मात्रयापि भुक्तं न जीर्यति आममेव दुष्यति। द्विष्टमप्रियम्। विष्टम्भि कुक्ष्याध्मानकारि। दग्धमतिदग्धम्। आममपक्वम्। गुरु स्वभावगुरु। रूक्षं स्वभावरूक्षं निःस्नेहरूक्षं वा। हिममतिशीतम्। अशुचि उच्छिष्टं केशादिदूषितं च। द्विष्टाद्याहारे चित्तस्यान्यथाभावादग्नेरपि वैषम्यादामोत्पत्तिः। प्रभावादिति हाटकः। विदाहि सौम्यभावानां विदहनशीलम्। शुष्कमद्रवप्रायम्। अत्यम्बुप्लुतमतिजलपानादाप्लावितम्। प्रमाणाधिकजलपक्वमिति पाठ्याकारः। अतिद्रवालुलितमित्यन्ये। तथा शोकादिभिरुपतप्तेन भुक्तमन्नं च न जीर्यति। चः समुच्चये आदिशब्देन लोभादिपरिग्रहः॥

सम्प्रति अपरमप्यन्नमामदोषकरमिति दर्शयति—

मिश्रं पथ्यमपथ्यं च भुक्तं समशनं मतम्॥ ३३॥

विद्यादध्यशनं भूयो भुक्तस्योपरि भोजनम्।

अकाले बहु चाल्पं वा भुक्तं तु विषमाशनम्॥ ३४॥

त्रीण्यप्येतानि मृत्युं वा घोरान् व्याधीन् सृजन्ति वा।

मिश्रमित्यादि। पथ्यं शाल्यादि। अपथ्यं यवकादि। मिश्रमेकीकृत्य भुक्तं समशनं मतं अभिमतमस्मिन् वैद्यकतन्त्रे। भुक्तस्याप्यबहुतस्योपरि यद् भोजनं तदध्यशनं विद्यात्। यथोचितं भुक्त्वा किञ्चित्कालमतिक्रम्य यदुपरि भुज्यते तदध्यशनं अधिशब्दोऽत्रोपरिपर्यायः यथा प्रासादमधिरोहतीति। आह—

"प्रातराशे त्वजीर्णेऽपि सायमाशो न दुष्यति।"

इति वचनात् तस्याप्यध्यशनत्वं सम्प्रसज्यते । ब्रूमः । प्राग्भक्तस्योपरि, समनन्तरमेवाम्लावविभक्ते यदशनं तदेवाध्यशनं नान्यत् तथा च सुश्रुतोऽधीते —

"प्राग्भक्ते त्वविभक्तेऽग्नौ द्विरन्नं न समाचरेत् ।"

इति । तस्मात् प्रातराशे कृते सत्यग्नौ विभक्ते यः सायमाशः स न परिहार्यः अपि तु कार्य एव गुणावहत्वात् । ततः प्रातराशसायमाशयोरन्यदेवोच्यते भोजनमध्यशनमिति तयोः सर्वत्र विधानात् । यथाह —

"सायं प्रातर्द्विजादीनामशनं श्रुतिचोदितम् ।
नान्तरा भोजनं कुर्यादग्निहोत्रसमो विधिः ॥"

इति । वैद्यतन्त्रेष्वपि नराणां द्विराहार उपदिष्टः । एतदेव प्रतिपादयितुं सङ्ग्रहेऽध्यगीष्ट —

"पूर्वाह्णे भोजनं सात्म्यं लघुदीपनबृंहणम् ।
प्रातराशेऽल्पजीर्णेऽपि सायमाशो न दुष्यति ॥
दिवा प्रबुध्यतेऽर्केण हृदयं पुण्डरीकवत् ।
तस्मिन् विबुद्धे स्रोतांसि स्फुटत्वं यान्ति सर्वतः ॥
व्यायामाच्च विचाराच्च विक्षिप्तत्वाच्च चेतसः ।
न क्लेदमुपगच्छन्ति तदा तेनास्य धातवः ॥
अक्लिन्नेष्वन्नमासिक्तमन्यत् तेषु न दुष्यति ।
अविदग्धेष्विव पयस्स्वन्यत् सम्मिश्रितं पयः ॥
रात्रौ तु हृदये म्लाने संवृतेष्वयनेषु च ।
प्रक्लेदं यान्ति कोष्ठे च संवृते देहधातुषु ।
क्लिन्नेष्वन्यदपक्वेषु तेष्वासिक्तं प्रदुष्यति ॥
विदग्धेषु पयस्स्वन्यत् पयस्तप्तमिवार्पितम् ।
नैशे तस्मादजीर्णेऽन्ने नान्यद् भुञ्जीत भोजनम् ॥"

इति । अकाले 'विसृष्टे विण्मूत्र' इत्यादिना वक्ष्यमाणकालस्य विपरीते कालेऽप्राप्ते अतीते वा भुक्तं त्वशनं विषमाशनसंज्ञं कालेऽपि बहुमात्रं वा विषमाशनम् । कालमात्राद्यनियतं विषमाशनमिति हृद्याकारः । त्रीण्यप्येतानि समशनाध्यशनविषमाशनानि मृत्युं वा घोरान् व्याधीन् वा गुल्मादीन् सृजन्ति । सम्पूर्णानि मृत्युकराणि न्यूनानि रोगकराणि ॥

---

१. 'त्वजी' इति मुद्रितसङ्ग्रहे.

अन्नपानविधिमाह—

काले सात्म्यं शुचि हितं स्निग्धोष्णं लघु तन्मनाः ॥ ३५ ॥
षड्रसं मधुरप्रायं नातिद्रुतविलम्बितम् ।
स्नातः क्षुद्वान् विविक्तस्थो धौतपादकराननः ॥ ३६ ॥
तर्पयित्वा पितॄन् देवानतिथीन् बालकान्गुरून् ।
प्रत्यवेक्ष्य तिरश्चोऽपि प्रतिपन्नपरिग्रहान् ॥ ३७ ॥
समीक्ष्य सम्यगात्मानमनिन्दन्नब्रुवन् द्रवम् ।
इष्टमिष्टैः सहाश्नीयाच्छुचि भक्तजनाहृतम् ॥ ३८ ॥

काल इत्यादि । काले उचिते वक्ष्यमाणे तन्मना भोजनगतचित्तः क्षुद्वानिति प्रशंसायां मतुप् प्रशस्तबुभुक्ष इत्यर्थः । तेन किञ्चिदपि,

"दोषोपनद्धं यदि लीनमन्नं
पित्तोल्बणस्यावृणुयाच्च वह्निम् ।
जायेत दुष्टा तु ततो बुभुक्षा
या मन्दबुद्धीन् विषवन्निहन्ति ॥"

इति प्रोक्तलक्षणाद् दुष्टा बुभुक्षा यदा तु स्यात् तदा नाद्यादित्यर्थः । विविक्तस्थः एकान्तस्थितः तथा धौतपादकराननः क्षालितचरणहस्तमुखः अनिन्दन् भोजनमगर्हमाणः अब्रुवन्नभाषमाणः इष्टं मनोरुचितं इष्टं ह्यशनं शरीरस्थितिहेतुः । आगमो हि इष्टवर्णगन्धरसस्पर्शविधिहितमन्नपानं प्राणिनप्राणमाचक्षते कुशलाः । प्रत्यवेक्षणाहारशीलिनां प्राणिनां प्राणानामवस्थानात् । तदिन्धनाभ्यन्तराग्नेः स्थितिः । अग्निस्थित्या प्राणानुवृत्तिः । बलमारोग्यमायुश्च प्राणाश्चाग्नौ प्रतिष्ठिता इति । तथा द्रवं द्रवप्रायं साद्म्यादिगुणयुक्तमन्नमिष्टैः मित्रैः सहाश्नीयात् । सात्म्यं द्विधा एकं स्वल्पकालाभ्यस्तमन्यच्च यज्जन्मनः प्रभृति सहात्मनाभ्यस्तं सुखावहं च । शुचि अनुच्छिष्टं केशाद्यनुपहतं च । हितं पथ्यञ्च । स्निग्धं च तदुष्णं च स्निग्धोष्णम् । तथा लघु लघुप्रायं न तु लघ्वेव यतो मधुरप्रायमिति मधुररसस्य गुरुत्वादनुपपत्तिः । तथा षड्रसं मधुरप्रायं प्रभूतमाधुर्यं 'शीते वर्षासु चाद्यांस्त्रीन्' इत्यादिना यस्मिन्नृतौ यो रसोऽधिकत्वेनोक्तः तद्व्यतिरिक्तेषु मधुरस्य प्रभूततत्वमित्यर्थः । कथमश्नीयात्

नातिद्रुतविलम्बितं अतिद्रुतभोजने गुणदोषाविभावनमन्यनाडीगमनम् । अतिविलम्बितभोजनेनातृप्तिरन्नस्य विषमपाकित्वं ब(हुवच ? हुश)नता च । किं कृत्वा पित्रादींस्तर्पयित्वा अतिथिरागन्तुर्भोजनार्थी । तथा तिरश्चोऽपि गवाश्वादीन् प्रतिपन्नपरिग्रहान् आत्मना प्राप्तस्वीकारान् कृतस्वीकारान् प्रत्यवेक्ष्य भोजनादिना तदाहारचिन्तां कृत्वेत्यर्थः । तथात्मानं सम्यक् समीक्ष्य यथा ममेदं सादृम्यमिदमसादृम्यमित्यादि नित्यमप्रमत्तः पर्यालोच्य किंभूतमन्नं शुचिः निर्व्याजस्तथा भुक्तो यो जनस्तेनाहृतं शुचिभक्तजनाहृतमिति वा पाठः ॥ ३८ ॥

भोजनं तृणकेशादिजुष्टमुष्णीकृतं पुनः ।
शाकावरान्नभूयिष्ठमत्युष्णलवणं त्यजेत् ॥ ३९ ॥

भोजनमित्यादि । तृणकेशादिजुष्टं भोजनं त्यजेत् । आदिशब्देन मक्षिकादिपरिग्रहः । तथा पुनरुष्णीकृतं तथा शाकबहुलं तथावरान्नं माषादि तद्भूयिष्ठं तथात्युष्णमतिलवणं च त्यजेत् ॥ ३९ ॥

किलाटदधिकूचीकाक्षारशुक्तामभूलकम् ।
कृशशुष्कवराहाविगोमत्स्यमहिषामिषम् ॥ ४० ॥

माषनिष्पावशालूकबिसपिष्टविरूढकम् ।
शुष्कशाकानि यवकान् फाणितं च न शीलयेत् ॥ ४१ ॥

तथा कीलाटादीन् न शीलयेत् नाभ्यसेद् गौरवात् । तथा चागमः—'नाभ्यसेद् गौरवादि'ति । कादाचित्कोऽभ्यवहार एषां न निषिध्यते । तर्हि कदाचिद् गोमांसस्यापि सेवा प्राप्नोति इति चेत् । न । तत्सेवनस्य पूर्वमेव निरस्तत्वात् । अथवातिक्रान्तविषयः शकबर्हादिनृपा गोमांसं भक्षयन्ति तद्विषयमिदं वचनमिति निर्वाहः । कीलाटादीनां गुरुत्वातिरिक्तं कारणान्तरमप्यस्ति कीलाटादीनां दोषकरत्वं दध्नस्तु ज्वरकर्तृत्वं क्षारस्य शुक्रहानिकृत्त्वं 'क्षारः पुंस्त्वोपघातिनामि'त्यादिना एवमप्यूह्यम् ॥ ४१ ॥

शीलयेच्छालिगोधूमयवषष्टिकजाङ्गलम् ।
सुनिषण्णकजीवन्तीबालमूलकवास्तुकम् ॥ ४२ ॥

पथ्यामलकमृद्वीकापटोलीमुद्गशर्कराः ।
घृतदिव्योदकक्षीरक्षौद्रदाडिमसैन्धवम् ॥ ४३ ॥
त्रिफलां मधुसर्पिर्भ्यां निशि नेत्रबलाय च ।

शीलयेदित्यादि । शालिगोधूमाद्यन्नं घृतदिव्योदकादिपानमौषधेषु मधुसर्पिर्भ्यां सह त्रिफलां च रात्रौ नेत्रबलाय शीलयेदित्यर्थः ॥

स्वास्थ्यानुवृत्तिकृद्यच्च रोगोच्छेदकरं च यत् ॥ ४४ ॥

स्वास्थ्येत्यादि । न केवलं शाल्यादीन्येव शीलयेत् यच्च द्रव्यं स्वास्थ्यानुवृत्तिं करोति ऋतुचर्याद्युक्तमन्नपानं तच्च शीलयेत् । यच्च द्रव्यं रोगोच्छेदकरं किराततिक्तादि तच्च शीलयेत् । स्वास्थ्यानुवृत्तिकृदिति द्विविधमौषधं ऊर्जस्करं रोगघ्नं च तत्रोर्जस्करं द्विविधं रसायनं वाजीकरणं च रोगघ्नमपि द्विविधं रोगस्य प्रशमनं पुनर्भावनिरोधकं च ॥ ४४ ॥

बिसेक्षुमोचचोचाम्रमोदकोत्कारिकादिकम् ।
अद्याद् द्रव्यं गुरु स्निग्धं स्वादु मन्दं स्थिरं पुरः ॥ ४५ ॥
विपरीतमतश्चान्ते मध्येऽम्ललवणोत्कटम् ।

बिसेत्यादि । बिसादिद्रव्यं गुर्वादिगुणयुक्तं पुरः पूर्वमद्यात् । अतोऽस्माच्च विपरीतं लघुरूक्षतीक्ष्णसरमा(यः ? यं) अन्ते भोजनस्यान्ते अद्यात् । अम्ललवणोत्कटद्रव्यं मध्येऽद्याद् गुरुद्रव्यस्यान्ते विधानात् समानतन्त्रविरोधः तथा हि —

"पूर्वं तिक्तकटुप्रायं मध्येऽम्ललवणोत्कटम् ।
अन्ते कषायमधुरं नित्यमाहारमाहरेत् ॥"

इति । अग्निविशेषापेक्षयेति परिहारः । प्रबलाग्नेरादौ गुरूपयोगः । मन्दाग्नेरादौ लघूपयोगः तद्वृद्ध्यर्थम् । इत्यादि निरूप्य युक्त्या देशकालसात्म्याद्यपेक्षया सर्वं प्रमाणयितव्यम् ॥

अन्नेन कुक्षेर्द्वावंशौ पानेनैकं प्रपूरयेत् ॥ ४६ ॥
आश्रयं पवनादीनां चतुर्थमवशेषयेत् ।

अन्नेनेत्यादि । कुक्षेर्जठरस्य द्वावंशौ भागौ अन्नेनाद्द्रव्यरूपेण ओदनादिना पूरयेत् । पानेन द्रवद्रव्येण जलादिना एकमंशं पूरयेत् चतुर्थमंशं पव-

नादीनां दोषाणामाश्रयं सञ्चरणस्थानमवशेषयेत् न त्वन्नेन पानेन वा पूरयेत्। चतुर्थांशः परिशेषणीयो वाय्वादिसञ्चारार्थः। मध्यमद्रव्याणामियं मात्रोच्यते —

"गुरूणामर्धसौहित्यं लघूनां नातितृप्तता।"

इत्युक्तत्वादिति हृद्याकारः। पूर्वोक्तया मात्रयैव द्रवकठिनविशेषः कथ्यत इत्यस्मद्गुरवः। हाटकोऽप्येवमाह — एषा च कल्पना अर्धभागत्रिभागतृप्तानुमीयते न कुक्षेर्भागो विज्ञायते इति। इयमुक्ता मात्रा अविचारितगुरुलाघवेन नानाविधद्रव्यसमुदायात्मकेनान्नेन पिण्डपरिणामलक्षणा न तु प्रतिद्रव्यापेक्षलक्षणा। तस्या गुरूणामर्धसौहित्यमित्यादिनोक्तिः। एवं मात्रा द्विविधा आ(धा)हि[1] मात्रा पुनः पिण्डीपरिणामतः। प्रतिद्रव्यापेक्षया चाहारराशिरिति। भुञ्जानस्य रुच्यर्थमात्रस्य प्रक्षालनं मुहुः कार्यम्। तथा च सौश्रुते —

"प्रक्षालयेदद्भिरास्यं भुञ्जानस्य मुहुर्मुहुः।
विशुद्धे रसने ह्यस्मिन् रोचतेऽन्नमपूर्ववत्॥"

इति॥

भुक्तस्योपरिपानमनुपानं तदाह —

अनुपानं हिमं वारि यवगोधूमयोर्हितम्॥ ४७॥
दध्नि मद्ये विषे क्षौद्रे कोष्णं पिष्टमयेषु तु।
शाकमुद्गादिविकृतौ मस्तुतक्राम्लकाञ्जिकम्॥ ४८॥
सुरा कृशानां पुष्ट्यर्थं स्थूलानां तु मधूदकम्।
शोषे मांसरसो मद्यं मांसे स्वल्पे च पावके॥ ४९॥
व्याध्यौषधाध्वभाष्यस्त्रीलङ्घनातपकर्मभिः।
क्षीणे वृद्धे च बाले च पयः पथ्यं यथामृतम्॥ ५०॥

अनुपानमित्यादि। यवगोधूमयोर्भुक्तयोर्हिमं शीतं जलमनुपानं हितं सर्वरसयोनित्वादनुपानं श्रेष्ठम्। तथा चागमः —

"उदकं चानुपानानां सर्वेषां श्रेष्ठमुच्यते।
रसानामप्रतीभासात् तस्माद् दोषे च? निन्दितम्॥"

इति। अनुशब्दः पश्चादर्थे। दध्यादिष्वपि हिमं जलमनुपानं हितम्। पिष्टमयेषु तु कोष्णं जलमनुपानम्। शाके मुद्गादिविकृतौ च मस्त्वादिकमनुपानम्।

---

१. 'हृ' ग. पाठः.

कृशानां पुंसां सुरा पुष्ट्यर्थमनुपानं हितम् । स्थूलानां तु कर्शनाय मधुसंपृक्तमुदकं हितम् । शोषे क्षये मांसरसो हितः पुष्टिकरत्वात् मांसे शुक्रे मद्यमनुपानम् । स्वल्पे च पावके मद्यं हितम् । व्याध्यादिभिः क्षीणे क्षपिते पयो दुग्धं पथ्यं हितमिति । प्रकृतेऽपि पथ्यग्रहणं पथ्यतरत्वज्ञापनार्थं यथामृतंबलवर्णौजःकान्त्यायुरादिजनकं तथेदमपीत्यर्थः । अत एव पथ्यतरत्वम् ॥ ५० ॥

विपरीतं यदन्नस्य गुणैः स्यादविरोधि च ।
अनुपानं समासेन सर्वदा तत्प्रशस्यते ॥ ५१ ॥
अनुपानं करोत्यूर्जां तृप्तिं व्याप्तिं दृढाङ्गताम् ।
अन्नसङ्घातशैथिल्यविक्लित्तिजरणानि च ॥ ५२ ॥
नोर्ध्वजत्रुगदश्वासकासोरःक्षतपीनसे ।
गीतभाष्यप्रसङ्गे च स्वरभेदे च तद्धितम् ॥ ५३ ॥

विपरीतमित्यादि । अनुक्तस्यानुपानस्य विधिः । अस्यान्नस्येदमनुपानमिति यत्र न विहितं तत्र यदन्नस्य भुक्तस्य गुणैर्विपरीतं तदनुपानं सर्वदा प्रशस्यते प्रयोज्यमित्यर्थः । यथा मधुरस्याम्लं शीतस्योष्णं रूक्षस्य स्निग्धमित्यादि । नन्वेवं सति क्षीरादीनां तक्राद्यनुपानं प्राप्तमित्याह — अविरोधि चेति । विपरीतगुणमपि यदविरोधि तदनुपानं सदा हितम् ॥

अनुपानस्य किं कर्मेत्याह — अनुपानमूर्जादीन् करोति । ऊर्जा मनःप्रहर्ष इति हाटकः । तृप्तिः प्रीणनं शरीरेन्द्रियस्य क्षामताविपरीतोऽन्नगुणः क्षामताविपरीत्यमित्यर्थः । व्याप्तिः कठिनानामपि भावानां सर्वत्र्यापित्वम् । दृढाङ्गता दृढशरीरत्वम् । अन्नसङ्घातस्य शैथिल्यादीनि च करोति । विक्लित्तिर्विक्लेदनम् ॥

एवंगुणमपि तदनुपानं ऊर्ध्वजत्रुगदादिषु न हितं न पेयमित्यर्थः । जत्रुण ऊर्ध्वमूर्ध्वजत्रु तस्मिन् गदास्तेषु तथा गीतभाष्ययोः प्रकर्षेण सङ्गः सातत्येन सम्बन्धः अनुसन्धानमित्यर्थः । तस्मिन् अनुपानं न हितम् ॥ ५३ ॥

सम्प्रति येषां पानमेव न हितं तानाह —

प्रक्लिन्नदेहमेहाक्षिगलरोगव्रणातुराः ।
पानं त्यजेयुः सर्वश्च भाष्याध्वशयनं त्यजेत् ॥ ५४ ॥
पीत्वा भुक्त्वातपं वह्निं यानं प्लवनवाहनम् ।

**प्रक्लिन्नेत्यादि**। कर्दमविसर्पादिना प्रक्लिन्नो देहो येषां ते पानं त्यजेयुः। मेहादीनामातुरशब्देन प्रत्येकं सम्बन्धः। प्रमेहाद्यातुरः पानं त्यजेयुः द्रवरूपं सर्वं त्यजेयुः न केवलमन्नपानस्योपरि यदनुपानम्। खरनादे चोक्तं —

"मेही प्लीही व्रणी कुष्ठी पाण्डुर्जठरपीनसी।
शोफातिसारी मन्दाग्निः पानीयं मन्दमाचरेत्॥"

इति॥ तथा —

"नोर्ध्वाङ्गपवनाविष्टे जाड्यायां मेहने तथा।
क्षतोरसि श्वासकासहिध्माछर्द्यर्दितातुरे॥
निरन्ने चोर्ध्वरोगे च न पेयं वारि शीतलम्।"

इति॥

**सर्वश्चेत्यादि**। पीत्वा भुक्त्वा चेतिशब्दो लुप्तनिर्दिष्टः सर्वश्च स्वस्थो रोगी वा पुरुषः पीत्वा भुक्त्वा च भाष्यादींस्त्यजेत् तथा आतपादीन् पञ्च त्यजेदिति योज्यम्। भुक्त्यनन्तरमेवायं प्रतिषेधः पश्चाच्छयनाद्यभिमतमेव

"ततः पदशतं गत्वा वामपार्श्वेन संविशेत्।"

इति वचनात्। यानं रथादि। प्लवनं तरणम्। वाहनमश्वादि। यानप्लवनधावनमिति पाठे धावनमश्वादिभिः। पीत्वा भाष्यादि त्यजेत् भुक्त्वातपादि त्यजेदित्यस्मद्गुरवः॥ ५४॥

काले सात्म्यमित्युक्तं तस्य भोजनस्य कः काल इत्याह —

**प्रसृष्टे विण्मूत्रे हृदि सुविमले दोषे स्वपथगे**
**विशुद्धे चोद्गारे क्षुदुपगमने वातेऽनुसरति।**
**तथाग्नावुद्रिक्ते विशदकरणे देहे च सुलघौ**
**प्रयुंजीताहारं विधिनियमितः कालः स हि मतः॥ ५५॥**

**प्रसृष्ट इत्यादि**। सर्वेषां हेतुहेतुमद्भावलक्षणत्वमात्रं वा आहारं विधिना पूर्वोक्तेन 'काले सात्म्यं शुची'त्यादिना नियमितं प्रयुञ्जीत अश्नीयादित्यर्थः। कदा मूत्रपुरीषे प्रकर्षेण सृष्टे सति न किञ्चिदेव सृष्ट इति प्रशब्देन द्योतयति। विसृष्ट इति व्याख्याकारः पठति। तथा हृदये सुष्ठु विमले रसशेषादिकृतगौरवादिरहिते तथा दोषे वातादौ च स्वपथगे स्वमार्गगे अजीर्णे ह्याहारे

अनशेषरुद्धगतयो वातादयः स्वस्थानं न क्रमेरन् । जीर्णे तु स्वस्थानस्थाः स्युः । उद्गारे विशुद्धे । चशब्दोऽनुक्तसमुच्चयार्थः । स्रोतोमुखेषु च विशुद्धेष्वित्यर्थः । क्षुदुद्गमने उपगतायां क्षुधि वातेऽनुसरति अनुलोमं गच्छति अग्नौ कायाग्नावुद्रिक्ते पाकक्षमे । विशदकरणे इन्द्रियपथसौष्ठवे च सति तथा देहे सुलघौ च । हिशब्द एवार्थे । स एव कालो मतः । अतः परमतिकालस्तत्र भुक्तमन्नं वातविष्टब्धं कृच्छ्राद् विपच्यते । तथा च तन्त्रान्तरे —

"अतीतकालं भुञ्जानो वायुनापहतेऽनले ।
कृच्छ्राद् विपच्यते भुक्तं द्वितीयं न च काङ्क्षति ॥"

इति । तस्मादाहारकाले प्राप्ते अवश्यं भोक्तव्यमित्यर्थः ॥ ५५ ॥

इति श्रीदासपण्डितविरचितायां हृदयबोधिकाया-
मष्टमोऽध्यायः ॥

---

## अथ नवमोऽध्यायः ।

### अथातो द्रव्यादिविज्ञानीयमध्यायं व्याख्यास्यामः ।

पूर्वेष्वध्यायेषु रसादिविशेषैर्द्रव्यकार्यस्वरूपमुक्तं, ते च द्रव्यरसादयो न ज्ञाताः । अतस्तद्विज्ञानायाध्यायारम्भः । अथवा—

"अन्नपानं परीक्ष्यैव द्रव्यादीनि प्रयोजितम् ।
आरोग्याय भवेदस्माद् द्रव्यादिज्ञानमुच्यते ॥"

अथवा —

"रसाद्युपहितं द्रव्यस्वरूपं प्रागुदीरितम् ।
तस्य कारणतश्चिन्ताहेतोर्द्रव्यादिवर्णना ॥"

अथवा मात्रां द्रव्याण्यपेक्षन्ते इत्युक्तम् । अतो द्रव्यं वक्तुमारभते । द्रव्यप्रसङ्गाद् रसादींश्च । द्रव्यमादिर्येषां ते द्रव्यादयः । आदिशब्देन रसवीर्यविपाकप्रभावपरिग्रहः । द्रव्यादीनां विज्ञानमवगमः । तस्मै हितो द्रव्यादिविज्ञानीयस्तमध्यायम् । तत्र द्रव्यस्य रसादिभ्यः प्राङ् निर्देशः प्राधान्यात् ॥

प्राधान्यं च स्वयमेव ग्रन्थकृत् प्रतिपादयन्नाह —

**द्रव्यमेव रसादीनां श्रेष्ठं ते हि तदाश्रयाः ।**

द्रव्यमित्यादि । द्रव्यं नाम रसवीर्याद्याश्रयो हरीतक्यादि, न कारणद्रव्याणि । द्विविधं हि द्रव्यं कारणकार्यभेदेन । तत्र कारणमाकाशादि ।

तदुक्तं चरके —

"खादीन्यात्मा मनः कालो दिशश्च द्रव्यसङ्ग्रहः ।"

इति । आदिशब्देन पञ्चानां ग्रहणम् । सर्वेषां सम्भूयैककार्यकरत्वज्ञापनार्थं पञ्चभिर्भूतैः सम्भूयारब्धानि सर्वाणि कार्यद्रव्याणीति ।' एवमुक्ते द्रव्यादेव द्रव्योत्पत्तिरिति भवति । तदुक्तं खरनादे —

"अक्षरात् खं ततो वायुस्तस्मात् तेजस्ततो जलम् ।
उदकात् पृथिवी जाता भूतानामेष सम्भवः ॥

इति । अलमनेन । कार्यद्रव्यं पुनर्द्विविधं हरीतक्यादि स्थावरं छागादि जङ्गमं च । चरके चोक्तं —

"सेन्द्रियं चेतनं द्रव्यं निरिन्द्रियमचेतनम् ।"

इति । हाटकोऽप्येवमाह — इह द्रव्यशब्देन द्रव्यं तत्कारणानि स्थावर-जङ्गमभेदेन द्विविधानि द्रव्याणि च परिगृहीतानि । तथाच सुश्रुते — प्राणिनां पुनर्मूलमाहारो बलवर्णौजसां च स षड्रसनिमित्तः स च द्रव्यात् सम्भूतः । तच्च द्रव्यं द्विविधं स्थावरजङ्गमभेदेन । स्थावराश्चतुर्विधाः — वानस्पत्या वृक्षा वीरुध ओषध्य इति । तेषु अपुष्पाः फलवन्तो वानस्पत्याः । पुष्पोपेताः फलोपेताश्च वृक्षाः । प्रतानवत्यो वीरुधः । फलपाकनिष्ठास्त्वोषध्यः इति । निष्ठा अवसानं तेभ्यस्त्वक्पत्रपुष्पफलक्षीराङ्कुरनिर्यासादय औषधत्वेन प्रयोजनवन्तः । जङ्गममष्टविधं मृगविष्किरादिभेदेन पठितं प्राक् । तेभ्यश्चर्मरोमरुधिरमांस-वसामज्जापित्तक्षीरादयः प्रयोजनवन्त इति । 'द्रु गतौ' इति धातुः द्रूयते गम्यते रसादिभिरिति द्रव्यम् । तत्र गुणवद् द्रव्यमिति सामान्यलक्षणम् । तदपि व्यभिचरति गुणस्य समवायिकारणं द्रव्यं तच्च स्वयमुत्पन्नं गुणं प्रति कारणं तत् समस्तगुणशून्यमुत्पन्नमात्रं द्रव्यमवतिष्ठते । तदा द्रव्यमेव न भवति गुणाभावादिति दूषयन्ति साङ्ख्यादयः । आयुर्वेदश्च सेश्वरसाङ्ख्यानुसारी । तर्हि सङ्ग्रहचरकादिषु वैशेषिकपदार्थवर्णनं कस्मादू । उच्यते । षण्णां पदार्थानां किञ्चित् सोपयोगित्वाद् वैशेषिकानुसरणम् । तत् तिष्ठतु । अस्मिन् शास्त्रेऽन्ये षट् पदार्था चिकित्सोपयोगिनोऽभिमताः । तथाह — द्रव्यरसवीर्यविपाकगुण-कर्माण्युपयोगिकानीति । अनयोरारोग्यानारोग्ययोर्मूलं कारणमिति । अस्मभि-

प्रायः । न तु षडेव भावपदार्था इति अत्र नियम्यन्ते । किन्तु षड्भिरेवारोग्या-नारोग्ये जायेते इति । वैशेषिकास्तु षडेव भावपदार्था नान्ये इति नियच्छन्ति न भावान्तरमित्यलम् । रसादीनामिति निर्धारणे षष्ठी । रसवीर्यादीनां मध्ये द्रव्यमेव प्रधानं ते रसादयो हि यस्मात् तदाश्रयाः । तदेव द्रव्यमाश्रयो येषां त एवम् । अत एव केवला रसादयो नोपलभ्यन्ते । तस्माद् द्रव्यमेव प्रधानं रसादीनामपि स्वविषयप्राधान्ये सत्यपि द्रव्यस्यैव प्राधान्यं नियमयत्येवशब्देन । द्रव्यं प्रधानं चेत् द्रव्यादीनां द्रव्यमेव श्रेष्ठमित्यनुक्त्वा रसानां प्राधान्यमङ्गी-कृत्य रसादीनां द्रव्यं श्रेष्ठमिति कथमुक्तवान् । अत्र ब्रूमः । रसादीना-मित्युक्तेऽपि द्रव्यादीनामित्यर्थः । द्रव्यव्यतिरिक्तो रसो नेति कृत्वा । रस इत्युक्तेऽपि द्रव्यमेव द्योत्यते इति केचित् । रसस्यापि प्राधान्यं विद्यते द्रव्य-स्यापि तथेति सूचनार्थमेवमुक्तं कथमिति चेद् द्रव्यरसौ शिवशक्तिवत् स्थितौ —

"न शिवेन विना शक्तिर्न शक्तिरहितः शिवः ।"

इति यथा तथा । द्रव्यस्यापि नीरसस्य चैतन्यरहितत्वात् द्रव्यत्वं नेति सूच-नार्थमित्युक्तमिति केचित् । पूर्वं सूत्राध्याये रसाः पूर्वमनिर्णीताः तस्मादत्रापि उद्देशक्रमेणैव निर्देश इति अस्मद्गुरवः । हाटकोऽप्येवमाह — बीजाध्याय-निर्दिष्टानां रसद्रव्यवीर्यविपाकगुणानां मध्ये द्रव्यमेव श्रेष्ठं ते रसादयस्तदाश्रया इति । यस्मादाश्रयिणां आश्रयस्य प्राधान्यम् । इतश्च द्रव्यं प्रधानं सकलेन्द्रिय-ग्राह्यत्वात् । कदलीफलादयः सकलेन्द्रियग्राह्या एकेन्द्रियेणैव ग्राह्यादि (?) गुणाः । इतश्च द्रव्यं प्रधानं आरम्भकसामर्थ्याच्च देशाद् देशान्तरभूतानां कार्यक्षमा-रम्भः आरम्भकसमर्थानि द्रव्याणि न गुणाः । द्रव्यमपेक्ष्यारम्भाः क्रियन्ते । तथा कृष्णे ताम्रे वा देशे जातमौषधं ग्राह्यम् । एवम्भूतायां जातमपि कृमि-वि(ष)शस्त्रातपपवनदहनतोयाद्यनुपहतं (न?) शाखाभूयिष्ठं (स) पुष्पमवगाढमूल-मौषधद्रव्यं स्थानादाहृत्यौषधागारे स्वरसकाथचूर्णस्नेहादियोग्यम् । तस्माद् द्रव्य-मेव प्रधानमिति । हृद्याकारोऽप्याह—प्रथमाध्याये द्रव्यात् पूर्वं रसा उद्दिष्टाः । तेन रसादिमध्ये द्रव्यस्य सद्भावाद् रसादीनामिति निर्धारणोपपत्तिः । अथवा रसादीनां तु संबन्धि यद् द्रव्यं तस्य मुख्यता इति षष्ठ्योच्यते । सोऽपि सम्बन्धोऽत्रैव वर्ण्यते आश्रयितारूपस्तथा ते हि तदाश्रयाः आश्रयिणो गुणाः

तेषामाश्रयो द्रव्यं स्वस्थितिसिद्ध्यै गुणानां गुणिसापेक्षत्वं सापेक्षस्य निरपेक्षादप्राधान्यं प्रसिद्धमिति । अन्या वा योजना ते हि तदाश्रयाः आश्रयशब्दः कारणवचनः ते रसाद्याः द्रव्यकारणका हि यस्मात् तस्माद् द्रव्यं मुख्यं भौतिकं हरीतक्यादि द्रव्यं रसादिगुणोपपत्तौ समवायिकारणमिति तस्य प्राधान्यं कारणसापेक्षत्वाद् रसादीनामप्राधान्यं च इति ॥

पञ्चभूतात्मकं तत्तु

पञ्चेत्यादि। तुरवधारणे। यत्तदोस्तु नित्याभिसम्बन्धाद् यदित्यनुक्तमप्यर्थाल्लभ्यते । तेनायमर्थो यद् रसादीनामाश्रयभूतं कार्यद्रव्यं हरीतक्यादि स्थावरं छागादि वा जङ्गमं तदेव पञ्चभूतात्मकं न तु कारणद्रव्यमाकाशादि । तस्य हि पञ्चभूतात्मकत्वे सत्याकाशादीनां पृथक्त्वेनात्[1]मलाभो न स्यात् । तथा चेदमाकाशं नाम महाभूतमिदं पृथिवी नाम महाभूतमिति गदितुं न पार्यते । सर्वस्य पञ्चमहाभूतात्मकत्वात् पृथङ्महाभूतानुपपत्तिः न च यत् कारणं तज्जातुचित् कार्यं स्यात् । तस्मात् कार्यद्रव्यस्यैव पञ्चमहाभूतात्मकत्वं न कारणद्रव्यस्याकाशादेः । मुनिस्तु —

"खादीन्यात्मा मनः कालो दिशश्च द्रव्यसङ्ग्रहः ।"

इति नवधा द्रव्यमुक्त्वा तल्लक्षणं व्यधित । यथा यत्राश्रिताः कर्मगुणाः समवायि यत् तद् द्रव्यमिति तस्यार्थः । यत्र कर्मक्रियापरिस्पन्दलक्षणं संयोगविभागकारणं समवेतं गुणाश्च शब्दादयो रसादयो[2] आत्मबुद्धि(र्व्या ? व्या)ध्यादयो वा तत्र[3] समवेताः यच्च कारणं समवायि तद् द्रव्यमुच्यते । समवैति यत् कारणमपृथग् भवति तत् समवायिकारणं यथा तन्तवः पटस्य । एतानि च कर्मगुणाश्रयित्वसमवायिकारणत्वानि यद्यपि सर्वाणि सर्वस्मिन् द्रव्ये न विद्यन्ते तथापि यद्यत्र सम्भवति तेन तस्य द्रव्यस्य द्रव्यत्वं कल्प्यम् । तद् यथा मनसः कर्मगुणाश्रयित्वेन द्रव्यत्वं कल्प्यं वा (र्यो ? ख्वा) दीनां तु कर्मगुणाश्रयित्वेन समवायिकारणत्वेन च स्यात् । अत्र परस्परविरुद्धानां पृथिव्यादीनां सम्भूय कथं कार्यजनकत्वम् । ब्रूमः । दृश्यते हि दोषाणां विरुद्धानामपि संभूय रोगकार्याभिनिर्वर्तकत्वं यथा सत्त्वरजस्तमसां तथाभूतानामिति । व्याख्याकारस्त्वाह — तत् प्रस्तुतं द्रव्यं पञ्चभूतात्मकं

१. 'र्थे' क. ख. पाठः. २. 'यो वा' ग. ३. 'य' क. ख. पाठः.

पञ्चभूतकारकं पञ्चभिर्भूतैः सम्भूय निष्पादितमित्यर्थः । पञ्चभूतस्वरूपमिति न वाच्यम् । इति ।

अथ तद् द्रव्यं केन भूतेन कथं कृत्वारब्धमित्याह —

**क्ष्मामधिष्ठाय जायते ॥ १ ॥**

क्ष्मामित्यादि । हृद्याकारोऽपि तत्र द्रव्ये भूतानामन्वयप्रकारं दर्शयति — क्ष्मामित्यादिनेत्याह । अधिष्ठानमाश्रयं पृथिवीमधिष्ठायाधारीकृत्य जायते उत्पद्यते । पृथिव्याख्येन भूतेनाधारत्वेनोपकृत्य तेन तदारब्धमिदं द्रव्यमिति उच्यते । हृद्याकारस्त्वाह — क्ष्मामधिष्ठाय भूमिं प्रधानीकृत्य द्रव्यजन्मनि भूमेर्बाहुल्यमस्तीत्यभिप्रायः इति ॥ १ ॥

**अम्बुयोन्यग्निपवननभसां समवायतः ।**
**तन्निर्वृत्तिर्विशेषश्च व्यपदेशस्तु भूयसा ॥ २ ॥**

अम्बुयोनीत्यादि । अम्बु सलिलं योनिः कारणं यस्य तदम्बुयोनिद्रव्यम् । एवं जलं नाम महाभूतं रसवत्त्वाद् योनितयोपकृत्य तेन तदारब्धमित्युच्यते । अथ वा 'यु मिश्रणे' धातुः तस्मिन् योनिरिति रूपं भवति । पार्थिवावयवैक्यं कृत्वाम्बु द्रव्योत्पत्तौ कारणतामश्नुते । हाटकस्त्वाह — योनिः कारणं स्वभावसम्बन्धे हेतुः स्वभावापरनामधेयः सामान्यम् । अम्बुना हीह हरीतकीचित्रकदन्त्यादिव्यक्तीनामात्मीयात्मीयसामान्ययोगः क्रियते अथवा* गुडूच्यादीनामात्मीयस्वरूपाभिव्यन्तुकावयवसम्बन्धहेतुः स्वभावः स्वरूपम् । उत वा स्वभावतः सम्बन्धहेतुनिवृत्तिः । जलस्य सम्बन्धकारणं स्वभावमिति यावत् इति । +तथा अग्निपवनन[१]भसां समवायतोऽपृथग्भावात् पृथिव्युदकाभ्यामपि निर्भागप्रवृत्तित्वात् । तन्निर्वृत्तिस्तस्य कार्यद्रव्यस्य निर्वृत्तिः तस्य कार्यद्रव्यस्य निर्वृ[२]त्तिर्निष्पत्तिरुत्पत्तिर्जन्म इत्यनर्थान्तरं सा भवति । तथा हि — अग्नेः पाकमुपेत्य वायुना ऊर्ध्वाधो विक्षिप्तमाकाशे वर्धते । अथवावयवव्यूहेन नभः कारणतां याति काठिन्यादिके वायुः तेजः प्रसादल[३]भ्यश्चाङ्कुराद्यवस्थाविशेषः तथा च द्रव्यस्य यो विशेषः भेदो द्रव्यान्तरेणासादृश्यम् । इयं हरीतकी इदमामलकमित्यादिरूपः सोऽप्यग्निपवननभसां समवायाद् भवति । द्रव्याणां पाञ्चभौतिकानामप्यग्न्यादीनामुत्कर्षापकर्षसन्निवेशविशेषवैलक्षण्यादन्यत्वेनासादृश्यमित्यर्थः । तथा च मुनिः —

---

१. 'नाम्भसां' ख., २. 'त्तिः ।तिरु' ग. पाठः. ३. 'भ्यं चा' क. ख. पाठः.

---

* 'वा स्वरूपाभिव्य' ग. पाठः. + 'य' क. ख. पाठः

"तन्निर्वृत्तौ विशेषे च प्रत्ययाः स्वादयस्त्रयः ।"

इति । पाठ्यकारस्तु विशेषश्चेति एकस्यैव द्रव्यस्य हरितपीतरक्तादियव-गोधूममुद्गादिविशेषश्चाग्न्यादिसमवायादित्याह एवमग्निपवननभोभिः समवायिकारणत्वेनोपकृत्य तैरेव द्रव्यमारब्धमित्युच्यते । अथवा अग्निपवननभसां समवायतः सम्बन्धात् तेषां प्रत्ययत्वमिष्यते न समवायित्वम् । ते हि त्रिविधं कारणमिच्छन्ति वैशेषिकाः समवायिकारणं निमित्तकारणमसमवायिकारण-मिति । पटस्य तन्तवः समवायिकारणं तन्तुसंयोगोऽसमवायिकारणं अन्यत् सर्वं निमित्तकारणमिति । पटवत् सर्वं कारणत्रयादेवोत्पद्यते । अग्न्यादीनां समवायिकारणत्वे तज्जान्येव द्रव्याणि स्युः । अतः समवायशब्दः सम्बन्ध मात्रमभिधत्ते परिणामपक्षे कारणत्रयं नेष्यते एकस्याः प्रकृतेः सकलभुवनो-दयादित्यलमशिक्षितप्रमेयमार्गाणां व्यामोहकारिणा निरूपणेन । तन्निर्वृत्तिस्तस्य द्रव्यस्य निष्पत्तिरग्निपवननभसां सम्बन्धात् । पृथिवीप्रधानकारणत्वमुपादान-लक्षणं भजते तदावयवानां मिश्रणं करोति जलमग्निरुपादानं पचति वायु-रूर्ध्वाधस्तिर्यगवयवानुत्कर्षति नभोऽवकाशं ददाति सर्वत्रायमेव क्रमः । आग्ने-ये चित्रकादौ च पृथिव्येव प्रधानकारणं नाभसे वेण्वादौ वायव्ये तुम्बादौ च । तत्र तत्राग्निपवननभसामाधिक्येन सम्बन्धः । विशेषश्च । चशब्दोऽग्न्या दीनां सम्बन्धं सूचयति । एवं सर्वं कार्यद्रव्यं पञ्चभूतात्मकम् । ननु द्रव्यस्य पञ्चभूतात्मकत्वे सति पार्थिवादिव्यवहारः कथमित्याशङ्क्याह — व्यपदे-शस्तु भूयसेति । व्यपदेश उक्तिः संज्ञेत्यनर्थान्तरम् । भूयसा भूयिष्ठेन भूतेन व्यपदेशो भवति यथा पृथिव्याधिकयोत्पादितं पार्थिवम् । एवमाप्यं तैजसं वाय-वीयं नाभसमिति । एवं द्रव्याणां पाञ्चभौतिकत्वम् । आगमो हि द्रव्यं पाञ्चभौतिकमस्मिन्नर्थे द्रव्याणां पाञ्चभौतिकत्वेऽपि यत्र द्रव्ये यद् भूत-माधिकं तद् द्रव्यं तदाख्यां लभते । शेषाणां तु कारणत्वेन व्यावृत्तानां भू-तानामधिकेनाभिभूतत्वात् कर्मकर्तृत्वमल्पा वा क्रिया तद् द्रव्यं चेतनमचेतनं च तस्य गुणाः शब्दादयो गुर्वादयश्चेति ।

पृथिवी सलिलं वह्निर्वायुर्भूतचतुष्टयम् ।
प्रत्यक्षसिद्धमाकाशः शब्दलिङ्गेन गम्यते ॥

---

१. 'दक' ग. पाठः.

आकाशस्यापि च प्राहुः प्रत्यक्षं भट्टमार्गगाः ।
वायोर्विलक्षणस्पर्शमेयत्वं चापरे जगुः ॥

अमूर्तस्याकाशस्य निरवयवस्य सूक्ष्मस्याक्रियस्य कथं द्रव्यजनकत्वमिति न चोदनीयम् आरम्भवादिनामेतच्चोद्यं न परिणामवादिनाम्—

"एकस्माद् विभुनो नित्यात् प्रधानान्निखिलोदयः ।
सांख्यैस्तादृशादात्मतत्त्वादन्यैरपीष्यते ॥"

इति। ये सत्त्वादिगुणत्रयमङ्गीकुर्वते ते परिणामवादिनः ।

"सत्त्वं रजस्तम इति त्रयः प्रोक्ता महागुणाः ।"

इति संग्रहे। गुणत्रयस्वीकारे तत्सामान्यलक्षणा प्रकृतिरवश्याङ्गीकार्या। तदङ्गीकारे तत्परिणामस्त्रिभुवनमित्यलं प्रसङ्गेन ॥ २ ॥

तस्मान्नैकरसं द्रव्यं भूतसङ्घातसम्भवात् ।

तस्मादित्यादि। पूर्वोक्ताद् भूतसङ्घातसम्भवात् पाञ्चभौतिकं द्रव्यं नैकरसं च। अपि त्वनेकरसमनेकभूतजनितत्वादनेकरसवच्च। यथा पञ्चभिर्भूतैर्द्रव्याणामुत्पत्तिः तथा रसादीनामपीत्यर्थः। हाटकोऽप्याह—तस्मादेवं सर्वस्य द्रव्यस्य पञ्चभूतात्मकत्वं सर्वरसत्वं यतो येयं षट्संख्या परस्परविलक्षणा रसानां निष्पत्तिस्सा महाभूतानां विशेषकृता। एवं द्रव्यवद् रसस्यापि भूतसङ्घातसम्भवत्वमनुमतमेव। तथा हि प्रतिद्रव्यं मधुरादिरसानप्रधानरसानुवृत्त्या च वर्तमानानां नानास्वादो दृष्टः। हरीतकीद्रव्ये कषायाम्लमधुराणामुपल(ब्धं? ब्धिः) तिक्तकटुकयोरनुरसवृत्त्या वृत्तिः। माधुर्य[1]विशेषेऽपि क्षौद्रक्षीरेक्षुशर्करादिद्रव्येषु नानास्वादोपलंभः एषु शेषाणां रसानामनुरसवृत्त्या यथासम्भवं वृत्तिः। एवं रसस्यापि भूतसङ्घातजत्वम्। तथा च आगमः—

"रसनार्थो रसस्तस्य द्रव्यमापः क्षितिस्तथा ।
निर्वृत्तौ च विशेषे च प्रत्ययाः स्वादयस्त्रयः ॥"

इति। रसनार्थो रसनेन्द्रियग्राह्यः। द्रव्यमापः तस्य समवायिकारणम(प? पि) क्षिति (इ? रि)ति। अरुणदत्तोऽप्याह—द्राक्षादीनामनेकरसत्वमास्वादविशेषादनुमीयमानं भूयसा रसेनान्यरसाभिभवं कृत्वा व्यप-

---

१. 'र्यं' ख. पाठः.

दिश्यते । इदं मधुरमिदमम्लाद्यन्यतममिति महाभूतवत् यथा सर्वं द्रव्यं पञ्चमहाभूतात्मकं भूयसा महाभूतेनान्यमहाभूताभिभवं कृत्वा (यथा?) तेन व्यपदिश्यते पार्थिवमिदमाप्य(मिद)मिति । ननु द्रव्यनिर्णये प्रकृते पाञ्चभौतिकं यदेव द्रव्यं प्रतिज्ञातं तदेव तावदतिवाहयितुं युक्तं न पुनरप्रस्तुतमनेकरसत्वम् । तस्मादत्रैवं वक्तुं न्याय्यम् । तस्मान्नैकभूतजं द्रव्यं भूतसङ्घातसम्भवादिति । अत्रोच्यते । षण्णामपि रसानां योनिरुदकं ततश्चैकस्यैव महाभूतस्य उदकसंज्ञस्य रसकारणत्वं (मा़सं) नान्येषां नीरसत्वादिति कृत्वा न तु भूतसङ्घातजत्वं रसस्यैवंविधामाशङ्कामुन्निनीषुर्भूतसङ्घातजत्वं रसस्य प्रयत्नेनैकेनैव । तस्मान्नैकरसं द्रव्यं भूतसङ्घातसम्भवादिति जगाद । मुनिश्च अत एव रसस्य भूतसङ्घातसम्भवत्वं स्पष्टं कृत्वोवाच । यथा —

रसनार्थो रसस्तस्य द्रव्यमापः क्षितिस्तथा ।
निर्वृत्तौ च विशेषे च प्रत्ययाः स्वादयस्त्रयः ॥

इति । एवं भूतसङ्घातो रसानां द्रव्याश्रितानामपि सम्भवकारणम् । एतच्च रसभेदीये सविस्तरं प्रवक्ष्यामः ॥

नैकदोषास्ततो रोगास्तत्र व्यक्तो रसः स्मृतः ॥ २ ॥
अव्यक्तोऽनुरसः किञ्चिदन्ते व्यक्तोऽपि चेष्यते ।

नैकदोषा इत्यादि । यतः सर्वद्रव्यमनेकरसं तस्मात् कारणान्नैकदोषा ज्वरादयो भवन्ति । अपि त्वनेकदोषा इत्यर्थः । अत्रापि भूयसेत्यध्याहार्यम् ॥ तेन त्रिदोषात्मकत्वेऽपि ज्वरे दोषाधिकत्वमपेक्ष्य वातज्वरः पित्तज्वरः श्लेष्मज्वर इत्येवंरूपो व्यपदेश उपपन्नतर । हाटकहृद्याकारावप्याहतुः — ततोऽनेकरसद्रव्यजनितत्वादनेकदोषा रोगाः सर्वरोगा अपि त्रिदोषजा इत्यर्थः यस्माद् रोगाणां दोषा कारणं तेषां च रसाः सर्व एकस्मिन् द्रव्ये स्थिता इति । एवं रोगाणां त्रिदोषजत्वेऽपि भूयसा व्यपदेशोऽध्याहार्यः कारणभूयस्त्वाल्पीयस्त्वाभ्याम् । तथा हि प्रधानेन रसेन जनितो दोषो भूयानुत्कटशक्तिर्भवति । अप्रधानेनानुरसेन जनिता दोषा हीनशक्तयः । उक्तं च —

"द्रव्यमेकरसं नास्ति न रोगोऽप्येकदोषजः ।
योऽधिकस्तेन निर्देशः क्रियते रसदोषयोः ॥"

इति । ननु च यदि सर्वो ज्वरः सन्निपातज्वरः तत् किमिव वक्ष्यमाणमयं सन्निपातज्वर इति । ब्रूमहे । विषमरूपं शक्त्युत्कर्षमाश्रित्य यत्र दोषो वर्तते

स सन्निपातज्वर इति तन्त्रकृता परस्ताद् विस्तरेण प्रतिपादयिष्यते। अथ को रसोऽनुरसो वेत्याह — तत्रेत्यादि । अथ वा तत्रानेकरसवति द्रव्ये मधुरादिव्यवहारापायमाहेति हृद्याकारः । तत्र तस्मिन् द्रव्ये रसनेन्द्रियेण यो व्यक्तः स्पष्टः स्फुटः निर्धारितस्वरूप उपलभ्यते स रसः स्मृतस्तन्त्रकृद्भिः । प्रधानरसाभिभूतत्वाद् यो रसनेन्द्रियेणाव्यक्तोऽस्पष्ट उपलभ्यते सोऽनुरसः हीनार्थेऽत्रानुशब्दः अल्पो रस इत्यर्थः । न चैतावदेवानुरसलक्षणमित्याह किञ्चिदित्यादि । मुखे क्षिप्तस्य हरीतक्यादेर्द्रव्यस्य रसनेन्द्रियेण अन्ते प्रधानरसस्यावसाने किञ्चिदीषद् व्यक्तः स्फुटो यदुपलभ्यते सोऽप्यनुरस एवेष्यते । मुनिभिरिति शेषः । रसकार्यमीषत् करोतीत्यर्थः । अनुशब्दस्यात्र पश्चादर्थो ग्राह्यः । अन्त इत्यनेनैतद् बोधयति । अन्ते अवसाने वा आदौ मध्ये वा अनुशब्दस्यात्र पश्चादर्थत्वात् । अथ वा अन्ते आस्वादावसाने । एवमनुरसस्य द्वैविध्यम् । वचनं हि 'तत्र व्यक्तो रसः अनुरसस्तु रसेनाभिभूतत्वादव्यक्तो व्यक्तो वा किञ्चिदन्त' इति । पण्डितस्तु तस्मान्नैकरसं द्रव्यमित्यत्रैवं वदति — एकशब्दः प्रधानवाची तस्मात् पूर्वोक्ताद् भूतसङ्घातसम्भवाद् द्रव्यं नैकरसमपि त्वनेकरसं प्रधानरसोपेतमप्रधानरसोपेतं चेत्यर्थः । एवं नैकदोषा इत्यपि वेद्यम् । इति ॥

रसप्रसङ्गाद् रसेषु गुणान्तरव्यपदेशस्यापि कारणमाह —

गुर्वादयो गुणा द्रव्ये पृथिव्यादौ रसाश्रये ॥ ४ ॥
रसेषु व्यपदिश्यन्ते साहचर्योपचारतः ।

गुर्वादय इत्यादि । हाटकारुणदत्तावप्येवं सम्बन्धमाहतुः — ननु मधुरादयो रसा गुर्वादिगुणयुक्ता इति कथं वक्तुं पार्यते यतो मधुरादयो रसा गुर्वादयश्च गुणाः । न च गुणानां गुणाधारत्वमुपपन्नम । तथा वैशेषिकाः गुणादयश्च निर्गुणगुणा इति वदन्ति इत्येवं पर्यनुयोगे इदमाह — गुर्वादय इत्यादि । इति । पृथिव्यादौ पृथिव्यादिमहाभूतारब्धे द्रव्ये रसाश्रये रसानामाधारभूते वर्तमाना गुर्वादयो गुणाः पूर्वोक्ता रसेषु मधुरादिषु व्यपदिश्यन्ते व्यवह्रियन्ते । मुनिभिरिति शेषः । तद्व्यपदेशस्य किं कारणमित्याशङ्क्याह — साहचर्योपचारतः सह चरतीति सहचरः तस्य भावः साहचर्यं साहचर्येण तुल्याश्रयत्वेनोपचारः साहचर्योपचारः एकाश्रयवृत्तित्वादित्यर्थः । पृथिव्यादिमहाभूतारब्धे द्रव्ये गुर्वादयो गुणाः परमार्थत आश्रिता न तु रसेषु मधुरादिषु यत्तु रसेषु व्यपदिश्यते त(त्र ? त् )साहचर्योपचारः । यस्मिन्नेव पृथिव्यादौ द्रव्ये मधुरो

रस आश्रितः तस्मिन्नपि गुरुगुण आश्रित इति मधुररसगुरुगुणयोः साहचर्यम् । इत्थं तुल्याश्रयत्वेनोपचाराद् रसेषु गुर्वादयो व्यपदिश्यन्ते । यथा गुरुर्मधुरो रसो लघुरम्ल इत्यादि । न पुनः परमार्थतो रसेषु गुर्वादयः सन्ति । अस्ति च साहचर्येण व्यपदेशः यथा घृतसहचरणे घृतस्थेनाग्निना दग्धो घृतदग्ध इत्युच्यते । तस्मान्मधुरो गुरुरम्लो लघुरित्यादिव्यवहारः केवलमुपचारार्थः सहचरत्वात् । तथा चागमः —

गुणा गुणाश्रया नोक्तास्तस्माद् रसगुणाद् भिषक् ।
विद्याद् द्रव्यगुणान् .... .... .... ॥

इति । अथवा भूतस्य तथापदेश उपचारः । यथा मञ्चाः क्रोशन्ति इति । रसेषु गुणव्यपदेशः किमस्तीति चेदुच्यते । सर्वत्र व्यवहारो दृश्यते —

"शीतोष्णगुरुवैशद्यतैक्ष्ण्यपैच्छिल्यगौरवम् ।
लाघवं मार्दवं रौक्ष्यं रसानां तु गुणा दश ॥"

इति । व्यपदेशस्तु भूयसा इति प्रागुक्तत्वात् पार्थिवादीनां लक्षणमाह —

**तत्र द्रव्यं गुरु स्थूलं स्थिरगन्धगुणोल्बणम् ॥ ५ ॥**
**पार्थिवं गौरवस्थैर्यसङ्घातोपचयावहम् ।**

तत्रेत्यादि । तत्र तेषु पार्थिवादिषु पञ्चसु द्रव्येषु मध्ये पार्थिवं द्रव्यं गुर्वादिगुणोल्बणम् । उत्कटमुल्बणम् । उल्बणशब्देनैतद् द्योतयति — पार्थिवे द्रव्येऽन्येऽपि गुणाः सन्ति पाञ्चभौतिकत्वात् सर्वद्रव्याणां गुर्वादयस्तत्रोत्कटाः । गुर्वादिषु च मध्ये गन्धस्यैव भृशमुल्बणत्वं गन्धशब्दानन्तरमुल्बणशब्दव्यपदेशात् पृथिव्यां गन्धगुणस्यैव वैशेषिकत्वम् । एवमाप्यादिषु च सर्वं योज्यम् । तथा पार्थिवमुपयुक्तं देहे गौरवाद्यावहं गुरुत्वादिकृदित्यर्थः । गौरवं गुरुत्वं स्थैर्यं दार्ढ्यं सङ्घातः काठिन्यं उपचयो महत्त्वम् ॥

**द्रवशीतगुरुस्निग्धमन्दसान्द्ररसोल्बणम् ॥ ६ ॥**
**आप्यं स्नेहनविष्यन्दक्लेदप्रह्लादबन्धकृत् ।**

आप्यं द्रव्यं द्रवादिगुणोल्बणं स्नेहनादिकृच्च । विष्यन्दः स्रोतसां स्रावः श्लेष्मस्रावो वा । प्रह्लादो हृदयसौख्यं बन्धः स्रोतसाम् । आप्यं द्रवादिगुणैर्युक्तं रसाधिकं चेति व्याकारः ॥

**रूक्षतीक्ष्णोष्णविशदसूक्ष्मरूपगुणोल्बणम् ॥ ७ ॥**

---

१. 'वा त' ग. पाठः.

**आग्नेयं दाहभावर्णप्रकाशपचनात्मकम् ।**
**वायव्यं रूक्षविशदं लघुस्पर्शगुणोल्बणम् ॥ ८ ॥**
**रौक्ष्यलाघववैशद्यविचारग्लानिकारकम् ।**
**नाभसं सूक्ष्मविशदलघुशब्दगुणोल्बणम् ॥ ९ ॥**
**सौषिर्यलाघवकरं**

रूक्षेत्यादि । आग्नेयं द्रव्यं रूक्षादिगुणोल्बणं दाहादिकरं च ॥

वायव्यं रूक्षादिगुणोल्बणं रौक्ष्यादिकरं च । विचारो धातुवहनम् ॥

नाभसं द्रव्यं सूक्ष्मादिगुणोल्बणं सौषिर्यलाघवकरं च । ननु वाय्वाकाशयोरमूर्तत्वात् तदात्मकं द्रव्यं पार्थिवादिवन्न दृश्यते । उच्यते । यत्र द्रव्यो यद्गुणा(भ्र ? भि)मानस्तत्तदात्मकत्वेनोपचरन्त्याचार्याः । सर्वत्रोल्बणशब्द आधिक्यवचनः ॥

**जगत्येवमनौषधम् ।**
**न किञ्चिद्विद्यते द्रव्यं वशान्नानार्थयोगयोः ॥ १० ॥**

जगतीत्यादि । एवमुक्तप्रकारेण पञ्चमहाभूतात्मकत्वेन गुर्वादिगुणयोगेन सर्वद्रव्यमवश्यमेषां गुर्वादीनामन्यतमेन गुणवदिति कृत्वा जगति भुवनेऽस्मिन् न किञ्चिद् द्रव्यमनौषधमस्ति । अपि तु सिकतापांस्वादिकमप्यौषधं संचिकित्सितम् । औषधशब्दोऽत्र व्याधिप्रत्यनीकवचनः । द्विविधं द्रव्यं स्थावरं जङ्गमं च । स्थावराश्चतुर्विधाः पूर्वोक्ताः । जङ्गमास्त्रिविधा जरायुजाण्डजस्वेदजाः । पशुमनुष्यव्यालादयो जरायुजाः । खगसर्पमत्स्यादयोऽण्डजाः । सर्पाणामुभययोनित्वम् । स्वेदजाः कृमिडुण्डुपिपीलिकावृश्चिकमशकमत्कुणयूकभेदा इति । वशान्नानार्थयोगयोः अर्थश्च योगश्च अर्थयोगौ । अर्थः प्रयोजनं यद्यत्रापथ्यं तत् तत्रैव प्रयोजनान्तरेण पथ्यं यदपथ्यं पाने तदभ्यङ्गे पथ्यं योगो युक्तिः अनया युक्त्यौषधमिदं योजितमस्य रोगस्य विजयाय स्यादनया चास्य रोगस्येति । नानाविधौ यावर्थयोगौ तयोर्वशात् सामर्थ्यात् सर्वमपि द्रव्यमौषधं रोगप्रतीकारहेतुत्वात् । एषोऽभिप्रायः केनचित् कस्मिंश्चिदवस्थान्तरे गुणान्तरेण प्रयोजनम् । अतस्तदौषधं भवतीति । नन्वेवं तर्हि वैरोधिकेष्वपि प्राप्तमौषधत्वम् । उच्यते । न ह्यमूनि निसर्गादेवंप्रकृतीनि किन्तर्हि संयोगादिवशात् तस्मात् सर्वं स्वभावात् पथ्यं स्यादिति । स्यादत्र 'निसर्गादपि विरोधः' इति वचनात् कथं पथ्यत्वम् । ब्रूमहे । बहुत्वे-

प्रतिशयः भूयस्त्वं परिगृह्योक्तमिति यावत् इति न्यासे सर्वं द्रव्यमौषधत्वेन स्थितम्। तथा चागमः — अनेनैवोपदेशेन जगति नानौषधभूतं किञ्चिद् द्रव्यमुपलभ्यते तां तां युक्तिं तं तमर्थमभिप्रेत्य। न खलु केवलं गुणप्रभावादेव द्रव्याणि कर्मकराणि। द्रव्याणि हि द्रव्यप्रभावात् गुणप्रभावात् द्रव्यगुणप्रभावाच्च तस्मिन् तस्मिन् काले तत्तदधिष्ठानमासाद्य तां तां युक्तिमर्थं चेति द्रव्यगुणप्रभावात् कार्यकरत्वम्। मण्डलैर्जातरूपस्य तस्य एव पयःश्रितमपत्यजननमित्यागमात्।

हृद्याकारस्त्वाह —

"अर्थः प्रयोजनं योगो युक्तिरन्योन्यसङ्गमः।
तयोस्तयोर्वशात् सर्वं सर्वं भेषजमुच्यते॥
यत्किञ्चिद् येन केनापि संयुक्तं यस्य कस्यचित्।
रोगस्य भेषजं तत्तु शास्त्रादेवावगम्यते॥"

पाठ्यकारस्त्वाह — अर्थः प्रयोजनमेकत्र स्नेहनमन्यत्र रूक्षणमपरत्र स्वेदनं कुत्रचित् स्तम्भनमित्यादि। योगवशाच्च द्रव्याणामन्यथात्वं भवति सूक्ष्मरूपानिर्देश्यपरमाणूनामन्योन्यसंयोगविशेषात् कर्शनस्य बृंहणत्वं बृंहणस्य कर्शनत्वादि च। योगवशाज्जातान्यथात्वस्योदाहरणमुक्तं संग्रहे —

पूगताम्बूलशङ्खेभ्यो गन्धवर्णरसोद्भवः।

इत्यादि। इति॥ १०॥

अथ किं द्रव्यं किंभूतोत्कटं भवति इत्याह—

**द्रव्यमूर्ध्वगमं तत्र प्रायोऽग्निपवनोत्कटम्।**
**अधोगामि च भूयिष्ठं भूमितोयगुणाधिकम्॥ ११॥**

द्रव्यमित्यादि। हृद्याकारोऽपि तस्य द्रव्यस्य भूतद्वयोत्कर्षकृतान् विशेषान् वर्णयतीत्याह — हाटकस्त्वाह द्रव्यस्य ये शोधनशमनग्राहिदीपनत्वादयो विशेषास्तेऽप्येकादिमहाभूतोत्कर्षापकर्षकृता एवेति प्रदर्शनार्थमाह — द्रव्यमित्यादीति। ऊर्ध्वं गच्छतीत्यूर्ध्वगमं खशूप्रकरणे "गमेरप्युपसङ्ख्यानम्" इति खशूप्रत्ययः। प्रायो बाहुल्येनोर्ध्वङ्गमं द्रव्यमग्निपवनाधिकं भवति। ऊर्ध्वङ्गमं वमनकारि यथा मदनफलादि। प्रायःशब्दो व्यभिचारसूचनः क्वचिदग्निसमीरणोत्कटस्याप्यधोगामित्वं दृष्टं यथा हरीतक्यादेराचिन्त्यप्रभावत्वात् यथा सर्पस्य विषमयत्वेऽपि तत्फणामणेर्विषघ्नत्वम्। हाटकस्त्वाह —

तत्र द्रव्येषु मध्ये अग्निपवनोत्कटं द्रव्यं प्रायो बाहुल्येनोर्ध्वगमं वमनकारि अतिशयेन वमनं करोतीत्यर्थः। तयोर्लघवात् प्लवनत्वाच्च वायोरूर्ध्वगामित्वाच्चाग्नेः ऊर्ध्वगमं द्रव्यं मदनफलादि। भूमितोयगुणोल्बणं द्रव्यं भूयिष्ठं प्रायेणाधोगामि विरेचनकारि तयोर्हि गौरवान्निम्नगत्वाच्च तोयस्याधोगामि द्रव्यं त्रिवृदादि। भूयिष्ठमिति महीसलिलाधिकमपि वमनं करोति। भूयिष्ठमतिशयेनेति वा। यत्तु व्यामिश्रात्मकं तुल्यकालमूर्ध्वाधोदोषहरणं तदिह ग्रन्थगौरवभयान्नोक्तम्। व्यामिश्रभूतोत्कटं द्रव्यं व्यामिश्रात्मकमिति सामर्थ्यलभ्य एवायमर्थः। सङ्ग्रहे चोक्तं भूम्युदकात्मकं प्रायेणाधोगामि गुरुत्वाद् भूमेर्निम्नगामित्वात् तोयस्य व्यामिश्रात्मकत्वमुभयतो भागमिति —

"वाय्वग्निभूमितोयाढ्यं वमिरेककरं मतम्।
अङ्कोलावर्तनीमूलं द्रव्यमन्यच्च लक्षयेत्॥"

इति। च शब्देन स्वेदनपाचनादिकरं द्रव्यं निरूप्यं वाच्यमिति हृद्याकारः। शमनं तु दोषगुणविपरीतगुणमुक्तं पूर्वम्। एतदुक्तं भवति शमनत्वं दोषवैपरीत्यापेक्षयाप्यस्मिन् द्रव्ये सम्भवति न(न्वे? त्वे) तस्य शोधनत्वं तस्य विशिष्टभूताधिक्यहेतुत्वात्। यत्र त्वेकस्मिन्नेव ऊर्ध्वगमत्वादीनां सम्भवः तत्र यदेवाधिकं तदेव कार्यकरं तथानिलात्मकं ग्राहि अनलात्मकं दीपनपाचनं उभयात्मकं लेखनं भूम्युदकात्मकं बृंहणम्। एतानि च ग्रन्थगौरवभयादिह नोक्तानि॥ ११॥

इति द्रव्यं रसो भेदैरुत्तरत्रोपदेक्ष्यते।

इतीत्यादि। इतिः परिसमाप्तौ। द्रव्यं प्रति यद् वक्तव्यं तन्निष्पन्नमित्यर्थः। हृद्याकारोऽप्याह — इति शब्दः समाप्तौ द्रव्यं प्रति सर्वमुक्तमित्यर्थः इति। द्रव्यादनन्तरं रसे वक्तव्ये तस्य बहु वक्तव्यत्वात् तत्त्यागेन वीर्यं विवक्षुः क्रमभङ्गदोषं परिहरति — रस इत्यादि। रसो भेदैस्त्रिषष्टिसङ्ख्यैः सह उत्तरत्रानन्तराध्याये उपदेक्ष्यते वक्ष्यते बहु वक्तव्यत्वादिह नोच्यते इति यावत्। हाट्को 'रसान् भेदैरुत्तरत्रोपदेक्ष्यती'ति पठति। रसानुपदेक्ष्यति तन्त्रकार इति शेषः॥

अथ वीर्यस्य विपाकादिभ्यः प्राधान्यात् तत् प्रस्तौति—

**वीर्यं पुनर्वदन्त्येके गुरुस्निग्धहिमं मृदु॥ १२॥**

**लघुरूक्षोष्णतीक्ष्णं च तदेवं मतमष्टधा।**

वीर्यमित्यादि। अत्र पुनः शब्दो विवादसूचकः। वीर्यं शक्तिः सामर्थ्यं इति पर्यायाः। वीर्यवादिनां मतभेदं दर्शयति — एकेऽऽचार्या गुर्वादीनष्टौ गुणान् द्रव्याश्रितान् वीर्यमिति समाचक्षते। तत्तस्मादेवमनेन प्रकारेण वीर्य-मष्टधा अष्टविधं गुर्वादिवादिनां मतम्। पण्डितस्तु मतमस्माकमिति शेष इति वदति। अस्मिन् पक्षे एकशब्दः प्रधानवाची ॥

चरकस्त्वाह वीर्यं तद्येन या क्रियते क्रिया ॥ १३ ॥
नावीर्यं कुरुते किंचित्सर्वा वीर्यकृता हि सा।

चरकस्त्वित्यादि। चरकाचार्यः पुनरेवं वक्ति। येन स्वभावेन या क्रिया क्रियते यत् कर्म निष्पाद्यते तद् वीर्यम्। तदेव यत् किञ्चिद् गुणजातं द्रव्ये स्थितं तत् सर्वं वीर्यमेव सर्वं वीर्यं करोति। अत आह। नावीर्यमित्यादि। यदवीर्यं तन्न किञ्चित् करोति न किञ्चिदप्यर्थं निष्पादयति प्रतिनियतशक्तिप-रिष्वक्तत्वात् सर्वभावानाम्[1]। अत[2] एवाह — सर्वेत्यादि। हिशब्दो यस्मादर्थे यस्मात् सर्वा क्रिया वीर्यकृता वीर्यजनिता ततो यन्न वीर्यं तन्न किञ्चित् कुरुते। हाटकोऽप्याह — येन स्वभावेन या क्रिया क्रियते तद् वीर्यं यत् किञ्चिद् गुणजातं द्रव्ये स्थितं तत्सर्वं वीर्यम्। आत्मीयया शक्त्या सर्वमेव कर्मजातं सम्पद्यत इति शक्तिरेव वीर्यं लोकेऽपि चैतद् दृश्यते इत्याह — नावीर्यं कुरुते किञ्चिदित्यर्थः। यस्य यत्र शक्तिर्नास्ति स ह्यसौ तस्य निष्पादने समर्थ-यथाम्लस्य मधुरकार्यसम्पादने यथा वा नावः स्थलगमने प्रतिनियतसामर्थ्य-परिरब्धत्वात् सर्वभावानाम्। अतो निश्चिनुमः सर्वा वीर्यकृता हीति। एवं च कृत्वा येन कुर्वन्ति तद् वीर्यमिति। रसादयोऽपि वीर्यं तस्मात् ते रसादयो न वाच्या इति यच्चोद्यं तन्न। यथैकमेव रोगानीकं दुःखसामान्यादित्युक्ते ह्येतद् वचो ज्वरादिनामसंस्थानशारीरमानसागन्तुनिजचिकित्साविशेषपरिगृही-तशेषाणि रोगानीकानि बाधन्ते तद्वद् रसादीनां विपाकानां गुर्वादीनां श-ब्दादीनां क(र्म? र्मापे)क्ष्य सा क्रिया वीर्यकृता हीति शक्तिपृथक्त्वं नाधत इति। हिशब्दो यस्मादर्थे यस्मात्सर्वा वीर्येण जनिता तस्माद् यदवीर्यं तन्न किञ्चित् कुरुत इत्यर्थः इति ॥

गुर्वादिष्वेव वीर्याख्या तेनान्वर्थेति वर्ण्यते ॥ १४ ॥

---

१. 'वदति ये', २. 'तदेवं य', ३. 'त आह' ख. पाठ.

समग्रगुणसारेषु शक्त्युत्कर्षविवर्तिषु ।
व्यवहाराय मुख्यत्वाद्बह्वग्रग्रहणादपि ॥ १५ ॥

गुर्वादिष्विति । यतो वीर्यस्यैव करणसामर्थ्यं तेन कारणेन गुर्वादिष्वेवाष्टासु वीर्याख्या अन्वर्था अनुगतार्थेति भण्यते । वरत्वाद्वीर्यमिति । एवकारोऽवधारणार्थः गुर्वादिष्वेव वीर्यसंज्ञा न तु रसविपाकप्रभावेषु । हृद्याकारस्त्वाह — येन येन या क्रिया क्रियते सा सा वीर्यकृता । तत्र हेतुमाह — नावीर्यमिति । अवीर्यं अवीर्यत्वान्न किञ्चित् करोतीत्यर्थः । हिर्हेतौ चरकपक्षं गुणवीर्यमते योजयति — गुर्वादिष्वेव वीर्याख्या तेनान्वर्थेति वर्ण्यते तेन चरकेण गुर्वादिषु गुणेषु अष्टसु वीर्याख्या वीर्यशब्दः अन्वर्था अनुगतार्था इति वक्ष्यमाणन्यायेन भाष्यते क्रियानिष्पादनसामर्थ्यमपि गुर्वादीनामेवेत्यर्थः । वरत्वाद् वीर्यमित्यत्रवधारणान्न तु रसविपाकप्रभावेष्विति । किंभूतेषु गुर्वादिषु समग्रगुणसारेषु समग्रेषु गुणेषु मन्दसान्द्रादिषु रसविपाकादिषु च साराः स्थिराश्चिरकालावस्थायिनो गुर्वादय एव तथा च जाठराग्निसंयोगेनापि मधुरादिरसवत् स्वभावमेते न जहतीति समग्रगुणसारत्वं चिरकालावस्थानेन कर्मफलसाधनेनाव्यभिचारिता । हेतौ सप्तमी । सर्तेः 'सृ स्थिरे' इति घञि सारशब्दः । सत्स्वप्यन्येषु तथा कर्मणि समर्थतरत्वाद्विशेषेण गुणा गृहीतास्तथा गुर्वादीनामुत्कटतरं क्रियासामर्थ्यमन्येभ्यो वीक्ष्यमाणाष्टानामेव वीर्यपदे सन्निवेशमकुर्वन् इति न्यासे । तस्मात् शक्त्युत्कर्षविवर्तित्वं शक्तेः सामर्थ्यस्योत्कर्षोऽतिश(यं ? यः)विशेषेण वर्तनं विवर्तः शक्त्युत्कर्षेण विवर्तः स विद्यते येषां त एवं शक्त्युत्कर्षेण विवर्तिषु विशिष्टत्वेन स्थितेषु वयमन्यगुणसमाना न भवाम इति पृथक् स्थिताः । किञ्च गुर्वादीनां गुणानां व्यवहारार्थं मुख्यत्वाद् अन्येभ्यो गुणेभ्यो व्यवहारः प्रयोगः । अन्येभ्यो गुणेभ्योऽ[1]ष्टौ गुर्वादयः प्रधानभूता इत्यर्थः । शास्त्रे व्यवहारार्थमपि तेषामेव सर्वत्र प्रयोगो दृश्यते । तथा हि तत्र द्रव्यस्वरूपकथ(नं न ? नेनं[2]) गुर्वादीनां विशेषवर्तित्वेन गुरुलाघवादिव्यवहारः प्रवर्तते । तथा च गुर्वादयो गुणा द्रव्ये पृथिव्यादौ रसाश्रये इत्युक्तं न मधुरादयो गुणा इति । तस्माद् गुर्वादीनां गुणानां व्यवहारमुख्यत्वं रसादिभ्यो व्यवहारायेति तादर्थ्ये चतुर्थी । अथ वान्या कल्पना व्यवहाराय मुख्यत्वात् । आयोऽर्थः प्रयोजनं तत्साधनसमर्थाः । हृद्याकारस्तु व्यवहाराय

---

१. 'भ्योऽपि गु', २. 'नं गु' ख. पाठः

मुख्यत्वात् । अन्येभ्यो गुणेभ्यो गुर्वादयः शीघ्रं फलं साधयन्तीत्यर्थः इत्याह । तथा बह्वग्रग्रहणादपि बहुषु गुणेषु द्रव्याश्रितेषु दोषस्वरूपकथने चरकादिभिः प्रथमं गृहीताः तत्र रूक्षो लघुः शीत इति तीक्ष्णोष्ण इति स्निग्धः शीतो गुरुरिति च । प्रधानस्य प्रथमपाठो न्याय्यः । हाटकस्त्वाह — बह्वग्रग्रहणाद् बहुग्रहणादग्रग्रहणाच्च बहवो द्रव्यरसादयो गुर्वादिभिर्गृहीता भवन्ति । तथा हि एकेन गौरवशब्देन उपात्तेन द्रव्यस्य रसवीर्यविपाकानां च ग्रहणं सुखकरं भवति । अथ वा द्रव्ये हि तथान्ये गुणाः प्रभूतत्वेन वर्तन्ते यथा गुर्वादय इति तथा गुर्वादीनामायुर्वेदशास्त्रे रसादिभ्योऽग्रग्रहणं दृष्टं यथा वातादिदोषगुणनिरूपणायां गुर्वादीनामग्रग्रहणम् । अथ वा अग्रशब्दः श्रेष्ठपर्यायः तथा हि — अन्ये च गुणा न तथा देहोपयोगित्वे वरा यथा गुर्वादय इति श्रेष्ठत्वं वीर्यसंज्ञया रसविपाकगुणान्तरविजयिनो भूयांसश्च वरिष्ठाश्च गुर्वादयः संगृहीता इति वचनात् । तस्माद् गुर्वादिष्वेव वीर्याख्यो । अतोऽन्वर्थेति भण्यते वरत्वाद् वीर्यमिति ॥ १५ ॥

**अतश्च विपरीतत्वात् सम्भवन्त्यपि नैव सा ।**
**विवक्ष्यते रसाद्येषु वीर्यं गुर्वादयो ह्यतः ॥ १६ ॥**

**अतश्चेत्यादि ।** अतोऽस्माच्च समग्रगुणसारेष्वित्यादिनोक्तात् कारणकदम्बकाद् विपरीतत्वाद् वैपरीत्येन स्थितत्वात् नावीर्यं कुरुते किञ्चिदिति क्रियानिर्वर्तनसामान्याद् रसविपाकादिषु सम्भवन्त्यपि विद्यमानापि असद्रूपेव वीर्याख्या संज्ञा न विवक्ष्यते नैवोररीक्रियते । रसाद्येषु आदिशब्देन विपाकगुणान्तरप्रभावानां ग्रहणं तेषामुक्तहेत्वसम्भवाद् अपिशब्दो विरोधे न रसादिषु वीर्याख्या सम्भवतीति भावः विपरीतत्वादिति । तथा हि रसस्य सारत्वं नास्ति जाठरानलसंयोगवशेन रसान्तरोत्पत्तेः । गुर्वादीनां तु जाठराग्निसंयोगवशेनापि नान्यथाभावः तथा न रसस्य शक्त्युत्कर्षविवर्तित्वं यतो रसस्य गुर्वाद्याहितशक्तेरेव स्वकर्मणि सामर्थ्यं व्यवहाराय यथा गुर्वादेर्मुख्यत्वं यथा चाग्रग्रहणं तथा प्राग् दर्शितम् । तथा सर्वातिशायी द्रव्यस्वभावः प्रभावः तस्य च क्रियानिर्वर्तनसामान्ये सत्यपि वीर्यसंज्ञा पूर्वोक्ताद्धेतोर्न प्रवर्तते । एवं विपाककर्मणोरपि चिन्त्यम् । तस्मादेषु सम्भवन्त्यपि विद्यमानापि असद्रूपेव सा वीर्यसंज्ञा नैवोररीक्रियते । आदौ भव आद्यः 'दिगादि'त्वाद् यत् । रस आद्यो येषां त एवम् । वीर्यमित्यादि । हिशब्दो यस्मादर्थे व-

---

१. 'सारादि' ख. पाठः. २. 'क्यान्व' ग. पाठः.

स्मादेवं वीर्यसंज्ञा सम्भवन्त्यपि रसादिषु वैपरीत्यान्न विवक्ष्यते। अतो गुर्वादय एव वीर्यं न रसादयः। अयमर्थः कार्यविशेषकरणेन नामविशेषो दृष्टः न कार्यसामान्यात्। तथा हि उत्कृष्टकार्यनिष्पादनाद् द्रव्यस्य प्रभावसंज्ञा। तया रसादयो न व्याह्रियन्ते। एवं वीर्यमपीति [1]वचनं हि — सर्वातिशायी द्रव्यस्वभावः प्रभावः। सत्यपि च क्रियानिर्वर्तनसामान्ये तद्विपरीता रसादयो वीर्याख्यया प्रभावसंज्ञया वा न परामृश्यन्ते इति॥ १६॥

उष्णं शीतं द्विधैवान्ये वीर्यमाचक्षतेऽपि च।

उष्णमित्यादि। अन्ये आचार्या उष्णं शीतमिति द्विप्रकारमेवाचक्षते। एवकारोऽवधारणार्थः। द्विधैव वीर्यं नाष्टविधमिति। अपि चेति निपातनसमुदायो युक्तिसमुच्चये। सयुक्तिकमेवाहुरित्यर्थः॥

तामेव युक्तिमाह —

नानात्मकमपि द्रव्यमग्नीषोमौ महाबलौ॥ १७॥
व्यक्ताव्यक्तं जगदिव नातिक्रामति जातुचित्।
तत्रोष्णं भ्रमतृड्ग्लानिस्वेददाहाशुपाकिताः॥ १८॥
शमं च वातकफयोः करोति शिशिरं पुनः।
ह्लादनं जीवनं स्तम्भं प्रसादं रक्तपित्तयोः॥ १९॥

नानात्मकमित्यादि। व्याख्याकारस्त्वाह— कुर्वेद्[2]रूपवादिमतमष्टसु गुणेषु योजयित्वा तस्मादपि गुणद्वयात् स्वाभिमतं गुणद्वयं वीर्यत्वेन वदति उष्णमित्यादिना। अन्यशब्देन स्वात्मानमपि परिगृह्णाति गुणद्वयस्य प्रथमाध्याये गृहीतत्वात्। अपिशब्देन पूर्वोक्तहेतुकलापस्य समुच्चयः। चशब्देन वक्ष्यमाणस्येति। नानात्मकमपि महाभूतपरायत्तत्वात् नानास्वभावमपि द्रव्यं स्थावरजङ्गमं अग्नीषोमौ महाबलौ उत्कृष्टशक्ती जातुचित् कदाचित् नातिक्रामति तावुल्लङ्घ्य न वर्तते तयोर्महाबलत्वाद्। अग्नीषोमात्मकमेव सर्वमित्यर्थः। अवश्यं हि किञ्चिद् द्रव्यमाग्नेयं किञ्चित्सौम्यं अतः किञ्चिद् द्रव्यमाग्नेयत्वादुष्णवीर्यं किञ्चित् सौम्यत्वेन शीतवीर्यम्। तत्र दृष्टान्तमाह— व्यक्तं चाव्यक्तं च व्यक्ताव्यक्तं नानात्मकमिदं जगत् त्रैलोक्यं कर्तृ यथा व्यक्ताव्यक्तं नातिक्रामति तथा द्रव्यमग्नीषोमाविति। व्यक्तं स्थूलं दृश्यं तरु-

१ 'या न प्रभा', २, 'बहुरूप' ग. पाठः.

पर्वतादि अव्यक्तं सूक्ष्मं कालभूतग्रामादि । अस्मिन् पक्षे पूर्वयोरपि पक्षयोरन्तर्भावः विशेषस्य सामान्यान्तर्भावात् । साङ्ख्यानां तु महदादिर्व्यक्तं प्रधानमव्यक्तं पुरुषश्च । पाठ्यकारस्त्वाह — व्यक्ताव्यक्तं जगदिव यथा सकलभुवनतले वर्तमानं स्वेदजादिकं वा देवासुरादिकं वा यद् व्यवहारगोचरं वस्तुजातं अनादी नित्यौ सर्वगतौ प्रकृतिपुरुषावतिक्रम्य न वर्तते तथा द्रव्यमग्नीषोमाविति । हृद्याकारस्तु — व्यक्तं नाम एकादशेन्द्रियाणि पञ्च भूतानि अव्यक्तं नाम प्रकृतिमहदहङ्काररूपतन्मात्रा नेमन इत्याह । नानात्मकमपीत्यत्र नानाभूतसमवायारब्धमपीति पाठ्यकारः । अनेकभूतजनितमिति हृद्याकारः । ननु उष्णशीतयोर्वीर्यत्वेऽपि कथं विंशतिगुणाः स्युः । उच्यते । उष्णशीतयोरुत्कृष्टशक्तिमतोर्वीर्यत्वं केवलयोर्गुणत्वम् । उक्तवांश्च —

"गुर्वादयो गुणा वीर्यं शक्तिमन्तोऽन्यथा गुणाः ।
पटुसामर्थ्यहीनत्वाद् गुणा एवेतरे गुणाः ॥"

इति । प्रबलसामर्थ्ययुक्तानामष्टानां गुणानां वीर्यसंज्ञा । अन्येषां गुणानां गुणसंज्ञा च । अत्राह । संज्ञाभेदेनार्थभेदो न दृश्यत इति । उच्यते । अत्र न संज्ञाभेदमात्रं किन्तु वस्तुभेदोऽप्यस्ति । नित्यातीन्द्रियशक्ति वीर्यम् । तदुक्तं —

"शक्तयः सर्वभावानां कार्यार्थापत्तिगोचराः ।"

इति । नियमेन प्रत्यक्षग्राह्यावुष्णशीतौ गुणौ । नित्यातीन्द्रियप्रत्यक्षयोरेकत्वं कथमुपपद्यते । 'शक्तिमन्तो गुणा वीर्य'मित्यस्यायमेवार्थः । शक्तिशक्तिमतोर्भेददर्शनात् गोमान् देवदत्त इतिवत् मतुप्प्रत्ययस्य भेदविषयत्वाद् गुणवीर्ययोरत्यन्तभेद इत्यर्थः । तत्रोष्णमित्यादिना द्विधोक्ते वीर्ये तयोः कर्माण्याह — तत्र तयोरुष्णशीतयोर्मध्ये उष्णमुष्णवीर्यं भ्रमादीन् करोति । आशुपाकिता शीघ्रपाकित्वं शिशिरं शीतवीर्यं तु ह्लादनादीन् करोति ॥ १९ ॥

उद्देशक्रमेण वीर्यादनन्तरं विपाकं लक्षयति —

**जाठरेणाग्निना योगाद्यदुदेति रसान्तरम् ।**
**रसानां परिणामान्ते स विपाक इति स्मृतः ॥ २० ॥**

जाठरेणेत्यादि । उपयुक्तान्नपानादिद्रव्यस्य जाठरेणौदर्येणाग्निना योगात् संश्लेषात् रसानां परिणामान्ते जरणनिष्ठाकाले सारकिट्टविवेके रसानामपि पाके सतीत्यर्थः यद् रसान्तरं रसविशेष उदेति उत्पद्यते स विपाक इति

---

१. 'त्रा न म' क. ख. पाठः.

स्मृते मुनिभिः । अथ वा रसादन्यद् रसान्तरम् । अन्तरशब्दोऽन्यार्थवाची । स इति विशेष्यापेक्षया सर्वनामप्रयोगः । स विपाकः कीदृश इति चेत् रससमानः रसाद्भेदे रसेन निर्देशः कथमिति चेत् । फलसाम्यादिति ब्रूमः । एककार्यकरत्वादुभयोरित्यर्थः ॥ २० ॥

पूर्वोद्दिष्टं त्रित्वमुपपादयति —

स्वादुः पटुश्च मधुरमम्लोऽम्लं पच्यते रसः ।
तिक्तोषणकषायाणां विपाकः प्रायशः कटुः ॥ २१ ॥

स्वादुरित्यादि । स्वादुर्मधुरो गुडादिः पटुर्लवणः सैन्धवादिः मधुरं रसं कृत्वा पच्यते रस इति सम्बन्धः । मधुरमिति क्रियाविशेषणत्वान्नपुंसकलिङ्गः । स्वादुलवणौ मधुरविपाकावित्यर्थः । अम्लो रसो दधिकाञ्चिकादिरम्लं पच्यते अम्लविपाको भवति । मधुरो मधुरकार्यमम्लोऽम्लकार्यं कृत्वेत्यर्थः तिक्तोषणकषायाणां[1] कटुको विपाको भवति । प्रायःशब्दः पूर्वत्रापि सर्वत्र योजनीयः । तेन व्रीहिस्थो मधुरो रसोऽम्लं पच्यत इत्युपपन्नम् । एवं षण्णामपि रसानां व्यभिचारो दृश्यते । तथा हि अम्लमामलकं मधुरपाकं[2] भवति तिक्तं पटोलादिकं मधुरपाकं भवति कटुकं शुण्ठ्यार्द्रकपिप्पल्यादिकं मधुरं पच्यते । कषायं हरीतक्यादिकं मधुरपाकं भवति तथा क्षौद्रसौवर्चले पाके कटुके इत्यादि । एवं षण्णां रसानां विपाकवैपरीत्यं द्रष्टव्यम् । ननु मधुरपाकित्वे लवणस्य पित्तकरत्वाद्यनुपपन्नम् । उच्यते—विचित्रा हि प्रतिद्रव्यं रसवीर्यविपाकप्रभावशक्तयः । तेन लवणं स्वादुपाकमुष्णेन वीर्येण कोपयेदेव रक्तपित्ते । किञ्च रसाः स्निग्धादिगुणापेक्षयैव क्रियाणां कर्तारः नैवमुष्णादयो गुणा वीर्याख्याः । तत्र केचिदाहुः तिक्तकषाययोः कटुविपाकतया[3] पित्तकर्तृत्वमापद्यते इति । तदेतदसत् । शीतवीर्यत्वेनैतयोः पित्तहन्तृता वीर्यं हि रसविपाकौ विजयते । वक्ष्यति हि—'रसं विपाकस्तौ वीर्यम्' इति । यत्र रसेन सदृशो विपाको मधुराम्लकटुकानां द्रव्याणां तत्र प्रभूतरससमानगुणानामुत्कृष्टत्वाद् विपाकस्योत्कृष्टत्वं कल्पनीयम् । यत्र रसाद् विपरीतो विपाको लवणतिक्तकषायाणां तत्र रसविपरीतानां विपाकसदृशानां गुणानामुत्कृष्टत्वादुत्कृष्टत्वं कल्पयेत् । एवं मध्यत्वमल्पत्वं च । वचनं हि — द्रव्यगुण-

---

१. 'णां यः क' क. पाठः. २. 'म्लपाकं' ख. पाठः. ३. 'कि' क. पाठः.

विशेषेण चास्याल्पमध्यभूयस्त्वमुपलक्षयेदिति। अन्ये रसानामन्यथा पाकात्रित्वं वदन्ति।

पाकास्त्रयो रसानामम्लोऽम्लं पच्यते कटुः कटुकम्।
चत्वारोऽन्ये मधुरं संसृष्टरसास्तु संसृष्टम्॥
कटुतिक्तकषायाणां कटुको येषां विपाक इति पक्षः।
तेषां पित्तविघाते तिक्तकषायौ कथं भवतः॥

इति पराशरग्रन्थः। तिक्तकषाययोः कटुविपाकित्वेऽपि शीतवीर्यत्वात् पित्तहन्तृत्वमित्यदोषः। अत्राह—अम्लोऽम्लं पच्यते इति कथम्। उच्यते। अम्लविपाकाभावात्। तदुक्तं 'भूतगुणादागमाच्चाम्लपाको नास्ती'ति। अत्र हेतुरप्युक्तः भूतगुणादागमाच्चेति भूतेष्वग्नीषोमयोः प्रबलत्वात् तद्गुणयोरुष्णशीतयोराधिक्याद् द्विविध एव पाकः तयोरेव लघुर्गुरुः कटुर्मधुर इति संज्ञा। आगमादित्यनेन शास्त्रसद्भावं दर्शयति। तथा हि—

द्रव्यस्य पच्यमानस्य यस्यापां धातुरुत्तमः।
विवर्तते पार्थिवश्च तस्य पाको ध्रुवं गुरुः॥
आपो निर्वर्त्यमाना हि मृदूकुर्वन्ति पावकम्।
पृथिवीधातुरप्येवं तस्माद्धातुद्वयं गुरु॥
एवं तु गुरुपाकानां द्रव्याणां पाकलक्षणम्।
अत ऊर्ध्वं प्रवक्ष्यामि लघुपाकं यथा भवेत्॥
हीनाश्च भूम्यपां सर्वे विविक्ताश्च गुणाः स्मृताः।
यस्मिन् द्रव्ये भवन्त्येव तस्य पाको ध्रुवं लघुः॥

इति। आगमादि तु साधारणम्। पाकत्रैविध्यवादिनामप्यागमः तथाविधः। पाकास्त्रय इति भूतगुणद्वैविध्यं विपाकत्रैविध्येऽपि युज्यते। मधुरस्य सौम्यत्वं अम्लकटुकयोराग्नेयत्वमिति अम्लविपाकसद्भावेन प्रमाणमिति चेन्न। इतरत्र यत् प्रमाणं तदेवात्रापि। अयमर्थः पाकस्तावदान्तरः कल्प्यते। जठराग्निसंयुक्तस्यान्नपानस्य द्रव्यस्य पाकेन भवितव्यम्। बाह्याग्निसंयुक्तस्य काष्ठादेः पाकदर्शनात्। पक्वस्याहारस्य परिणामे विपाकः स च दोषाणां प्रवृद्धिक्षयाभ्यां कल्प्यते। मधुरेण कफवृद्धिर्वातपित्तप्रशमनं कटुकेन वातपित्तप्रकोपः श्लेष्मशमनम्। पुनरप्याह—द्वाभ्यामेव कल्पिताभ्यां कार्योपपत्तेरम्लकल्पना व्यर्थेति चेत्। तन्न। दृष्टकार्यस्य कारणाभावप्रसङ्गाद् वातशमनं पित्तकफकोपश्च दृष्टो हन्यते चेत् परिहारायाम्लकल्पना। यदि ति(क्त)कटुकेन

वातपित्तप्रकोपः मधुरेण वातपित्तप्रशमनं स्यात् तर्हि पृथक् कोपक्षयौ न स्यातां तौ च दृश्येते कोपक्षयौ । (के? ते)नाम्लसद्भावसिद्धिः । अथ पित्तस्याम्लरसो वैकृतः प्राकृतः कटुरेवास्ति कथमम्लकल्पनेति चेत् । तन्न । प्राकृत एव पित्तस्याम्लो रसः तदुक्तं—

"कट्वम्ललवणं पित्तं स्वाद्वम्ललवणः कफः ।
कषायतिक्तकटुको वायुर्दृष्टोऽनुमानतः ॥"

इति । अपि तु दोषाणां रसैर्न विपाकः कल्प्यते । किन्तु कार्यदर्शनात् तत् प्रदर्शितम् । पाकद्वयवादिनो विपाकस्य रसादन्यत्वं मन्यन्ते । तयोर्मधुराख्यो गुरुः कटुकाख्यो लघुरिति आख्याग्रहणेन रसाद् भेदो दर्शितः । अन्यत्रापि—

"रसा ये गुरवस्तेषां पाको मधुरसंज्ञकः ।
पाकः कटुकसंज्ञस्तु रसा ये लघुसम्मताः ॥"

इति । अपि च गुरुत्वलघुत्वे न भवतः पाकस्य, द्रव्यस्यैव गुरुत्वं लघुत्वं च । अथ रसादन्यत्वे विपाकानां रसैर्निर्देशः कथमिति । उच्यते । रसकार्यदर्शनात् पाकानां रसेन निर्देशः प्रसिद्धेनाप्रसिद्धस्य व्यवहारो न्याय्य इति । एष पिण्डार्थः

"कफपित्तसमीराणां स्वाद्वम्लकटुकात्मनाम् ।
वृद्ध्या स्वाद्वम्लकाटुक्यं पाकस्येहोपचारतः ॥"

इति । ननु आप्तवचनानां परस्परविरोधे को निर्वाह इति चेद् । उच्यते—

"युक्तिभिः कलहो योऽसौ मुनीनां शास्त्रगोचरः ।
शिष्यबुद्धिविवृद्ध्यर्थो न परीहारमर्हति ॥"
योऽसौ वाक्यैकगम्येऽर्थे विरोधः प्रतिभासते ।
व्याख्यात्रा परिहर्तव्यस्तत्तत्सिद्धान्तकीर्तनैः ॥ २१ ॥

एवं विपाकत्रैविध्यमुपपाद्येदानीमुपसंहरति —

**रसैरसौ तुल्यफलस्तत्र द्रव्यं शुभाशुभम् ।**
**किञ्चिद्रसेन कुरुते कर्म पाकेन वाऽपरम् ॥ २२ ॥**
**गुणान्तरेण वीर्येण प्रभावेणैव किञ्चन ।**

रसैरसौ तुल्यफल इति । असौ मधुराम्लकटुकलक्षणो विपाकः रसैर्जिह्वावैषयिकैः मधुराम्लकटुकैस्तुल्यफलः तुल्यं सदृशं फलं यस्य स तुल्यफलः मधुरस्य रसस्य ये गुणास्त एव मधुरस्य विपाकस्यापीत्यर्थः । फलग्रहणेनैतत् प्रतिपादयति फलोपममेव वृष्यादिलक्षणं कार्यं सदृशं न तु देहाह्लादनादिलक्षणं कार्यमिति अनास्वाद्यमानमधुरविपाकस्य मधुररसवद् देहाह्लादनादिकृत्वं न भवतीत्यर्थः । एवमम्लादीनामपि व्याख्येयम् । हृद्याकारोऽप्याह — तुल्यफलो न स्वरूपतः समानः रसस्य पाकात् पूर्वं यत् कार्यं देहाह्लादनादिकं तन्न कुर्वन्ति पाकादनन्तरं वातशमनादिकं कुर्वन्तीत्यर्थः तथा चोक्तं —

"रसो निपाते द्रव्याणां विपाकः कर्मनिष्ठया ।
वीर्यं यावदधीवासान्निपाताच्चोपदिश्यते ॥"

इति । कथं द्रव्याणां कार्यनिष्पत्तिरित्याह — तत्रेत्यादि । तत्र तेषु रसादिषु मध्ये द्रव्यं किञ्चिच्छुभाशुभं सदसत्कर्म दोषहरणजननलक्षणं रसेन कुरुते यथा क्षीरं माधुर्यात् पित्तं शमयति किञ्चिद् विपाकेन करोति । यथा कषायमधुरः कुलुत्थोऽम्लपाकतया पित्तं जनयति । किञ्चिद्द्रव्यं गुणान्तरेण अन्यो गुणः प्रकृतत्वाद् रसविपाकतो यः स गुणान्तरो गुर्वादिः यथा अम्लं काञ्चिकं रौक्ष्यात् कफं शमयति । किञ्चन वीर्येण । यथा कषायतिक्तं महत् पञ्चमूलं वातं जयति न तु पित्तमुष्णवीर्यत्वात् । किञ्चन द्रव्यं प्रभावेणैव शुभाशुभं कर्म कुरुते यथा अम्लोष्णा सुरा क्षीरं वर्धयति मधु च विषं हरति यत्र तु रसस्य सहायबाहुल्यं तत्र स्वभावदुर्बलानामपि रसादीनां बलवत्त्वं भवति यथा क्षीरं शीतवीर्यमपि माधुर्यस्नेहगौरवादिभिर्वातं शमयति । शुभाशुभद्रव्यमिति विशेषणं वा पथ्यापथ्यलक्षणद्रव्यमित्यर्थः । उत वा एकमेव द्रव्यं मध्वादि किञ्चित् कर्म रसेन कुरुते यथा मधुरकषायत्वेन रसेन पित्तशमनादि कुरुते । पाकेनापरं कर्म यथा तदेव मधु कटुविपाकतया श्लेष्मशमनादि कुरुते । तदेव मधु गुणान्तरेण रूक्षादिना वातकोपादि कुरुते । वीर्येण शीतेन तृट्शमनादि । प्रभावेन विषशमनादि । तत्र सर्वत्र कर्मनिर्वर्तकं मध्वेव । द्रव्यस्य कर्मनिर्वर्तने रसवीर्यगुणप्रभावाः कारणीभवन्ति ॥

यत्र द्रव्याश्रितानां विरोधः तत्र तेषां कार्यनिष्पादने समशक्तित्वं न वेत्याह—

**यद्यद्द्रव्ये रसादीनां बलवत्त्वेन वर्तते ॥ ९३ ॥**

---

१. 'शमधु' ग. पाठः. २. 'तीक्ष्णोष्णा' ग. पाठः.

**अभिभूयेतरांस्तत्तत् करणत्वं प्रपद्यते ।**
**विरुद्धगुणसंयोगे भूयसाल्पं हि जीयते ॥ २४ ॥**

यद् यदित्यादि । द्रव्याश्रितानां रसादीनां पृथगेव कार्यनिष्पत्तौ किं कारणमित्याहेति वा सम्बन्धः । द्रव्यगतानां रसादीनां कर्मणि तुल्यत्वमतुल्यत्वं वेत्याशङ्क्याह — इति ह्याकारः । द्रव्याश्रितानां रसवीर्यविपाकगुणप्रभावानां मध्ये यद् रसादिवस्तु रसो वा वीर्यं वा विपाको वा गुणो वा प्रभावो वा बलवत्त्वेन बलिष्ठतया द्रव्ये वर्तते तत्तद्वस्तुजातमितरानबलानभिभूय विफलीकृत्य करणत्वं कर्मणि साधकतमत्वं प्रतिपद्यते प्राप्नोति । यथा महत् पञ्चमूलं तिक्तकषायरसमपि वातं शमयति उष्णवीर्यत्वात् पित्तं जनयति । कटुका पिप्पली पित्तं शमयति मृदुशीतवीर्यत्वात् । तिक्ता काकमाची पित्तं वर्धयति उष्णवीर्यत्वात् । कटुकं मूलकं श्लेष्माणं बर्धयति स्निग्धत्वात् । अम्लं कपित्थं श्लेष्माणं शमयति रूक्षत्वात् । कारणत्वं प्रपद्यत इति वा पाठः न तु बलवदबलवच्च स्वं स्वं कार्यं कुर्वन् करणत्वमासादयति ॥

इत्यत इदमाह— हि यस्माद् विरुद्धगुणसंयोगे रसादिगुणानां विषमसंयोगभावे सति यदल्पं वस्तु भूयसा बलवता जीयतेऽभिभूयते । गुणशब्देनात्र रसादयो गृह्यन्ते न पारिभाषिका गुर्वादयोऽप्रकृतत्वात् । विरुद्धगुणसंयोग इत्यत्र विरुद्धसमवेतद्रव्यसंयोग इति बोद्धव्यम् । न हि गुणानां संयोगो वक्तुं युज्यते किन्तर्हि द्रव्याणाम् । वचनं हि — संयोगस्तु द्वयोर्बहूनां वा संहतीभाव इति । हाटकस्त्वन्यथा सम्बन्धं ब्रूते । यत्र तु द्रव्ये मधुररसत्वाद् गुरुत्वं उष्णवीर्यत्वाच्च लघुत्वमिति गुणविरोधः न तु रसादीनां तत्र कथं कार्यकर्तृत्वमिति पृष्ट आह— विरुद्धेत्यादि । अथ वा रसादिकल्पनाविशेषेणैव यत्र विरुद्धगुणोपनिपातः । तत्र कथं कार्यकर्तृत्वमित्याह— विरुद्धेत्यादीति । ह्याकारोऽप्येवमाह — यत्र विरुद्धगुणानां रूक्षोष्णादीनां सम्भवस्तत्र कथं कार्यकर्तृत्वमित्याह— विरुद्धगुणेत्यादि । अन्यथा वाशङ्का यत्र कषायादिकल्पनाविशेषेण विरुद्धगुणनिपातस्तत्र कथं कार्यकर्तृत्वमित्यत्रोत्तरं विरुद्धेत्यादि इति । विरोधश्च द्विविधः स्वरूपतश्च कार्यतश्च । स्वरूपविरोधो यथा — गुरुलघ्वोः शीतोष्णयोश्च । कार्यतो यथा — वायौ जेतव्येऽरूक्षोष्णद्रव्यसंयोगः तथा गुरुरूक्षयोरुष्णस्निग्धयोश्च इत्युभयोरपि विरोधयोर्ग्रहणम् । तथा चोक्तम् —

"परस्परासहिष्णुत्वं स्वरूपाद् कार्यतोऽपि वा ।
विरोध इष्टो वस्तूनां स्वरूपादुष्णशीतयोः ॥
रूक्षगुर्वोस्तु कार्येण विरोधो न स्वरूपतः ।
रूक्षस्य कफहन्तृत्वं तत्कर्तृत्वं गुरोर्मतम् ॥
कफहन्तृत्वकर्तृत्वकार्येणैतद् विरुध्यते ।

इति । एकत्र द्रव्यस्वरूपविरोधीयाभावः पाञ्चभौतिकत्वादुपपद्यते । संयोगशब्देनैकद्रव्यवृत्तित्वं विवक्षितम् । अन्यथा गुणानां सांयोगाभावादुत वा निर्गुणा गुणा इति गुणानां गुणसंयोगाभावाद् विरुद्धगुणद्रव्यसंयोग इत्यवगन्तव्यम् । व्याख्याकारोऽप्येवमाह — विरुद्धगुणसंयोग इति गुणिसंयोग एवोपचरितो द्रव्यनियतत्वात् संयोगस्य । अथ वा गुणसंयोगश्च सांख्यमतानुसारिणामिष्ट इति तस्मिन् संयोगे भूयसाल्पं जीयते । यथा संस्कारकस्य मरिचस्य लाघवं संस्कार्यस्यापूपस्य गौरवेणाभिभूयत इति गुणविरोधः । एवं रसादीनामपि विरोधोऽप्यूह्यः । यथा — शर्करापले मरीचस्यैकस्य रसो नोपलभ्यते । एवं वीर्यादिष्वपि द्रष्टव्यम् ॥ २४ ॥

यत्र तु द्रव्ये रसादीनामुत्कर्षासम्भवः परस्परसाम्यं तत्र कस्य कार्यकरत्वमित्याह —

**रसं विपाकस्तौ वीर्यं प्रभावस्तान् व्यपोहति ।**
**बलसाम्ये रसादीनामिति नैसर्गिकं बलम् ॥ २५ ॥**

रसमित्यादि । रसं मधुरादि षड्विधं विपाको व्यपोहति कार्यकरणे कुण्ठयति — यथा मधुनि मधुरो रसः कटुना विपाकेनाभिभूयते । अत्रैव पवनशमनाख्यं कार्यं मधुररसहेतुर्न करोति अपि तु वातकोपनाख्यं कटुविपाकहेतुकमेव करोति । तौ रसविपाकौ वीर्यं कर्तृभूतमपोहति यथा — महिषामिषे स्थितौ स्वादू रसविपाकौ उष्णवीर्यं कर्तृ अभिभवति । अत एव तन्मांसं पित्तादिदूषणम् । अन्यथा स्वादुरसविपाकत्वात् तत् पित्तशमनमेव स्यात् । प्रभावस्तु तांस्त्रीनपि रसादीन् विजयते । यथा अम्लरसविपाका उष्णवीर्या सुरा स्तन्यं जनयति इति । ईदृशं रसादीनां नैसर्गिकं बलं स्वाभाविकी शक्तिः । एतदुक्तं भवति — रसं समबलमपि विपाकोऽपोहति रसविपाकौ समबलावपि वीर्यं स्वभावादपोहति एतानि च समबलान्यपि प्रभावोऽपोहति । व्याख्याकारस्तु पद्यरूपेणाह —

---

१. 'मानव' ख. पाठः

"यथा पुष्परसं स्वादुरसं कफविनाशनम् ।
वातकृच्च विपाकेन रसशक्त्या न पित्तकृत् ॥"

इत्यादि । ननु तेषां रसादीनां द्रव्यस्थितानां स्वरूपविशेषः कथं ज्ञायते । रसं जिह्वासम्बन्धमात्रेण विद्यात् । वीर्यं तेन सम्बन्धेन क्वचित् क्वचिद् द्रव्ये विपरीतरसेनाभिभूतत्वात् कालान्तरेण देहतापादिकरणात् । विपाकं तु तत्कृतस्य कर्मणो दोषवृद्धिक्षयस्य निष्पत्तेः वचनं हि —

"रसं विद्यान्निपातेन तेनाधिवसनेन च ।
वीर्यं विपाकं द्रव्याणां कर्मणः परिनिष्ठया" ॥ २५ ॥

इति ॥

ननु द्रव्यरसवीर्यविपाका ज्ञाताः प्रभावस्य स्वरूपं कर्म च कीदृशमित्याह —

**रसादिसाम्ये यत्कर्म विशिष्टं तत्प्रभावजम् ।**

**रसादी**त्यादि । द्वयोर्द्रव्ययो रसादीनां रसवीर्यविपाकानां साम्ये तुल्यत्वे सति यदेकं द्रव्यमन्यत् कर्म कुरुते । अन्यत् पुनरन्यद् विशिष्टं कर्म तत् प्रभावजं प्रभावाज्जातमिति ज्ञेयम् । अयमस्य प्रभाव इति विशिष्टकर्मकरणान्निश्चीयते इत्यर्थः । हृद्याकारोऽप्याह — द्वयोर्द्रव्ययो रसवीर्यविपाकगुणानां साम्ये एकस्य यत् कर्म एकस्माद् विशिष्टं व्यावृत्तं तत् प्रभावजनितं तस्य विशिष्टस्य कर्मणो जनकः प्रभाव इत्यर्थः । इति तस्मात् रसवीर्यविपाकगुणातिशायी द्रव्यस्वभावो यः स प्रभावः । उक्तं च —

"रसवीर्यविपाकादिगुणातिशयवानयम् ।
द्रव्यस्वभावो निर्दिष्टो यः प्रभावः स कीर्तितः ॥"

इति । हाटकस्तु एवं प्रभावलक्षणमाह — रसवीर्यविपाकगुणान्तरातिशायी द्रव्यस्वभावः प्रभावः स च सामान्यविशेषाख्यो दन्तीत्यादिरिति । अन्येप्येवमाहुः — प्रतिवस्तु स्वसंज्ञाप्रवृत्तिनिमित्तलक्षणोपायो यो धर्मस्त्वतलादिप्रत्ययप्रतीतिसमधिगम्यः स प्रभावः इति । तन्त्रान्तरे चोक्तं —

"वस्तूनां यः स्वसंज्ञायाः प्रवृत्तौ कारणं स्मृतम् ।
त्वतलाद्यर्थबोध्यश्च प्रभाव इति सोदितः ॥"

---

१. 'न्त्रकारे' क. पाठः.

इति । एवं च दन्तीत्वाद् दन्त्या विरेचनकारित्वं प्रभावः । चित्रकस्य चित्रकत्वादविरेचनकारित्वं प्रभावः इत्यादिसकलपदार्थेषु बोद्धव्यं इति स्वरूपं प्रभावस्य ॥ २५ ॥

तत्रोदाहरणं दर्शयति —

**दन्ती रसाद्यैस्तुल्यापि चित्रकस्य विरेचनी ॥ २६ ॥**
**मधुकस्य च मृद्वीका घृतं क्षीरस्य दीपनम् ।**

दन्तीत्यादि । चित्रकस्य रसवीर्यविपाकैस्तुल्यापि दन्ती रसादिभ्योऽतिशायि द्रव्यस्वभावयोगाद् विरेचनी न तु चित्रकः । मधुकस्य रसादिभिस्तुल्यापि मृद्वीका विरेचनी न तु मधुकम् । घृतं रसादिभिः क्षीरस्य तुल्यमपि दीपनं न पुनः क्षीरम् । एवमन्येष्वपि बोद्धव्यम् ॥

यतः सामान्यविशेषाभ्यां सकलं व्याप्तमतो ग्रन्थकार इदमाह —

**इति सामान्यतः कर्म द्रव्यादीनां पुनश्च तत् ॥ २७ ॥**
**विचित्रप्रत्ययारब्धद्रव्यभेदेन भिद्यते ।**

इतीत्यादि । इतिशब्दः प्रकारे अनेन प्रकारेण द्रव्यरसवीर्यविपाकगुणप्रभावानां कर्म सामान्येन व्याख्यातं न विशेषेण यैरेव महाभूतै रसादयो द्रव्याश्रिताः आरब्धाः तैरेव महाभूतैर्यानि द्रव्याण्यारब्धानि तेषां कर्मोक्तिमित्यर्थः । अतः सामान्यतः कर्म द्रव्यादीनामुक्तम् । व्याख्याकारस्तु द्रव्यादीनां कर्म सामान्यतः साधारणमुक्तमित्याह । साम्प्रतं विशिष्टं कर्म प्रतिद्रव्यं वक्तुमिदमाह — पुनश्च तदिति । व्यतिरेके चशब्दः । द्रव्यादीनां पृथक् कर्म पूर्वमुक्तम् । तत् सामान्येनोक्तं कर्म द्रव्यरसादीनां सम्बन्धि पुनर्भिद्यते विशेष्यते केन विचित्रप्रत्ययारब्धद्रव्यभेदेन प्रत्ययाः कारणानि भूतानि विचित्राश्च ते प्रत्ययाश्च विचित्रप्रत्ययाः नानाप्रकारसंनिवेशविशेषयुक्तानि महाभूतानि प्रतिसत्त्वं प्राक्तनशुभाशुभकर्मप्रेरितो विचित्रो महाभूतपरिणाम इत्यर्थः । तैर्विचित्रप्रत्ययैरारब्धस्य जनितस्य द्रव्यस्य भेदो विशेषः तेन विचित्रप्रत्ययारब्धद्रव्यभेदेन नानाप्रकारसन्निवेशविशेषयुक्तमहाभूतारब्धद्रव्यवैलक्षण्येन तत् सामान्योक्तं कर्म द्रव्यादीनां भिद्यते नानात्वेन सम्पद्यते । द्रव्याश्रितत्वाद् रसादीनामपि यत् कर्म तदपि द्रव्यभेदेन भिद्यते । ननु सर्वमपि देशकालादिवशाद् विचित्रप्रत्ययारब्धं परस्परवैलक्षण्याद् द्रव्याणां परस्परवैलक्षण्येन चैषां विचित्रप्रत्ययारब्धत्वमेव कारणं यद् यद्वशादन्यदिदं

द्रव्यमिति रूपरसवीर्यविपाकादिभिन्नमुत्पाद्यते तथा प्रतिभासते च तत् किमुक्तं विचित्रप्रत्ययारब्धद्रव्यभेदेन भिद्यते इति । सत्यमेतत् । किन्तु विशिष्टस्य द्रव्यस्य संग्रहार्थं विचित्रप्रत्ययारब्धमिति विशेषणं कृतम् । तस्य भेदेन द्रव्ये रसवीर्यादीनां यत् सामान्येनोक्तं कर्म तद् भिद्यते । यस्मिन् द्रव्ये रसादीनामन्यानि महाभूतान्यारम्भकाणि द्रव्यस्य चारम्भकाण्यपराणि तद् द्रव्यं विचित्रप्रत्ययारब्धमिति यावत् । तत्र द्रव्ये द्रव्यारम्भकभूतैः समानानि गुणारम्भकभूतानि तत् सामान्यप्रत्ययारब्धं तद्विपरीतं विचित्रप्रत्ययारब्धमित्यर्थः । तदुक्तं—

"ये रसा वातशमना भवन्ति यदि तेषु वै ।
रौक्ष्यलाघवशैत्यानि न ते तत्कर्मकारिणः ॥"

इति । तदेवं द्रव्याणां द्वैविध्यं यतो यैरेव महाभूतैर्यथाविधै रसादय आरब्धास्तैरेव तथाभूतैस्तदाश्रयाण्यपि द्रव्याण्यारब्धानि रसादिसमानप्रत्ययारब्धाण्युच्यन्ते । तानि च यथायथं तत्कर्म रसाद्यनुगुणं सामान्यात् कुर्वते यथा क्षीरेक्षुशर्करादीनि कानिचित् पुनस्तदाश्रितरसाद्यारम्भकमहाभूतेभ्यो यान्यन्यादृंशि महाभूतानि तैरारब्धानि विचित्रप्रत्ययारब्धानि द्रव्याणि तानि च यथायथं रसाद्यनुगुणं कर्म न कुर्वन्ति । सामर्थ्यं शक्तिशब्दवाच्यं सकलपदार्थानां कार्यनिष्पादनकल्पितं त्रिधा गृह्यते वीर्यं प्रभावो विचित्रप्रत्ययारब्धमिति तेषां कलया भेदश्च । तथा हि —

"एवं त्वादिदमीदृक् स्यादिति कल्पयितुं क्षमम् ।
वीर्यं प्रभावो भावानां कार्[1]ैः समधिगम्यते ॥
उष्णत्वाद् वातशमनः शीतत्वात् पित्तनाशनः ।
इत्यादियुक्त्यनुगमो वीर्याख्यः कार्यसाधकः ॥
प्रभावो युक्त्यनुगमाद् दूर एव प्रवर्तते ।
विचित्रप्रत्ययारब्धद्रव्यकर्मापि तादृशम् ॥"

प्रभावविचित्रप्रत्ययारब्धयोरीषद् भेदश्च । समयोर्द्रव्ययोरेकस्य विशिष्टकर्मजनकत्वं प्रभावः । समयोरेवानयोर्विरुद्धकार्यकरत्वं विचित्रप्रत्ययारब्धं नामेति ॥

---

१. 'काणि भू' ग. पाठः. २. 'र्म कु' क. ख. पाठः.

विचित्रप्रत्ययारब्धानामुदाहरणमाह —

**स्वादुर्गुरुश्च गोधूमो वातजिद्वातकृद्यवः ॥ २८ ॥**
**उष्णो मत्स्यः पयः शीतं कटुः सिंहो न सूकरः ।**

स्वादुरित्यादि । स्वादुरसोपेतो गुरुगुणयुक्तश्च गोधूमो मधुररसोपदिष्टं वातशमनं करोति । समानप्रत्ययारब्धत्वात् । यवस्तु मधुररसोपेतो गुरुगुणयुक्तश्च मधुररसोपादिष्टं वातजित्वं न करोति अपि तु वातकृद्भवति विचित्रप्रत्ययारब्धत्वात् (रूक्षत्वाद् यवो हि रूक्षः) वीर्यतोप्याह—मत्स्यः स्वादुरसो गुरुरपि न मधुररसोपदिष्टशीतवीर्यः किं तर्ह्युष्णवीर्यो विचित्रप्रत्ययारब्धत्वात् । उष्णा मत्स्या इति वा पाठः । क्षीरं तु स्वादु गुरु रसोपदिष्टं शीतवीर्यं समानप्रत्ययारब्धत्वात् । विपाकतोऽप्याह — स्वादुरसो गुरुगुणयुक्तः सिंहो न मधुररसोपादिष्टमधुरविपाकः किं तर्हि रसवैपरीत्येन कटुको विपाके विचित्रप्रत्ययारब्धत्वात् । सूकरो मधुररसो गुरुगुणयुक्तश्च यथारसं मधुरविपाक एव समानप्रत्ययारब्धत्वाद् । यत्र द्रव्ये द्रव्यारम्भकभूतैः समानानि गुणारम्भकभूतानि तत् समानप्रत्ययारब्धं तद्विपरीतं विचित्रप्रत्ययारब्धम् । तस्माद् यत एवं विचित्रप्रत्ययारब्धत्वाद् विचित्ररूपं तस्माद् रसोपदेशेन न सर्वं द्रव्यमादिशेत् । अपितु रसादिसमानप्रत्ययारब्धमेव द्रव्यं रसोपदेशेनादिशेत् । एवं यानि रसादिसमानप्रत्ययानि द्रव्याणि तेषां रसोपदेशेनै(वं ? व) गुणा निर्दिष्टा भवन्ति । तथाच मुनिः —

"शीतं वीर्येण यद् द्रव्यं मधुरं रसपाकयोः ।
तयोरम्लं यदुष्णं च यच्चोक्तं कटुकं तयोः ॥
तेषां रसोपदेशेन निर्दिष्टो गुणसङ्ग्रहः ।
यथा पयो यथा सर्पिर्यथा वा चव्याचित्रकौ ॥
एवमादीनि चान्यानि निर्दिशेत् रसतो भिषक् ।"

इति । बाहुल्येन रसादिसमानप्रत्ययारब्धान्येव द्रव्याणीति चेत् स्वीकृत्याचार्योऽवोचत् । यथा —

"गुर्वादयो गुणा द्रव्ये पृथिव्यादौ[1] रसाश्रये ।
रसेषु व्यपदिश्यन्ते साहचर्योपचारतः ॥"

---

१. 'चारतः' ग. पाठः.

इति। यत एवं बहुतराणि द्रव्याणि रसादिसमानप्रत्ययारब्धान्यतो रसोपदेशव्याप्त्या तानि निर्देष्टुं शक्यन्ते नान्यथा विचित्रप्रत्ययारब्धानि पुनः कतिपयान्येव द्रव्याणि तानि प्रतिद्रव्यमेवोपदिश्यन्ते ये च रससंयोगा वक्ष्यमाणास्ते रसादिसमानप्रत्ययारब्धैः रसैः कल्पनीयाः। न तु विचित्रप्रत्ययारब्धैः रसैः यत्तेषां न यथाशास्त्रनिरूपिता रसवीर्यादयो विद्यन्ते विचित्रप्रत्ययारब्धत्वात् ॥ २८½ ॥

इति श्रीदासपण्डितविरचितायां हृदयबोधिकायां नवमोऽध्यायः ॥

---

## दशमोऽध्यायः।

**अथाऽतो रसभेदीयमध्यायं व्याख्यास्यामः।**

पूर्वस्मिन्नध्याये 'रसान् भेदैरुत्तरत्रोपदेक्ष्यती'त्युक्तम्। अतो रसभेदीयाध्यायं ब्रूते। द्व्याकारोऽप्याह—यत् प्रागुक्तं र(सो? सान्) भेदैरुत्तरत्रोपदेक्ष्यते इति तद्भेदसंवित्त्यै रसभेदीय उच्यते इति। रसानां भेदो रसभेदः तस्मै हितो रसभेदीयः तमध्यायम् ॥

तत्रादौ रसानामुत्पत्तिप्रकारं दर्शयति—

**क्ष्माम्भोऽग्निक्ष्माऽम्बुतेजःखवाय्वग्न्यनिलगोऽनिलैः।**
**द्वयोल्बणैः क्रमाद्भूतैर्मधुरादिरसोद्भवः ॥ १ ॥**

क्ष्मेत्यादि। रसः खल्वेक एवाबाख्यान्महाभूतात् सम्पद्यते। स पुनः षोढा पृथग् विपरिणमते मधुरादिभेदेन। हाटकोऽप्याह — रसनेन्द्रियग्राह्यो रसः खल्वाप्यः अनासादितान्यमहाभूतानुरागः अव्यक्तस्वरूपः मधुरादिभेदेनानिर्धारित इत्यर्थः। रसो महाभूतानतिरिक्तैर्गुणैर्विदग्धः परिणत्या गृहीतमहाभूतगुणानुराग एक एव रसः पृथङ्मधुरादिभेदेन षड्भिर्विकारैर्विपरिणमते। महाभूतादूनाधिकशक्तित्वं च कालस्य संवत्सराख्यस्य षडृतुकत्वात् पूर्वमेव प्रत्यपादि षडेव रसा इति। तानेव लक्षयति—क्ष्माम्भोऽग्नीत्यादि। पृथिव्यादिभिर्महाभूतैर्द्वयोल्बणैर्द्व्याधिकैः क्रमाद् यथासंख्यं मधुरादीनां षण्णां रसानामुद्भवोऽभिनिर्वृत्तिर्भवति महाभूतानां न स्वरूपत औल्बण्यमभिमतम्।

---

१. 'दाध्वा', २. 'सिद्धैर' ख. पाठः.

किं तर्हि सहकारि(क ? का)रणभूतशक्त्युत्कर्षविशेषः । द्व्यमुल्बणं येषु भूतेषु तान्येवम् । उल्बणशब्देन रसस्यापि द्रव्यवत् पाञ्चभौतिकत्वं सूचयति । हाटकोऽपि उल्बणशब्देन सर्वेषां भूतानां सर्वस्मिन् रसे कारणत्वं दर्शयतीत्याह । उक्तं च—

"स्वतो रसात्मकं वारि षोढा परिणतिं गतम् ।
रसानां कारणं भूमिः सलिलानुप्रवेशनात् ॥
रसीभूय रसोत्पत्तौ हेतुत्वं प्रतिपद्यते ।
निमित्तत्वं नभोवारितेजसां रसजन्मनि ॥"

इति । कतमत् पुनर्भूतद्वयं कतमस्मिन् रसेऽधिकमार(म्भं ? म्भकं) स्यादिति यथासंख्येन दर्शयन्नाह—भूमिजलाभ्यामधिकाभ्यां मधुरः अग्निक्ष्माभ्यामधिकाभ्यामम्लः अम्ब्वग्निभ्यां लवणः खवायुभ्यां तिक्तःअग्निवायुभ्यां कटुः भूमिवायुभ्यां कषायः । क्रमादिति अनेनैव क्रमेण रसोत्पत्तिर्न क्रमान्तरेण । प्रकारान्तरेणापि भूतसंयोगः सम्भवति वायुव्यतिरिक्तैस्त्रिभिर्भूतैः संयोगात् । न रसान्तरोत्पत्तिरिति क्रमशब्दार्थः । क्रमान्तरेण कस्मान्न रसोत्पत्तिरिति चेद् । उच्यते । दृष्टस्य कार्यस्य कारणं कल्प्यते न रसान्तरमुपलभ्यते तस्मान्न कारणचिन्तावकाशः । हाटकोऽप्याह—हेमन्ते मधुररसस्योद्भवः वर्षास्वम्लस्य शरदि लवणस्य शिशिरे तिक्तस्य ग्रीष्मे कटुकस्य वसन्ते कषायस्य एषु कालेषु कारणशक्त्युत्कर्षात् । ननु यथा भूमितोयाधिक्यान्मधुरः । एवमम्बुवाय्वाधिक्यादन्यः । भूम्याकाशाधिक्यादन्य इत्यादिविकल्पैरसङ्ख्यो रसप्रसङ्गः प्राप्नोति । अत्रोच्यते । स्वभावाददोषः । यथा भूम्यादीनां स्थिरत्वादि स्वाभाविकं तद्वत् । एत(दे ? ए)व यथोक्ता भूतविकल्पा रसनिर्वर्तने समर्था नान्ये । एवं स्वभाव एषामिति । अरुणदत्तोऽप्याह— एषां भूम्याकाशादीनामसदृशः स्वभावो यत् केनचिदेव भूताधिक्येन व्यवस्थितानि भूम्यादीनि रसान्तरोत्पादनसमर्थानि भवन्ति न सर्वेणेति । (इति ?)आह । कारण[1]गुणपूर्वकाः कार्ये गुणाः इत्यपामेव रसवतामारम्भकत्वमापो हि रसवत्य इत्यागमात् । न पृथिव्यादीनाम् । पृथिव्यग्निवाय्वाकाशास्तु नीरसास्ते कथं रसभेदानुद्भावयन्ति । अत्रोच्यते । प्रत्ययहेतुत्वाददोषः द्विविधं हि कारणं हेतुः प्रत्ययहेतुरिति हेतुर्यः कार्यस्य निर्वर्तकः समवाय्यसमवायिरूपः प्रत्ययस्तूपकारमात्रं करोति । तत्र हेतु-

१. 'णपू' क. पाठः ।

सादृश्यमेव कार्यस्य न प्रत्ययसादृश्यं यथा शुक्लस्य पटस्य शुक्लतन्तवो निर्वर्तकत्वादेतेव इत्युच्यन्ते शङ्कुशलाकारज्जुतुरीकुरुविन्दादयः प्रत्ययाः । अतस्तन्तुभिः सादृश्यं पटस्य न शंकादिभिः । तस्मादाधारस्यैव रसस्य पृथिव्यादिभिरुत्कर्षः कश्चिदाधीयते इति तथा चागमः — तेषां षण्णां रसानां सोमगुणातिरेकान्मधुरो रसः पृथिव्यग्निभूयिष्ठत्वादम्लः सलिलाग्निभूयिष्ठत्वाल्लवणः वाय्वग्निभूयिष्ठत्वात् कटुकः वाय्वाकाशातिरेकात् तिक्तः पवनपृथिव्यतिरेकात् कषायः । तदेवं तेषां षण्णां रसानां षट्त्वमुपपन्नम् । ऊनातिरेकविशेषान्महाभूतानामिव जङ्गमस्थावराणां नानावर्णाकृतिविशेषाः षट्तुकत्वाच्च कालस्योपपन्नो महाभूतानामूनातिरेकविशेष इति । ननु एवं स्थितानां षट्त्वं नोपपन्नमास्वादविशेषाणामपरिसङ्ख्येयत्वात् तथाहि — मधुररसाधिष्ठितानां क्षीरद्राक्षेक्षुशर्करादीनां प्रतिव्यक्त्यन्यादृश आस्वाद उपलभ्यते नत्वेकरूपः एवमम्लानामारनालकोललिकुचादीनामेवं तिक्तादीनामिति । अत्र संचक्ष्महे — मधुरजातियोगिनां क्षीरादीनामास्वादवैषम्यान्न रसषट्त्वहानिः । कथं क्षीरद्राक्षादिद्रव्याणामारम्भकारणवैचित्र्यादास्वादविशेषः आस्वादनादिविशेषो द्रव्यविशेषः अन्यथा द्रव्यभेदो न स्यात् तस्मादिदं मधुरमिदं मधुरमिति प्रतिपत्तिजनकत्वे द्रव्याणां माधु(र्यं ? र्य)तारतम्यमेव दृष्टं न मधुररसातिरिक्तरसान्तरप्रतिपत्तिः । रसान्तरप्रतिपत्तौ सत्यां समीचीनोऽधिक्षेपः तस्मात् स्थितमेतत् षडेव रसा इति । वचनं हि—

गुर्वादीनां विशेषेण स्वजातेरनतिक्रमात् ।
सङ्ख्याभेदो यथा नास्ति रसानामपि स क्रमः ॥
दृष्टं मुखोपलेपादि यत् सर्वेषु घृतादिषु ।
न च तत् दाडिमाद्येषु षडेवातो रसाः स्मृताः ॥ इति ।

व्याख्याकारोऽप्याह— प्रतिद्रव्यमास्वादभेदो रसकारणभूतद्वन्द्वोत्कर्षापकर्षविशेषेण उक्तं च — "इक्षुक्षीरक्षौद्रद्राक्षादेः स्वादुभेदनिष्पत्तिः भूजलयोः कारणयोरुल्बणयोस्तारतम्यसम्बन्धादिति । अम्ललवणादिष्वप्येवमेव बोद्धव्यम् ॥ १ ॥

१. 'तुरिस्यु', २. 'ते' क. पाठः ३. 'त्रप' ख. पाठः ४. 'र्षेण' ख. पाठः.

तेषां विद्याद्रसं स्वादुं यो वक्त्रमनुलिम्पति ।
आस्वाद्यमानो देहस्य ह्लादनोऽक्षप्रसादनः ॥ २ ॥
प्रियः पिपीलिकादीनाम्

केन लक्षणेन रसविशेषो ज्ञायते इति तल्लक्षणमाह — तेषामित्यादि। तेषां रसानां मध्ये य आस्वाद्यमानो वक्त्रमुपलिम्पति मुखोपदेहं जनयति । तथा देहस्य ह्लादनः आश्वासकरः तथा अक्षाणामिन्द्रियाणां प्रसादनः प्रसन्नत्वकृत् तथा पिपीलिकादीनां प्रियं इत्यनेनैतद् दर्शयति — प्रमेहादिषु मूत्रदृगादौ पिपीलिकोपसर्पणान्माधुर्यानुमानं कृत्वा मेहित्वं विज्ञायते इति तं मधुरं जानीयात् । मधुरस्यादौ ग्रहणं प्राधान्यात् तच्चाजन्मसात्म्याद् भूयिष्ठोपयोगात् सर्वप्राणिनामभिमतत्वाच्च । आस्वाद्यमान इत्युत्तरत्रापि सम्बध्यते ॥

अम्लः क्षारयते मुखम् ।
हर्षणो रोमदन्तानामक्षिभ्रुवनिकोचनः ॥ ३ ॥

अम्ल इत्यादि । अम्ल आस्वाद्यमानो मुखं क्षारयते स्रावयति तथा रोमदन्तानां हर्षणः रोम्णां हर्षो रोमोद्गमः । दन्तानां हर्षः कठिनानां दंशनासामर्थ्यम् । अक्षिभ्रुवनिकोचनः अक्षिणी च भ्रुवौ चाक्षिभ्रुवम् । "अचतुर—" इत्यादि सूत्रे निपातितमकारान्तम् । तस्य निकोचनः सङ्कोचः । अक्ष्णोर्भ्रुवोश्चाल्पीभावं करोतीत्यर्थः । अम्लस्यातिशयेन भक्तरोचनत्वमध्याहार्यम् । अम्लो रसो भक्तं रोचयतीत्यागमात् ॥ ३ ॥

लवणः स्यन्दयत्यास्यं कपोलगलदाहकृत् ।
तिक्तो विशदयत्यास्यं रसनं प्रतिहन्ति च ॥ ४ ॥

लवण इत्यादि । लवणो मुखं स्यन्दयति स्रावयति तथा कपोले गले च दाहं करोति । अन्नस्य रोचन इतीह सुप्रसिद्धत्वान्नोक्तम् । सङ्ग्रहे तु स्पष्टार्थमुक्तम् । यथा 'कण्ठकपोलं विदहत्यन्नं प्ररोचयती'ति । हाटकोऽपि अन्नस्य रोचन इत्यवगन्तव्यं 'न ह्यलवणं पार्यतेऽभ्यवहर्तुमि'ति वचनादित्याह । ननु सलिलाभिभूयिष्ठत्वाल्लवणः इत्यनुष्णाशीतेन लवणेन भवितव्यं कथमुच्यते लवणस्योष्णवीर्यत्वम् । तथा चागमः 'उष्णः स्निग्धश्चे'ति । ब्रूमः । रसारम्भे द्वयोरप्यग्निसलिलयोर्व्यापारः उष्णगुणारम्भे त्वग्नेरेव । कदाचित्तु द्वयोर्भूतयोरधिकयोरेकस्य रसारम्भे व्यापारो भवति । अन्यस्य तु गुणारम्भे । यथानूपमांसेऽ-

---

१. 'ब' च, पाठः.

मेरौष्ण्यारम्भे अन्यथा लवणं स्यात् । सोमस्य तु रसारम्भे । अन्यथा तन्माधुर्ये सति शीतं भवेत् । अयमेषां स्वभावः । यत् केनचित् प्रकारेण निविष्टानि रसारम्भे समर्थानि । अपरेण तु प्रकारेण निविष्टानि गुणारम्भे । ते च प्रकारा नास्मादृशबुद्धिगम्या इति न्यासे ॥

तिक्तो मुखं विशदयति पैच्छिल्यं नाशयति रसनेन्द्रियं च प्रतिहन्ति अन्यरसग्रहणशक्तिं नाशयतीत्यर्थः ॥ ४ ॥

**उद्वेजयति जिह्वाग्रं कुर्वंश्चिमिचिमां कटुः ।**
**स्रावयत्यक्षिनासास्यं कपोलौ दहतीव च ॥ ५ ॥**

कटुरास्वाद्यमानो जिह्वाग्रमुद्वेजयति सोद्वेगं करोति । अग्निज्वालासंस्पर्शादिव दाहश्चिमिचिमतां कुर्वन् अक्ष्यादि स्रावयति गण्डौ दहतीव ॥ ५ ॥

**कषायो मलयेज्जिह्वां कण्ठस्रोतोविबन्धकृत् ।**

कषायो जिह्वां मलयेत् रसनादिक्रियासु मन्दीकरोति रसग्रहणशक्तिं निवारयतीत्यर्थः । तथा कण्ठे स्रोतांसि सिराविशेषास्तेषां विबन्ध करोति श्वासादीनामयथाप्रवृत्तिमिव करोतीत्यर्थः ॥

**रसानामिति रूपाणि कर्माणि, मधुरो रसः ॥ ६ ॥**

**आजन्मसात्म्यात्कुरुते धातूनां प्रबलं बलम् ।**
**बालवृद्धक्षतक्षीणवर्णकेशेन्द्रियौजसाम् ॥ ७ ॥**
**प्रशस्तो बृंहणः कण्ठ्यः स्तन्यसन्धानकृद्गुरुः ।**
**आयुष्यो जीवनः स्निग्धः पित्तानिलविषापहः ॥ ८ ॥**

रसानामित्यादि । इति परिसमाप्तौ । रसानां मधुरादीनां लक्षणानि परिसमाप्तानि । अथवा रूपाण्युक्तानीति शेषः । रूपशब्दो लक्षणपर्यायः । सम्प्रति तेषां कर्म यथास्वं प्रदर्शयन्नाह— कर्माणीति । रसानां कर्माणि वक्ष्यमाणानि इति वाक्यशेषः कर्माणि वक्ष्यन्त इति वान्वयः रसलक्षणत्वेन कर्माण्यप्युक्तानि वक्ष्यमाणानि कार्यानुमेयानि पश्चाद् भावीनीति भेदः ॥

अथ को रसः किं कर्म करोतीत्याह— मधुर इत्यादि । मधुरो रसो धातूनां प्रबलं प्रकृष्टं बलं कुरुते बलं निजं यत्तत् प्रकृष्टं जनयतीत्यर्थः । आजन्मसात्म्यात् जन्मनः प्रभृति देहस्य सात्म्यादित्यर्थः । बाल्यात् प्रभृति हि क्षीरादिना पुरुषस्य वृत्तिः । तथा बालादीनां प्रशस्तो हित ओजसोऽधि-

कवर्धनत्वात् प्रशस्तः । ओजो वक्ष्यमाणलक्षणम् । स्तन्यं क्षीरं सन्धानं व्रणसन्धानं श्लेषः (तं ? ते)करोतीति स्तन्यसन्धानकृत् । आयुष्य आयुषे हितः । जीवनः सौम्यधातुवृद्धिकरः । अथवा अनियतस्यायुषः अभिवृद्धिं करोतीत्यायुष्यः । नियतस्य सुखेन वर्तनकृत् जीवन इत्युच्यते । अरुणदत्तोप्याह — ननु आयुष्यजीवनयोरेकार्थत्वादेकतरोपादानमेव युक्तम् । (नै ? मैवम् । एतयो) र्भिन्नार्थत्वात् । तथा ह्यायुष्यः स उच्यते । योऽपरिमितायुषे हितोऽधिकायुष्यहेतुत्वात् । तथा च मुनिः — 'तेनायुरधिकं लेभे' इति । यस्त्वायुषो नियतरूपस्य तामेव मर्यादामनुबध्नाति स जीवयतीति जीवन उच्यते । तदनयोः स्पष्ट एव भेदः । तथा 'जीवनमोजस्य'मित्यभिन्नार्थौ किन्त्वेतयोर्द्वयोरपीह यदुपादानं तदोजसो विविधाया अपि वृद्धेः कारकोऽयमिति प्रतिपादयितुम् । तथा च मधुरो रसो रुधिरादिक्रमेणौजसो वृद्धिकरः सामान्याद्विशेषाच्च यथा क्षीरं धातुवर्धनमुक्तं वृष्यं च । तद् रसधातोर्वर्धनत्वेनैव वृष्यत्वस्योक्तत्वाद् वृष्यशब्दोपादानं यान्यन्यानि द्रव्याणि आत्मगुप्तादीनि तेभ्यः सकाशादाश्वेव वृद्धिकरमिति द्योतयितुम् ॥ ८ ॥

कुरुतेऽत्युपयोगेन स मेदःकफजान् गदान् ।
स्थौल्याग्निसादसंन्यासमेहगण्डार्बुदादिकान् ॥ ९ ॥

कुरुत इत्यादि । मधुरो रसोऽत्युपयोगेनातिसेवया मेदःश्लेष्मोत्थान् रोगान् जनयति । कांस्तान् इत्याह । स्थौल्यादिकान् ॥ ९ ॥

अम्लोऽग्निदीप्तिकृत्स्निग्धो हृद्यः पाचनरोचनः ।
उष्णवीर्यो हिमस्पर्शः प्रीणनो भेदनो लघुः ॥ १० ॥
करोति कफपित्तास्रं मूढवातानुलोमनम् ।
सोऽत्यभ्यस्तस्तनोः कुर्याच्छैथिल्यं तिमिरं भ्रमम् ॥ ११ ॥
कण्डूपाण्डुत्ववीसर्पशोफविस्फोटतृड्ज्वरान् ।

अम्ल इत्यादि । अम्लो रसोऽग्निदीप्तिकृत् इत्यादियुतः । तथा कफपित्तास्रं करोति मूढवातानुलोमनः मूढमननुलोमं वातमनुलोमयति इत्यर्थः । अम्लो रसोऽतिसेवितः शैथिल्यं देहस्य तिमिरादींश्च रोगान् कुर्यात् । प्रकाशे तिमिरदर्शनं तिमिररोगः । चित्तस्य बहुस्वरूपमवस्थानं भ्रमः ॥

लवणः स्तम्भसङ्घातबन्धविध्मापनोऽग्निकृत् ॥ १२ ॥
स्नेहनः स्वेदनस्तीक्ष्णो रोचनश्छेदभेदकृत् ।
सोऽतियुक्तोऽस्रपवनं खलतिं पलितं वलिम् ॥ १३ ॥
तृट्कुष्ठविषवीसर्पान् जनयेत्क्षपयेद्बलम् ।

लवणो रसः स्तम्भादीनां विध्मापनो नाशनः । स्तम्भः शरीरदोषादेः । सङ्घातो भावानां निबिडत्वम् । बन्धः स्तम्भितस्य दोषादेर्मार्गरोधः । अग्निकृत्त्वादिगुणयुतश्च सोऽत्यभ्यस्तो रक्तवातादीन् जनयति । बलं प्राणं क्षपयेत् ॥

तिक्तः स्वयमरोचिष्णुररुचिं कृमितृड्विषम् ॥ १४ ॥
कुष्ठमूर्च्छाज्वरोत्क्लेशदाहपित्तकफान् जयेत् ।
क्लेदमेदोवसामज्जशकृन्मूत्रोपशोषणः ॥ १५ ॥
लघुर्मेध्यो हिमो रूक्षः स्तन्यकण्ठविशोधनः ।
धातुक्षयाऽनिलव्याधीनतियोगात्करोति सः ॥ १६ ॥

तिक्तः स्वयं पुरुषस्यारोचनशीलः अरुच्यादीन् जयेत् । अरुचिराहारद्रव्येऽनभिलाषः । अरुच्यादीनां द्वन्द्वैकवद्भावः । देहे च क्लेदादीनामुपशोषणः । उत्क्लेशः श्लेष्मणः क्लेदो रसधातोर्वृद्धिः ॥ १६ ॥

कटुर्गलामयोदर्दकुष्ठालसकशोफजित् ।
व्रणावसादनस्नेहमेदःक्लेदोपशोषणः ॥ १७ ॥
दीपनः पाचनो रुच्यः शोधनोऽन्नस्य रूक्षणः ।
छिनत्ति बन्धान् स्रोतांसि विवृणोति कफापहः ॥ १८ ॥
कुरुते सोऽतियोगेन तृष्णां शुक्रबलक्षयम् ।
मूर्च्छामाकुञ्चनं कम्पं कटीपृष्ठादिषु व्यथाम् ॥ १९ ॥

कटुर्गलामया(दी)न् जयति । उदर्दो नाम वातिको गदः । अथवा ऊर्ध्वकाये यदर्दनं स उदर्दः । अन्ये उरसोऽभिष्यन्द उदर्द इत्याहुः । पाठ्यकारस्तु —

"शीतपानीयसंस्पर्शाच्छीतकाले विशेषतः ।
गण्डप्रदेशे श्वयथुरुदर्दः कफसम्भवः ॥"

इत्याह । व्रणस्यावसादनो रोपणः । रोपणप्रतिबन्धकर इत्यन्ये । वक्त्रस्य शोधनः । अन्नस्य रूक्षणो विदहनः । रूषण इति पाठः । स्रोतांसि विवृ-

णोति प्रसारयति । सोऽतिसेवितः तृष्णादीन् करोति तृष्णाकरणं शुक्रबलक्षयकृत्वं चास्य वाय्वग्न्युपादानत्वात् । कटीपृष्ठस्थानं वायोर्विशेषस्थानानामुपलक्षणम् । अन्येष्वनिलगम्येषु वस्त्यादिषु शूलादि करोति ॥ १९ ॥

कषायः पित्तकफहा गुरुरस्रविशोधनः ।
पीडनो रोपणः शीतः क्लेदमेदोविशोषणः ॥ २० ॥
आमसंस्तम्भनो ग्राही रूक्षोऽतित्वक्प्रसादनः ।
करोति शीलितः सोऽति विष्टम्भाध्मानहृद्रुजः ॥ २१ ॥
तृट्कार्श्यपौरुषभ्रंशस्रोतोरोधमलग्रहान् ।

कषायः पित्तकफहा अस्रविशोधनः प्रशमनः शरीरक्लेदोपशोषण आमसंस्तम्भनो ग्राही च । अन्यत्राप्युक्तम्—

न स्रवन्ति न पच्यन्ते कषायस्तम्भिता मलाः ।

इति । अतिशयेन त्वक्प्रसादनः । सोऽत्युपयुक्तः विष्टम्भादीन् करोति । पौरुषभ्रंशः शुक्रहानिः ॥

रसानुक्त्वा सुखावबोधार्थं रसाश्रयद्रव्याणि गणयति[1]—

मधुरस्कन्धमाह —

घृतहेमगुडाक्षोडमोचचोचपरूषकम् ॥ २२ ॥
अभीरुवीरापनसराजादनबलात्रयम् ।
मेदे चतस्रः पर्णिन्यो जीवन्ती जीवकर्षभौ ॥ २३ ॥
मधूकं मधुकं बिंबी विदारी श्रावणीयुगम् ।
क्षीरशुक्ला तुगाक्षीरी क्षीरिण्यः काश्मरी सहे ॥ २४ ॥
क्षीरेक्षुगोक्षुरक्षौद्रद्राक्षादिर्मधुरो गणः ।

घृत इत्यादि । हेम काञ्चनं राजादनं =(പഴമുൺപാല) क्षीरशुक्लेति हाटकः । बलात्रयं बलातिबला महाबला चेति । मेदे द्वे मेदा महामेदा च । चतस्रः पार्णिन्यः सालपर्णी पृश्निपर्णी मुद्गपर्णी माषपर्णीति । मधूकं मधूकपुष्पम् । मधुकं मधुयष्टिः । श्रावणीयुगं श्रावणी महाश्रावणी च । क्षीरशुक्ला विदारी । क्षीरिण्यः क्षीरिणी काञ्चनक्षीरी । काश्मरी कारम्भी । पाठ्यकारस्तु क्षीरिण्यः क्षीरवृक्षा इत्याह । सहे महासहा क्षुद्रसहा । सहदेवा

1. 'कथय' क. ख. पाठः.

देवी चेति पाठ्यकारः । आदिशब्देन तृणपञ्चमूलमेदोमज्जवसातैलमधुरडाडिमपुष्करबीजशृङ्गाटकाश्वगन्धाश्वदंष्ट्रामृणालकशेरुकर्करीतालमस्तकादीनि गृह्यन्ते । इत्ययं मधुरो गणः ॥

अम्लस्कन्धमाह —

अम्लो धात्रीफलाम्लीकामातुलुङ्गाम्लवेतसम् ॥ २५ ॥
दाडिमं रजतं तक्रं चुक्रं पालेवतं दधि ।
आम्रमाम्रातकं भव्यं कपित्थं करमर्दकम् ॥ २६ ॥

अम्ल इत्यादि । धात्रीफलमामलकम् । रजतं रूप्यम् । चुक्रं शुक्तम् । भव्यं दन्तशठः । उपलक्षणं चेदं सङ्ग्रहोक्तान्यपि कोशाम्रलिकुचकोविदारैरवताम्रचीनारुकमस्तुधान्याम्लादीनीहैव बोद्धव्यानि ॥ २६ ॥

अथ लवणस्कन्धमाह —

वरं सौवर्चलं कृष्णं बिडं सामुद्रमौद्भिदम् ।
रोमकं पांसुजं सीसं क्षारश्च लवणो गणः ॥ २७ ॥

वरमित्यादि । वरं सैन्धवं लवणश्रेष्ठत्वात् 'सैन्धवं लवणानामि'त्यागमात् । क्षारः सुवर्चिकादिः ॥ २७ ॥

तिक्तस्कन्धं वक्ति—

तिक्तः पटोली त्रायन्ती बालकोशीरचन्दनम् ।
भूनिम्बनिम्बकटुकातगरागुरुवत्सकम् ॥ २८ ॥
नक्तमालद्विरजनीमुस्तमूर्वाटरुषकम् ।
पाठापामार्गकंसायोगुडूचीधन्वयासकम् ॥ २९ ॥

तिक्त इत्यादि । नक्तमालः करञ्जः । कंसं लोहभेदः । अयो लोहः ॥ २९ ॥

कटुस्कन्धमाह—

पञ्चमूलं महद्व्याघ्रयौ विशालातिविषा वचा ।
कटुको हिङ्गुमरिचक्रिमिजित् पञ्चकोलकम् ॥ ३० ॥
कुठेराद्या हरीतक्याः पित्तं मूत्रमरुष्करम् ।

कटुक इत्यादि । पित्तं मूत्रं गोजादीनाम् । उपलक्षणं चेदम् । अन्यानि च सङ्ग्रहोक्तानि मनःशिलासर्षपकुष्ठादीनि बोध्यानि ॥

कषायस्कन्धमाह —

वर्गः कषायः पथ्याक्षं शिरीषः खदिरो मधु ॥ ३१ ॥
कदम्बोदुम्बरं मुक्ताप्रवालांजनगैरिकम् ।
बालं कपित्थं खर्जूरं बिसपद्मोत्पलादि च ॥ ३२ ॥

वर्ग इति । आदिशब्देन प्रियङ्गुलोध्रकट्वङ्गादयो गृह्यन्ते । पद्मं पद्मस्य कन्दं केंसरं च ॥ ३२ ॥

इदानीं मधुरादीनां गुणनिरूपणं करोति—

मधुरं श्लेष्मलं प्रायो जीर्णाच्छालियवादृते ।
मुद्गाद्गोधूमतः क्षौद्रात्सिताया जाङ्गलामिषात् ॥ ३३ ॥

मधुरमित्यादि । प्रायेण मधुरं द्रव्यं कफकृद् भवति जीर्णात् पुराणात शाल्यादेर्ऋते शाल्यादीन् पुरा(णस्कन्धं ? णान्) वर्जयित्वा इत्यर्थः । मधुरं दाडिमादि । तैलं च न श्लेष्मलमिति प्रदर्शनार्थं प्रायोग्रहणम् । एवमुत्तरत्रापि प्रायोग्रहणस्य प्रयोजनमवगन्तव्यम् ॥ ३३ ॥

प्रायोऽम्लं पित्तजननं दाडिमामलकादृते ।
अपथ्यं लवणं प्रायश्चक्षुषोऽन्यत्र सैन्धवात् ॥ ३४ ॥

अम्लं द्रव्यं प्रायः पित्तकृत् दाडिमामलकं वर्जयित्वा । लवणं द्रव्यं प्रायश्चक्षुषोऽपथ्यं सैन्धवं वर्जयित्वा । सैन्धवस्य शीतवीर्यत्वाच्चक्षुषः पथ्यत्वम् ॥ ३४ ॥

तिक्तं कटु च भूयिष्ठमवृष्यं वातकोपनम् ।
ऋतेऽमृतापटोलीभ्यां शुण्ठीकृष्णारसोनतः ॥ ३५ ॥

तिक्तं द्रव्यं कटु च प्रायेणावृष्यं गुळूच्यादीन् हित्वा । रसोनः पलाण्डुः ॥ ३५ ॥

कषायं प्रायशः शीतं स्तम्भनं चाभयामृते ।

कषायं द्रव्यं प्रायेण शीतवीर्यं स्तम्भनं च भवति हरीतकीं वर्जयित्वा ॥

रसाः कट्वम्ललवणा वीर्येणोष्णा यथोत्तरम् ॥ ३६ ॥

रसा इत्यादि । कट्वम्ललवणा रसा यथोत्तरमुत्तरान्वितिक्रमेण उष्णवीर्याः कटुरुष्णोऽम्ल उष्णतरः लवण उष्णतमः । एवं तिक्तादीनामपि यथोत्तरत्वं वेद्यम् । तिक्तादयश्च तद्वदेव यथोत्तरं शीतवीर्याः ॥ ३६ ॥

---

१. 'दी (द ? नि) गृ' क. पाठः.

तिक्तः कषायो मधुरस्तद्वदेव च शीतलाः ।
तिक्तः कटुः कषायश्च रूक्षा बद्धमलास्तथा ॥ ३७ ॥

तिक्तकटुकषाया रूक्षा बद्धमलाश्च तथेति यथोत्तरमित्यर्थः । बद्धमला इति विष्टम्भकाः ॥ ३७ ॥

पट्वम्लमधुराः स्निग्धाः सृष्टविण्मूत्रमारुताः ।

पट्वाद्यो यथोत्तरं स्निग्धा निःसारितविण्मूत्रमारुताश्च । तथेत्यत्राप्यनुवर्तते ॥

पटोः कषायस्तस्माच्च मधुरः परमं गुरुः ॥ ३८ ॥

पटोरित्यादि । लवणाद् गुरोः कषायो गुरुतरः तस्मात् कषायान्मधुरः परमं गुरुरतिशयेन गुरुरित्यर्थः ॥ ३८ ॥

लघुरम्लः कटुस्तस्मात्तस्मादपि च तिक्तकः ।

[1]अम्लो लघुः तस्मादम्लात् कटुर्लघुतरः तस्माच्च कटोस्तिक्तो लघुतमः ॥

इदानीं रसानामाधारद्वारेण संयोगान् कल्पनाश्च विभजन्नाह —

संयोगाः सप्तपञ्चाशत्कल्पना तु त्रिषष्टिधा ॥ ३९ ॥
रसानां यौगिकत्वेन यथास्थूलं विभज्यते ।

संयोगा इत्यादि । रसानां संयोगा वक्ष्यमाणया रीत्या सप्तपञ्चाशद् विभज्यन्त इति वचनविपरिणामेन सम्बन्धः । कल्पना पुनरेषां त्रिषष्टिधा विभज्यते । कल्पना प्रयोगः युक्तानामसंयुक्तानां च रसानां प्रयोगः कल्पनेत्यर्थः । उत वा संयोगाः सप्तपञ्चाशद् भवन्तीति शेषः । यौगिकत्वेन शरीरोपयोगयोग्यत्वेन यथा स्थूलं स्थूलानतिक्रमेण व्यक्तरसास्वादानुरूपतया पुनर्यथासूक्ष्मम् । तथा हि रसानुरसकल्पनया तरतमयोगवशाच्च रसानां कल्पना क्रियमाणा आनन्त्यमुपैति तस्माद् यथास्थूलं रसानां कल्पना त्रिषष्टिधा विभज्यते ॥

तथा यौगिकत्वेन द्रव्ये प्रधानरसापेक्षया संयोगानां संख्यामाह—

एकैकहानांस्तान् पञ्च पञ्च यान्ति रसा द्विके ॥ ४० ॥
त्रिके स्वादुर्दशाम्लः षट् त्रीन् पटुस्तिक्त एककम् ।

---

1. 'सावाम्ला' क. पाठः.

**चतुष्केषु दश स्वादुश्चतुरोम्लः पटुः सकृत् ॥ ४१ ॥**
**पञ्चकेष्वेकमेवाम्लो मधुरः पञ्च सेवते ।**
**द्रव्यमेकं षडास्वादमसंयुक्ताश्च षड्रसाः ॥ ४२ ॥**

एकैकेत्यादि । ते मधुराद्या रसा द्विके रसाधारयोर्द्वयोर्द्रव्ययोः संयोगे पञ्चदश पञ्चदश भेदान् यान्ति गम्यगन्तृत्वोक्तिरुपचारात् । किम्भूताः एकैकहीनाः एकेन एकेन विनाकृताः पू(र्वं) येन येन संयुक्ताः तेन तेन हीना इत्यर्थः शेषरससम्बन्धार्थं मधुरादीनामेकैकस्य यथाक्रमं पृथक्करणम् । एकैकहानिः कथमिति चेत् पूर्वं मधुरोऽम्लादीन् पञ्च प्राप्नुयात् ततो मधुरो हातव्यः । पुनरम्लो लवणादींश्चतुरो यायात् ततोऽम्लस्त्यक्तव्यः । पुनर्लवणस्तिक्तादीन् त्रीन् गच्छेत् ततो लवणः क्षेप्तव्यः । पुनस्तिक्तः कटुककषायौ सेवेत तदा तिक्तस्त्याज्यः । एवं कृते कटुकः कषायं सेवेत । एवं पञ्चदश भेदान् यान्ति । अत्र च पञ्चानां रसानां पर्यायेण प्रत्येकमेकैकहीनतावशात् कर्मत्वेन कर्तृत्वेन च सम्बन्धो बोध्यः । अत एव 'चतुर्द्विकौ पञ्चदश प्रकारा'विति यद् वक्ष्यति तदुपपन्नमेव । मधुरस्याम्लादिभिः संयोगे पञ्च यथा मधुराम्लमधुरलवण मधुरतिक्त मधुरकटुक मधुरकषायाख्यानि पञ्च युगानि भवन्ति । अम्लस्य लवणादिभिः संयोगे चत्वारो भेदाः अम्ललवणाम्लतिक्ताम्लकटुकाम्लकषायाख्याः । लवणस्य तिक्तादियोगे त्रयः लवणतिक्तलवणकटुकलवणकषायाख्याः । तिक्तस्य द्वौ तिक्तकटुतिक्तकषायौ । कटुकस्यैकः कटुककषायः । मधुरस्य गन्तृत्वमेव (न) गम्यत्वं हीनयोगाभावात् । कषायस्य गम्यत्वमेव (न) गन्तृत्वमन्त्यत्वाद् । एवं द्विरसद्रव्यसंयोगे पञ्चदश भेदाः । द्विक इति (द्वौ ? द्वे) परि(णामे ? माणे)संयोगस्य । 'सङ्ख्याया संज्ञे'त्यादौ परि(णामा ? माणा)नुवृत्तेः परि(णामा ? माणे)र्थे "सङ्ख्याया अतिशदन्तायाः कन्" इति कन् । एवं त्रिकादिष्वपि वक्ष्यमाणेषु लक्षणं योज्यम् । त्रिके त्रयाणां रसाधारद्रव्याणां संयोगे मधुरो रसो दश संयोगान् यातीति कथमिति चेत् पूर्वं द्विकभेदे मधुरवर्जिताः दशभेदाः सन्ति तेषु सर्वेषु मधुरः प्रविशतु यथा मधुराम्ललवणः मधुराम्लतिक्तः मधुराम्लकटुकः मधुराम्लकषायः स एव मधुरोऽम्लत्यागेन तत्स्थाने लवणान्वितः तिक्तादिभिः संयोगान् याति मधुरलवणतिक्तः मधुरलवणकटुकः मधुरलवणकषायः....इति

---

१. 'र्वं' ख. पाठः. २. 'या । क' क. ख. पाठः.

स एव लवणत्यागेन तत्स्थाने कटुकतिक्तयुक्तो द्वौ संयोगौ याति । मधुरतिक्तकटुकः मधुरतिक्तकषायः । स एव तिक्तत्यागेन तत्स्थाने कटुकान्वित एकं संयोगं याति मधुरकटुककषाय इति दश । अम्ल इत्यादि । त्रिक इत्यनुवर्तते । त्रिकसंयोगेऽम्लः षट्संयोगान् याति कथमिति चेत् लवणद्विकास्त्रयः तिक्तद्विकौ द्वौ कटुकाद्विक एकः एवमेतान् षट् प्राप्नोत्यम्लः यथा अम्ललवणतिक्तः अम्ललवणकटुकः अम्ललवणकषायः स एवाम्लो लवणत्यागेन द्वौ संयोगौ याति । अम्लतिक्तकटुकः अम्लतिक्तकषायः तिक्तत्यागेनैकं संयोगं याति । अम्लकटुककषायः इति षट्भेदाः । त्रीन् पटुरिति । लवणः स तिक्तः कटुककषायाभ्यां द्वौ संयोगौ याति यथा लवणतिक्तकटुकः लवणतिक्तकषायः । तिक्तत्यागेनैकं संयोगं याति लवणकटुककषाय इति । एवं लवणस्त्रीन् संयोगान् याति । तिक्त एकमेव संयोगं याति तिक्तकटुककषाय इति । एवं त्रिकसंयोगे विंशतिः । चतुष्केषु चतूरससंयोगेषु स्वादुर्दश संयोगान् याति । कथमिति चेत् अम्लादीनां ये त्रिका उक्ताः 'अम्लः षट् त्रिपटुस्तिक्त एककमिति तेषु सर्वेषु मधुरोऽनुप्रविशतु एवं दश यथा मधुराम्ललवणतिक्तः मधुराम्ललवणकटुकः मधुराम्ललवणकषायः मधुराम्लतिक्तकटुकः मधुराम्लतिक्तकषायः मधुराम्लकटुककषायः स एव मधुराम्लत्यागेन तत्स्थाने लवणान्वितः मधुरलवणतिक्तकटुकः मधुरलवणतिक्तकषायः मधुरलवणकटुककषायः स एव लवणत्यागेनैकं संयोगं याति मधुरतिक्तकटुककषायः एवं चतुष्केषु मधुरो दश संयोगान् याति (अ? चतुरो)ऽम्ल इत्यादि चतुष्केष्विति वर्तते । चतुष्केष्वम्लश्चतुरः संयोगान् याति कथमिति चेत् लवणत्रिकास्त्रयः तिक्तत्रिक एकस्तेषु अम्लोऽनुप्रविशतु ॥ यथा — अम्ललवणतिक्तकटुकः अम्ललवणतिक्तकषायः अम्ललवणकटुककषायः लवणत्यागेनैकं संयोगं याति अम्लतिक्तकटुककषायः पटुर्लवणः सकृदेकं भेदं याति लवणतिक्तकटुककषायः ।

एवं चतुष्केषु पञ्चदशसंयोगभेदाः । पञ्चकेषु संयोगेषु अम्लो रस एकमेव संयोगं सेवते लवणस्यैकचतुष्कभेदानुप्रवेशात् अम्ललवणतिक्तकटुककषाय इति पञ्चकेषु मधुरः पञ्च संयोगान् याति कथमिति चेत् 'चतुरोम्लः

१. 'न भे' क. ख. पाठः, २. 'श भे' क., ख. पाठः.

पटुः सकृत्' इत्यत्र स्वादुर्यातु यथा — मधुराम्ललवणतिक्तकटुकः मधु-राम्ललवणतिक्तकषायः मधुराम्ललवणकटुककषायः मधुराम्लतिक्तकटुककषायः मधुरलवणतिक्तकटुककषायः इति । एकं षडास्वादं षड्रसं द्रव्यमिति सप्त-पञ्चाशत् संयोगाः । षट् च रसाः असंयुक्ताः पृथग्भूताः मधुराम्ललवण-तिक्तकटुककषाया इति । शर्कराकाञ्चिकसौवर्चलकिराततिक्तमरिचखदिरादीनां मधुरादयो रसा आस्वाद्यन्ते । एवं त्रिषष्टिधा रसकल्पना । उक्तं च —

"त्रिरसद्रव्यसंयोगे दश भेदान् प्रपद्यते ।
स्वादुः स्वकृतसंयोगद्वन्द्वपञ्चकवर्जितः ॥
अम्लाद्युद्भूतसंयोगयुग्मैर्दशभिरन्वितः ।
अम्लोऽपीतरसंयोगद्वन्द्वषट्कसमन्वितः ॥
षड्भेदान् याति लवणस्त्रीन् युग्मसमन्वितः ॥
एकं भेदं भजेत् तिक्तः कषायकटुयुग्मभाक् ॥
चतूरसद्रव्ययोगे दश भेदान् प्रपद्यते ।
स्वादुरम्लादिसंयोगत्रिकैर्दशभिरन्वितः ।
चतुरोऽम्लो भजेद् भेदान् लवणादित्रिकान्वितान् ॥
तिक्तस्त्रिकसमायोगादेकं भेदं भजेत् पटुः ॥
अम्लपट्वभिनिर्वृत्तैश्चतुष्कैः पञ्चभिर्युतः ।
स्वादुः पञ्च भजेद् भेदानम्लः पटुश्चतुष्कयः ॥
एकमेकश्च षड्योगः पृथग्भूताश्च षड् रसाः ॥

इति । ॥ ४२ ॥

संप्रति एकैकहीना इत्यादिना प्रोक्तानां रसभेदानां सुखस्मृत्यर्थं संक्षेपमाह —

**षट्पञ्चका षट् च पृथक् रसाः स्युः**
**श्चतुर्द्विकौ पञ्चदशप्रकारौ ।**
**भेदास्त्रिका विंशतिरेकमेवं**
**द्रव्यं षडास्वादमिति त्रिषष्टिः ॥ ४३ ॥**

**षट् पञ्चका** इत्यादि । पञ्चका रसानां संयोगाः षट् पञ्चकेष्वेक-भेदाम्लो मधुरः पञ्च सेवते इति । षट् च पृथग्रसाः स्युः । असंयुक्ताश्च षट् रसा इति एवं द्वादश । चतुर्द्विकौ चतुष्कद्विकौ पञ्चदशप्रकारौ पृथक् पृथक्

चतुष्केषु दश स्वादुश्चतुरोऽम्लः पटुः सकृदिति एकैकहीनास्ते पञ्चदश यान्ति रसाद्विक इति च । एवं त्रिकर्व । त्रिका रसानां भेदा विंशतिर्भवति । त्रिके स्वादुर्दशाम्लः षट् त्रीन् पटुस्तिक्त एककमिति । पूर्वैः सह एवं द्विषष्टिः । एकमेव द्रव्यं षडास्वादमिति त्रिषष्टिरसभेदाः । यथा स्थूलं चैषां त्रिषष्टिधा कल्पना व्याख्याता ॥ ४३ ॥

सम्प्रति यथा सूक्ष्मं दर्शयितुमाह —

ते रसानुरसतो रसभेदा-
स्तारतम्यपरिकल्पनया च ।
सम्भवन्ति गणनां समतीता
दोषभेषजवशादुपयोज्याः ॥ ४४ ॥

ते रसेत्यादि । ते रसभेदास्त्रिषष्टिरूपा रसतो रसवशेनानुरसवशेन च रसेन सहानुरससंयुक्ते द्विकभेदो भवति । एवं मधुरादीनां पृथगनुरसयोगात् तथा तारतम्यपरिकल्पनया च तरतमयोगात् त्रिषष्टितरयोगात् त्रिषष्टितम-योगाच्च मधुरोऽयं मधुरतरोऽयं मधुरतमोऽयं स्वाद्वम्लोऽयं स्वाद्वम्लतरोऽयं स्वा-द्वम्लतमोऽयमित्यादिरूपतयानन्त्यात् गणनामतीताः सङ्ख्यामतिक्रान्ताः सं-भवन्ति । तथापि दोषभेषजवशादुपयोज्याः दोषा वातादयो भेषजानि हरीत-क्यादीनि । दोषाश्च भेषजानि च दोषभेषजानि तेषां वशोऽनुरोधः सामर्थ्यं वा तस्माद्धेतुभूताद् रसभेदा उपयोज्याः त्रिषष्टिभेदभिन्नस्य दोषस्य यथाप्रयुक्ते भेषजानि भवन्ति तथा प्रयोक्तव्याः इत्यर्थः । दोषानुरू(पे? प्ये)ण हि भेषजोपयोगाद् दोषविकल्पज्ञस्तत्कार्यं रोगं दृष्ट्वा तदनुरूपं हेत्वादिविकल्प-मनुमिनोति कारणानुरूप्यात् कार्योत्पत्तिमालिङ्गन् दाहादि दृष्ट्वा अम्लकट्वा-दिसेवया हेतुभूतेन पित्तमौष्ण्येनांशेन कुपितं लिङ्गं दर्शयति निश्चिनोति । न्यूनं लिङ्गान्तरं दृष्ट्वा कफोऽस्यानुरूपबलमिति च अत्र दोषप्रतिपक्षभूतानि मृदुमधुरकषायतिक्तकषायाण्यौषधानि योज्यानीति तथा वायोः शामका अपि मधुराम्ललवणा यदि रूक्षद्रव्याश्रितास्तदा नालं च शमने । अत औषधमप्य-पेक्ष्यम् । एवं दोषभेषजविकल्पः । दोषभेषजग्रहणमुपलक्षणार्थं देशादीनपि

१. 'त् पूर्वैः सह त्रि', २. 'ति सू' क. ख. पा :.

वीक्ष्य तद्वशाद् रसभेदा उपयोज्याः । यथ पतितस्य गाङ्गस्य जलस्य देशा-पेक्षया रसभेदः 'श्वेते कषायं तत् स्वादु कृष्ण' इत्यादि वचनात् । तथा

"सक्षारं पित्तकृत् कौपं जीवनं नाति वातलम् ।"

इत्यादिवचनाच्च । तज्जलं रसानुरूपगुण्यं देशं वीक्ष्य योज्यम् । तथा बालाव-स्थायामाम्रं तिक्तकषायतां भजते कालेन समापूर्यमाणं त्वम्ल(वीक्षका ? कषा)-यतां भजते ततो गते कस्मिंश्चित्काले मधुराम्लतां पुनः परिणामसमयमासाद्य मधुरताम् । एवं कालेन परिणमत आम्रस्य रसानुरूप उपयोग इत्यतो दोष-रसविकल्पज्ञानं वैद्यस्य चिकित्सायामङ्गं भवति । तथा चागमः —

क्वचिदेको रसः कल्प्यः संयुक्ताश्च रसाः क्वचित् ।
दोषौषधादीन् सञ्चिन्त्य भिषजा सिद्धिमिच्छता ॥

यः स्याद् रसविकल्पज्ञः स्याच्च दोषविकल्पवित् ।
न स मुह्येद् विकाराणां हेतुलिङ्गोपशान्तिषु ॥

इति । तस्माद्दोषभेषजवशादुपयोज्याः । यथा — पवने जेतव्ये मधुरोऽम्लो लवणो वा मधुराम्ललवणो वेति ॥ ४४ ॥

इति श्रीदासपण्डितविरचितायां हृदयबोधिकायां
दशमोऽध्यायः ।

---

## अथ एकादशोऽध्यायः ।

पूर्वेऽध्याये ते रसभेदा दोषभेषजयोर्वशादुपयोज्या इत्युक्तम् । अतः कीदृशस्वरू-पास्ते दोषा इति तद्विज्ञानार्थमयमध्यायारम्भः ।

### अथाऽतो दोषादिविज्ञानीयमध्यायं व्याख्यास्यामः ।

अथात इत्यादि । दोषा आदयो येषां ते दोषादयः तेषां विज्ञानं प्राकृतेन वैकृतेन च स्वरूपावगमः तस्मै हितो दोषादिविज्ञानीयः तमध्यायं व्याख्यास्यामः आदिशब्देन धातवो मलाश्च गृह्यन्ते । तत्स्वरूपावगमेन च त एव दोषाः सम्यक् ज्ञाता भवन्ति धातूनां मलानां च दोषाधारभूतत्वाद् ॥

---

१. 'पेणाव' ग. पाठः.

दोषधातुमला मूलं सदा देहस्य तं चलः।
उत्साहोच्छ्वासनिश्वासचेष्टावेगप्रवर्तनैः॥ १॥
सम्यग्गत्या च धातूनामक्षाणां पाटवेन च।
अनुगृह्णात्यविकृतः पित्तं पक्त्यूष्मदर्शनैः॥ २॥
क्षुत्तृड्रुचिप्रभामेधाधीशौर्यतनुमार्दवैः।
श्लेष्मा स्थिरत्वस्निग्धत्वसन्धिबन्धक्षमादिभिः॥ ३॥

दोषेत्यादि। दोषा वातादयः धातवो रसादयः मला मूत्रादयो देहस्य मूलमिव मूलं कारणं स्थापकमित्यर्थः। यथा — वृक्षस्य स्कन्धशाखादियुक्तस्य मूलं प्रधानं तदारब्धत्वात् तथा देहस्य दोषधातुमलाः यथा च वृक्षस्य मूलविपत्तौ विपत्तिः तथा देहस्य दोषादिविपत्तौ नाशः दोषधातुमलमयो देह इत्यर्थः। न खलु दोषधातुमलव्यतिरेकेण देहः सम्भवति तथा दोषादीन् वर्जयित्वा नान्यच्छरीरसंबद्धं शरीरे दृश्यते त एव संयुक्ता देह इति यावत्। तं चल इत्यादिनैषां प्राकृतानां यथास्वं नानाविधैः कर्मभिर्देहोपकारित्वमुच्यते। न ह्यनुपकारकः कारणतामुपयाति। तं च देहं चलो वायुरविकृत उत्साहादिभिरनुगृह्णाति उपकुरुते। उत्साहः सर्वचेष्टासूद्योगः उच्छ्वासः श्वासस्योद्गमनं श्वासमुक्तिरित्यर्थः। निरवागर्थः निश्वासः श्वासस्यान्तप्रवेशनं चेष्टा वाक्कायमनोव्यापारः वेगानां प्रवर्तनं वातविण्मूत्रादीनां बहिर्निःसारणं धातवो रक्तादयः तेषां सम्यग्गतिः स्वमार्गगमनम् अक्षाणामिन्द्रियाणां पाटवं स्वविषयग्रहणे पटुत्वम्। अविकृतः अकुपितः। कुपितस्य 'कार्श्ये'त्यादिना विकारान् वक्ष्यति। बाह्यस्य वायोरकुपितस्य कुपितस्य च लोकहितमहितं च कर्म दृश्यते। तथा चागमः — यानि खलु वायोः कुपि(ताऽकुपि)तस्य शरीराशरीरचरस्य कर्माणि तानि वायवे नमस्कृत्य प्रवक्ष्यामि वायुस्तन्त्रयन्त्रधरः सर्वेन्द्रियाणामुद्योतकः सर्वशरीरधातुव्यूहकः प्रवर्तको वा(चकः? चः) श्रोत्रस्पर्शयोर्मूलं हर्षोत्साहयोर्योनिः समीरणोऽग्नेः क्षेप्ता बहिर्मलानामायुषोऽनुवृत्तिप्रत्य(यम? यभू)तो भवत्यप्रकुपितः कुपितस्तु नानाविधैर्विकारैः शरीरमुपतपति बलवर्णसुखायुषामुपघाताय मनो व्यावर्तयति सर्वेन्द्रियाण्युपहरति विहन्ति गर्भान्। प्रकृतिभूतस्य लोके चरतः कर्माणीयानि भवन्ति[3] — भूधरणीधारणं ज्वलनोज्ज्वालनमादित्यग्रहनक्षत्रगतिविधानं सृष्टिश्च

१. 'स्फुटत्व', २. 'त कु', ३. 'न्ति शिखरि' ग. पाठः.

मेघानामपां च विसर्गः(दुर्ग? पुष्प)फलाभिनिर्वर्तनमृतूनां च प्रविभाग इति। कुपितस्य खलु लोके चरतः कर्माणीमानि भवन्ति — शिखरिशिखरावबन्धनमुन्मन्थनमनोकहानामुत्पीडनं सागराणामुद्वर्तनं सरसां प्रतिसारणमापगानामाकम्पनं भूमेरवधमनमम्बुदानां सत्त्वानामसकृतो भूतानां चोपसर्गो भावानां चाभावस्तस्मात् स हि भगवान् प्रभवश्चाव्ययश्च भूतानामिति। पित्तमविकृतं प(क्ष्या? ऋत्या)दिभिस्तं देहमनुगृह्णाति। पक्तिः पाकः पचनक्रिया ऊष्मा औष्ण्यं तेजो वा दर्शनं दृष्टिःस्वरूपग्रहणशक्तिः मेधा प्रज्ञा धीर्वस्तुग्रहण-शक्तिः। मेधा बुद्धिविशेषः धीः प्रज्ञेत्यरुणदत्तः। तनुमार्दवं शरीरस्य मृदुता। अविकृतः श्लेष्मा स्थिरत्वादिभिर्देहमनुगृह्णाति स्थिरत्वं देहमनसोः स्निग्धत्वं देहस्य सन्धिबन्धः पर्वश्लिष्टता क्षमा क्षान्तिः आदिग्रहणात् सौम्यभावानां परिग्रहः॥

धातूनामपि समानां कर्माह —

**प्रीणनं जीवनं लेपः स्नेहो धारणपूरणे।**
**गर्भोत्पादश्च धातूनां श्रेष्ठं कर्म क्रमात्स्मृतम्॥ ४॥**

प्रीणनमित्यादि। प्रीणनादीनि कर्माणि रसादीनां क्रमात् क्रमेण श्रेष्ठानि स्मृतानि मुनिभिरिति शेषः। प्रीणनादिभिरविकृता रसादयो देहमनुगृह्णन्तीत्यर्थः। प्रीणनं मनःप्रीतिः रसो हि सम्यक् परिणतः स्रोतांसि प्रविश्य इन्द्रियप्रसादमभिनिर्वर्तयन् मनःप्रीतिमादधाति। जीवनं प्राणसन्धारकत्वं 'जीवनं नाम चिरकालसंबन्धित्वमायुष' इति हृद्याकारः। 'जीवनमोजोवृद्धिरि''त्यरुणदत्तः। तद्रक्तकर्म। लेप उपदेहो मांसस्य कर्म। तदुपलिप्तान्यस्थीनि चेष्टां क्षमन्ते। स्नेहो नेत्रवक्त्रादिषु स्निग्धता मेदसः कर्म। धारणं देहस्योर्ध्वं धारणमस्थ्नः कर्म। ऊर्ध्वासनत्वमिति यावत्। अन्यथा अस्थ्यभावाद् देहमांसं पिण्डीभूतं स्यात्। स्नेहेनास्थ्नां पूरणं मज्ज्ञः कर्म। शुक्रस्य गर्भोत्पत्तिः। श्रेष्ठं कर्मेति सर्वत्र योज्यम्। श्रेष्ठमिति कर्मणो विशेषणोपादानात् मध्यमापरकर्मसद्भावमेषां दर्शयति। उक्तं च —

''रसस्य तुष्टिर्मनसः पुष्टी रक्तशरीरयोः।
वर्णप्रसादनं कान्तिः प्राणानामवलम्बनम्॥
रक्तस्य वर्णप्राकाश्यं मांसपोषणमेव च।
ओजोवृद्धिर्बलं मेधा शौर्यमुत्साह एव च॥

१. मथनमिति मुद्रितचरके।

मेदःपुष्टिर्देहलेपः कर्म मांसस्य कीर्तितम् ।
मेदसः स्वेददार्ढ्यास्थिपुष्ट्यः स्निग्धता तनोः ॥
अस्थ्नः कर्म शरीरस्य धारणं मज्जपोषणम् ।
मज्ज्ञोऽस्थिपूरणं दार्ढ्यं बलं क्लेशसहिष्णुता ॥
शुक्रस्य गर्भनिर्वृत्तिरुत्साहश्चितधारणम् ।
ओजः कान्तिर्बलं मेधा सत्त्ववृद्धिर्हितैषिता ॥

इति ॥ ४ ॥

मलानामप्यविकृतानां कर्माण्याह –

**अवष्टम्भः पुरीषस्य मूत्रस्य क्लेदवाहनम् ।**
**स्वेदस्य केशविधृतिर्वृद्धस्तु कुरुतेऽनिलः ॥ ५ ॥**
**कार्श्यकार्ष्ण्योष्णकामित्वकम्पानाह शकृद्ग्रहान् ।**
**बलनिद्रेन्द्रियभ्रंशप्रलापभ्रमदीनताः ॥ ६ ॥**

अवष्टम्भ इत्यादि । श्रेष्ठं कर्मेत्यनुवर्तते । अवष्टम्भो देहधारणशक्तिः श्रेष्ठं कर्म पुरीषस्य स्मृतं मूत्रस्यान्तक्लेदवहनं क्लेदस्य बहिर्निःसारणं श्रेष्ठं कर्म मूत्रं क्लेदं निर्वाहयतीति । स्वेदस्य केशविधारणं श्रेष्ठं कर्म अन्यथा हि स्वेदाभावे शोष एव स्यात् त्वक्स्नेहो रोमधारणमपि । दोषधातुमलानामविकृतानां प्रधानं कर्म दर्शितम् । अविकारश्च तेषामुत्साहादिभिरवगम्यते न तत्र प्रमाणान्तरं क्रमते । आह च —

'पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम् ।
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः ॥

इति ॥

दोषादीनामविकृतानां कर्मोक्तम् । विकृतानां कर्मोच्यते विकृतिर्द्विविधा वृद्धिर्हानिश्चेति । तत्र प्रथमं वृद्धिरुच्यते — वृद्धस्त्वित्यादि । वृद्धः पुनर्वायुः कार्श्यादीन् करोति । वृद्धो वायुः कार्श्यादिभिर्देहं पीडयतीत्यर्थः । तुशब्देन विशेषवाचिनासमत्वतो वृद्धिर्वृद्धिरिति कथयति । तत्र कार्श्यादीनि लिङ्गानि । कम्पः सर्वाङ्गचलनम् । आनाहो वायुना जठरापूरः । बलादीनां भ्रंशेन सम्बन्धः । ततः क्षुदादिभिर्बलस्येन्द्रियाणां चोपघातो भ्रंशः निद्रायास्तु नाशः । दीनता दीनत्वम् —

अभ्यङ्गस्नानवसनपानाशनवियोगजा ।
मनसो दुःखता दैन्यं दीनस्तद्वान् नरः स्मृतः ॥

इति ॥ ६ ॥

पीतविण्मूत्रनेत्रत्वक्क्षुत्तृड्दाहाल्पनिद्रताः ।
पित्तं श्लेष्माऽग्निसदनप्रसेकालस्यगौरवम् ॥ ७ ॥
श्वैत्यशैत्यश्लथाङ्गत्वश्वासकासातिनिद्रताः ।

पीतेत्यादि । पीतस्य विडादिभिस्त्वगन्तैः सम्बन्धः । ततः क्षुदादिभिर्द्वन्द्वः ततस्तल(ल् ? I)प्रत्ययः पित्तं वृद्धं पीतविडादीन् करोति दाहोऽङ्गस्य ॥

श्लेष्मा वृद्धोऽग्निसादादीन् करोति । प्रसेको मुखास्रावः । श्वैत्यं गात्रस्य शुक्लता । शैत्यमङ्गशिशिरत्वम् ॥

रसोऽपि श्लेष्मवद्रक्तं विसर्पप्लीहविद्रधीन् ॥ ८ ॥
कुष्ठवातास्रपित्तास्रगुल्मोपकुशकामलाः ।
व्यङ्गाग्निनाशसंमोहरक्तत्वङ्नेत्रमूत्रताः ॥ ९ ॥

रसोऽपि श्लेष्मवदिति । रसोऽपि वृद्धोऽग्निसादादीन् करोतीत्यर्थः । रक्तं वृद्धं विसर्पादीन् करोति । उपकुशो दन्तरोगविशेषो वक्ष्यमाणलक्षणः ॥

मांसं गण्डार्बुदग्रन्थिगण्डोरूदरवृद्धताः ।
कण्ठादिष्वधिमांसं च तद्वन्मेदस्तथा श्रमम् ॥ १० ॥

मांसं वृद्धं गण्डादीन् करोति गण्डशब्देनाद्यन्तपदलोपाद् गलगण्डो गण्डमाला च गृहीतौ । इतरश्च गण्डो गण्ड(मांसं) । गण्डोरूदराणां वद्धता बृहत्त्वम् । गण्डौ कपोलौ । कण्ठादिष्वधिमांसं च कुरुते । आदिशब्देन तालुजिह्वादिपरिग्रहः ॥

अल्पेऽपि चेष्टिते श्वासं स्फिक्स्तनोदरलंबनम् ।

तद्वन्मांसवत् मेदो वृद्धं गण्डादीन् कुरुते । तथाल्पेऽपि चेष्टिते श्रमं श्वासं च कुरुते । तथा स्फिजोः स्तनयोरुदरस्य च लम्बनं कुरुते ॥

अस्थ्यध्यस्थ्यधिदन्तांश्च मज्जा नेत्राङ्गगौरवम् ॥ ११ ॥

अस्थि वृद्धमध्यस्थि अधिदन्तांश्च कुरुते । अस्थनि यदधिकमस्थि-तदध्यस्थि ॥

पर्वसु स्थूलमूलानि कुर्यात्कृच्छ्राण्यरूंषि च।
अतिस्त्रीकामतां वृद्धं शुक्रं शुक्राश्मरीमपि॥ १२॥

मज्जावृद्धो नेत्रयोरङ्गानां च गौरवं कुर्यात् कुरुत इति प्रकृते कुर्यादित्युक्तं स्पष्टार्थम्। पर्वस्वङ्गुल्यादिषु सन्धिषु अरूंषि पिटकाविशेषान् कुर्यात् कीदृंशि स्थूलमूलानि तथा कृच्छ्राणि कृच्छ्रसाध्यानि। शुक्रं वृद्धमतिस्त्रीकामतां कुर्यात् शुक्राश्मरीं च॥ १२॥

कुक्षात्राध्मानमाटोपं गौरवं वेदनां शकृत्।
मूत्रं तु वस्तिर्निस्तोदं कृतेऽप्यकृतसंज्ञताम्॥ १३॥

शकृद्वृद्धं कुक्षावाध्मानादीन् कुर्यात्। कुर्यादिति सम्भावनायां लिङ्। आध्मानमानाहः आटोपमान्त्रकूजनम्॥

मूत्रं तु वृद्धं वस्तेर्निस्तोदं नितरां पीडां कुर्यात् तथा कृतेऽपि मूत्रे अकृतसंज्ञतां अप्रवृत्तबुद्धिं कुर्यात्। हाटकोऽपि कृतेऽपि मूत्रस्रावणेऽकृतसंज्ञताम् अनन्तरमेव मया न मूत्रितमिति मूत्रस्य बाहल्ये(ना? न)ज्ञानं कुर्यादित्याह॥ १३॥

स्वेदोऽतिस्वेददौर्गन्ध्यकण्डूरेवं च लक्षयेत्।
दूषिकादीनपि मलान् बाहुल्यगुरुतादिभिः॥ १४॥

स्वेदो वृद्धोतिस्वेदादीन् कुर्यात् एवमनेन प्रकारेण दूषिकादीनपि मलान् वृद्धान् लक्षयेत्। अनुमिथात्। दूषिकानामाक्षिमलम् आदिशब्देन घ्राणकर्णमलादीनां ग्रहणम्। कथं लक्षयेदित्याह — बाहुल्येन तत्स्थानगौरवेण च आदिशब्देन कण्डूक्लेदादयो गृह्यन्ते॥ १४॥

वृद्धानां दोषादीनां लक्षणमभिधाय क्षीणानां लक्षणमाह —

लिङ्गं क्षीणेऽनिलेऽङ्गस्य सादोऽल्पं भाषितेहितम्।
संज्ञामोहस्तथा श्लेष्मवृद्ध्युक्तामयसम्भवः॥ १५॥

लिङ्गमित्यादि। अनिले क्षीणे स्वप्रमाणाद्धीने लक्षणमङ्गसादादि। अनिलस्य तु सर्वनाशेन देह एव न स्याद्। एवं पित्तादिषु च योज्यम्। अङ्गस्य सादःक्रियास्वसामर्थ्यम्। अल्पमात्रं भाषितेहितं भवति ईहितं चेष्टितं कायिकं कर्म भाषितं चेहितं च भाषितेहितम् अल्पवचनताल्पचेष्टितत्वं च

भवति । संज्ञामोहः संज्ञानाशः संविदभाव इत्यर्थः । संज्ञामोष इति वा पाठः । तथा श्लेष्मवृद्धौ ये उक्ता अग्निसादप्रसेकादयस्तेषामामयानां सम्भवो भवति ॥ १५ ॥

पित्ते मन्दोऽनलः शीतं प्रभाहानिः कफे भ्रमः ।
श्लेष्माशयानां शून्यत्वं हृद्रवः श्लथसन्धिता ॥ १६ ॥

पित्त इत्यादि । लिङ्गं क्षीण इत्यनुवर्तते । पित्ते क्षीणेऽग्निर्मन्दः स्यात् 'पित्तं वह्निर्वह्निजं वे'ति वचनात् अग्नेर्मान्द्यम् । शैत्यमंगस्य, प्रभा कान्तिस्तस्या हानिश्च स्यात् ॥

कफे क्षीणे भ्रमादयः स्युः सौम्यानां भावानां हान्या पित्ताधिक्याद् भ्रमः । श्लेष्माशयानां वक्ष्यमाणानामुरःप्रभृतीनां शून्यत्वम् । हृद्द्रवो हृदयद्रवप्रतीतिः ॥ १६ ॥

रसे रौक्ष्यं श्रमः शोषो ग्लानिः शब्दासहिष्णुता ।
रक्तेऽम्लशिशिरप्रीतिसिराशैथिल्यरूक्षताः ॥ १७ ॥

रसे क्षीणे रौक्ष्यादयः ॥

रक्ते क्षीणे अम्लशिशिराभिलाषादयः स्युः । सिराणां शैथिल्यं निबिडत्वनाशः ॥ १७ ॥

मांसेऽक्षग्लानिगण्डस्फिक्शुष्कता सन्धिवेदनाः ।
मेदसि स्वपनं कट्याः प्लीह्नो वृद्धिः कृशाङ्गता ॥ १८ ॥

मांसे क्षीणेऽक्षिग्लानिः । गण्डयोः स्फिजोश्च शुष्कता । सन्धीनां वेदना । स्फुटन्तीव सन्धय इत्यर्थः मेदसि क्षीणे कट्याः स्वापः प्लीहवृद्धिः कृशाङ्गत्वं च ॥ १८ ॥

अस्थ्न्यस्थितोदः शतनं दन्तकेशनखादिषु ।
अस्थ्नां मज्जनि सौषिर्यं भ्रमस्तिमिरदर्शनम् ॥ १९ ॥

अस्थ्नि क्षीणेऽस्थ्नां तोदो भवति दन्तादीनां शतनं शातः पतनमित्यर्थः ॥

मज्जनि क्षीणेऽस्थ्नां सौषिर्यं तिमिरदर्शनम् अतमस्येव तमसोऽनुभवः ॥ १९ ॥

शुक्रे चिरात्प्रसिच्येत शुक्रं शोणितमेव वा ।
तोदोऽत्यर्थं वृषणयोर्मेढ्रं धूमायतीव च ॥ २० ॥

शुक्रे क्षीणे शुक्रं चिरात् प्रसिच्यते निरेति । रक्तमेव वा निरेति वृषणयोरतिशयेन तोदो भवति । मेढ्रं शिश्नं धूमायतीव च । धूमायतीति लोहितादेराकृतिगणत्वात् क्यष् ॥ २० ॥

**पुरीषे वायुरान्त्राणि सशब्दो वेष्टयन्निव ।**
**कुक्षौ भ्रमति यात्यूर्ध्वं हृत्पार्श्वे पीडयन् भृशम् ॥ २१ ॥**

पुरीषे क्षीणे वायुः सशब्दः शब्दं कुर्वन् आन्त्राणि वेष्टयन्निव वलीकुर्वन् कुक्षिं भ्रमति ऊर्ध्वं याति किं कुर्वन् हृत्पार्श्वे भृशं पीडयन् ॥ २१ ॥

**मूत्रेऽल्पं मूत्रयेत् कृच्छ्राद्विवर्णं सास्रमेव वा ।**
**स्वेदे रोमच्युतिः स्तब्धरोमता स्फुटनं त्वचः ॥ २२ ॥**

मूत्रे क्षीणेऽल्पं मूत्रयेत् कृच्छ्राद् विवर्णं सास्रं सरक्तमेव वा ॥

स्वेदे क्षीणे रोम्णां च्युतिः स्तब्धरोमकूपत्वं त्वचश्चर्मणः स्फुटनं दारणम् ॥ २२ ॥

इदानीं दूषिकादीनामपि सामान्येन क्षयलिङ्गान्याह —

**मलानामतिसूक्ष्माणां दुर्लक्ष्यं लक्षयेत् क्षयम् ।**
**स्वमलायनसंशोषतोदशून्यत्वलाघवैः ॥ २३ ॥**

मलानामित्यादि । मलानामतिसूक्ष्माणां स्वल्पानां दूषिकादीनां दुर्लक्ष्यं दुःखेन बोद्धुं शक्यं क्षयं लक्षयेत् जानीयात् कैः स्वेषां मलायनानां मलस्थानानां संशोषादिभिः ॥ २३ ॥

एवं व्यासेन दोषादीनां वृद्धिक्षयमुक्त्वा पुनः समासेनाह —

**दोषादीनां यथास्वं च विद्याद्वृद्धिक्षयौ भिषक् ।**
**क्षयेण विपरीतानां गुणानां वर्धनेन च ॥ २४ ॥**

दोषादीनामित्यादि । दोषधातुमलानां वृद्धिक्षयौ जानीयात् कथं यथास्वं दोषादीनां गुणेभ्यो ये विपरीता गुणास्तेषां गुणानां क्षयेण वर्धनेन च देहगतेन यथाक्रमं दोषादीनां वृद्धिं क्षयं च विद्यात् । यथा वायोर्ये गुणा रूक्षलघुशीतादयस्तेषां विपरीताः स्निग्धगुरूष्णादयः तेषां स्निग्धादीनां देहे वृद्धिदर्शनात् क्षयं लक्षयेत् तेषां स्निग्धादीनां हान्या स्वगुणोल्बणेन वृद्धिं लक्षयेद् इत्यादि सर्वेषां ज्ञेयम् । आश्रयिणो गुणा आश्रयस्यैव रसादेः ।

पाठ्यकारोऽप्याह — 'विपरीतानां स्निग्धगुर्वादीनां गुणानां क्षयेण वायोर्वृद्धिं विद्यात् तेषां वर्धनेन क्षयमित्यादि सर्वेषां ज्ञेयमि'ति । अथवा यथास्वं यस्य यस्य यौ यौ वृद्धिक्षयौ तौ जानीयात् विपरीतानां गुणानां क्षयेण वर्धनेन चेति ॥ २४ ॥

वृद्धिमित्यादिना मलानां वृद्धिक्षयज्ञाने लक्षणान्तरमाह —

**वृद्धिं मलानां सङ्गाच्च क्षयं चातिविसर्गतः ।**
**मलोचितत्वाद्देहस्य क्षयो वृद्धेस्तु पीडनः ॥ २५ ॥**

मलानां मूत्रशकृदादीनां संगाद् बहिरप्रवृत्तिलक्षणाच्च वृद्धिं विद्यात् । तेषामेव मलानामतिविसर्गादतिप्रवृत्तेः क्षयं च विद्यात् । मलोचितत्वादिति प्रसङ्गोक्तिः । द्वावपि मलानां वृद्धिक्षयौ पीडाकरौ देहस्य तत्रापि य एषां क्षयः स वृद्धितोऽप्यतिशयेन पीडाकरः अनेनौचित्याद् देहिनां हि प्रायेण मलक्षयोऽनुचितोऽनभ्यस्तः वृद्धिस्तूचितैवेति न तथा पीडाकरीति ॥ २५ ॥

दोषाणामाश्रयाश्रयिभावेन वृद्धिक्षयकारणमाह —

**तत्रास्थनि स्थितो वायुः पित्तं तु स्वेदरक्तयोः ।**
**श्लेष्मा शेषेषु तेनैषामाश्रयाश्रयिणां मिथः ॥ २६ ॥**
**यदेकस्य तदन्यस्य वर्धनक्षपणौषधम् ।**
**अस्थिमारुतयोर्नैवं प्रायो वृद्धिर्हि तर्पणात् ॥ २७ ॥**
**श्लेष्मणानुगता तस्मात् संक्षयस्तद्विपर्ययात् ।**
**वायुनानुगतः**

तत्रेत्यादि । अस्मद्गुरवस्तु दोषादीनामाश्रयाश्रयिभावं दर्शयित्वा वृद्धिक्षये हेतुमाह तत्रेत्यादिनेत्याहुः । ह्याकारस्त्वाह —

दोषधातुमलानां च समवृद्धकृशात्मनाम् ।
कर्माण्युक्तानि तत्राद्यं कर्म देहस्य धारकम् ॥
वृद्धहानिजुषां कर्म देहप्रध्वंसनं ततः ।
वृद्धानां हानिरापाद्या क्षीणानां वृद्धिरत्र च ॥
एकस्य वृद्धिरन्यस्य हानिरन्यस्य चान्यथा ।
आधाराधेयभावेन स एवातोऽत्र दृश्यते ॥

तत्रेत्यादीति । तत्र तेषु वातादिषु मध्ये वायुरविकृतोऽस्थ्नि स्थितः आश्रितः पक्वाशयादीनां वाताश्रयत्वेऽपि तदनुक्तिराधाराधेयभावेन कार्यविशेषस्याभा-

भात् । पित्तं तु स्वेदरक्तयोः स्थितं तु शब्देन लसीकारसादिभ्यो विशेषः सूच्यते । श्लेष्माश्लेषेषु अस्थिस्वेदरक्तं वर्जयित्वा शेषेषु धातुमलेषु रसमांसमेदोमज्जशुक्र-मूत्रपुरीषादिषु स्थितः । एते रसादयो दोषाणामविकृतानामाश्रयाः । यतश्चैव-माश्रयाश्रयिभावो दोषधातुमलानां तेन हेतुना एषामाश्रयाश्रयिणां दोषधातु-मलानाम् आश्रया धातुमलाः आश्रयिण आश्रयवन्तो दोषाः । हेतुगर्भो निर्देशः आश्रयाश्रयित्वान्मिथः परस्परं यदेकस्याश्रयस्याश्रयिणो वा यदौषधं वर्धनं क्षपणं वा तदन्यस्यापि वर्धनं च क्षपणं च भवति । अयमर्थः यदौषधमेकस्याश्रयस्य वर्धनं तदन्यस्याश्रयिणोऽपि वर्धनं यदाश्रयिणो वर्धनं तदाश्रयस्यापि वर्ध-नम् । एवं क्षपणमपि तथा पित्ताश्रयस्य तीक्ष्णोष्णादि वर्धनं पित्तस्याश्रयि-णोऽपि तदेव वर्धनमित्यादि । नन्वेवमस्थ्नो वाताश्रयस्य यद् वर्धनं तदा-श्रयिणोऽपि वर्धनं न प्राप्नोतीत्याह — अस्थिमारुतयोर्नैवमिति । इाटका-ऽप्याह — एवं वर्धनक्षपणे स्थिते वायोस्तु स्वयं तन्त्रकृन्निवारणं करोतीति । ह्याकारोऽपि पूर्वोक्तस्य सामान्यविधेरपवादमाहेत्याह अस्थिमारुतयोर्नैवं वर्ध-नक्षपणौषधं भवतीत्यध्याहार्यम् अस्थिमारुतयोराश्रयाश्रयिभावेऽपि एकस्य वर्धनक्षपणौषधमन्यस्य वर्धनक्षपणौषधं न भवतीति । तत्र हेतुमाह — प्राय इत्यादि । हि यस्मात् प्रायो बाहुल्येन या वृद्धिर्वर्धनं दोषधातुमलानां सा सन्तर्पणाद् भवति । प्रायोग्रहणं वायुपरिहारार्थम् । सा च वृद्धिः श्लेष्मणानु-गताऽनुबद्धा । सन्तर्पणाच्छ्लेष्मवृद्धिरित्यर्थः । भूमितोयजनिताहारादिना बृं-हणं ततः कफस्य वृद्धिरुत्पन्ना । तस्मादिति पदमुपरिष्टात् संबध्यते यत एवं वृद्धिः सन्तर्पणाद्धेतोः य एषां दोषादीनां क्षयः स प्रायो भूयिष्ठं तद्विपर्यया-दपतर्पणाद् भवति स च संक्षयो वायुनानुगतः वाय्वाकाशाग्निजैर्द्रव्यैरपतर्पणं तत्र वायुः कुप्यति । एवं यदस्थ्नो(र्वे ? व)र्धनमौषधं तत् स्निग्धमधुरादिबृं-हणरूपं वातस्य क्षपणं च यच्च वातस्य वर्धनमौषधं तद्रूक्षतिक्ताद्यपतर्पण-मस्थ्नः क्षपणम् ॥

अस्माच्च वृद्धिक्षयसमुद्भवान् ॥ २८ ॥
विकारान् साधयेच्छीघ्रं क्रमाल्लङ्घनबृंहणैः ।
वायोरन्यत्र तज्जांस्तु तैरेवोत्क्रमयोजितैः ॥ २९ ॥

(त ? अ)स्माच्चेत्यादि । यत एवं वृद्धेः सन्तर्पणोत्थत्वं तस्माद् यतश्च क्षयस्यापतर्पणोत्थत्वमस्माच्च हेतोर्दोषादीनां वृद्धिक्षयसमुद्भवान् विकारान्

रोगान् क्रमाद् यथासंख्यं लङ्घनबृंहणैः साधयेदुपक्रामेत् इत्यनन्तरोक्तयोर्वृद्धिक्षययोश्चिकित्सोक्ता कथं शीघ्रं चिरोत्थिता हि ते दुश्चिकित्स्याः स्युः । वृद्ध्युत्थितान् विकारान् लङ्घनैः क्षयोत्थान् बृंहणैरिति क्रमार्थः । अस्मद्गुरवस्त्वेवमाहुः । 'तत्रानन्तरोक्तयोर्वृद्धिक्षययोः प्राय इत्यादिना चिकित्सार्थमाह — हिशब्दो यस्मादर्थे येयं शारीराणां भावानां सा प्रायेण श्लेष्मणानुगता । अतिसन्तर्पणनिमित्तत्वात् सन्तर्पणेन ह्यत्युपयुज्यमानेन सर्वे शारीरा भावा वृद्धिं यान्ति ततोऽस्या वृद्धेरेककारणत्वाच्छ्लेष्मणानुगतं करोति यश्च शारीराणां भावानां क्षयः स वायुनानुगतः कुतस्तद्विपर्ययात् पूर्वोक्तहेतुवैपरीत्याद् अत्यपतर्पणनिमित्तत्त्वाच्छारीरभावक्षयस्येत्यर्थः । तस्मादस्माच्च सर्वान् दोषादिवृद्धिक्षयसमुद्भवान् रोगान् क्रमाल्लङ्घनबृंहणैर्वक्ष्यमाणैरुपाचरेद् इत्यत्र हेतुर्वृद्धिक्षययोर्यथासंख्येन श्लेष्मवाय्वनुगतत्वम्' इति ॥

ननु वायुवृद्धिक्षयसमुद्भवानपि व्याधीनेवं साधयेत् । नेत्याह — वायोरन्यत्र वायुं हित्वा । तुर्विशेषे । तज्जान् वायुजान् वातवृद्धिक्षयसमुद्भवान् विकारान् पुनस्तैरेव लङ्घनबृंहणैरुत्क्रमयोजितैः । क्रममुल्लङ्घ्य प्रयुक्तैरुपक्रामेत् । यथा निर्दिष्टक्रमाद् विपरीतः क्रम उत्क्रमः वातवृद्ध्युत्थान् बृंहणैः तत्क्षयोत्थान् लङ्घनैरित्यर्थः । इति दोषाणां सामान्येन चिकित्सोक्ता विशेषचिकित्सेह नोक्ता दोषोपक्रमणी(यत्वे ? ये) वक्ष्यमाणत्वात् । रसचिकित्सा च 'रसोऽपि श्लेष्मवद्' इत्युक्तत्वात् नेह पुनर्निर्दिष्टा ॥ २९ ॥

अतो रक्तादीनां चिकित्सामाह —

**विशेषाद्रक्तवृद्ध्युत्थान् रक्तस्रुतिविरेचनैः ।**
**मांसवृद्धिभवान् रोगान् शस्त्रक्षाराग्निकर्मभिः ॥ ३० ॥**

**स्थौल्यकार्श्योपचारेण मेदोजानस्थिसंक्षयात् ।**
**जातान् क्षीरघृतैस्तिक्तसंयुतैर्वस्तिभिस्तथा ॥ ३१ ॥**

**विड्वृद्धिजानतीसारक्रियया विड्क्षयोद्भवान् ।**
**मेषाजमध्यकुल्माषयवमाषद्वयादिभिः ॥ ३२ ॥**

**मूत्रवृद्धिक्षयोत्थांश्च मेहकृच्छ्रचिकित्सया ।**
**व्यायामाभ्यञ्जनस्वेदमद्यैः स्वेदक्षयोद्भवान् ॥ ३३ ॥**

विशेषादित्यादि । विशेषग्रहणेन यत्र विशेषचिकित्सास्ति तत्रैव तदुक्तिः । अन्यत्र सामान्यचिकित्सैव । अत एव विशेषग्रहणादुक्तशेषधातु-वृद्धिक्षयरोगचिकित्सानारम्भो न दोषाय । वृद्धिक्षयोपक्रम एव स्थिते विशेषादसाधारण्येन रक्तवृद्ध्युत्थान् रोगान् रक्तस्रुतिविरेचनैः साधयेत् रक्तस्रुतिः रक्तस्रावः विरेचनं कायविरेचनम् एतद्रक्तस्य भृशदुष्टौ । प्रसादनमेवाल्प-दुष्टौ । विशेषेण मांसवृद्धिभवान् रोगान् शस्त्रक्षाराग्निकर्मभिः साधयेत् । मेदोवृद्धिक्षयाभ्यां जातान् मेदोजानिति मध्यमपदलोपो द्रष्टव्यः । मेदोवृद्धि-जान् स्थौल्योपचारेण द्विविधोपक्रमणीयोक्तया स्थौल्यचिकित्सया मेदःक्षय-जा(त् ? न्) कार्श्योपचारेणोपाचरेत् । अस्थिसंक्षयजान् विकारान् क्षीरघृतैस्ति-क्तसंयुक्तैः वस्तिभिस्तथा तथारूपैस्तिक्तसंयुक्तैर्वस्तिभिश्च कल्पे वक्ष्यमाणैर्यथा-योग्यैः । ननु यानि वातकृन्ति द्रव्याणि तान्यस्थिक्षयकारीणीति तिक्तद्रव्योप-योगोऽत्र न युक्तः तिक्तस्य वातकृत्त्वात् । अत्रोच्यते । यद् द्रव्यं स्निग्धं शोषणं खर(त्व)मुत्पादयति तदस्थ्नो वर्धनं युक्तं खरस्वभावत्वादस्थ्नां न त्वेवंविधमेकं द्रव्यमस्ति यत् स्निग्धं शोषणं च । तस्मात् क्षीरघृतैस्तिक्तसंयु-क्तैरित्युद्दिष्टं क्षीरघृतस्य तिक्तसंयुक्तस्य खरस्वभावत्वात् तद्विधस्यास्थ्नो वर्धन-त्वम् । तिक्तरसोपेतःस्नेहोऽस्थ्नां खरत्वमापादयति । यथाह —

अस्थ्नां खरत्वोपचयौ स्नेहैस्तिक्तोपसंहितैः ।

इति । केचिदत्र —

"मज्जशुक्लामयानां च भोजनं स्वादुतिक्तकम् ।"

इत्यादिग्रन्थं पठन्ति । अर्थः — मज्जशुक्लक्षयोत्थानां मधुरतिक्तकभोजनं हितं वृद्ध्युत्थानां शुद्ध्यादिर्हितः । अन्यदपि शुक्लशोधनं हितमिति । विड्-वृद्धिजान् पुरीषवृद्धिजान् रोगानतीसारचिकित्सया साधयेत् । अतिसारक्रिय-येति आमातिसारिणि प्रयोज्या क्रियाङ्गीकृता न च पक्वातिसारिणि । विड्क्ष-योत्थान् मेषाजमध्यादिभिः साधयेत् । मेष उरभ्रः । अजश्च्छागः । मेषा-जयोर्मध्यमन्तराधिरन्तर्जठरमांसमिति यावत् । मध्यशब्दोऽन्तराधिमांसवाची इति पाठ्यकारः । कुल्माषः किञ्चित् स्विन्नं हिङ्गुघृतादिसंस्कृतं मुद्गमाषादि । कुन्मास इति पाठान्तरम् । माषद्वयं माषो राजमाषश्च । आदिशब्देन पुरीष-

गमनानां काकाण्डोलात्मगुप्तादीनां ग्रहणम् मूत्रवृद्ध्युत्थान्मेहचिकित्सया मूत्र-क्षयजान् मूत्रकृच्छ्रचिकित्सया साधयेद् । विशेषेण स्वेदक्षयजान् व्याधीन् व्यायामादिभिः साधयेत् ॥ ३० ॥

अग्नेर्वृद्धिक्षयाभ्यां धातूनां क्षयवृद्धी भवतः इत्याह —

**स्वस्थानस्थस्य कायाग्नेरंशा धातुषु संश्रिताः ।**
**तेषां सादातिदीप्तिभ्यां धातुवृद्धिक्षयोद्भवः ॥ ३४ ॥**

स्वेत्यादि । दोषादीनां वृद्धिक्षययोः कारणमाहेति हाटकः । स्व-स्थानं कायाग्नेः पक्वाशयामाशययोर्मध्यम् । यथा वक्ष्यति —

"पित्तं पञ्चात्मकं तत्र पक्वामाशयमध्यगम् ।"

इत्यादि यावत् 'पाचकं नाम तत् स्मृतम्' इति । तस्मिन् स्थितस्य कायाग्नेः पाचकाख्यस्य पित्तस्याग्निशब्दवाच्यस्य येऽशा भागाः अवयवाः धातुषु रसादिषु सप्तसु संश्रिताः स्थिताः तेषां धातुस्थानामग्न्यंशानां सादेन मान्द्येन धातूनां वृद्धिर्भवति । पाकेनोत्तरधात्वापादनायास्य पूर्वधातोः क्षपणकारण-स्याग्नेरल्पत्वात् तथा तेषामेवाग्न्यंशानामतिदीप्त्या अतितैक्ष्ण्याद् धातूनां क्षयो भवति न तु दी(प्त ? प्ति)मात्रेण धातुक्षयः किन्तु अतिदीप्त्या । अति-दी(प्तानां ? प्त्या) पाक्यद्रव्यान्तराभावे स्वधातुमपि पचन्ति वह्नयः । तदुक्तम्—

आहारमग्निः पचति दोषानाहारवर्जितः ।
धातून् क्षीणेषु दोषेषु जीवितं धातुसंक्ष(यः ? ये) ॥

इति । यद्यप्यन्नपाचकाग्निपरायत्तवृद्धिक्षया धात्वग्नयस्तत्रान्याहारद्रव्यशक्ति-वशाद् य एवान्यतमो धात्वग्निर्मन्दीभवति स एव स्वस्य धातोः क्षपणाशक्त-त्वाद् वृद्धिमेव जनयति एवं तीक्ष्णोऽग्निः स्वस्य धातोः क्षयम् ॥ ३४ ॥

अन्यदपि धातुवृद्धिक्षयकारणमाह —

**पूर्वो धातुः परं कुर्याद्वृद्धः क्षीणश्च तद्विधम् ।**

पूर्व इत्यादि । पूर्वो यादृशस्तादृशमुपरितनं करोति यथा पूर्वो रसाख्यो धातुर्वृद्धः सन् परं रक्ताख्यं धातुं तद्विधमात्मसदृशं वृद्धं करोति क्षीणश्च पूर्वो धातुः परं तद्विधं क्षीणमेव कुर्यात् यतो धात्वाहारा हि धातवः । एवं रक्तादिषु च योज्यम् । संग्रहे चोक्तं —

पारम्पर्येण दावाग्नेस्तद्वत् प्राप्येन्धनं शिखा।
वृद्धिक्षयौ यथायाति तद्वद् धातुपरम्परा॥

इति। नन्वेवम् एकधातुवृद्धिक्षयानुत्पत्तिरिति चेत्। तन्न। एकधातुवृद्धिक्षयकरद्रव्योपयोगेन तदुपपत्तेः यत्र रसमूलौ वृद्धिक्षयौ तत्र सर्वधातुवृद्धिक्षयौ भवतः नान्यत्र धातूनां वस्तव्यगन्तव्यांशभेदेन वृद्धिक्षयभेदः। वस्तव्यस्य क्षये गन्तव्यस्य गमने कार्श्यमुभयनाशे शरीरनाशः मेदस्विनः स्थूलस्य मेदसा स्रोतः पिधानात् गन्तव्यस्यागमनात् शुक्रबलक्षयोपपत्तिः॥

दोषादीनां वृद्धिक्षयकारणमुक्तं तेन च दोषादयो दुष्टा रोगकारणतामेव यान्तीत्युच्यते —

**दोषा दुष्टा रसैर्धातून् दूषयन्त्युभये मलान्॥ ३५॥**
**अधो द्वे सप्त शिरसि खानि स्वेदवहानि च।**
**मला मलायनानि स्युर्यथास्वं तेष्वतो गदाः॥ ३६॥**

**दोषा दुष्टा इत्यादि।** हृद्याकारोप्याह — दोषधातुमलानां वृद्धिक्षयरूपा दुष्टिरुक्ता। सा केन तया किं भवतीत्याह इति। रसैर्मधुरादिभिरपथ्यैर्मिथ्यायोगातियोगसेवितैः। रसैरित्युपलक्षणं द्रव्यादिभिरित्यर्थः। तैर्दुष्टाः कुपिता दोषा वातादयो धातून् रसादीन् दूषयन्ति। उभये च दोषा धातवश्च दुष्टा मलान् मूत्रादीन् दूषयन्ति। ते च मला दुष्टा मलायनानि मलानां मार्गान् दूषयन्ति। अयनानि चेति वा पाठः चशब्देन मलानपि दूषयन्ति। अयनप्रसङ्गात् कानि तानीत्याह — अधो द्वे इति। अधो द्वे गुदमेढ्राख्ये सप्तशिरसि खानि द्वे अक्षिणी द्वौ कर्णौ द्वौ नासापुटौ आस्यं चेति तथा स्वेदवहानि रोमकूपाख्यानि छिद्राणि सर्वशरीरगतानीत्येतानि मलानां शकृदादीनामयनानि मार्गाः तानि मला दूषयन्तीति सम्बन्धः। तथा च मुनिः —

"मलायनानि बाध्यन्ते दुष्टैर्मात्राधिकैर्मलैः।"

इति। स्युरित्यादि। अतः कारणात् यतो दुष्टदोषदूषितमलानामाश्रयभूतानि मलायनानि अत एव तेषु यथास्वं गदाः स्युः। य एव मलो दुष्टः तदयनस्यैव रोगोत्पत्तिरित्यर्थः। अरुणदत्तोप्याह — अतो दूषणात् कारणात् तेषु मलायनेषु दुष्टेषु यथास्वं गदा रोगाः स्युः भवेयुः इति। हृद्याकारस्तु तेष्वयनेषु अतो दोषधातुमलेभ्यो यथास्वमयनानतिक्रमेण वक्ष्यमाणा रोगा भवन्तीत्याह। तेषु धातुमलमलायनेषु यथास्वं धातुमलमलायनानतिक्रमेणेत्यस्मद्गुरवः॥ ३६॥

ते च दोषाः समा अप्योजसा विहीनं देहं संवाहयितुमशक्ताः अत ओजसः स्वरूपं पालनं चोच्यते ओज इत्यादिना। अथवा धातुसारत्वादोजसोऽपि स्वरूपं दर्शयति। अथवा ओजो नामाष्टमं धातुं निरूपयन्नाह—

ओजस्तु तेजो धातूनां शुक्रान्तानां परं स्मृतम्।
हृदयस्थमपि व्यापि देहस्थितिनिबन्धनम्॥ ३७॥
स्निग्धं सोमात्मकं शुद्धमीषल्लोहितपीतकम्।
यन्नाशे नियतं नाशो यस्मिंस्तिष्ठति तिष्ठति॥ ३८॥
निष्पद्यन्ते यतो भावा विविधा देहसंश्रयाः।
ओजः क्षीयेत कोपक्षुद्ध्यानशोकश्रमादिभिः॥ ३९॥
बिभेति दुर्बलोऽभीक्ष्णं ध्यायति व्यथितेन्द्रियः।
विच्छायो दुर्मना रूक्षो भवेत्क्षामश्च तत्क्षये॥ ४०॥
जीवनीयौषधक्षीररसाद्यास्तत्र भेषजम्।
ओजो विवृद्धौ देहस्य तुष्टिपुष्टिबलोदयः॥ ४१॥

ओज इत्यादि। रसादीनां धातूनां शुक्रान्तानां यत् परं तेजः तदोजः स्मृतम्। तेजः प्रसादः सारमित्यर्थः। अत्र तुशब्दोऽवधारणे अन्ये शुक्रस्य मलं वदन्त्योजस्तन्निरासार्थम्। तन्त्रान्तरेऽप्युक्तं—

"रसादीनां प्रसादस्तु शुक्रान्तानां य उत्तमः।
ओजस्तदाहुर्भिषज............................॥"

इति। तर्हि कथं वक्ष्यति—

"कफः पित्तं मलः खेषु प्रस्वेदो नखरोम च।
स्नेहोऽक्षित्वग्विशामोजो धातूनां क्रमशो मलाः॥"

इति। ब्रूमः परमित्योजो विशेषणं शुक्रान्तानां धातूनां तेज एव परं श्रेष्ठमोजः स्मृतम्। अन्यत्तु न परमिति। द्विविधं ह्योजः। तथा हृदयस्थमपि व्यापि सकलशरीरव्यापि तस्य षड्बिन्दुकस्य विशेषेण हृदयं स्थानम्। देहस्य स्थितिस्तस्या निबन्धनं कारणं जीविताधिष्ठानमित्यर्थः। अरुणदत्तोप्याह—परशब्देनैतद् द्योतयति अन्यदप्योजोऽस्ति न तद् धातूनां तेजः शुक्रमलरूपमिति। तथा चोक्तं सङ्ग्रहे—

"स्निग्धं सोमात्मकं पीतमीषल्लोहितपीतकम्।"

---

१. 'मृदु सोमात्मकं शुद्धं रक्तमीषत्सपीतकमि'ति मुद्रितसङ्ग्रहे।

इत्यादि। यन्नाशे यस्य ओजसो नाशेऽभावे नियतं निश्चितं प्राणिनो नाशो। नियत इति वा पाठः। यस्मिन्नोजसि तिष्ठति विद्यमाने तिष्ठति देहीति शेषः। इत्याकारोप्याह — यस्मिंस्तिष्ठति स्थितिमति तिष्ठति जीवति पुरुष इति।

"हृदि तिष्ठति यच्छुद्धं रक्तमीषत्सपीतकम्।
ओजः शरीरे संख्यातं तन्नाशान्नाविनश्यति॥"

इति चरके। यतो यस्माद् भावाः पदार्थाः बुद्ध्यहङ्कारादयो निष्पद्यन्ते जायन्ते। विविधा अनेकप्रकाराः। तथा च देहः संश्रयो येषां ते देहसंश्रयाः॥

तदोजः कोपादिभिरसौम्यैः क्षीयेत। तत्क्षये तस्यौजसः क्षये देही बिभेति अकारणाद्। दौर्बल्यादिगुणयुक्तश्च भवेत्। अभीक्ष्णमत्यर्थं ध्यायति ध्यानपरो भवति। व्यथितेन्द्रियोऽशक्तेन्द्रियः। दुच्छायो दुष्टकान्तिः कान्तिरहितः तत्रौजः क्षये भेषजं जीवनीयौषधसिद्धक्षीरादयः जीवनीयौषधानि जीवन्त्यादीनि दशजीवनसंज्ञानि तथान्यानि यानि मधुराणि द्रव्याणि। अथवा जीवनीयौषधाद्यस्तत्र भेषजं क्षीरस्य जीवनीयोक्त्यैव ग्रहणे सिद्धे पृथक्पाठोऽतिशयार्थः। अतिशयेन क्षीरमौषधमिति। रसो मांसरसः। आ(दि?द्य)शब्देन घृतादिपरिग्रहः॥

एवंविधेन भेषजेन औजोवृद्धौ सत्यां देहस्य तुष्ट्यादीनामुदयः सम्यग् वृद्धिर्भवति। तुष्टिर्मनःप्रहर्षः। पुष्टिः शरीरपोषः॥ ४१॥

ओजसश्चिकित्साप्रसङ्गेन सर्वेषां दोषादीनां सङ्क्षेपतो वृद्धिक्षयचिकित्सामाह —

यदन्नं द्वेष्टि यदपि प्रार्थयेताविरोधि तु।
तत्तत्त्यजन् समश्नंश्च तौ तौ वृद्धिक्षयौ जयेत्॥ ४२॥

यदन्नमित्यादि। यदन्नं पुरुषो द्वेष्टि नाभिनन्दति यदप्यन्नं प्रार्थयेत इच्छति तदन्नं द्विष्टं त्यजन्निष्टमन्नं समश्नन् भक्षयन् यथासंख्यं दोषादीनां सम्बन्धिनौ तौ तौ वृद्धिक्षयौ जयेत्। यौ यदात्मकौ वृद्धिक्षयौ तौ जयेत्। तुरवधारणे। अविरोध्येवान्नं समश्नन् क्षयं जयेत् न तु विरोध्यन्नमश्नन्। इत्याकारोऽप्याह — तुर्विशेषे न सर्वं का(ङ्क्षन्? ङ्क्षितं) देयमित्यर्थः। किन्तु अविरुद्धं व्याध्यादेरिति। वृद्धिक्षयौ दोषाणां सम्बन्धिनाविति केचित्॥ ४२॥

ननु यदन्नं द्वेष्टयसौ रोगी तत् त्यजन् , यच्चाभिलषति तत् समश्नन् कुतो हेतो-र्दोषाणां वृद्धिक्षयौ जयेदित्याह —

**कुर्वते हि रुचिं दोषा विपरीतसमानयोः ।**
**वृद्धाः क्षीणाश्च भूयिष्ठं लक्षयन्त्यबुधा न तत् ॥ ४३ ॥**

कुर्वत इत्यादि । हि यस्मात् दोषा वृद्धाः स्वप्रमाणाधिकाः सन्तः स्वगुणेभ्यो यद् विपरीतगुणमन्नं तेषां क्षयहेतुस्तद्विषयां प्रीतिमुत्पादयन्ति । क्षीणाश्च स्वप्रमाणहीनाः सन्तो दोषाः स्वगुणेभ्यो(यः ? यत्) समानगुणमन्नं तषां वर्धनहेतुस्तद्विषयां प्रीतिमुत्पादयन्ति । दोषस्वभाव एवात्र हेतुः । यथा वातो वृद्धः स्निग्धाम्लमधुरेऽन्नेऽभिलाषं कुरुते, क्षीणो रूक्षकषायाद्यन्नेऽभिलाषं कुरुते । एवं पित्तश्लेष्मणोरपि योज्यम् । भूयिष्ठं प्रायेणेत्यनेन व्यभिचारं दर्शयति । तेन दोषगतिवैचित्र्यादन्यथापि क्वचित् भवति । यथा कस्यचिन्नरस्य वातोऽपि क्षीणः स्निग्धमधुराद्यन्नेऽभिलाषं कुरुते इत्यादि । यस्माद् भूयिष्ठग्रहणं कृतम् । अत एव अबुधाः स्वल्पमतयो भिषजस्तद्दोषस्वरूपं न लक्षयन्ति किमयं दोषः क्षीण उत वृद्ध इति । व्याख्याकारस्त्वाह — अबुधा अज्ञानिनस्तन्न लक्षयन्ति अत्राभिलाषद्वेषयोरेतत् कारणमिति (इति ?) निपुणं निरूपणीयमित्यर्थः (इति) ॥ ४३ ॥

न चानेनैव लक्षणेन वृद्धाः क्षीणाश्च दोषा लक्षणीयाः किं तर्ह्यन्यदपि लक्षण-मस्तीत्याह —

**यथाबलं यथास्वं च दोषा वृद्धा वितन्वते ।**
**रूपाणि जहति क्षीणाः**

यथाबलमित्यादि । हाटकोऽप्याह — न त्वेवमन्नरुचिरेव दोषाणां वृद्धिक्षयपरिज्ञानकारणं यावत् स्वरूपमपीत्याह — यथाबलमित्यादीति । यथा-बलं बलानतिक्रमेण यथास्वं चात्मीयानतिक्रमेण रूपाणि गुणकर्मलक्षणानि दोषा वृद्धा वितन्वते विस्तारयन्ति । यथाबलमिति वृद्धेरवस्थाविशेषाद् रूपा-णामपि विशेषः क्षीणाश्च यथाबलं यथास्वं च रूपाणि जहति त्यजन्ति । यथा वायुर्वृद्धो रौक्ष्यशैत्यपारुष्यस्रंसव्यासादीनि विस्तारयति, क्षीणस्तु तानि जहाति, अत एव न व्यञ्जयति ॥

अथ समा दोषाः किं विदधतीत्याह —

**समाः स्वं कर्म कुर्वते ॥ ४४ ॥**

समा इत्यादि । यदा न वृद्धा न च क्षीणाः समा दोषाः स्वप्रमाणस्थास्तदा स्वं कर्मोत्साहोच्छ्वासादिकं यथोक्तं कर्म कुर्वते । एवं ते लक्षणीयाः ॥ ४४ ॥

क्षीणदोषाः क्षीणत्वादेवाकिञ्चित्करत्वात् कदाचित् पीडां नोत्पादयन्त्येवेति विचिन्त्याल्पमतयो वैद्याः क्षीणदोषवर्धनार्थं तच्चिकित्सायां कदाचिदनादरं कुर्युरित्याह—

**य एव देहस्य समा विवृद्ध्यै**
**त एव दोषा विषमा वधाय ।**
**यस्मादतस्ते हितचर्ययैव**
**क्षयाद्विवृद्धेरिव रक्षणीयाः ॥ ४५ ॥**

य इति । य एव दोषाः समाः सन्तो देहस्य विवृद्ध्यै वर्धनाय भवन्ति, त एव दोषा विषमाः स्वप्रमाणादधिका हीना वा सन्तो वधाय देहविघाताय स्युः । यस्मादेवं वृद्धिहान्योः समानत्वम् । अतस्ते दोषा वृद्धिहान्यजनकया हितचर्ययैव क्षयाद् रक्षणीयाः । कुत इव, विवृद्धेरिव । यथा विवृद्धेर्विशेषेण वर्धनात् ते रक्ष्यन्ते तथा क्षयादपि रक्षणीयाः क्षयं वृद्धिं च दोषाणां परिहरेदित्यर्थः ॥ ४५ ॥

इति श्रीदासपण्डितविरचितायां हृदयबोधिकायां
एकादशोऽध्यायः ॥

---

## अथ द्वादशोऽध्यायः ।

दोषभेदं विना दोषज्ञानं सम्यङ्न भाषितं भवति । अतो दोषभेदमाह—

**अथातो दोषभेदीयाध्यायं व्याख्यास्यामः ।**

(अथेत्यादि) पूर्वस्मिन्नध्याये बहुवक्तव्यत्वाद् दोषभेदो नोक्तः अथवा पाठः —

साम्यवृद्धिक्षया लिङ्गैर्दोषाणां प्रागुदीरिताः ।
धामनामक्रियायोगभेदान् वदति सम्प्रति ॥

अथवा पूर्वाध्याये दोषाणां प्राकृतं वैकृतं च स्वरूपमुक्तम् । अत्र तु तेषामेव स्थानक्रियादिविशेषाद् भेदपरिज्ञानार्थमध्यायारम्भः । अत्र यद्यप्यन्यदप्युच्यते तत्रापि प्राधान्याद् दोषैरेव व्यपदेशः । दोषाणां भेदो दोषभेदः, स्थाननाम-विभागादिभिस्तस्मै हितो दोषभेदीयः । शेषं पूर्ववद् व्याख्येयम् ।

"दोषाश्च पञ्चभूतोत्था वायुराकाशवायुजः ।
आग्नेयं पाचकं पित्तं सद्रवं दोषसंज्ञितम् ॥
अम्भोभूम्यधिकः श्लेष्मा ते भूयः सर्वदेहगाः ।
स्थूणा इति निगद्यन्ते शरीरागारधारणात् ॥
धारणाद् धातवश्चोक्ता दूषणाद् दोषसंज्ञिताः ।
देहस्य मालिन्यकृतेः समीराद्याः स्मृता मलाः ॥"

तेषां सकलशरीरव्यापिनां विशेषस्थानमाह—

**पक्वाशयकटीसक्थिश्रोत्रास्थिस्पर्शनेन्द्रियम् ।**
**स्थानं वातस्य तत्रापि पक्वाधानं विशेषतः ॥ १ ॥**

पक्वेत्यादि । पक्वाशयादि वातस्य स्थानम् । तत्रापि षड्विधे स्थाने पक्वाधानं विशेषतो वातस्थानम् । पक्वाशयं नाभेरधः । श्रोत्रं श्रवणेन्द्रियाधिष्ठानम् । स्पर्शनेन्द्रियं त्वग्विशेषः । पक्वमाधीयते स्थाप्यतेऽस्मिन्निति पक्वाधानं पक्वाशयः । अत एव वाते बस्तिरुपक्रमः प्रधान उक्तो मूलापकर्षणात् । सकल-शरीरव्यापित्वेऽप्येषामिदं विशेषेणोक्तम् । तथाच प्रागध्यगीष्ट 'ते व्यापिनोऽपि हृन्नाभ्योरि'ति । विचित्रगतित्वाच्चैषां वक्ष्यमाणः प्राणादिभेदेन पृथक् स्थानकर्मनिर्देशः ॥ १ ॥

**नाभिरामाशयः स्वेदो लसीका रुधिरं रसः ।**
**दृक् स्पर्शनं च पित्तस्य नाभिरत्र विशेषतः ॥ २ ॥**

नाभिरित्यादि । पित्तस्य नाभिप्रभृतीनि स्थानानि । लसीका जल-सदृशस्त्वचि स्नेहः । दृक् चक्षुः । स्पर्शनं त्वग्विशेषः अत्र एषु स्थानेषु मध्ये पित्तस्य विशेषेण नाभिःस्थानम् । ननु स्पर्शनेन्द्रियं वायोरुद्दिष्टं, तदेव कथं पित्तस्यापि स्यात् । ब्रूमः । 'पित्तं वह्निरि'ति वचनात् वायोः पित्तस्य साह-चर्यादुभयोरपि सहस्थानता न विरुध्यते ॥ २ ॥

**उरःकण्ठशिरःक्लोमपर्वाण्यामाशयो रसः ।**
**मेदो घ्राणं च जिह्वा च कफस्य सुतरामुरः ॥ ३ ॥**

कफस्योरःप्रभृतीनि जिह्वान्तानि स्थानानि । क्लोम शरीरे वक्ष्यमाणम् । एषु मध्ये सुतरां मुख्यस्थानमुरो वक्षः । दोषाणां विशिष्टस्थानाभिधाने पुनरपि विशेषग्रहणादिदं द्योतयति—तत्र कुपितानां मुख्य एवोपक्रमः कर्तव्यो नान्य इति ॥ ३ ॥

अधुना प्रत्येकमेषां दोषाणां विशिष्टस्थानाश्रयेण क्रियाभेदात् पञ्चधा भेदानाह—

प्राणादिभेदात्पञ्चात्मा वायुः प्राणोऽत्र मूर्धगः ।
उरःकण्ठचरो बुद्धिहृदयेन्द्रियचित्तधृक् ॥ ४ ॥
ष्ठीवनक्षवथूद्गारनिःश्वासान्नप्रवेशकृत् ।

प्राणादीत्यादि । वायुरेक एव चलनस्वभावः । स प्राणादिभिः प्राणोदानव्यानसमानापानैर्भेदाद् विशेषात् पञ्चात्मा पञ्चस्वभावः । पञ्चस्वरूप इति ह्याकारः । विशिष्टस्थानाश्रयेण क्रियाभेदात् भेदः, न स्वरूपतो भेदः । यथैकोऽपि देवदत्तो यां यां क्रियां करोति, तदनुरूपामेव संज्ञां पाचकलावकादिकां लभते, तद्वद् वातादयः । 'अन' इति धातुः गमनजीवनयोर्वर्तते । प्रकर्षेणानति गच्छतीति प्राणः । उदनतीत्युदानः विविधमासमन्ताद् गच्छतीति व्यानः । समं सर्वत्रानतीति समानः । अपोपसर्गोऽत्रावागर्थवाची । अवाग् भूयिष्ठं गच्छतीत्यपानः ।

अत्र एषु मध्ये प्राणो वायुर्मूर्धगः शिरसि स्थितः प्राधान्येनोरः कण्ठं च चरति । बुद्ध्यादीनां धारकः । हृदयं बुद्ध्याधारभूतम् । तथा ष्ठीवनादिक्रियः । ष्ठीवनं मुखस्रावोत्सारणम् । ष्ठीवनमिति 'ष्ठिवुसिव्योर्दीर्घश्च' इति । पृषोदरादिपाठाद् दीर्घः । अन्नस्य प्रवेशोऽन्नप्रवेशः अन्तःप्रवेशनम् ॥

उरःस्थानमुदानस्य नासानाभिगलांश्चरेत् ॥ ५ ॥
वाक्प्रवृत्तिप्रयत्नोर्जाबलवर्णस्मृतिक्रियः ।

उदानस्योरः प्रधानं स्थानम् । नासादींश्चरेत् । वाक्प्रवृत्त्यादिक्रियः । प्रयत्नः कार्येषु (पाद ? पदार्थ)ग्रहणादिषूद्यमः ॥

व्यानो हृदि स्थितः कृत्स्नदेहचारी महाजवः ॥ ६ ॥
गत्यपक्षेपणोत्क्षेपनिमेषोन्मेषणादिकाः ।
प्रायः सर्वाः क्रियास्तस्मिन् प्रतिबद्धाः शरीरिणाम् ॥ ७ ॥

व्यानः प्राधान्येन हृदये स्थितः कृत्स्नं निरवशेषं देहं चरति। महाजवः शीघ्रतरगतिः प्राणाद्यपेक्षया। तथागत्यादिकाः क्रियाः प्रायः सर्वास्तस्मिन् प्रतिबद्धाः तदायत्ताः। गतिर्देशान्तरप्राप्तिः। अवक्षेपणमङ्गस्याधो नयनम्। उत्क्षेपोऽङ्गस्योर्ध्वनयनम्। निमेषोऽक्ष्णः पुटाभ्यां पिधानं निमीलनम्। उन्मेषोऽक्ष्णोर्विकासः। आदिग्रहणेन जृम्भणान्नास्वादनविशोधनादिपरिग्रहः॥ ६, ७॥

समानो वायुरग्निसमीपस्थः। सामान्योक्तावपि प्राधान्यादन्तराग्निः पाचकाख्यो गृह्यते। प्राधान्येनान्तराग्निसमीपे। अत एवाह—

समानोऽग्निसमीपस्थः कोष्ठे चरति सर्वतः।
अन्नं गृह्णाति पचति विवेचयति मुञ्चति॥ ८॥

कोष्ठे चरति सर्वत इति। तस्याग्नेः स्थानमामाशयपक्वाशययोर्मध्यं नाभेरर्धाङ्गुलमात्रेण वामपार्श्वे। सर्वत इति आद्यादित्वात् तसिः, सर्वस्मिन् कोष्ठे चरतीति। स चान्नं गृह्णाति अपक्वमामाशये धारयतीत्यर्थः। अन्नं पचति अग्निसन्धुक्षणाद् भस्त्रका(र) इव। विवेचयति संहतमन्नं पाकाय विभजते। मुञ्चति शकृन्मूत्रादिरूपमधः॥ ८॥

अपानोऽपानगः श्रोणिवस्तिमेदोरुगोचरः।
शुक्रार्तवशकृन्मूत्रगर्भनिष्क्रमणक्रियः॥ ९॥

अपानो वायुरपानगः प्राधान्येन पायुमाश्रितः। श्रोण्यादिचरः। शुक्रादीनां निष्क्रमणं बहिः प्रेरणं क्रिया यस्य स एवम्। इति वातभेदाः पञ्च॥ ९॥

सम्प्रति पित्तभेदानाह—

पित्तं पञ्चात्मकं तत्र पक्वामाशयमध्यगम्।
पञ्चभूतात्मकत्वेऽपि यत्तैजसगुणोदयात्॥ १०॥
त्यक्तद्रवत्वं पाकादिकर्मणानलशब्दितम्।
पचत्यन्नं विभजते सारकिट्टौ पृथक् तथा॥ ११॥
तत्रस्थमेव पित्तानां शेषाणामप्यनुग्रहम्।
करोति बलदानेन पाचकं नाम तत्स्मृतम् १२॥

पित्तमित्यादि। पित्तमपि पञ्चभेदं पाचकरञ्जकसाधकालोचकभ्राजकभेदात्। "पित संतापे" इति धातुः तस्मिन् पित्तमिति रूपम्। तत्र तेषु पञ्चसु

मध्ये यत् पित्तमामाशयपक्वाशययोर्मध्ये स्थितं तत् पञ्चभूतात्मकत्वेऽपि सति यत तैजसगुणोदयादाग्नेयगुणोत्कर्षात् क्षपितसोमगुणत्वेन त्यक्तद्रवत्वं सञ्जातकाठिन्यं पञ्चभूतात्मकमपि तदग्निगुणोत्कर्षात् त्यक्तद्रवगुणमित्यर्थः। तथा सहकारिकारणैः पाकक्रियां प्रति सव्यापारैर्वाय्वादिभिरनुग्रहाद् यत् पाकदाहादिक्रियानलशब्दितं अग्निशब्दवाच्यम्। इद्याकारोऽपि सहचारिणा वायुनानुगृहीतं पचनदहनादिक्रियया लब्धाग्निशब्दमित्याह। तथान्नं पचति। सारकिट्टौ पृथग् विभजते विभागीकरोति। सारत्वं च किट्टत्वं चान्नस्य सम्पाद्यते। किट्टशब्दस्य लोकाश्रयत्वाल्लिङ्गस्येति अत्र पुंस्त्वम्। किट्टशब्दस्यात्र पुंस्त्वे हेतुमजानन्तः सारकिट्टे इति पठन्ति। तत्रस्थमेव पक्वामाशयमध्यगमेव। शेषाणां रञ्जकादीनां धातुस्थानां चानुग्रहमुपकारं करोति बलदानेन सामर्थ्यदानेन स्वस्थानस्थमेव तेषूपकुरुत इत्यर्थः। तत् पित्तं पाचकमित्युच्यते। पाचकस्य बले सति तेषां बलं भवतीति बलदानमुपचर्यते। वातः पचति पित्तमपि पचति। यथा देवदत्तः पचति वह्निः पचति काष्ठानि पचन्ति तद्वद् वातपित्तयोः पाकादिकरत्वम्॥ १०–१२॥

आमाशयाश्रयं पित्तं रञ्जकं रसरञ्जनात्।
बुद्धिमेधाऽभिमानाद्यैरभिप्रेतार्थसाधनात्॥ १३॥
साधकं हृद्गतं पित्तं रूपालोचनतः स्मृतम्।
दृक्स्थमालोचकं त्वक्स्थं भ्राजकं भ्राजनात्त्वचः॥ १४॥

आमाशयाश्रयं हृदयनाभ्योर्मध्यदेश आमाशयः तत्स्थं पित्तं रसरञ्जनात् रसाख्यस्य धातोः रञ्जनाद् रागनिष्पादनाद् रक्तीकरणाद् रञ्जकमित्युच्यते। तदेव दोषशब्दवाच्यम्। पाचकस्य दोषत्वमग्नित्वं च। अस्मिन् शास्त्रे सर्वत्र पाचकपित्तमग्निशब्दवाच्यमिति स्थितिः॥

हृद्गतं हृदयस्थं पित्तं बुद्ध्यादिभिः करणभूतैः अभिप्रेतस्यार्थस्य बाह्यग्रहणस्मरणादिरूपेण साधनात् साधकमुच्यते, तदभिप्रेतमर्थं साधयति। अर्थनिश्चायिका बुद्धिः। मेधा वस्तुविवेकशक्तियुक्तो बुद्धिविशेषः॥

दृक्स्थं दृष्टिस्थमन्तस्तारकस्थितं पित्तं रूपालोचनात् तदायत्तरूपग्रहणशक्तित्वादालोचकमुच्यते।

त्वक्स्थं पित्तं त्वचो भ्राजनाद् दीप्तिकरणाद् भ्राजकं नामोच्यते। एतच्च पित्तमभ्यङ्गलेपपरिषेकादीन् पाचयति। तेनैतदुक्तं भवति—त्वक्स्थेन

पित्तेन पक्वं द्रव्यं स्वं कार्यं रागकाठिन्यादिनाशनं करोति । नत्वपक्वं द्रव्यं स्वं कार्यं करोतीति ॥ १४ ॥

श्लेष्मा तु पञ्चधोरस्थः स त्रिकस्य स्ववीर्यतः ।
हृदयस्यान्नवीर्याच्च तत्स्थ एवाम्बुकर्मणा ॥ १५ ॥
कफधाम्नां च शेषाणां यत्करोत्यवलम्बनम् ।
अतोऽवलम्बकः श्लेष्मा यस्त्वामाशयसंस्थितः ॥ १६ ॥
क्लेदकः सोऽन्नसंघातक्लेदनाद्रसबोधनात् ।
बोधको रसनास्थायी शिरःसंस्थोऽक्षतर्पणात् ॥ १७ ॥

श्लेष्मा तु पञ्चधेति । अवलम्बकक्लेदकबोधकतर्पकश्लेषकभेदेन श्लेष्मापि पञ्चप्रकारः । 'श्लिषु सङ्घाते' धातुः । तस्मिन् श्लेष्मा । श्लेषयत्यवयवान् श्लिष्यति स्वयं चावयवेषु इति श्लेष्मा ॥

तदेव पञ्चप्रकारत्वमाह—

उरःस्थ इत्यादि । तेषु मध्ये उरस्थः उरसि स्थितः स श्लेष्मा त्रिकस्य बाहुग्रीवांससंयोगस्य स्ववीर्यतः स्वप्रभावात् स्वशक्त्या यद् यस्मादवलम्बनं करोति स्वकर्मणि तस्य सामर्थ्यमुत्पादयति । गलांसफलकपृष्ठवंशसंयोगसाधनमस्थि त्रिकशब्दवाच्यमिति हृद्याकारः । पृष्ठवंशमिति वदन्ति केचित् । हृदयस्यान्नवीर्यादन्नवीर्येणाभ्यवहृतादन्नाद् रसरूपतापरिणतात् बलेनावलम्बनं करोति तस्याप्यायनं करोति सौम्यत्वात् । हाटकोऽपि हृदयस्याभ्यवहृतान्नरसस्वरूपपरिणामादवलम्बनं करोतीत्याह । अन्नवीर्यं रस इति हृद्याकारः । चशब्दात् स्ववीर्येण हृदयस्यावलम्बनं करोति किंत्वन्नवीर्यादतिशयेन यथावलम्बनं हृदयस्य करोति न तथा स्ववीर्याद् यतोऽन्नरसः पूर्वं हृदि स्थितिं कृत्वा ततो व्यानविक्षिप्तः सर्वं शरीरं याति । तस्माद् विशेषेण हृदयस्यादन्नवीर्यादवलम्बनं करोतीति युक्तम् । आगमोऽपि—

"हृदयं तु रसस्थानमोजसश्चिन्वितस्य च ।
मांसपेशी (चयो? चयं) (रक्तं? रक्त)पद्माकारमधोमुखम् ॥
योगिनो यत्र पश्यन्ति सम्यग् ज्योतिः समाहिताः ॥
रसो यः स्वच्छतां यातः स तत्रैवावतिष्ठते ॥
ततो व्यानेन विक्षिप्तः कृत्स्नं देहं प्रपद्यते ।"

इति। हृदयस्यावलम्बनेन बलमपेक्ष्यते। स्वल्पयाप्यन्नहान्या हृदयावलम्बनं कर्तुं न शक्नोतीत्यर्थः। तत्स्थ एवोरःस्थित एवैष श्लेष्मा अम्बुकर्मणा तर्पण-पूरणक्लेदनश्लेषणादिलक्षणेन जलव्यापारेण शेषाणां परिशिष्टानां कफधाम्नां कफस्थानानां शिरःप्रभृतीनामवलम्बनं स्थितिं करोति स्वकर्मणि सामर्थ्यं करोति। अतोऽस्माद्धेतोरयं श्लेष्मा अवलम्बक इत्युच्यते। अम्बुकर्मणा अम्बुदानकर्मणेति केचित्॥

यः पुनः श्लेष्मा आमाशये स्थितः स क्लेदक इत्युच्यते। कुतः, अन्न-सङ्घातस्य क्लेदनात् कारणात्॥

रसनास्थायी जिह्वास्थो बोधक इत्युच्यते। रसबोधनात् कारणात्॥

शिरःसंस्थोऽक्षाणामिन्द्रियाणां तर्पणाद्धेतोः तर्पक इत्युच्यते। अक्षि-तर्पणादिति वा पाठः।

**तर्पकः, सन्धिसंश्लेषाच्छ्लेषकः सन्धिषु स्थितः।**
**इति प्रायेण दोषाणां स्थानान्यविकृतात्मनाम्॥ १८॥**
**व्यापिनामपि जानीयात् कर्माणि च पृथक् पृथक्।**
**उष्णेन युक्ता रूक्षाद्या वायोः कुर्वन्ति सञ्चयम्॥ १९॥**
**शीतेन कोपमुष्णेन शमं स्निग्धादयो गुणाः।**

सन्धिषु अस्थिसन्धिषु स्थितः सन्धिसंश्लेषाद् द्वयोरस्थ्नोः सन्धिश्लेष-णात् कारणात् श्लेषकसंज्ञः। सन्धिरस्थिसन्धिः।

एवं दोषाणां स्थानान्यभिधायोपसंहरन्नाह—इतीत्यादि। प्रायेण बाहु-ल्येन दोषाणामविकृतात्मनामप्रच्युतस्वभावानाम् इति उक्तप्रकाराणि स्थाना-नि व्यापिनामपि सकलशरीरचराणामपि जानीयाद् वैद्य इति शेषः। अविकृता वातादयो व्यापिनोऽप्येषु स्थानेषु सातिशयाः। तथा कर्माणि च पृथक् प्रत्येकं कृत्वा जानीयात्। विकृतिरेषां वृद्धिः क्षयश्च। हृद्याकारस्तु—इति स्थानान्यु-क्तानि। प्रायेणेति। विकृतानां न स्थाननियमः स्वनिदानानुरूपं गच्छन्तीति। विकृतिः कोपः। क्षयवृद्धिभ्यां कर्माणि प्रागुक्तानि कानिचिद् वक्ष्यन्ते। इदानीं चयकोपौ वक्ति उष्णेनेत्यादि हाटकस्त्वाह— तेषां वातादीनां रोग-विशेषकर्तृत्वे यो वृद्धिहेतुः स यथायथं ज्वरनिदानादिषु वक्ष्यते। सामा-न्यतो रोगविशेषानपेक्षया यद्वृद्धिलक्षणं तत्पूर्वाध्याये दोषादिविज्ञानीये उक्तम्। सा च वृद्धिर्द्वेधा चयकोपभेदेन। तौ चयकोपौ वक्ष्यमाणलक्षणौ। पूर्वाध्याये

यद्यपि वातादीनां वृद्धिकारणमुक्तं तत्राप्यस्मिन्नध्याये तस्या एव वृद्धेरवस्था-विशेषेण कारणप्रदर्शनार्थमाह—उष्णेनेत्यादि । "विकृतिरेषां वृद्धिः क्षय । दोषादिविज्ञानीये सामान्येन लक्षणमुक्तम्। संप्रति चयप्रकोपस्वरूपं वृद्धिनि-दानं संक्षेपेण सूत्रयन्नाह— उष्णेनेत्यादि (इत्यरुणदत्तः)। रूक्षादयः प्रथमा-ध्यायनिर्दिष्टाः षड् वातगुणा उष्णेन गुणेन विरुद्धेन युक्ता वायोश्चयं कुर्वन्ति न कोपम् उष्णस्य विरुद्धत्वात्। रूक्षादयः षड्वातगुणा वायोश्चयं कुर्वन्ती-त्यरुणदत्तः । त एव रूक्षादयः सदृशेन शीतेन युक्ताः कोपं कुर्वन्ति । उष्णाभावे शीतगुणसंनियोगे च सति सदृशत्वाद् वायोः कोपं कुर्वन्ति । एतेषामेव च रूक्षादीनां षण्णां विपरीता ये स्निग्धादयस्ते उष्णगुणेन युक्ता वायो शमं कुर्वन्ति विपरीतत्वात्। अनयैव दिशा पित्तश्लेष्मणोः स्वगुणान्वयेन व्याख्येयम् । अरुणदत्तेन न तु स्पष्टं व्याख्यायते ॥

**शीतेन युक्तास्तीक्ष्णाद्याश्चयं पित्तस्य कुर्वते ॥ २० ॥**

**उष्णेन कोपं मन्दाद्याः शमं शीतोपसंहिताः ।**

शीतेन गुणेन युक्तास्तीक्ष्णादयो गुणाः पित्तस्य चयं कुर्वन्ति । त एव तीक्ष्णादयो गुणाः उष्णेन सहिताः कोपं कुर्वन्ति । मन्दादयो गुणाः शीतेन युक्ताः शमं कुर्वन्ति ।

**शीतेन युक्ताः स्निग्धाद्याः कुर्वते श्लेष्मणश्चयम् ॥ २१ ॥**

**उष्णेन कोपं तेनैव गुणा रूक्षादयः शमम् ।**

शीतगुणोपसंहिताः स्निग्धादयः कफस्य चयं कुर्वन्ति। उष्णेन युक्तास्त एव स्निग्धाद्याः कफस्य कोपं कुर्वन्ति । तेनैवोष्णेन युक्ता रूक्षादयः शमं कुर्वन्ति । श्लेष्मणस्त्वयं विशेषः—यच्छीतेन सदृशेनापि स्निग्धादिगुणयुक्तेन श्लेष्मणस्स्यानत्वाच्चय एव भवति । विपरीतेनाप्युष्णेन विलयनात् कोपः । रूक्षादियुक्तेनोष्णेन शमश्चेति । हृद्याकारोऽप्याह—उष्णेन युक्ता रूक्षाद्या रूक्षलघुखरसूक्ष्मचला गुणा वायोः सञ्चयमापादयन्ति । शीतेन युक्ता रूक्षाद्या-स्तस्य कोपमुष्णेन सहिताः स्निग्धादयः शमं कुर्वन्ति । शीतगुणयुक्तास्ती-क्ष्णोष्णलघुद्रवसराः पित्तस्य चयं कुर्वन्ति । उष्णेन युक्तास्तीक्ष्णादयः कोपं शीतसहिता मन्दगुर्वादयः तस्य शमं कुर्वन्ति । शीतेन युक्ताः स्निग्धशीतगुर्वा-

दयः कफस्य सञ्चयं कुर्वन्ति । उष्णयुक्ताः स्निग्धाद्याः कोपं, तेनैवोष्णेनैव युक्ता रूक्षाद्याः शमं कुर्वते ।

"रूक्षादीना समानानां सद्भावेऽपि न कुप्यति ।
मरुद् विरुद्धस्योष्णस्य प्रबलस्य बलोदयात् ॥
शीतोपसंहिता रूक्षलघ्वाद्यास्तस्य कोपनाः ।
उष्णयुक्तास्तु गुर्वाद्या विरुद्धास्तस्य नाशनाः ॥
तथैव पित्तकफयोः सर्वसाम्ये विवर्धनम् ।
समासमत्वे चयनं सर्वासाम्ये च संक्षयः ॥"

इति ।

**चयो वृद्धिः स्वधाम्न्येव प्रद्वेषो वृद्धिहेतुषु ॥ २२ ॥**
**विपरीतगुणेच्छा च, कोपस्तून्मार्गगामिता ।**
**लिङ्गानां दर्शनं स्वेषामस्वास्थ्यं रोगसम्भवः ॥ २३ ॥**

इदानीं चयादीनां त्रयाणां लक्षणमुच्यते—चय इत्यादि । स्वधाम्नि यथास्वमात्मीये स्थाने दोषस्य या वृद्धिः स चय उच्यते । स्वधाम्न्येवेति कोपव्यवच्छेदः । चितस्य दोषस्य लक्षणमाह—प्रद्वेषो वृद्धिहेतुषु । चीयमान-दोषवृद्धिहेतुषु यदा हि वातश्चितो भवति तदा रूक्षादिषु तद्गुणसमानेषु प्रद्वेषो जायते । तद्विपरीतगुणेषु स्निग्धादिषु चेच्छा अभिलाषो भवति । एवं पित्तकफयोश्चितयोर्व्याख्येयम् । ननु प्रद्वेषो वृद्धिहेतुष्वित्येकमेव लक्षणं दोष-चयसत्तानुमापकं कर्तुं न्याय्यम् । यदि वा विपरीतगुणेच्छा चेत्येतत् । किं द्वयोरुपादानेन । अत्रोच्यते— कदाचिदचितोऽपि दोषो वाताख्यः स्वप्रमाणस्थः क्षीणो वा यस्य स वातवृद्धिहेतून् रूक्षादीन् न द्वेष्टि अपितु तानिच्छति सात्म्यवशाद् । यथा गर्भिणीस्त्रीदौहृदवशात् । तदेवं व्यभिचारदर्शनात् प्रद्वेषो वृद्धिहेतुषु विपरीतगुणेच्छा चेति द्वयमपि कर्तव्यम् । तेन यदा तुल्यकालं पुरुषस्य वातसमानगुणेषु तद्वृद्धिहेतुषु प्रद्वेषो जायते वातगुणप्रतिपक्षेषु तत्क्ष-पणहेतुषु चाभिलाषः तदा सम्यङ् निश्चीयते वातोऽस्य चीयत इति द्वयमप्येत-दुक्तम् । चशब्देन द्वयोः सहितयोरेव स्पष्टलिङ्गत्वमिति दर्शयति । हारीतो-ऽपि — वातवृद्धिमन्तरेणापि सात्म्यवशात् कदाचिद्रूक्षादीनिच्छन्ति यथा गर्भिणी दौहृदवशात् । तस्मात्तुल्यकालमेव प्रद्वेषो वृद्धिहेतुषु विपरीतगुणेच्छा चेति द्वयमुक्तमित्याह

**कोप इत्यादि** । वृद्धेरेवाधिक्यादुन्मार्गगामिता दोषस्य स्वमार्गमुल्लङ्घ्य मार्गान्तरप्राप्तिः कोप इत्युच्यते । मार्गशब्दः स्थानवाची । **स्वस्थानं त्यक्त्वा** दोषस्य स्थानान्तरगमनं कोपः । तुशब्देन तन्त्रान्तरादिष्टं प्रसरमपि कोपेऽन्तर्भावयति । कोपस्य लिङ्गमाह — **लिङ्गानामित्यादि** । लिङ्गानां **स्वेषां यथा-यथं** कुपितदोषस्यात्मीयानां दर्शनमुद्भवः । वातादीनां कुपितानां यानि लिङ्गानि दोषादिविज्ञानीयोक्तानि तानि अस्मिंश्च परस्ताद् वक्ष्यन्ते वातव्याधिनिदाने च । तेषां दर्शनमुपलब्धिर्वैद्येनातुरेण च यत् तत् कोपस्य लिङ्गम् । हाटकोऽपि—वैद्येनातुरेण च दोषादिविज्ञानीयोक्तानां वक्ष्यमाणानां च दर्शनमुपलब्धिः कोपस्य लिङ्गमित्याह । हृद्याकारोऽपि—लिङ्गानि रौक्ष्यादयस्तेषामुपलब्ध्या कोपो ज्ञायते इत्याह । तथा अस्वास्थ्यम् उत्पित्सुरोगच्छायासामान्येन देहमनोभिभूतत्वम् । तथा रोगस्य ज्वरादेः संभवो जन्म । 'ननु लिङ्गानां दर्शनं स्वेषाम्' अस्वास्थ्यं' 'रोगसंभव' इति त्रितयमुद्दिष्टम् एकेनैव दोषकोपावगमादेकमेवोपदेष्टुं युक्तम् । नैवम् । व्यभिचारदर्शनात् । तथाहि वक्ष्यति—

"रूक्षशीतगुरुस्वादुव्यायामचलनिग्रहैः ।
कफसंमूर्च्छितो वायुर्यदा पित्तं बहिः क्षिपेत् ॥"

इत्यारभ्य यावत् 'पित्ते शाखासमाश्रित' इति । तदेवमेष कामिलाख्यो रोगः पित्तलिङ्गदर्शनादपि न पित्तस्य कोपमनुमापयति । अत एव च पित्तप्रकोपकरं भृशाम्लतीक्ष्णकटुकादिकं चिकित्सितमत्र निर्दिष्टम् । **स्वेषामिति** । कामिलाभासे पित्तलिङ्गान्युपलभ्यन्ते न पित्तकोपस्तत्र । तथापि तत्रैरकवातशमनाम्लादिकमुपयुज्यते । तत्र परलिङ्गदर्शनं व्युदस्यते स्वेषामिति **अस्वास्थ्यमि-त्येतदपि** न दोषकोपस्य निश्चितं लिङ्गं, व्यभिचाराद् । गर्भिण्याः स्वास्थ्यादीषच्च्युतिः, दोषकोपादृतेऽस्वास्थ्यं गर्भवृद्ध्यास्या दृश्यते । तथा मानसे भयशोकादिनाऽस्वास्थ्यं दृश्यते । तथा आगन्तवोपि रोगा दोषकोपमन्तरेणैवोत्पद्यमाना दृश्यन्ते । तस्माद् रोगसंभवादपि दोषकोपोऽयमनिश्चितः । तदेवं लक्षणत्रितयेनैवानेन दोषकोपो निश्चेतुं शक्यते इति त्रितयमप्येतत् वक्तव्यम् । लिङ्गदर्शनास्वास्थ्यरोगसंभवानां समुच्चितानां कोपलिङ्गत्वमित्यर्थः

प्रशमलक्षणमाह—

**स्वस्थानस्थस्य समता विकारासम्भवः शमः ।**

स्वेत्यादि । स्वं स्थानं स्वस्य वा स्थानं यथोद्दिष्टं पक्वाशयादि तत्र स्थितस्य दोषस्य वातादेर्या समता स्वप्रमाणत्वं न्यूनाधिकभावराहित्यं स शम इत्युच्यते । तत्र लक्षणं — विकारासंभवः विकारस्य रोगस्य ज्वरादेरसंभवो-ऽनुत्पत्तिः ।

चयादीनां कालमाह—

**चयप्रकोपप्रशमा वायोर्ग्रीष्मादिषु त्रिषु ॥ २४ ॥**

**वर्षादिषु तु पित्तस्य श्लेष्मणः शिशिरादिषु ।**

चयेत्यादि । वातस्य ग्रीष्मादिषु त्रिषु ग्रीष्मवर्षाशरत्सु यथासंख्यं चयप्रकोपप्रशमा भवन्ति । ग्रीष्मे वायोश्चयो, वर्षासु प्रकोपः शरदि प्रशमः इत्येवमग्रेऽपि योज्यम् । वर्षादिष्विति । अत्रापि त्रिष्विति वर्तते । वर्षाशर-द्धेमन्तेषु त्रिषु पित्तस्य चयप्रकोपप्रशमा भवन्ति । शिशिरादिषु त्रिषु शिशिर-वसन्तग्रीष्मेषु श्लेष्मणश्चयप्रकोपप्रशमा भवन्ति ॥ २४ ॥

ननु मरुतो ग्रीष्मे चयो न युक्तः यतस्तस्मिन् काले लघुरूक्षा ओष-धयो भवन्ति । तथा वर्षासु पित्तस्य चयो न युक्तो जलानामोषधीनां चाम्ल-पाकत्वात् । तथा श्लेष्मणः शिशिरे चयो न युक्तः । तदा ह्यापओषधयश्च स्निग्धा भवन्ति । कालश्च शीत इति कोप एवोपपन्नः इत्यस्मिन् पर्यनुयोगे इदमाह— इद्याकारस्तु — तत्र काले चयादिजन्मन्युपपत्तिमाहेति । ग्रीष्मे वातवृद्धिकारणबहुत्वाच्छीतरहितत्वेनापरिपूर्णत्वाच्च वातस्य चय एव भवति । वर्षासु तु शीतपूरणादौष्ण्याभावाद् वायुः कुप्यत्येव । शरदि तु वैपरीत्यात् कालस्य प्रशाम्यति । एवं पित्तकफयोरपि । चीयत इत्यादिना ग्रीष्मवर्षा-शिशिरेषु वातादयश्चयमेव यान्ति न कुप्यन्तीत्यत्र तन्त्रकारः स्वयमेव हेतुं वक्तीति इन्दुः ।

**चीयते लघुरूक्षाभिरोषधीभिः समीरणः ॥ २५ ॥**
**तद्विधस्तद्विधे देहे कालस्यौष्ण्यान्न कुप्यति ।**
**अद्भिरम्लविपाकाभिरोषधीभिश्च तादृशम् ॥ २६ ॥**
**पित्तं याति चयं कोपं न तु कालस्य शैत्यतः ।**
**चीयते स्निग्धशीताभिरुदकौषधिभिः कफः ॥ २७ ॥**
**तुल्येऽपि काले देहे च स्कन्नत्वान्न प्रकुप्यति ।**

चीयत इत्यादि । ग्रीष्मे काले लघुरूक्षाभिरोषधीभिः कालस्वभावाद् रूक्षत्वाच्चौषधीनां समीरणो वायुः स्वरूपेण तद्विध ओषधीसदृशो लघुः रूक्षः आदानकालस्वाभाव्याच्च तद्विधे लघुरूक्षे देहे चीयत एव न तु कुप्यति । सर्वसमानगुणत्वात् कोपो वा तस्य प्राप्तः स निषिध्यते—कालस्यौष्ण्यादि-त्यनेन उष्णस्य प्रधानगुणस्य विरुद्धस्य सद्भावान्न कोप इत्यर्थः । एवं वर्षासु कालस्वभावादम्लविपाकाभिरद्भिरोषधीभिश्च तादृशमम्लं पित्तं चयमेव याति । न तु कोपं याति कालस्य शैत्यात् । शैत्यस्य प्रधानगुणस्य विरुद्धस्य सद्भावान्न कोप इत्यर्थः । शिशिरे स्निग्धशीतेनोदकेन ओषधीभिश्च कालेऽपि कफेन सदृशे विसर्गत्वाद् देहेऽपि स्निग्धशीते कफः शीतत्वेन स्कन्नत्वात् स्त्यानत्वान्न कुप्यति, चयमेव याति । श्लेष्मणः शिशिरे सर्वसामान्यात् कोप एव प्राप्तः सः स्कन्नत्वादित्यनेन निषिध्यते ॥ २५—२७ ॥

**इति कालस्वभावोऽयमाहारादिवशात्पुनः ॥ २८ ॥**
**चयादीन् यान्ति सद्योऽपि दोषाः कालेऽपि वा न तु ।**

इति पूर्वोक्तः अयम् आहारादिनिरपेक्षः कालस्वभावः वाय्वादेश्चयादि-कालस्य स्वभावः शक्तिः । हाटकस्तु— इति य एवं वाय्वादिचयः स काल-स्वभावेनेत्याह । अकृतप्रतिक्रियस्य कालस्य चयादिकरत्वं, न प्रतिषिद्धगुण-स्येत्यर्थः ॥

तदाह — आहारादिवशादन्नपानादिसामर्थ्यात् पुनर्दोषा वाताद्यः सद्योऽपि तत्क्षणादेव कालमनपेक्ष्यैव चयं वा प्रकोपं वा प्रशमं वा यान्ति । तस्मादेव चाहारादिवशाद् यथास्वमुक्ते चयादिकालेऽपि च दोषा न तु चयादीन् यान्ति । तस्मात् कालादाहारादीनां प्राधान्यमस्ति, अधिकं बलवत्त्वादित्यर्थः । आहारादीत्यत्र आदिशब्देन रसायनवाजीकरणवमनविरेचनादयो विहाराश्च गृह्यन्ते । वशः सामर्थ्यम् । वर्षास्वपि वातविपरीताहारसेवनेन वायुर्न कुप्यति । शीतादिसेवनात् तु ग्रीष्मे कुप्यति एवं सर्वत्रोह्यम् ।

यथास्वमेवं दोषाणां चयादीन् प्रदर्श्य व्याप्तिनिवृत्तिवैचित्र्यं प्रकोपजं दर्शयति —

**व्याप्नोति सहसा देहमापादतलमस्तकम् ॥ २९ ॥**
**निवर्तते तु कुपितो मलोऽल्पाल्पं जलौघवत् ।**

व्याप्नोतीत्यादि । "दोषप्रकोपप्रशमयोः प्रकारभेदमाहे"ति हृदया-कारः । अयं च सञ्चितो मलो वातादिः कुपितः सन् देहमापादतलमस्तकं

पादतलादारभ्य यावन्मस्तकं सहसा शीघ्रं व्याप्नोति । कोपापु यदा निवर्तते तदा पुनरल्पाल्पं स्तोकं स्तोकम् ।

अत्र दृष्टान्तमाह —

जलौघवदिति । यथा गिरिनद्यादीनां जलपूरः समं विषमं च देशं सहसैव व्याप्नोति, कारणान्तरेण च क्षीयमाणः क्रमेण स्तोकं स्तोकं निवर्तते । द्रागेव सर्वदेशप्राप्तिर्नदीपूरस्य निम्नप्रदेशादीषदीषन्निवृत्तिः तद्वत् कुपितोऽपि दोषः शीघ्रं सर्वत्र व्या(पय्य ? प्य) वर्तते, शनैः शनैर्निवर्तते । तदुक्तम् — रोगनाशाय शनैर्यत्नः कर्तव्यः न सहसा तन्नाशाय प्रयोगं कुर्यादिति ॥ २९ ॥

प्रतिरोगं निदानलक्षणचिकित्सितमानन्त्याद्वक्तुमशक्यमिति सामान्येनाह — अथवा दोषस्य सहसा देहव्याप्तिः कथं ज्ञातुं शक्यते तत्रोपायमाहेति वा ।

**नानारूपैरसंख्येयैर्विकारैः कुपिता मलाः ॥ ३० ॥**
**तापयन्ति तनुं तस्माद्धेत्वाकृतिसाधनम् ।**
**शक्यं नैकैकशो वक्तुमतः सामान्यमुच्यते ॥ ३१ ॥**

नानारूपैरित्यादि । यत्तदोर्नित्याभिसम्बन्धत्वाद् यस्मादिति लभ्यते । यस्मात् कुपिता मला वातादयो नानारूपैरनेकप्रकारैरसङ्ख्येयैर्गणनामतीतै- र्विकारैर्ज्वरादिभिस्तनुं देहं तापयन्ति दुःखयन्ति विकारमुखेन तापं जनयन्ति स्वयं तपन्ति चेत्यर्थः, तस्मात् तेषां विकाराणां हेतुः कारणम् आकृतिर्लक्षणं साधनं चिकित्सितमेकैकशो वक्तुं न शक्यं प्रत्येकं वक्तुं न शक्यम्, आन- न्त्यात्, अयमस्य विकारस्य हेतुः, इयमाकृतिः, इदं साधनमिति विकारा- णामनेकरूपत्वादसङ्ख्येयत्वाच्च न पृथग् वक्ष्यन्ते निदानलक्षणचिकित्सि- तानि । अतः सामान्यं साधारणं हेत्वाकृतिसाधनमुच्यते ।

अत्रैव हेत्वन्तरमाह —

**दोषा एव हि सर्वेषां रोगाणामेककारणम् ।**

दोषा इत्यादि । हि यस्मात् सर्वेषां रोगाणां दोषा वातादय एवैक- कारणं प्रधानं कारणम् । एकशब्दः प्रधानवाची । यदि वा सर्वेषां रोगाणां दोषा एव तुल्यं कारणं समानं कारणमित्यर्थः । एवकारोऽवधारणार्थः, दोषा एव कारणं नापरं किञ्चिद् वस्तुजातमिति । नहि दोषेण बिना कश्चिद् रोगो दृश्यते ।

अत्र दृष्टान्तमाह —

यथा पक्षी परिपतन् सर्वतः सर्वमप्यहः ॥ ३२ ॥
छायामत्येति नात्मीयां यथा वा कृत्स्नमप्यदः ।
विकारजातं विविधं त्रीन् गुणान्नातिवर्तते ॥ ३३ ॥

तथा स्वधातुवैषम्यनिमित्तमपि सर्वदा ।
विकारजातं त्रीन् दोषान् तेषां कोपे तु कारणम् ॥ ३४ ॥
अर्थैरसात्म्यैः संयोगः कालः कर्म च दुष्कृतम् ।

यथेत्यादि । पक्षी माचिकादिः यथा सर्वमप्यहः सर्वमपि दिवसं सर्वतः समन्तात् सरिद्वनोदधिविमानादिषु परिपतन् परिभ्रमन्नपि आत्मीयां छायां नात्येति नातिक्रामति तया विना क्षणमप्यसौ नोपलभ्यते । अन्यदपि निदर्शनमाह—यथा वेत्यादि । कृत्स्नं निरवशेषमेतद् विकारजातं स्थावरजङ्गमभेदभिन्नं जरायुजाण्डजादिभेदभिन्नं वा विविधं नानाप्रकारं त्रीन् गुणान् सत्त्वरजस्तमःसंज्ञान् नातिवर्तते नात्येति । त्रिभिरेव तैर्विरहितं न जातुचिद् भवतीत्यर्थः यथा वेत्यादिना सर्वरोगाणां सर्वकालं दोषकारणत्वार्थो दृष्टान्तः । अथवा पक्षीति लौकिकबुद्ध्यनुकूलो दृष्टान्तः । अदो विकारजातमिति शास्त्रज्ञविषयः । जातशब्दः समूहवाची । अह इत्यत्यन्तसंयोगे द्वितीया । तथा स्वधातुवैषम्यनिमित्तमपि शरीरधारणात् धातव इति दोषधातुमला उच्यन्ते, तेषां वैषम्यं निमित्तं यस्य तद् विकारजातं रोगसमूहस्त्रीन् दोषान् नातिक्रामति त्रिदोषरहितं न सम्भवतीत्यर्थः । धातुवैषम्यं च प्रतिरोगमन्यानुषङ्गान्नानाविधम् । यत्तु येन धातुवैषम्येण जन्यते तत् तस्य स्वं स्वीयं भवति । येषां तु रोगाणां देवग्रहादिनिमित्तं न तेषु तथा दोषानुबन्धः, आगन्तुत्वाद् । आगन्तुनिजयोर्ह्ययमेव भेदः — आगन्तुकेषु प्रथमं रोगोद्भूतिः पश्चाद्दोषानुबन्ध इति । ये तु व्याचक्षते स्वे च ते धातवश्च तेषां वैषम्यमिति तेषां नायमर्थः प्रतिपादितः स्यात्, स्वग्रहणं चातिरिच्यते, यतः स्वशरीरान्तरावस्थायिनो वातादयः शरीरान्तरे रोगं जनयितुं नालम् । तस्मात् पूर्वमेव व्याख्यानं श्रेयः । नन्वेवं तर्हि त्रिदोषजत्वे कथं रूपव्यपदेशादिभेदः । ब्रूमः । यथा सत्त्वरजस्तमांसि संभूयारभन्ते, तथापि भूयसा गुणेन सात्त्विकराजसतामसादिव्यप-

देशः स्थावरजङ्गमात्मनामेवंत्रिदोषजत्वेऽपि वातिकादिव्यपदेशो रोगाणां स्यात्। अत्रागन्तूनां दोषजत्वाभावात् कथं विकारजातं त्रीन् दोषान् नातिवर्तते इत्युक्तम् । अत्र संचक्ष्महे । निजाश्चागन्तवश्च दोषनिमित्ताः । आगन्तुषु मध्ये केचन क्षतभङ्गादयो दोषनिरपेक्षा जायन्ते । भूतविषवाय्वग्निसम्भवा रागद्वेषभयाद्याश्च दोषनिमित्ताः । तस्मात् भूयस्त्वं परिगृह्योक्तम् । यथा घृतं सर्वं शीतं शुक्लं पित्तघ्नमित्युक्ते आविकस्याभावेऽपि गव्यमाहिषाजसर्पिषामेव पानानुवासनप्रयोगेणैवंरूपत्वं परिगृह्यते । किञ्च क्षतभङ्गादीनां च पश्चाद् दोषैर्दूषितान्तर्मुखेन कार्यकरत्वाददोषः ॥

तेषामित्यादि । तेषां दोषाणां वातादीनां कोपे कारणमसात्म्यैरनुचितैरर्थैः शब्दस्पर्शरूपरसगन्धाख्यैः श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानामिन्द्रियाणां यः संयोगः, तथा कालः शीतोष्णवर्षलक्षणो दुष्टः, तथा कर्म चैहिकमन्यजन्मकृतं च यद् दुष्कृतमशुभमेतत् त्रयं दोषाणां कोपे हेतुः । तुशब्दः समुच्चये । न केवलं रूक्षादयो वातादीनां कोपे कारणं यावदेतत् त्रयं चेति । एतच्च पूर्वोक्तं दोषकोपकारणमसात्म्येन्द्रियार्थसंयोगादिभेदेन त्रिधा भिन्नमपि पुनर्भूयस्त्रिधा त्रिप्रकारं भिद्यते । कथं, हीनयोगमिथ्यायोगातियोगभेदेन ॥

तानेव हीनमिथ्यातियोगान् दर्शयति --

**हीनातिमिथ्यायोगेन भिद्यते तत्पुनस्त्रिधा ॥ ३५ ॥**
**हीनोऽर्थेनेन्द्रियस्याल्पः संयोगः स्वेन नैव वा ।**
**अतियोगोऽतिसंसर्गः सूक्ष्मभासुरभैरवम् ॥ ३६ ॥**
**अत्यासन्नातिदूरस्थं विप्रियं विकृतादि च ।**
**यदक्ष्णा वीक्ष्यते रूपं मिथ्यायोगः स दारुणः ॥ ३७ ॥**
**एवमत्युच्चपूत्यादीनिन्द्रियार्थान् यथायथम् ।**
**विद्यात् ।**

हीन इत्यादि । अर्थेन शब्दादिना स्वेनात्मीयेनेन्द्रियस्य श्रोत्रादेरल्पः संयोगो हीनसंज्ञः । नैव वेति । अथवा सर्वस्मिन् सर्विकया तेनार्थेनासंयोगः सोऽपि हीनयोगः । तस्यैवेन्द्रियस्य स्वेनार्थेन योऽतिसंसर्गोऽतिसेवालक्षणः स तस्य स्वेनार्थेनातियोगः । सूक्ष्मादिकं यद्रूपमक्ष्णा वीक्ष्यते नयनेनावलोक्यते स तस्य चक्षुरिन्द्रियस्य स्वेनार्थेन मिथ्यायोगः । सूक्ष्मं सूक्ष्माकारम् । भासुरमतिदीप्तम् । भैरवं भीषणम् । अत्यासन्नमतिनिकटस्थम् । अतिदूरस्थमतिशयेन

दूरे स्थितम् । आदिग्रहणं सर्वत्र प्राकृताद् रूपादेर्विपरीतग्रहणार्थम् । एवमनया दिशा सूक्ष्मादिदर्शनं चक्षुषो मिथ्यायोग इत्येवंरूपया अन्यानपीन्द्रियार्थानत्युच्चपूत्यादीन् यथास्वमिन्द्रियाणां मिथ्यायोगान् विद्यात् । यदा अत्युच्चभाषणाद्यनिष्टः शब्दः श्रोत्रेन्द्रियेण गृह्यते तच्छ्रोत्रेन्द्रियस्य स्वेनार्थेन शब्दाख्येन मिथ्यायोगः । यदा पूतिद्विष्टाद्यनिष्टो गन्धो घ्राणेन्द्रियेण गृह्यते तदा घ्राणेन्द्रियस्य स्वेनार्थेन गन्धाख्येन मिथ्यायोगः । यदा स्नानानुलेपनादीनां शीतोष्णानां स्पृश्यानामक्रमसेवने (स्पर्शः) स्पर्शनेन्द्रियेण गृह्यते तदा स्पर्शनेन्द्रियस्य स्वेनार्थेन स्पर्शाख्येन मिथ्यायोगः । एवं रसनेन्द्रियस्यापि स्वेनार्थेन रसाख्येन मिथ्यायोगो व्याख्येयः । तथाचागमः —

"अत्युग्रशब्दश्रवणाच्छ्रवणात् सर्वशो न च ।
शब्दानां चातिहीनानां भवन्ति श्रवणा जडाः ॥
परुषोद्भीषणाशस्ताप्रियव्यसनसूचकैः ।
शब्दैः श्रवणसंयोगो मिथ्यासंयोग उच्यते ॥
असंस्पर्शोऽतिसंस्पर्शो हीनसंस्पर्श एव च ।
स्पृश्यानां सङ्ग्रहेणोक्तः स्पर्शनेन्द्रियबाधकः ॥
यो भूतविषवातानामकालेनागतश्च यः ।
स्नेहशीतोष्णसंस्पर्शो मिथ्यासंयोग उच्यते ॥"

स्नेहसंस्पर्शः सामस्य श्लेष्मण्युल्बणे सर्पिरादीनां संस्पर्शः । शीतसंस्पर्शो हेमन्ते शीताम्बुना । उष्णस्पर्शो निदाघे उष्णाम्बुना ।

"रूपाणां भ्रश्यते दृष्टिर्भास्वतामतिदर्शनात् ।
दर्शनाच्चातिसूक्ष्माणां सर्वशश्चाप्यदर्शनात् ॥
विशिष्टैरेव बीभत्सदूरातिक्लिष्टदर्शनात् ।
तामसानां च रूपाणां मिथ्यासंयोग उच्यते ॥
अत्यादानमनादानमोकसात्म्यादिभिश्च यत् ।
रसानां विषमादानं तत् सर्वं दोषदूषकम् ॥"

ओकसात्म्यमाजन्मसात्म्यम् । ऋतुसात्म्यदेशसात्म्यव्याधिसात्म्यैश्चतुर्भि-(रवि ? र्वि)षमं यद् रसानामादानम् ।

"अतिमृद्वतितीक्ष्णानां गन्धानामुपसेवनम् ।
असेवनं सर्वशश्च घ्राणेन्द्रियविनाशनम् ॥

पूतिभूतविषद्विष्टगन्धा ये चाप्यनार्तवाः ।
तैर्गन्धैर्घ्राणसंयोगो मिथ्यासंयोग उच्यते ॥

इत्यसात्म्यार्थसंयोगस्त्रिविधो दोषकोपनः ।
असात्म्यमिति तद् विद्याद् यन्न याति सहात्मताम् ॥

मिथ्यातिहीनसंयोगैर्यो व्याधिरुपजायते ।
शब्दादीनां स विज्ञेयो व्याधिरैन्द्रियको बुधैः ॥"

इति ।

**कालस्तु शीतोष्णवर्षभेदात्त्रिधा मतः ॥ ३८ ॥**

**स हीनो हीनशीतादिरतियोगोऽतिलक्षणः ।**
**मिथ्यायोगस्तु निर्दिष्टो विपरीतस्वलक्षणः ॥ ३९ ॥**

पूर्वं द्विमासं कृत्वा षड्विधस्य कालस्य चातुर्मासिकत्वानुरोधेन त्रैविध्यमुच्यते—कालस्त्वित्यादि । कालः शीतोष्णवर्षभेदेन त्रिधा त्रिप्रकारो मतो मुनीनाम् । तत्र हेमन्तशिशिरलक्षणः शीतः । उष्णो वसन्तग्रीष्मलक्षणः । प्रावृट्शरल्लक्षणो वर्षाख्यः । स कालो हीनशीतादिर्हीनो हीनयोगः । अतिमात्रलक्षणः कालोऽतियोगः । विपरीतं स्वं शीतोष्णवर्षाख्यं लक्षणं यस्य कालस्य स विपरीतलक्षणो मिथ्यायोगः । गुणगुणिनोरभेदोपचारात् काल एवमु[illegible]। तत्र यथा हेमन्ते शीतस्याल्पत्वं हीनयोगः । अतिशीतगुणयोगोऽतियोगः । अन्यर्तुगुणयोगो मिथ्यायोगः । उपलक्षणं चेदं शरद्वसन्तयोरपि । यन्मन्दवर्षोष्णत्वं स्वलक्षणं तच्च तदा हीनतरं स्यात् । सोऽपि हीनयोगः । एवमतियोगायोगयोरपि योज्यम् । एवं सर्वत्र योज्यम् । एवं कालस्त्रिधा निरूपितः ॥

**कायवाक्चित्तभेदेन कर्माऽपि विभजेत्त्रिधा ।**
**कायादिकर्मणां हीना प्रवृत्तिर्हीनसंज्ञकः ॥ ४० ॥**
**अतियोगोतिवृत्तिस्तु वेगोदीरणधारणम् ।**
**विषमाङ्गक्रियारम्भपतनस्खलनादिकम् ॥ ४१ ॥**
**भाषणं सामिभुक्तस्य रागद्वेषभयादि च ।**
**कर्म प्राणातिपातादि दशधा यच्च निन्दितम् ॥ ४२ ॥**
**मिथ्यायोगः समस्तोसाविह चामुत्र वा कृतम् ।**

तथा कर्मापि कायवाक्चित्तभेदेन त्रिप्रकारं विभजेत् । तत्र कायकर्मणो धावनादेस्तथा वाक्कर्मणो भाषणादेस्तथा चित्तकर्मणश्चिन्तनादेर्हीना या प्रवृत्तिः स हीनसंज्ञको योगः । अतिप्रवृत्तिस्त्वतियोगः । कायादिकर्मणो मिथ्यायोगमधिकृत्याह—वेगेत्यादि । "वेगोदीरणधारणम्" इत्यारभ्य यावत् पतनस्खलनादिकं यदेतत् कायिकं कर्म कायकर्मणो मिथ्यायोगः । वेगोदीरणं वातमूत्रपुरीषादीनां वेगानामनुत्थितानां बलात् क्षेपणम् । धारणमुत्थितानाम् । विषमशब्दस्याङ्गक्रियादिषु प्रत्येकं सम्बन्धः । विषमाङ्गैः क्रिया कर्म । विषम आरम्भ उभयलोकविरुद्धः । विषमपतनं विषमस्खलनम् । आदिशब्देन विषमगमनादीनां ग्रहणम् । सामिभुक्तस्यार्धभुक्तस्यार्धकबलस्य यद्भाषणं जल्पनं एतद् वाक्कर्मणो मिथ्यायोगः । सामीत्यर्धशब्दपर्यायः । असाकल्यवाचीति हृद्याकारः । अल्पं मया भुक्तमिति हाटकः । सामिभक्तस्येति वा पाठः । रागद्वेषभयादि यन्मानसं कर्म तच्चित्तकर्मणो मिथ्यायोगः । तथा प्राणातिपातादि दिनचर्याध्याये 'हिंसास्तेयान्यथाकाम' इत्यादिनोक्तं दशधा दशप्रकारं निन्दितमशुभं कर्म । तच्च यथायथं कायवाक्चित्तकर्मणो मिथ्यायोगः । प्राणातिपातो हिंसा । इह वामुत्र वा कृतम् अस्मिन् लोके कृतमन्यत्र वा लोके कृतमाचरितं प्राणातिपातादि । समस्तोऽसौ सर्व एवायं मिथ्यायोगः । हिंसादयः कायादीनां त्रयाणामपि मिथ्यायोगो वा । यथाह न्यायभाष्ये — दोषप्रयुक्तः शरीरे (न ? ण) वर्तमानो हिंसास्तेयप्रतिषिद्धमैथुनान्याचरति, वाचानृतसूचकपैशुन्यासम्बन्धानि, मनसा परद्रोहपरद्रव्याभीप्सानास्तिक्यं चेति । सेयं दशविधा प्रवृत्तिरधर्माये"ति ॥ ४०-४२ ॥

**निदानमेतद्दोषाणां कुपितास्तेन नैकधा ॥ ४३ ॥**

**कुर्वन्ति विविधान् व्याधीन् शाखाकोष्ठास्थिसन्धिषु ।**

निदानमेतद्दोषाणां कोप इति वाक्यशेषः । तेन निदानेन कुपिता नैकधा, किं तर्हि, यथानिदानमनेकप्रकारं कुपिताः । यथा वातस्य रूक्षद्रव्योपयोगाद् रौक्ष्यगुणवृध्या कोपोऽन्यादृशः । शीतजलादिस्पर्शेन शीतवृद्ध्या कोपोऽन्यादृशः । इत्यादि । विविधान् नानाप्रकारान् व्याधीन् कुर्वन्ति । कुपिता दोषा इति विभक्तिविपरिणामेन सम्बन्धः । कुत्र व्याधीन् कुर्वन्ति, शाखादिषु । शाखाश्च कोष्ठाश्चास्थीनि च सन्धयश्च तेषु । अस्थिसन्धय इति शिरोहृदयवस्त्यादीनां संज्ञेत्यस्मद्गुरवः ॥ ४४ ॥

शाखादीन् व्याचष्टे—

**शाखारक्तादयस्त्वक् च बाह्यरोगायनं हि तत् ॥ ४४ ॥**
**तदाश्रया मशव्यङ्गगण्डालज्यर्बुदादयः ।**
**बहिर्भागाश्च दुर्नामगुल्मशोफादयो गदाः ॥ ४५ ॥**

रक्तादयः षड् धातवः शाखासंज्ञाः । त्वक् च शाखा । त्वच उपधातुत्वात् पृथगुक्तिः । न रसधातुः शाखा तच्च बाह्यरोगायनं बाह्यानां रोगाणामयनं स्थानम् । हिशब्दो यस्मादर्थे । रक्तादयस्त्वक् च यस्माद् बाह्यानां रोगाणां स्थानं, तस्मात् तदाश्रयाः शाखाश्रयाः मशव्यङ्गादयो रोगा बहिर्भागा उच्यन्ते । आदिशब्देन विसर्पकुष्ठादयो गृह्यन्ते । चशब्दो भिन्नक्रमः उपरि योज्यः शोफादय इत्यस्मादनन्तरं द्रष्टः । दुर्नामादयश्च बहिर्भागास्तदाश्रया इति । तेऽपि शाखाश्रया इत्यर्थः । दुर्नामगुल्मशोफादिष्वन्तर्भागबहिर्भागादिभेदः शास्त्रे स्वेष्वध्यायेषु प्रोक्तः । मशः क्षुद्ररोगः ।

**अन्तःकोष्ठो महास्रोत आमपक्वाशयाश्रयः ।**
**तत्स्थानाश्छर्द्यतीसारकासश्वासोदरज्वराः ॥ ४६ ॥**
**अन्तर्भागं च शोफार्शोगुल्मवीसर्पविद्रधि ।**

अन्तरित्यादि कोष्ठः कथ्यते । एतेऽन्तरादयः पर्यायाः अन्तःशरीरस्य, तथा कोष्ठः, तथा महास्रोतः । महच्च तत् स्रोतश्च तथा आमपक्वाशयाश्रयः आमाशयस्य पक्वाशयस्याश्रयः आधारः । तत्स्थानाः छर्द्यादयः तत्स्थाना अन्तर्भागाश्रयाः कोष्ठाश्रया इत्यर्थः । न केवलमेत एव छर्द्यादयः अन्येऽपि तत्स्थानाः सन्ति (इति ?) शोफार्शोगुल्मवीसर्पविद्रध्यन्तर्भागाश्चान्तर्भागाश्रया इत्युक्तत्वात् । कोष्ठ(मा ? आ)न्तरो रोगमार्ग इत्युक्तं भवति । वचनं हि—

"आभ्यन्तरो महास्रोतः मध्यंमहानिम्नमामपक्वाशयाश्रयः ।
कोष्ठोऽन्तरिति पर्यायाः ॥"

इति,

"शाखा रोगबहिर्मार्गः कोष्ठोऽन्तरयनं रुजाम् ॥"

इति च । शोफादीनां विद्रध्यन्तानां समाहारे द्वन्द्वः । तस्मादेकवद्भावः । अन्तर्भागं चेति समीचीनः पाठः ॥ ४६ ॥

इदानीं मध्यमरोगमार्गं वक्ति—

**शिरोहृदयवस्त्यादिमर्माण्यस्थ्नां च सन्धयः ॥ ४७ ॥**

**तन्निबद्धाः शिरास्नायुकण्डराद्याश्च मध्यमः ।**

**रोगमार्गः स्थितास्तत्र यक्ष्मपक्षवधार्दिताः ॥ ४८ ॥**

**मूर्धादिरोगाः सन्ध्यस्थित्रिकशूलग्रहादयः ।**

शिरोहृदयादीनि मर्माणि । जीवितस्य स्थानं मर्म । **अयं मध्यमो** रोगमार्गः । अस्थ्नां तु सन्धय इति । अस्थ्नामेव सम्बन्धिनः सन्धयः । अस्थिसन्धयोऽपि मध्यमो रोगमार्गः । तुशब्दोऽवधारणे समुच्चये वा । सन्धयो ह्यन्ये सन्ति मांसस्नायुसिरादीनाम् । वक्ष्यति हि—

"मांसास्थिस्नायुधमनीसिरासन्धिसमागमः ।"

इति । अन्यसन्धिव्यवच्छेदार्थमस्थ्नामित्युपादानम् । न मांसस्नायुसिरादिसन्धीनां मध्यमरोगमार्गत्वम् । तन्निबद्धा अस्थिसंलग्नाः सिराः स्नायवः सिराविशेषाः कण्डरा अतिसूक्ष्माः? सिराः । आदिशब्देन धमनीकूर्चादिपरिग्रहः । चशब्दात् पूर्वोक्ताश्च । हृद्याकारस्तु — तन्निबद्धा मर्मास्थिसन्धिसम्बद्धा इत्याह । पण्डितस्त्वाह—शिरोहृदयवस्त्यादिमर्माण्यस्थिसन्धय इति नाम्नोच्यन्ते । तन्निबद्धाः शिरोहृदयवस्त्यादिसंश्रिताः सिरास्नाय्वादयश्चास्थिसन्धय इत्युच्यन्ते । अस्थिसन्धय इति संज्ञा । स मध्यमो रोगमार्ग इति । तत्र मध्यमे रोगमार्गे यक्ष्मादयो गदाः त्रिकशूलग्रहाद्यन्ताः स्थिताः । यक्ष्मादयो मध्यममार्गाश्रयाः । **मूर्धादीति** । आदिशब्देन हृदयवस्त्यादिपरिग्रहः । शिरोहृदयवस्त्यादिरोगाश्च मध्यममार्गाश्रयाः । सन्ध्यादिषु शूलं ग्रहश्च । आदिशब्देन पक्षवधादयो विकारा गृह्यन्ते । यक्ष्मणो सर्वास्थिसन्ध्यधीनत्वान्निर्देशः । वक्ष्यति हि—

"तैरुदीर्णोऽनिलः पित्तं कफं चोदीर्य सर्वतः ।
शरीरसन्धीनाविश्य तान् सिराश्च प्रपीडयन् ॥"

इत्यादि ॥ ४७, ४८ ॥

दोषाणां नामधामादिकमुक्त्वेदानीं कुपितस्वरूपलक्षणकर्माण्याह—

**स्रंसव्यासव्यधस्वापसादरुक्तोदभेदनम् ॥ ४९ ॥**

सङ्गाङ्गभङ्गसङ्कोचवर्तहर्षणतर्पणम् ।
कम्पपारुष्यसौषिर्यशोषस्पन्दनवेष्टनम् ॥ ५० ॥
स्तम्भःकषायरसता वर्णः श्यावोऽरुणोपि वा ।
कर्माणि वायोः

स्रंसेत्यादि । स्रंसो हन्वादिसन्धिभ्रंशः । अथवा स्रंसः सन्ध्यादेः स्वस्थानच्युतिः । (കലങ്ങുനോക) इति पाठ्ये । व्यासः विक्षेपणमङ्गप्रत्यङ्गादीनां, यथाऽक्षेपकादिषु । अवयवानां पृथक्करणं व्यास इति च । (എട്ടുനോക) इति च । व्यधस्ताडनमिव यष्टिमुद्गरादिभिः (അടിക്കിനോക) इति । स्वापः सुप्तिः, कर्मण्यचैतन्यम् । स्वापः स्पर्शाज्ञानमिति च । (സ്വാപം തിമിത്തരക്കി) इति च । सदनं सादोऽङ्गानां क्रियास्ववसामर्थ्यं, (തളർച്ച) इति च । रुक्सततं शूलं, रुगविच्छिन्नं शूलमिति च (നോവ്) । तोदो विच्छिन्नं शूलं सूचीप्रवेशवत् । (കുത്തിനോക) । भेदनं भेदो विदारणमिव गात्रस्य, भिद्यमानप्रतिभास इत्यर्थः । सङ्गो मूत्रपुरीषादेः स्वाशयेभ्योऽनिस्सारः । वाक्सङ्गादयश्च । उक्तं च—

"विण्मूत्रस्वेदमरुतामुक्तिःश्वासगिरामपि ।
अप्रवृत्तिस्तु सङ्गः स्यात् वायोः कर्म चलात्मकम् ॥"

इति — ॥ (സംഗം = തട്ടിയപോലെ ഇരിക്ക) । अथवा सङ्गोऽनेकत्र स्थितानामेकत्र संहननम् । अङ्गानां जङ्घोरुप्रभृतीनां (भङ्ग इव भङ्गः चूर्णनमिवाङ्गभङ्गः (കാൽകൈകെതെരിഞ്ഞുനോക) सङ्कोचः सङ्कोचनं सिरादीनाम् । (കുഴിനോക) । वर्तनं वर्तो वर्तुलता पुरीषादीनां पिण्डीकरणम् । अथवा (വർത്തം=തിരിഞ്ഞുനോക) । हर्षणं रोम्णां हृषितत्वमूर्ध्वीभावः । (ഹർഷണം=കിരുകിരുക്ക) । हर्षणं रोम्णां त्रुटनमिति वा । तर्षणं तर्षस्तृष्णा । अथवा (തർഷണം=തരിക്ക) कम्पोऽतिचलनम् । स्पन्दनं हि किञ्चिच्चलनम् । पारुष्यं परुषता स्पर्शस्य । तद् रौक्ष्यनिमित्तम् । सौषिर्यं सुषिरत्वमस्थ्नाम् । स्वस्थाने स्थितस्य वायोर्मज्ज्ञः शोषकत्वात् सौषिर्यम् । (സൌഷിര്യം=പൊള്ളുപെടുക) । शोषः शुष्कता धातूनाम् । स्पन्दनं किञ्चिच्चलनं । वेष्टनं ग्रथनमिवाङ्गस्य । वेष्टनं रज्ज्वादिभिः वेष्ट्यमानप्रतीतिरिति च । (പുററിനോക) । स्तम्भो बाहूरुजङ्घादीनामाकुञ्चनाद्यभावः, क्रियास्वशक्तिरित्यर्थः । उक्तं च —

"क्रियास्वाकुञ्चनाद्यासु या शक्तिर्वातकोपतः ।
अङ्गानां स्तम्भतुल्यत्वात् स व्याधिस्तम्भ उच्यते ॥"

इति । रसान्तरेऽपि कषायरसाभासः कषायरसता । वायुर्वृद्धः कषायरसास्वादत्वं जनयति । वर्णः श्यावोऽरुणोऽपि वा श्यावारुणौ वर्णावित्यर्थः । श्यावः श्यामवर्णः रूक्षप्रतिभासजनकत्वम् अरुणो रक्तवर्णो रूक्षप्रतिभासजनकत्वम् ? । एतानि वायोः कर्माणि ॥ ४९, ५० ॥

अधुना पित्तस्याह —

**पित्तस्य दाहरागोष्मपाकिताः ॥ ५१ ॥**
**स्वेदः क्लेदः स्रुतिः कोथः सदनं मूर्च्छनं मदः ।**
**कटुकाम्लौ रसौ वर्णः पाण्डुरारुणवर्जितः ॥ ५२ ॥**

दाहेत्यादि । दाहादीनि पित्तस्य कर्माणि । अथवा कर्माणि वायोरुक्तानीति शेषः, पित्तस्य वक्ष्यन्त इति च । सर्वाङ्गीणस्तापो दाहः । रागो लौहित्यं । ऊष्मा औष्ण्यं स्पर्शेन गम्यते । पाकिता पाककर्तृत्वं व्रणादिष्वन्ने च । स्वेदनं स्वेदः पूतिस्वेदकरत्वं । क्लेदः शोणितादिविकारः । क्लेदः शोणितमांसक्लेदः इति च । स्रुतिः स्रावः । कोथः क्लेदस्यातिशयः अविच्छिन्नत्वाद् । अथवा रक्तस्य तनुत्वकृष्णतादौर्गन्ध्या(नि ? दि)क्लेदः मांसस्य कोथः । सादोऽङ्गसदनं । मूर्छनं भ्रमः । मदो वक्ष्यमाणो रोगविशेषः । अथवा मूर्च्छनं मोहः । मदो भ्रमः । रसावास्वादौ कटुकाम्लौ । वर्णः पाण्डुरारुणाभ्यामन्यः । शुक्ललोहितवर्णनिषेधाच्छेषा नानाविधवर्णसम्भवाः सूच्यन्ते ॥

अधुना श्लेष्मणः कर्माण्याह —

**श्लेष्मणः स्नेहकाठिन्यकण्डूशीतत्वगौरवम् ।**
**बन्धोपलेपस्तैमित्यशोफापक्त्यतिनिद्रताः ॥ ५३ ॥**
**वर्णः श्वेतो रसौ स्वादुलवणौ चिरकारिता ।**
**इत्यशेषामयव्यापि यदुक्तं दोषलक्षणम् ॥ ५४ ॥**
**दर्शनाद्यैरवहितस्तत्सम्यगुपलक्षयेम् ।**
**व्याध्यवस्थाविभगज्ञः पश्यन्नार्तान् प्रतिक्षणम् ॥ ५५ ॥**

श्लेष्मण इत्यादि । कफस्य स्नेहादीनि कर्माणि । स्नेहनं स्नेहः । काठिन्यममृदुत्वम् । शीतत्वं शीत एव । बन्धोऽस्थ्यादीनाम् । उपलेपः

स्रोतसाम् । अथवोपलेपः स्रोतःप्रभृतेः । स्तैमित्यमपटुत्वं गात्राणां कार्ये । शो-(षो ? फो) गात्राणाम् । अपक्तिरपाकः इति । वायोरमूर्तस्य रसगाहित्येऽपि प्रभावः शरीरे श्यावारुणोत्पत्तिः कषायरसोत्पत्तिश्चान्वयव्यतिरेकासिद्धा । अरुणदत्तोऽप्याह — ननु वायोरमूर्तत्वाद् वर्णरसोपलब्धिरनुपपन्ना । अमूर्तस्य हि वर्णरसौ दूरोत्सारितौ । नन्वदस्ति । नहि सर्वाणि कार्याणि कारणसदृशान्येव भवन्ति । इन्द्रियेभ्यो जडेभ्यो(म्बुधौ रजता ? बुद्धेरजडा)या उत्पत्तिर्दृष्टा । तस्मात् कारणसदृशानि कार्याणीति प्रायिकमेतत् । अचिन्त्यत्वाद् द्रव्यप्रभावस्य । वायोः सकाशात् कषायरसता श्यावारुणवर्णोत्पत्तिरन्वयव्यतिरेकसिद्धा कथमिव निवार्यतामिति । इत्येवं दोषाणां कर्माण्युपदिश्य निर्देशप्रयोजनमधिकृत्याह — इतीत्यादि । इतिशब्दः प्रकारे । इति पूर्वोक्तेन प्रकारेण । अन्यदतिरोहितम् । यद् दोषलक्षणं दोषाणां वातादीनां यथायथं लिङ्गमुक्तं कर्मत्वं लक्षणत्वं च पूर्वोक्तस्य संसादेः इत्यर्थः । तत् सम्यगिति । तदिति लक्षणं परामृश्यते । समानासमानजातीयव्यवच्छेदकं लक्षणमुच्यते । तद् दर्शनाद्यैः सम्यगुपलक्षयेत साधु जानीयाद् , वैद्य इति शेषः । आदिशब्देन स्पर्शनप्रश्नौ गृह्येते । अथवा दर्शनं प्रत्यक्षम् । आदिशब्देनानुमानागमौ । एवमेतानि वाय्वादिरूपकर्माणि अवहितः सम्यगुपलक्षयेदागमप्रत्यक्षानुमानैः । अनन्तरं च देशकालबलाहारसात्म्यसत्त्वप्रकृत्यादीन् प्रमाणीकृत्याश्वेवोपक्रामेदिति । किं भूतं दोषलक्षणम् . अशेषाश्च ते आमयाश्च अशेषामयास्तान् साधु व्याप्नोतीत्यशेषामयव्यापि । अवहितो दत्तावधानो वैद्यः । तथा व्याध्यवस्थाविभागज्ञः व्याधेरवस्थाः कालकृता दशा नवत्वजीर्णत्वादयः, तासां विभागः पृथक्त्वं तं यो जानाति स एवम् यथा इयमस्य व्याधेरवस्थेयमन्यावस्थेति । अवस्थाभेदाच्चोपक्रमभेदः । तथाहि कस्यैव ज्वरस्य नवस्यान्य उपक्रमो जीर्णस्यान्यः । आर्तान् व्याधितान् । प्रतिक्षणं मुहूर्तं मुहूर्तं पश्यन् ॥

किमिति पुनः पुनर्व्याधिदर्शनं क्रियत इत्याह । अथवा सम्यगुपलक्षयेत् भ्रान्त्या लक्षणप्रतिभासः स्यादित्यर्थः । तत्रोपायमाह —

**अभ्यासात्प्राप्यते दृष्टिः कर्मसिद्धिप्रकाशिनी ।**
**रत्नादिसदसज्ज्ञानं न शास्त्रादेव जायते ॥ ५६ ॥**

अभ्यासादिति । पुनः पुनरनुष्ठानमभ्यासः अभ्यासान्मुहुर्मुहुश्चिकित्सितकर्मणि प्रवर्तनात् । दृष्टिर्दर्शनं बुद्धिश्चिकित्साज्ञानं प्राप्यते, न केवलाच्चिकित्साशास्त्रावगमात् । किंभूता दृष्टिः कर्मणि सिद्धिः साफल्यं तां साधु प्रकाशयति सा कर्मसिद्धिप्रकाशिनी । अत्र दृष्टान्तमाह—रत्नादीति । आदिशब्देन सुवर्णरजतादीनि गृह्यन्ते तेषां यत् सदसद् ज्ञानं इदं शोभनमिदमशोभनमित्यवगमः, तन्न शास्त्रादेव केवलात् जायते । किं तर्ह्यभ्यासाच्च भवति । एवकारोऽवधारणार्थे । न शास्त्रावबोधान्न केवलादभ्यासादित्येवकारो बोधयति । यथा किल रत्नपरीक्षा तच्छास्त्रावबोधदर्शनाभ्यासाभ्यां सम्यग् जायते तथैव चिकित्साशास्त्रावबोधादनवरतमातुरदर्शनाच्चावगम्यते इत्यर्थः । अथवा शास्त्रबहिष्कृताश्च सुवर्णकारवणिगादयोऽपि जानन्ति रत्नादीनि । ये तु शास्त्रविदः साभ्यासास्ते सम्यग् विदन्ति । तथा वैद्याश्च शास्त्रविदः क्रियादक्षाः सतताभ्यासयुक्ताश्च भिषक्तमा भवेयुरित्यर्थः ॥

तेषां त्रिविधा व्याधयः प्रकाशन्ते । व्याधित्रैविध्यं ब्रूते दृष्टापचार इत्यादिना । अथवा 'इत्यशेषामयव्यापी'ति व्याधयः प्रकृताः । तेषां त्रैविध्यमाह सुज्ञानार्थं—

दृष्टापचारजः कश्चित्कश्चित् पूर्वापचारजः ।
तत्सङ्कराद्भवत्यन्यो व्याधिरेवं त्रिधा स्मृतः ॥ ५७ ॥

दृष्टापचारज इत्यादि । दृष्टश्चासावपचारश्च दृष्टापचारः तस्माज्जातो दृष्टापचारजः । अपचारो व्याधिहेतुः अपथ्यसेवा । ऐहलौकिकाद् व्याधिकारणाज्जातो दृष्टापचारजः । अनेन रोगभोक्तृशरीरेणाप्रतिषिद्धानामनुष्ठानरूपं कर्म दृष्टम् । अपराधज इति वा पाठः । कश्चिदात्मकृतात् पूर्वापराधादशुभकर्माख्याज्जातः पूर्वापचारजः । जन्मान्तरातीतेन शरीरेण कृतमशुभं कर्म पूर्वापचारः । अपरः कश्चित् सङ्कराद् भवति । तयोः सङ्करस्तत् सङ्करो मिश्रत्वम् । तस्मान्न केवलं पूर्वापचाराद्, न च केवलाद् दृष्टापचाराद् अपि तु द्वयोः सङ्कराज्जायते इत्यर्थः । एवमनेन प्रकारेण व्याधिस्त्रिधा त्रिप्रकारः स्मृतः ॥

सम्प्रति त्रिप्रकारव्याधिलक्षणार्थमाह—

यथानिदानं दोषोत्थः कर्मजो हेतुभिर्विना ।
महारम्भोऽल्पके हेतावातङ्को दोषकर्मजः ॥ ५८ ॥

यथा निदानमित्यादि। यथानिदानं दोषोत्थो यद् यस्य दोषस्य वातादेर्निदानं लघुरूक्षादि तेन कुपिताद् दोषाज्जातो व्याधिर्दोषोत्थः, स दृष्टापचारज इत्यर्थः। हेतुभिर्विना लघुरूक्षादिभिर्निदानैर्दृष्टैर्विना अपथ्यसेवामन्तरेण जातो व्याधिः कर्मजः अशुभपूर्वकर्मजः। यस्त्वल्पे निदाने सेवितेऽपि महारम्भः स्यात् स रोगो दोषकर्मजो ज्ञेयः। अतिमहानारम्भो यस्य स महारम्भः पूर्वरूपरूपैर्बलवद्भिर्युक्त इत्यर्थः॥

त्रिविधस्य व्याधेश्चिकित्सामाह —

विपक्षशीलनात् पूर्वः कर्मजः कर्मसंक्षयात्।
गच्छत्युभयजन्मा तु दोषकर्मक्षयात्त्वयम्॥ ५९॥

विपक्षेत्यादि। पूर्वः पूर्वमुक्तो दृष्टापचारजो व्याधिः केवलदोषजो विपक्षशीलनाद् यथोक्तहेतुव्याधिविपक्षभेषजसेवनात् क्षयं गच्छति। कर्मजो रोगः सत्येव यथास्वप्रतिपक्षशीलने कर्मणः संक्षयात् क्षयं याति। उभयजन्मा दोषकर्मसमुत्थो दोषकर्मणोरुभयोरपि क्षयात् क्षयं याति॥

व्याधीनां त्रैविध्यमाख्याय प्रकारान्तरेण द्वैविध्यं दर्शयितुमाह —

द्विधा स्वपरतन्त्रत्वाद्व्याधयोऽन्त्याः पुनर्द्विधा।

द्विधेत्यादि। स्वतन्त्रपरतन्त्रत्वाद्धेतोः द्विविधा व्याधयः स्वतन्त्रपरतन्त्रभेदेन द्विविधा इत्यर्थः॥

अन्त्याः परतन्त्राः पुनर्द्विधा द्विविधाः। पुनःशब्द आवृत्त्यर्थः॥

द्वैविध्यमाह —

पूर्वजा पूर्वरूपाख्या जाताः पश्चादुपद्रवाः॥ ६०॥

पूर्वजा इत्यादि। पूर्वं जाताः पूर्वजाः। 'अन्येष्वपि दृश्यते' इति(डः)। उत्पित्सोर्व्याधेः पूर्वजाः पूर्वरूपाख्याः पूर्वरूपसंज्ञाः। यथा ज्वर' स्यालस्यादयः। ये पश्चाज्जातास्ते व्याधीनामुपद्रवसंज्ञाः। उक्तं च —

"उद्बुभूषोः प्रधानस्य व्याधेरुत्पत्तिसूचनः।
व्याधिः स्यात् पूर्वरूपाख्यः पश्चाज्जात उपद्रवः॥"

इति। अन्यत्रापि —

"व्याधेरुपरि यो व्याधिर्भवत्युत्तरकालजः।
उपक्रमविघाती च स ह्युपद्रव उच्यते॥" इति॥ ६०॥

सम्प्रति स्वतन्त्रान् लक्षयति —

**यथास्वजन्मोपशयाः स्वतन्त्राः स्पष्टलक्षणाः ।**

यथास्वेत्यादि । जन्म उपशयश्च जन्मोपशयौ । जन्म उत्पत्तिः । उपशयः सुखानुबन्धः । यो यस्य यथास्वम् । यस्य ज्वरादेर्यावात्मीयौ शास्त्र-निर्दिष्टौ तौ यथास्वशब्देन सूच्येते । यथास्वं जन्मोपशयौ येषां ते यथास्व-जन्मोपशयाः आत्मीयनिदानोत्था आत्मीयोपशयाश्च व्याधय उच्यन्ते । यद्यथा शास्त्रप्रदेशे जन्मनः शमनस्य च प्रोक्तं तथाविधेन जायन्ते शाम्यन्ति चेत्यर्थः । तथा स्पष्टलक्षणाश्च । चिकित्सागुरुलाघवप्रतिपत्त्यर्थं च स्वतन्त्रा-दिसंज्ञाकरणम् । स्वग्रहणाद् येऽन्य(न्य)जन्मानि जायन्ते, तेऽपि (न) स्वतन्त्राः । यथा अन्यस्य व्याधेरुपशयः सुखानुबन्धः, तथा घृतपरिधान(वार)स्यापि । ते तु न स्वतन्त्राः । तथा चोक्तम् — पूर्वरूपादिक्रमेण ज्वरादावुत्पन्ने तत्परिधाना (वारा) ये श्वासादय उत्पद्यन्ते तदुपशये चोपशेरते ते न स्वतन्त्राः ज्वरादय एव तु मूलव्याधिरूपत्वात् स्वतन्त्रा इत्युच्यन्ते इति ॥

विपरीतास्ततोऽन्ये तु विद्यादेवं मलानपि ॥ ६१ ॥

विपरीता इत्यादि । स्वतन्त्रेभ्यो रोगेभ्यो येऽन्ये परतन्त्राः पूर्व-रूपाख्याः उपद्रवसंज्ञाश्च ते तद्विपरीताः विपरीतस्वरूपाः न यथास्वजन्मोप-शयाः न च स्पष्टलक्षणाः । एवं व्याधीनां स्वतन्त्रपरतन्त्रत्वं प्रतिपाद्य दोषाणां प्रतिपादयन्नाह — विद्यादित्यादिना न केवलं रोगान् स्वतन्त्रपरतन्त्रभेदैर्वि-द्याद् वैद्यो, यावन्मलान् दोषान् वातादीनप्येवं स्वतन्त्रपरतन्त्रभेदैर्जानीयात् ॥ ६१ ॥

**तान् लक्षयेदवहितो विकुर्वाणान् प्रतिज्वरम् ।**

तानित्यादि । तान् वातादीन् यथास्वजन्मोपशमलक्षणयुक्तान् । प्रतिज्वरं प्रतिरोगम् । "व्याधिरातङ्को ज्वरो यक्ष्मा रोग इत्यनर्थान्तरमि" त्यागमात् । विकुर्वाणान् विकृतिं कोपं गच्छतो लक्षयेत् जानीयात् अवहितो दत्तचित्तो, वैद्य इति शेषः ॥

तेषां प्रधानप्रशमे प्रशमोऽशाम्यतस्तथा ॥ ६२ ॥

पश्चाच्चिकित्सेत्तूर्णं वा बलवन्तमुपद्रवम् ।

व्याधिक्लिष्टशरीरस्य पीडाकरतरो हि सः ॥ ६३ ॥

स्वतन्त्राणां व्याधीनां दोषाणां च 'यथास्वजन्मोपशया' इत्युक्तत्वादेव भेषजमुक्तम् । परतन्त्राणां कः प्रशमोपशम इत्याह— तेषामित्यादि । तेषां परतन्त्राणां रोगाणां दोषाणां चाप्रधानानां प्रधानप्रशमे स्वतन्त्रव्याधिप्रशमे प्रशमो भवति न तु तेषां पृथगुपक्रमो विधेय इत्यर्थः । अशाम्यतः प्रधान-प्रशमतः परतन्त्रान् व्याधीन् दोषान् वा तथा तेन प्रकारेण प्रधानचिकित्सा-क्रमेण पश्चात् प्रधानचिकित्सात उत्तरकालं चिकित्सेत् । अचिकित्स्यमानो ह्यसाध्यतामपि यायात् ।

तूर्णं वेति । उपद्रवश्चेत् बलवान् स्यात् तदा तमुपद्रवं तूर्णमेव प्रथममेव प्रधानाविरोधेन चिकित्सेत् । व्याधेरुपद्रवस्य वा बलवतश्चिकित्सा-शीघ्रं कर्तव्येत्यर्थः ॥

ननु कुतोऽप्रधानं शीघ्रं चिकित्सेदित्याह — हि यस्माद् व्याधिक्लिष्ट-शरीरस्य प्रधानव्याधिक्लिष्टशरीरस्य पुंसः कालक्षेपे स उपद्रवः प्रमेहपिटका-दिवत् अतिशयेन पीडाकरः प्रागुत्पन्नोऽपि रोगः पीडाकरः, उपद्रवश्च पश्चाज्जायमानो व्याधिक्लिष्टशरीरस्योत्पन्नत्वात् पीडाकरतरः । परतन्त्रो व्याधिर्हीनबलः प्रधानोपक्रमेणैव वोपशाम्यति । यस्तु परतन्त्रः पश्चादुत्पद्यमा-नोऽपि स्वतन्त्रव्याध्युपक्रमेण शमं न याति तं पश्चादुपक्रामेत् । यस्तु बलवान् परतन्त्रस्तमादावेव चिकित्सेदिति ॥ ६२–६३ ॥

स्वतन्त्रपरतन्त्रादि भेदभिन्नेषु केषाञ्चिन्नामापरिज्ञानाद् कथं चिकित्सेदित्याह — इत्याकारोऽप्याह — ननु उपद्रवोपद्रविभेदेनानेकविधा व्याधयस्तेषां नाम ज्ञात्वास्येदं करणीयमिति चिकित्सा करणीया । नामज्ञानं च सर्वेषामशक्यम् । तत्र को निर्वाह इत्या-हेति —

विकारनामाकुशलो न जिह्रीयात्कदाचन ।
न हि सर्वविकाराणां नामतोऽस्ति ध्रुवा स्थितिः ॥ ६४ ॥
स एव कुपितो दोषः समुत्थानविशेषतः ।
स्थानान्तराणि च प्राप्य विकारान् कुरुते बहून् ॥ ६५ ॥
तस्माद्विकारप्रकृतीरधिष्ठानान्तराणि च ।
बुद्ध्वा हेतुविशेषांश्च शीघ्रं कुर्यादुपक्रमम् ॥ ६६ ॥

विकारेत्यादि । विकारा रोगाः तेषां नामानि तेष्वकुशलो वैद्यो न जातुचित् जिह्रीयात् रोगसंज्ञानभिज्ञोऽहमिति लज्जां न कुर्यात् । चिकित्सामेव

विदध्यादित्यर्थः । कुतो हेतोरित्याह नहीत्यादि । हि यस्मात् सर्वविकाराणां नामतः संज्ञातः ध्रुवा निश्चिता स्थितिरवस्थानं नास्ति तस्मादज्ञातेषु रोगेषु उद्रिक्तदोषापेक्षया चिकित्सां विदध्यात् । पाठ्यकारस्तु— 'नहि सर्वविकाराणामि'ति । सर्वव्याधीनां नाम (न) विद्यते नाम्नः स्थितिरध्रुवा शिरोरोगो ज्वरो भवति, ज्वरः पुनर्भगन्दरो भवति, सा पुनर्या काचन पिटका भूत्वा नश्यति । तस्मान्नामापरिज्ञाने लज्जां न प्राप्नुयात् । ततः पुनर्व्याधौ स्थितिं प्राप्ते अयं व्याधिरिति ब्रूयादित्यर्थः इत्याह ॥

कुतोऽशेषरोगाणां नामतो नास्ति स्थितिरित्याशङ्क्याह । स एवे-त्यादि । अथवा कुतो नामापरिज्ञानमित्याह । अथवा विकारनामाकुशल इति किं नामायं व्याधिरिति केनचित् पृष्टो रोगाणां नाम न जानामीति न जिह्नीयात् । तत्र कारणमाह—नहीति । सर्वेषां व्याधीनां नामतः स्थितिर्न ध्रुवा । विकारश्चेद् विशेषनामवान् इति न नियम इत्यर्थः ॥

दोषतस्तु स्थितिर्नियतैवेत्याह । स एवेत्यादि । यस्मात् स एक एव दोषो वाताद्यन्यतमः समुत्थान-विशेषतो हेतुभेदात् समुत्थानं निदानं तथा स्थानान्तराणि स्वं स्वं स्थानं हित्वा पराणि स्थानानि प्राप्य गत्वा बहून् विकारान् व्याधीन् अज्ञातनामकान् कुरुते । तथा चोक्तं तन्त्रान्तरे—यो दोषः शरीरसन्धीनाविशति तेन जृम्भा ज्वरश्चोपजायते । यस्त्वामाशयमभ्युपैति तेन चान्ये रोगा भवन्ति । यः प्राणवहानि स्रोतांस्यभ्युपैति श्वासः प्रतिश्यायश्च तेनोपजायत इति ॥

हृद्याकारोऽपि "स्थानान्तराणि स्थानविशेषान् हृदयादीन् प्राप्ये"-त्याह । तस्मादित्यादि । तस्माद् विकारस्य ज्वरादेः प्रकृतय उपादानकारणानि विकारप्रकृतयो रोगहेतवः वातादिदोषाः ता विकारप्रकृतीर्वातादीन् बुद्ध्वा । पाठ्यकारस्तु विकारप्रकृतीः स्रंसव्यासादिविकारांश्च वातादिप्रकृतश्च बुद्ध्वा इत्याह । अधिष्ठानान्तराणि स्थानविशेषांश्च बुद्ध्वा ज्ञात्वा, तथा हेतु-विशेषान् निदानभेदांश्च बुद्ध्वा यथा किमयं कुपितः पवनो रूक्षेण हेतुना लघुना शीतेन वेत्यादि ज्ञात्वा शीघ्रमेवोपक्रामेत्, नतु विकारानभिज्ञोऽह-मिति न चिकित्सेत् । हृद्याकारस्त्वाह — चशब्दो वक्ष्यमाणदूष्यादिसमु-च्चयार्थः । शीघ्रमिति अस्य व्याधेर्नाम न ज्ञायते इति संशयानो न तिष्ठेत् । द्रुतमुपक्रमं प्रवर्तयेदिति ॥

इति विकारप्रकृत्यादित्रयं बुद्ध्वोपक्रमं कुर्वन्तः कदाचित् सिद्धिमाप्नुवन्तो दृश्यन्ते भिषजः, कदाचिन्नेति तदत्र सम्भ(वा ? वत्) स्खलिते कथं नियुज्यते वैद्य इति यथमुक्तं शीघ्रं कुर्यादुपक्रममित्याशङ्क्याह अथवा चशब्दसूचितान् दूष्यादीनप्याह ।

दूष्यं देशं बलं कालमनलं प्रकृतिं वयः ।
सत्वं सात्म्यं तथाहारमवस्थाश्च पृथग्विधाः ॥ ६७ ॥
सूक्ष्मसूक्ष्माः समीक्ष्यैषां दोषौषधनिरूपणे ।
यो वर्तते चिकित्सायां न स स्खलति जातुचित् ॥ ६८ ॥

दूष्यमित्यादि । दोषौषधनिरूपणे सति दूष्यादीन् दश समीक्ष्य सम्यगवगम्य यश्चिकित्सायां वर्तते यत्नं करोति स वैद्यो न कदाचित् स्खलति अपराधवान् न भवति सिद्धसाध्यफलो भवतीत्यर्थः । दोषो वातादिः, औषधं हरीतक्यादि तयोर्निरूपणं पर्यालोचनमस्य दोषस्येदं भेषजमिति । दूष्यादीनां समस्तानामुपादानं सर्वेषामेवावगमार्थं न पुनरेषां द्वौ वा त्रीन् वा चतुरः पञ्च वा समीक्ष्य किंतर्हि सर्वानेतान् सम्यगवबुध्येति । तथाहारमित्याहारस्य नवत्वपुराणत्वमात्रादिकं च निरूपणीयमिति । अथाहारमिति वा पाठः । न केवलं दूष्यादयो वेद्याः, एषां दूष्यादीनां दशानामवस्थाश्च विशेषान् पृथग्विधाः सूक्ष्मसूक्ष्माः अतिशयेन सूक्ष्मास्ताश्च सम्यग् ज्ञात्वा यथावद् बुद्ध्वेति । अवस्थाशब्दो विशेषवचनः । एषामिति दूष्यादीनां साकल्येन ज्ञेयत्वमाहेति हृद्याकारः । दूष्यादीन् दश निरीक्ष्य दोषौषधनिरूपणे सतीति सम्बन्ध इति हाटकः हृद्याकारश्च ॥

न केवलं दूष्यादय एव, व्याधिरपि गुरुलघुत्वेन परीक्ष्यैवेत्याह—

गुर्वल्पव्याधिसंस्थानं सत्वदेहबलाबलात् ।
दृश्यतेऽप्यन्यथाकारं तस्मिन्नवहितो भवेत् ॥ ६९ ॥
गुरुं लघुमिति व्याधिं कल्पयंस्तु भिषग्ब्रुवः ।
अल्पदोषाकलनया पथ्ये विप्रतिपद्यते ॥ ७० ॥
ततोऽल्पमल्पवीर्यं वा गुरुव्याधौ प्रयोजितम् ।
उदीरयेत्तरां रोगान् संशोधनमयोगतः ॥ ७१ ॥
शोधनं त्वतियोगेन विपरीतं विपर्यये ।
क्षिणुयाच्च मलानेव केवलं वपुरस्यति ॥ ७२ ॥

गुर्वल्पेत्यादि । गुरुश्चाल्पश्च गुर्वल्पौ गुर्वल्पौ च तौ व्याधी च तयोः संस्थानमाकृतिः । अपिशब्दो भिन्नक्रमः । तत् गुर्वल्पव्याधिसंस्थानमन्याकारमपि दृश्यते विपरीतमपि लक्ष्यते, सत्त्वदेहयोर्बलाबलाद् । अपिशब्दाद् यथातत्त्वमपीत्यर्थो लभ्यते, क्वचिद् गुर्वल्पव्याधिसंस्थानं यथातत्त्वं दृश्यते क्वचिन्नेति । तस्माद् व्याधिलक्षणस्य गमकत्वाभावः प्रसज्यते । तत्र "रोगं निदानप्राग्रूपलक्षणोपशयाप्तिभिरि"ति दुष्येत । तस्मादपिशब्दोऽत्र । सत्त्वदेहबलाधिके पुरुषे गुरुर्महानप्युत्पन्नो व्याधिरल्प इवाभाति हीनबल इव लक्ष्यते । सत्त्वदेहबलयोरुत्कृष्टत्वात् । तथा हीनसत्त्वे हीनशरीरबले चोत्पन्नो लघुरपि महानिव लक्ष्यते, हीनसत्त्वदेहबलत्वात् । अन्यथाकारं विपरीतरूपमिति व्याकारः । तस्मात् तस्मिन् गुर्वल्पव्याधिसंस्थानेऽवहितो दत्तावधानो भवेद् वैद्यः ॥

पूर्वोक्तमेव विवृणोति—भिषग्ब्रुवः कुत्सितो वैद्यो व्याधिसंस्थानमात्रावलोकनाद् गुरुं व्याधिं लघुमिति कल्पयन् निश्चिन्वन् अवगच्छन् अल्पदोषाकलनया अल्पोऽयं दोष इति निश्चयेन । आकलना ज्ञानम् । अथवाकलनमज्ञानमिति वा छेदः । पथ्ये चिकित्सिते विप्रतिपद्यते विपरीतं प्रतिपद्यते मोहं गच्छतीत्यर्थः । गुरुव्याधावल्पव्याधियोग्यं भेषजं ददातीत्यर्थः । एवं लघून् व्याधीन् गुरूनिति कल्पयन् बहुदोषाकलनया पथ्ये विप्रतिपद्यते लघुव्याधौ गुरुव्याधियोग्यं भेषजं ददाति, भिषग्ब्रुवत्वात् । अन्यत्रापि ब्रुवान्तस्य कुत्सितत्वमेव प्रसिद्धम् ॥

यथा—

"जातिमात्रोपजीवी च कामं स्याद् ब्राह्मणब्रुवः ।
धर्मस्य वक्ता नृपतेः न तु शूद्रः कथञ्चन ॥"

इति । केचित्तु भिषग्ध्रुवमिति पेठुः । भिषग् वैद्यो गुरुं लघुमिति व्याधिं कल्पयन् ध्रुवं निश्चितं पथ्ये विप्रतिपद्यत इति व्याचक्षते ॥

ततोऽल्पमित्यादिना पूर्वोक्तस्यैव विस्तारः क्रियते । यथाऽऽख्येवं ततोऽल्पम् अल्पमात्रं अल्पवीर्यं वा अनुरूपशक्ति वा भेषजं गुरुव्याधौ प्रयोजितं दत्तं (सं) शोधनं रोगानुदीरयेत्तरामतिशयेनोत्क्लेशयेत् । कुतः, अयोगतः हीनयोगात् । यथा पुत्रे कार्याकरणादपुत्र इत्युच्यते । संशोधनमयोगत इति भेषजमात्राविप्रतिपत्तिरपि दोषाय । अत्र संशोधनं प्रत्यवायकरत्वाद् दृष्टान्तेनो-

पन्यस्तम् । एवं शमनमपि भेषजमवगन्तव्यम् । इयाकारोऽपि संशोधनस्य व्यापद्बहुलतां ख्यापयितुं संशोधनग्रहणमित्याह ॥

शोधनं त्वित्यादि । विपर्यये विपरीते लघुव्याधौ विपरीतं शोधनं तु प्रयोजितम् । तस्माद् विपरीतम् अल्पादल्पवीर्यात् शोधनात् अतिमात्रमतिवीर्यं वा बहुदोषाकलनया अतियोगेन हेतुना प्रयुक्तं न केवलं मलानेव क्षिणुयात् क्षपयेत् शरीरमप्यतिशयेन नाशयेत् । अत्र च शोधनं दृष्टान्तत्वेनोपन्यस्तं शोधनस्यैवायोगातियोगाभ्यामतिव्यापत्करत्वम् । खरनादेनाप्युक्तम्—

"अल्पमुत्क्लेशयेद् दोषान् बहुप्राणान् निरस्यति ।
तस्मान्निरूप्य भिषजा देयं युक्तं विरेचनम् ॥"

इति ॥

**अतोऽभियुक्तः सततं सर्वमालोच्य सर्वथा ।**
**तथा युञ्जीत भैषज्यमारोग्याय यथा ध्रुवम् ॥ ७३ ॥**

यस्मादेवं रोगाणां दुर्ज्ञेया गतिरतोऽस्माद्धेतोः सततमभियुक्तोऽभ्यासवान् सर्वकालमायुर्वेदपाठावबोधानुष्ठानपरो वैद्यः सर्वं दोषदूष्यादिवस्तुजातं सर्वथा सर्वेण प्रकारेण आयुर्वेदानुसारिण्या स्वमनीषया तथा तद्विद्यसंभाषासंभवया च तथा कर्माभ्यासतश्च निपुणमालोच्य निरूप्य तथा तेन प्रकारेण दोषदूष्यदेशाद्यनुगुणेन भैषज्यं युञ्जीत यथा येन प्रकारेण प्रयुक्तं भेषजं ध्रुवमवश्यमारोग्याय भवेत् तथा प्रयोजयेदिति ॥ ७३ ॥

यस्माद् वृद्धाः क्षीणाश्च दोषा रोगहेतवस्तस्मात् तानेव वृद्धिक्षयभेदेनाह— अथवा पूर्वमुक्तं "दोषा एव हि सर्वेषां रोगाणामेककारणम्" इति, तानेव दोषान् वृद्धिक्षयभेदेनाह । अथवा धामनामकर्मादिभिर्दोषाणां भेदमुक्त्वेदानीं वृद्धिक्षयभेदानाह—

**वक्ष्यन्तेऽतः परं दोषा वृद्धिक्षयविभेदतः ।**

वक्ष्यन्त इत्यादि । वृद्धिश्च क्षयश्च वृद्धिक्षयौ तयोर्भेदो वृद्धिक्षयभेदः विविधो भेदो विभेदः तस्माद् वृद्धिक्षयविभेदतः । इतोऽनन्तरं दोषा वातादयो वक्ष्यन्ते वृद्धिभेदैः क्षयभेदैश्च भणिष्यन्ते ॥

**पृथक्त्रीन् विद्धि संसर्गास्त्रिधा तत्र तु तान्नव ॥ ७४ ॥**

पृथक् त्रीनित्यादि । पृथग् व्यस्तान् वृद्धान् स्वप्रमाणाधिकान् त्रीन् दोषान् रोगहेतून् विद्धि अवेहि । यथा वातो वृद्धः पित्तं वृद्धं श्लेष्मा वृद्धः इति । संसर्गभेदानधुना वक्ति संसर्गस्त्रिधा त्रिप्रकार इति पूर्वस्यानुवादः क्रियते । तत्र तु संसर्गे तान् नव दोषभेदान् वृद्धान् विद्धीत्येतदनुवृत्तिकृतेन संबन्धेन सर्वत्र योज्यम् । संसर्गस्त्रिधा विद्धीति ह्याकारः ।

कथं नवभेदा इत्याह—

**त्रीनेव समया वृद्ध्या षडेकस्यातिशायने ।**

त्रीनेवेत्यादि । समया परस्परमन्यूनाधिकया वृद्ध्या त्रीनेव संसर्गभेदान् विद्धि । यथा वातपित्ते समवृद्धे वातश्लेष्माणौ समवृद्धौ पित्तश्लेष्माणौ समवृद्धौ इति एवं त्रयः । संसर्गस्थयोर्दोषयोरेकस्य दोषस्यातिशायने अधिकतरया वृद्ध्या षट् संसर्गभेदान् विद्धि । अतिशय एवातिशायनम् । "अतिशायने तमबिष्ठनौ" इति निपातनाद् दीर्घः । दोषद्वयवृद्धेश्चिन्त्यमानत्वात् अपरदोषचिन्ता नास्त्यत्र । यथा वातपित्तसंसर्गे वातो वृद्धः पित्तं वृद्धतरं पित्तं वृद्धं वातो वृद्धतर इति द्वौ । वातश्लेष्मसंसर्गे वातो वृद्धः श्लेष्मातिशयेन वृद्धः श्लेष्मा वृद्धः वातोऽतिशयेन वृद्ध इति द्वौ । पित्तश्लेष्मसंसर्गे पित्तं वृद्धं श्लेष्माधिकवृद्धः श्लेष्मा वृद्धः पित्तमधिकवृद्धं इति द्वौ । एवं षट् ॥

**त्रयोदशसमस्तेषु षड्द्व्येकातिशयेन तु ॥ ७५ ॥**

**एकं तुल्याधिकैः षट्च तारतम्यविकल्पनात् ।**

त्रयोदशेत्यादि समस्तेषु संनिपतितेषु त्रिष्वपि दोषेषु वृद्धेषु त्रयोदशभेदान् विद्धि ॥

कथमिति चेत्—

षड्द्व्येकातिशयेन त्विति । द्वावेकश्च द्व्येके एषामतिशयोऽधिकत्वं तेन षड् दोषभेदान् विद्धि द्व्यतिशयेन त्रयः एकातिशयेनापि त्रय इति । यथा कफो वृद्धः वातपित्ते वृद्धतरे, पित्तं वृद्धं वातकफौ वृद्धतरौ, वातो वृद्धः पित्तकफौ वृद्धतरौ इति द्व्यतिशये त्रयः । पित्तकफौ वृद्धौ वातोऽतिवृद्धः, वातकफौ वृद्धौ पित्तमतिवृद्धं, वातपित्ते वृद्धे कफोऽतिवृद्धः इत्येकातिशये इति षट् ॥

एकमित्यादि । तुल्याधिकैः समवृद्धैर्दोषैरेकं संनिपातभेदं विद्धि । वातपित्तश्लेष्माणः समवृद्धा इति ॥

षट् चेत्यादि । तरतमयोर्भावस्तारतम्यम् । कस्य तारतम्यं, प्रकृतत्वात् सन्निपातस्थदोषाणाम् । तारतम्यस्य विकल्पनं भेदस्तारतम्याविकल्पनं तस्मात् षट् सन्निपातभेदान् विद्धि । वातो वृद्धः पित्तं वृद्धतरं श्लेष्मा वृद्धतम इति, वातो वृद्धः श्लेष्मा वृद्धतरः पित्तं वृद्धतमम् इति, पित्तं वृद्धं कफो वृद्धतरः वातो वृद्धतमः, पित्तं वृद्धं वातो वृद्धतरः श्लेष्मा वृद्धतमः, श्लेष्मा वृद्धः वातो वृद्धतरः पित्तं वृद्धतमं, श्लेष्मा वृद्धः पित्तं वृद्धतरं वातो वृद्धतमः, एवं त्रयोदश । एतेषां च लक्षणं मुनिरध्यगीष्ट —

"संनिपातज्वरस्योर्ध्वं त्रयोदशविधस्य च ।
प्राक् सूत्रितस्य वक्ष्यामि लक्षणं वै पृथक् पृथक् ॥
भ्रमः पिपासा दाहश्च गौरवं शिरसोऽतिरुक् ।
वातपित्तोल्बणे विद्याल्लिङ्गं मन्दकफे ज्वरे ॥
शैत्यं कासोऽरुचिस्तन्द्रा पिपासादाहरुग्व्यथाः ।
वातश्लेष्मोल्बणे व्याधौ लिङ्गं पित्तावरे विदुः ॥
छर्दिः शैत्यं मुहुर्दाहस्तृष्णा दाहोऽस्थिवेदना ।
मन्दवाते व्यवस्यन्ति लिङ्गं पित्तकफोल्बणे ॥"

इत्यादि ॥ ७५ ॥

**पञ्चविंशतिमित्येवं वृद्धैः क्षीणैश्च तावतः ॥ ७६ ॥**

एवं पूर्वोक्तेन प्रकारेण पञ्चविंशतिसंख्याकान् दोषभेदान् वृद्धैर्दोषैर्विद्धि । क्षीणैश्च क्षयावस्थैरपि दोषैस्तावतस्तत्परिमाणान् पञ्चविंशतिसंख्याकान् दोषभेदान् विद्धि । 'पृथक् त्रीन् विद्धी'त्यादिना क्रमेणैवमेव तत्रापि संख्यां पूरयेत् एवं पञ्चाशत् । 'पञ्चविंशतिरित्येवमि'ति केचित् पठन्ति ॥

संसर्गसंनिपातभेदा उक्ताः अनन्तरं पृथग्भूतेन विशेषेण भेदा उच्यन्ते—

**एकैकवृद्धिसमता क्षयैः षट् ते पुनश्च षट् ।**
**एकक्षयद्वन्द्ववृद्धया सविपर्ययायापि ते ॥ ७७ ॥**
**भेदा द्विषष्टिनिर्दिष्टास्त्रिषष्ठः स्वास्थ्यकारणम् ।**

एकैकेत्यादि । ते संनिपातस्था दोषास्त्रय इत्थं षोढा भवन्ति । कथमित्याह — परस्परमेकैकस्य वाताद्यन्यतमस्य वृद्ध्या समतया क्षयेण च षट् भेदाः । टीकाकारस्तु— ते भेदा दोषेष्वेकैकस्य वृद्धिसमताक्षयैः षडित्याह । यथा एको वृद्धोऽन्यः समोऽपरः क्षीणः तत्र वातो वृद्धः पित्तं समं श्लेष्मा

क्षीणः, वातो वृद्धः श्लेष्मा समः पित्तं क्षीणं, पित्तं वृद्धं श्लेष्मा समः वातः क्षीणः, पित्तं वृद्धं वातः समः श्लेष्मा क्षीणः श्लेष्मा वृद्धः पित्तं समं वातः क्षीणः, श्लेष्मा वृद्धः वातः समः पित्तं क्षीणमिति ॥

पुनश्चेत्यादि । एकस्य क्षय एकक्षयः द्वन्द्वस्य वृद्धिर्द्वन्द्ववृद्धिः एकक्षयसहिता द्वन्द्ववृद्धिरेकक्षयद्वन्द्ववृद्धिः तया । किंभूतया, सविपर्ययया सह विपर्ययेण वैपरीत्येन वर्तते या सैवं तया । पुनश्च ते दोषा भेदा वा एकक्षयद्वन्द्ववृद्ध्या द्वन्द्वक्षयैकवृद्ध्या च षोढा भवन्ति । यथा एकक्षयद्वन्द्ववृद्ध्या त्रयः द्वन्द्वक्षयैकवृद्ध्या त्रयः इति षट् । कथमिति चेत्—वातः क्षीणः पित्तश्लेष्माणौ वृद्धौ, पित्तं क्षीणं वातश्लेष्माणौ वृद्धौ, श्लेष्मा क्षीणः वातपित्ते वृद्धे । इदानीमेतद्विपर्ययः प्रदर्श्यते —वातपित्ते क्षीणे श्लेष्मा वृद्धः, वातश्लेष्माणौ क्षीणौ पित्तं वृद्धं, पित्तश्लेष्माणौ क्षीणौ वातो वृद्धः इति । एवं संनिपातभेदाद् द्विरूपया वृद्ध्या षडेते । भेदा इत्यादि । एवञ्च दोषाणां भेदा द्विषष्टिर्निर्दिष्टाः पञ्चाशद् द्वादश च । त्रिषष्टीनां पूरणो यो दोषभेदः समसंनिपाताख्यः स त्रिषष्टः स्वास्थ्यकारणमारोग्यहेतुः धातुसाम्याद् । अत्र हि स्वप्रमाणस्था वातपित्तश्लेष्माणः । ये च पूर्वोक्ता द्विषष्टिर्दोषभेदास्ते रोगकारणमित्यर्थादुक्तं भवति । अत्र च रोगहेतुत्वे कारणं दोषवैषम्यमिति । त्रिषष्ठ इति 'तस्य पूरणे डट् ' इति डट् ॥ ७७ ॥

इदानीमुक्तानामेव दोषभेदानां रसादिभेदेनानन्त्यं दर्शयति—

**संसर्गाद्रसरुधिरादिभिस्तथैषां दोषांस्तु क्षयसमताविवृद्धिभेदैः ।**
**आनन्त्यं तरतमयोगतश्च यातान् जानीयादवहितमानसो यथास्वम् ॥ ७८ ॥**

संसर्गादित्यादि । न केवलं त्रिषष्टिभेदभिन्नान् दोषान् जानीयात् आनन्त्यं च गतान् विद्यात् । कथमानन्त्यं स्यादित्याह-एषां दोषभेदानां यथास्वं रसादिभिः संयोगात् तथैषामेव संसृष्टानां रसादीनां क्षयादिभेदैः तथा तरतमयोगाच्चानन्त्यं गतान् विद्यात् । तत्र दिङ्मात्रं शिष्यव्युत्पत्तये प्रदर्श्यते द्विषष्टिभेदाः पूर्वोक्तास्तेषु भेदेषु रसधातुसंयोगाद् द्विषष्टिः । रक्तधातुसंयोगाच्च द्विषष्टिः । एवं मांसादिपञ्चकसंयोगाच्च द्विषष्टिर्द्विषष्टिः । एवं द्विषष्टिभेदभिन्नानां दोषाणां रसादिभिः सप्तभिः संयोगाच्चत्वारिंशतान्येकचत्वारिंशदधिकानि भवन्ति । तथा शकृदादिसंयोगात् तथा संयुक्तधातुषु दोषेषु तरतमयोगाच्च पृथग् द्विषष्टिः । दोषेषु धातुषु तरतमयोगाच्चेत्यादि द्रष्टव्यम् । एवं चिन्त-

नेनानन्त्यं गतान् यथास्वं रूपैर्नियमितचित्तो जानीयाद् वैद्यः । रसभेदे दोषभेदे चावगते वैद्यस्य हेतुलक्षणोपक्रमेषु मोहो न भवति । वचनं हि—

"यः स्याद् रसविकल्पज्ञः स्याच्च दोषविकल्पवित् ।
न स मुह्येद् विकाराणां हेतुलिङ्गोपपत्तिषु ॥"[1]

इति । आनन्त्यमिति बहुत्वमेवोक्तं, नान्ताभावः, संख्यायाः परार्धान्तत्वकथनाद् वैशेषिकैरिति ॥ ७८ ॥

इति श्रीदासपण्डितविरचितायां हृदयबोधिकायां
द्वादशोऽध्यायः ।

---

## अथ त्रयोदशोऽध्यायः ।

अथाऽतो दोषोपक्रमणीयमध्यायं व्याख्यास्यामः ।

पूर्वाध्याये विकृतान् दोषानाश्वेवोपक्रामेदित्युक्तम् । अतस्तमेवोपक्रमं रोगविशेषानपेक्षया सामान्यरूपेणास्मिन्नध्याये दर्शयति । पाठ्यकारोऽपि दोषभेदमुक्त्वा तच्चिकित्सितमाहेत्याह । अथवा—"दोषवृद्धेर्गदोत्पत्तिर्दोषसाम्यात् सुखोदयः" इति वातादिसाम्यार्थां दोषोपक्रमवर्णना । अथात इत्यादि । उपक्रम एवोपक्रमणं चिकित्सा दोषाणामुपक्रमणं तस्मै हितो दोषोपक्रमणीयः ॥

सर्वदोषेभ्यः प्रधानो वात इति तदुपक्रमं पूर्वमाह—

वातस्योपक्रमः स्नेहः स्वेदः संशोधनं मृदु ।
स्वाद्वम्ललवणोष्णानि भोज्यान्यभ्यङ्गमर्दनम् ॥ १ ॥
वेष्टनं त्रासनं सेको मद्यं पैष्टिकगौडिकम् ।
स्निग्धोष्णा बस्तयो बस्तिनियमः सुखशीलता ॥ २ ॥
दीपनैः पाचनैः सिद्धाः स्नेहाश्चानेकयोनयः ।
विशेषान्मेध्यपिशितरसतैलानुवासनम् ॥ ३ ॥

वातस्येत्यादि । वातस्य स्नेहादिरुपक्रमः कर्तव्यः । वातस्योपक्रमः स्नेहः । स्नेहस्य प्रागुपादानं श्रेष्ठत्वात् । ततः स्वेदः । कृतस्नेहस्वेदस्य संशोधनद्रव्यम् तच्च मृदु, न तीक्ष्णं, तीक्ष्णस्य वातकोपहेतुत्वात् । अथवा संशोधने मृद्विति । बहुशोधने लब्धावकाशाद् वायुकोपः । तथा स्वाद्वादीनि

---

१. हेतुलिङ्गोपशान्तिषु इति मुद्रितचरकपाठः.

भोज्यानि भक्ष्याणि । तथाभ्यङ्गश्च मर्दनं च पाण्यादिभिः स्निग्धोष्णादिवात-हरपिण्डबन्धेनोपनाहश्च । 'अभ्यङ्गपूर्वमुपनाह' इति वचनात् । वेष्टनं शाटि-कादिना । त्रासनं खड्गव्याघ्रग्राहस्तराजपुरुषदर्शनादिना । तीव्रः शीघ्रोत्पत्ति-विनाशो भयवेगस्त्रासः । भयत्रासयोर्भेदो बोद्धव्यः, भयस्य वातकोपहेतुत्वात् । त्रासस्य वातकोपकरत्वेऽपि वातिकोन्मादहरत्वादुपक्रमत्वमित्यन्ये । हृद्याकारोऽ-प्याह—त्रासनस्य वातहरत्वं स्थानभ्रंशहेतुत्वात् न स्वरूपप्रत्यनीकतया ।

"विस्मापनं विस्मरणं वित्रासो हर्षणादि च ।
वातस्य स्थानमुक्त्यर्थमुपक्रमतयोच्यते ॥"

इति । सेको दशमूलक्वाथादिना । तथा मद्यं पैष्टिकं गौडिकं च । स्निग्धोष्णा वस्तय इत्युक्त्या शीतरूक्षं वस्तिमत्र निराकरोति । वस्तिनियमो यथाविधि वस्तिदानम् । अथवा वस्तिनियमः कर्मकालयोगाख्यत्रिपञ्चाशद्वस्तिसंख्यः 'प्राक् स्नेह एकः पञ्चान्त' इत्यादिना ग्रन्थेन यो दर्शितः । अथवा वस्ति-नियमो वस्तावप्रयुज्यमानेऽपि वस्तिविध्युक्त आचार इति हाटकः । वस्तिनि-यमो वस्तिष्वभ्यास इति हृद्याकारः । सुखं शीलयतीति सुखशीलः 'शीलि-कामिभक्ष्याचरिभ्यो णः' तस्य भावः सुखशीलता सौख्यवृत्तित्वं, स्त्रीगमनं विनेति योज्यं, 'स्त्रीसम्पर्कवर्जश्च हैमन्तो विधिरि'ति वचनात् । दीपनपाचन-द्रव्यसिद्धास्तिलप्रियालाक्षोलाद्यनेकयोनयः स्नेहाश्च वातस्योपक्रम इति यो-ज्यम् । अनेकयोनयः स्थावरजङ्गमा इतीन्दुः । विशेषेण पुष्टमांसरसस्तथा तैलं तैलानुवासनं च, 'विशेषतस्तैलं मांसरसानुवासनम्' इति वचनात् । सर्वेभ्यो विशेषान्मेध्यपिशितरसादि प्राधान्येनावश्यं योज्यमित्यर्थः । मेध्यस्य पुष्टस्य पिशितस्य रसो मेध्यपिशितरसः । मद्यपिशितरसेति पाठान्तरम् ॥ १–३ ॥

पित्तस्य सर्पिषः पानं स्वादुशीतैर्विरेचनम् ।
स्वादुतिक्तकषायाणि भोजनान्यौषधानि च ॥ ४ ॥
सुगन्धिशीतहृद्यानां गन्धानामुपसेवनम् ।
कण्ठेगुणानां हाराणां मणीनामुरसा धृतिः ॥ ५ ॥
कर्पूरचन्दनोशीरैरनुलेपः क्षणे क्षणे ।
प्रदोषश्चन्द्रमा सौधं हारि गीतं हिमोऽनिलः ॥ ६ ॥

**अयन्त्रणसुखं मित्रं पुत्रः सन्दिग्धमुग्धवाक्।**
**छन्दानुवर्तिनो दाराः प्रियाः शीलविभूषिताः॥ ७॥**
**शीताम्बुधारागर्भाणि गृहाण्युद्यानदीर्घिकाः।**
**सुतीर्थविपुलस्वच्छसलिलाशयसैकते॥ ८॥**
**साम्भोजजलतीरान्ते कायमाने द्रुमाकुले।**
**सौम्या भावाः पयः सर्पिर्विरेकश्च विशेषतः॥ ९॥**

**पित्तस्येत्यादि**। उपक्रम इत्यनुवर्तते। सर्पिष्पानादिः पित्तस्योपक्रमः अभ्यासेन भविष्यत्संशोधनार्थं च सर्पिषैव स्नेहनं, न तैलादिना। सुगन्धि-शीतहृद्यानां गन्धानामुपसेवनम्। शीतद्रव्यप्रभावाद् गन्धः शीतः। अथवा गन्धानामिति गन्धद्रव्याणामुपसेवनमालेपनादि। सर्वत्र चैव गन्धशब्देन गन्धद्रव्याणां व्यवहारः। हाराणां मुक्तादाम्नां कण्ठेगुणसंज्ञानां वक्षसा धृति-र्धारणम्।

"कण्ठेगुणः स्मृतो हारः सप्तविंशतिमौक्तिकः।"

इति। अथवा कण्ठे गुणानां स्रजाम्। तथा मणीनां मरतकपद्मरागादीना मुरसा धृतिः। तथा कर्पूरादिभिः प्रतिक्षणमनुलेपनम्। गन्धानामित्युक्तेऽपि कर्पूरादीनां ग्रहणमतिशयस्थापनार्थम्। तथा प्रदोषादि पित्तस्योपक्रमः। एतान् सेवेतेत्यर्थः। प्रदोषो रात्रिमुखम्। सुधाया इदं सौधं धवलगृहम्। हारि गीतं हारि मनोहारि रम्यं गानं, "मृदु मनोहारि गीतश्रवणमि"ति वच-नात्। मित्रम् अयन्त्रणसुखं न विद्यते यन्त्रणा यस्मिन् तथाविधं सुखं यस्मिन् तथाविधम्(मित्रं)तथा सन्दिग्धा अव्यक्ताः मुग्धा अप्रौढा वाग् वाणी यस्य स एवंविधः पुत्रः। दाराः कलत्राणि वल्लभाः सुशीलाश्च। तथा छन्दानुवर्त्तिन-श्चित्तानुगुणकारिणः। 'वशाभिप्राययोश्छन्दः' इति वैजयन्ती। शीताम्बुधारा गर्भ अभ्यन्तरे येषां तानि शीताम्बुधारागर्भाणि गृहाणि धारागृहाणि। उद्या-नान्युपवनानि। दीर्घिकाश्च गृहपुष्करिण्यः। तथा सौम्या भावाश्च पित्तस्यो-पक्रमः। क स्थितस्य। सुतीर्थविपुलस्वच्छसलिलाशयसैकते यः कायमानः तृणगृहं तस्मिन् कायमाने स्थितस्य। (सौम्या भावा अन्याः मनोऽनुकूलाः पदार्थाः)। शोभनं तीर्थं यः स एवम् सुतीर्थश्चासौ विततविमलजलाशयश्च सुतीर्थविपुलस्वच्छसलिलाशयः तस्य समीपे सैकतं तस्मिन्। सिकता अस्मिन्

देशे सन्तीति "सिकताशर्कराभ्यां च" इत्यण् । समूहार्थे तु ठन् दुर्निवारः स्यात् । कायमाने प्रपायामिति हृद्याकारः । कीदृशि कायमाने, साम्भोजं सपद्मं जलं यस्य तस्मिंस्तीरान्ते स एवं साम्भोजजलस्तीरान्तो यस्मिन् कायमाने स एवं तस्मिन् । तथा तद्रूपै(द्रुमै)र्वृक्षैराकुले व्याप्ते । सौम्या भावा इति सङ्ग्रहोक्ताः । कथमिति, मधुपानलोभादिबहुग्रन्थविस्तीर्णाः । शीता वस्तु-जातय इति पाठ्ये । ग्रैष्मिको विधिश्च हितः । वचनं हि—'सौम्याः सर्वभावा ग्रैष्मिको विधिर्दिवास्वप्नवर्जश्चे'ति । दिवास्वप्नस्य पित्तश्लेष्मकरत्वाद् । विशेषेण तु पयो घृतं विरेकश्चोपक्रमः ॥ ४–९ ॥

**श्लेष्मणो विधिना युक्तं तीक्ष्णं वमनरेचनम् ।**
**अन्नं रूक्षाल्पतीक्ष्णोष्णं कटुतिक्तकषायकम् ॥ १० ॥**

**दीर्घकालस्थितं मद्यं रतिप्रीतिप्रजागरः**
**अनेकरूपो व्यायामश्चिन्ता रूक्षं विमर्दनम् ॥ ११ ॥**
**विशेषाद्वमनं यूषः क्षौद्रं मेदोघ्नमौषधम् ।**
**धूमोपवासगण्डूषा निःसुखत्वं सुखाय च ॥ १२ ॥**

श्लेष्मण उपक्रमः । विधिना शास्त्रोक्तेन युक्तं वमनं विरेचनं रूक्षादि-गुणयुक्तमन्नं च । रतिप्रीतिः रत्या रमणेन जाता प्रीतिः । प्रीतिः पुनरतीव सन्तर्पणा । तथा प्रजागरोऽतिजागरणम् । अनेकरूपो व्यायामः गमनलङ्घनबाहुयुद्ध शस्त्रयुद्ध(व्यायामा ? व्यवाया)श्वगजारोहणादिरूपः । तथा रूक्षद्रव्य-कृतमर्दनानामुन्मर्दनम् । विशेषाद् वमनादिकम् । तथा निस्सुखत्वं सुखाभावः दुःखरूपत्वं सुखकारणान्यासेवा । सुखायारोग्याय जायते, श्लेष्मवृद्धिशमन-त्वात् ॥ १०–१२ ॥

इदानीं पृथग् दोषोपक्रमं संसर्गसन्निपातयोरतिदिशति—

**उपक्रमः पृथग् दोषान् योऽयमुद्दिश्य कीर्तितः ।**
**संसर्गसन्निपातेषु तं यथास्वं विकल्पयेत् ॥ १३ ॥**

**उपक्रम** इत्यादि । पृथक् प्रत्येकं दोषान् वातादीनुद्दिश्याश्रित्य य उपक्रमोऽयमुक्तः संसर्गेषु सन्निपातेषु च तमुपक्रमं यथास्वं प्रवृद्धदोषानुसारेण विकल्पयेत् निरूप्य प्रयुञ्जीतेत्यर्थः । यथा वातपित्तसंसर्गे वातपित्तोपक्रमौ मिश्रौ, वातकफसंसर्गे वातकफोपक्रमौ इत्यादि । एवं सन्निपातेऽपि निरूप्यो-

पक्रमो योज्यः। यथा ह्याकारोऽप्याह—यथास्वमिति। तस्य तस्य विकल्पयेत् विविधं कल्पयेदिति ॥ १३ ॥

संसर्गे न केवलं पूर्वोक्तं यावदिदमपीत्युपक्रमान्तरमाह—

**ग्रैष्मः प्रायो मरुत्पित्ते वासन्तः कफमारुते।**
**मरुतो योगवाहित्वात् कफपित्ते तु शारदः ॥ १४ ॥**

ग्रैष्म इत्यादि। उपक्रम इति वर्तते। वातपित्तसंसर्गे ग्रीष्मचर्याविहितः शीतप्रधान उपक्रमः कार्यः प्रायोऽविशेषेण। कफमारुते संसर्गे वासन्तः वसन्तोक्तो रूक्षप्रधान उपक्रमः कार्यः। प्राय इति अत्रापि योज्यम्। ननु ग्रीष्मोपक्रमः केवलं पित्तहरः शीतप्रधानत्वात्, वसन्तोपक्रमः कफहरो रूक्षप्रधानत्वात्, शीतरूक्षसेवया च वातस्य कोपः स्यात्, तत् कथमेवं संसर्गे विधीयते इत्याशङ्कयाह—मरुतो योगवाहित्वादिति। स्वसंयुक्तस्य दोषस्य कार्यमतिशयेन करोतीति योगवाही वायुः। भेषजेषु मधु च योगवाही। उक्तं च—

"योगवाहीति तद् ज्ञेयं यत् संयुक्तस्य वर्धनम्।
शक्त्या तदविरुद्धं च स्वं कर्म विदधात्यपि ॥"

इति। येनैव संयुज्यते तेनैवैकयोगक्षेमः स्वभावाद् भवतीत्यर्थः।

'दाहकृत् तेजसा युक्तः शीतकृत् सोमसंश्रयात्'

इति वचनात्। अत्रायं भावः—यदा किल वायुः पित्तेन युज्यते तदा दाहादीन् कुर्यात् न च पित्तशमे सति दाहादिकं कर्तुं मरुत् समर्थः अपिच ग्रीष्मे शीतमेव सेव्यते इति नायं नियमः किं तर्हि, स्निग्धाद्यपि। तस्मान्मरुत्पित्ते ग्रीष्मविधिर्युक्तः। पित्तेन सह स्थितस्य वायोः पित्तचिकित्सा, कफेन तु स्थितस्य कफचिकित्सा, स्वभाववशादिति भावः। तथा कफपित्ते संसर्गे शारद उपक्रमः कार्यः शरदृतुचर्याविहितो विधिः कार्यः, त(स्य ? स्मिन्) काले कफ(स्र ?)स्य पित्तेन सह भावात्। तथा चागमः—तस्य चानुबलः कफः इति। 'पित्तस्य सर्पिषः पानमि'त्यादिचिकित्सा च पित्तश्लेष्मणोः सामान्येनोक्ता। सन्निपाते वर्षर्तुविहित उपक्रमो योज्यः। प्रावृषि हि दोषत्रयकोप उक्तः। अत एव तत्र दोषत्रयशमनमुक्तं 'भजेत् साधारणं सर्वमि'त्यादि। किन्त्वधिकवाते सन्निपाते वार्षिको विधिः तस्मिन् पित्तकफयोः किञ्चित्कोपः वातस्यैव प्राधान्येन कोपः, कालस्वभावात् ॥ १४ ॥

उपक्रमप्रसङ्गादुपक्रमयोग्यं कालमाह—

चय एव जयेद्दोषं कुपितं त्वविरोधयन् ।
सर्वकोपे बलीयांसं शेषदोषाविरोधतः ॥ १५ ॥

चय इत्यादि । चयकाल एव दोषान् वातादीन् जयेत् । तथा छिन्नमूलत्वान्न विकुर्वीतेति । न कोपकालं प्रतीक्षेतेति सूचनार्थमेव शब्दः । कथं जयेदित्याह—कुपितं दोषमविरोधयन् इति अरुणदत्तः । अथवा इन्दुराह—सर्वं च दोषं चयकाले जयेत् । तथा छिन्नमूलत्वान्न विकुर्वीत । यदा तु चयकाल उपेक्षितः सन् कुपितस्तदा अविरोधयन् अकुपितेन दोषान्तरेणेत्यर्थाल्लभ्यते । तेन कुपितस्तथा जेतव्यः, यथा तद्विपरीतैराहारादिभिः सदृशत्वाद् दोषान्तरं न कुप्यतीति । अथवा सर्वान् दोषान् चयावस्थायामेव जयेत् । एकस्मिन् दोषे सञ्चिते अन्यस्मिन् दोषे कुपिते कथमित्याह—कुपितं त्विति । तुशब्द एवार्थे । चितमन्यदोषमविरोधयन् कुपितमेव दोषं जयेत् । चितमन्यदोषमिति वाक्यशेषः । प्रायेणायमेवार्थः समीचीन इति मन्यामहे । सर्वेषु कुपितेषु कथमित्याह—सर्वकोपे बलीयांसमिति । यदा तु सर्वे दोषा युगपत् कुपितास्तदा बलीयांसं बलवत्तरमधिककुपितं दोषं जयेत् । कथं, शेषदोषाविरोधतः शेषयोः स्वल्पकुपितयोर्दोषयोरविरोधेन कुपितयोरितरयोर्बलं संस्तम्भ्य बलवत्तमस्योपक्रमः, बलवत्तमस्य पीडाकरत्वात् । सर्वकोप इति असाम्येनेत्यर्थाल्लभ्यते । यदा तु सर्वे दोषाः साम्येन कुपितास्तदा कथं जयेदिति सङ्ग्रहे उक्तम्—

"क्रमान्मरुत्पित्तकफान् सर्वत्र सदृशे बले ।
वातादीनां यथापूर्वं यतः स्वाभाविकं बलम् ॥"

इति । कफानुपूर्व्येति केचित् । ननु वातादीनां ग्रीष्मादिषु चयादयः प्रकृताः, तत् कथमिदानीं सर्वकोप इत्युक्तवानिति चेत् आहारादिवशात् सर्वश्चयादयो भवन्तीत्युक्तम् ॥ १५ ॥

अविरोधेन जयः किमर्थमित्यत आह—

प्रयोगः शमयेद्व्याधिं योऽन्यमन्यमुदीरयेत् ।
नासौ विशुद्धः शुद्धस्तु शमयेद्यो न कोपयेत् ॥ १६ ॥

**प्रयोग इत्यादि ।** यः प्रयोग औषधाहारादियोजनारूपः अन्यं व्याधिं बलवन्तं शमयेत् अन्यं व्याधिमुदीरयेत् प्रकोपयेत् नासौ विशुद्धः न श्रेष्ठ इत्यर्थः । शुद्धस्त्वित्यादिना निर्दोषः प्रयोगः प्रदर्श्यते । यः प्रयोगो बलवन्तं व्याधिं शमयेन्न कोपयेदन्यमसौ तु शुद्धः श्रेष्ठः ॥ १६ ॥

ननु दोषाणां सकलशरीरव्यापित्वेऽपि कोष्ठाख्यः प्रधान आश्रयः अतस्तत्र बाहुल्येन तिष्ठन्ति । एवञ्च सति कथं तेषां रक्ताद्याश्रयणे रोगकर्तृत्वमित्याह । अथवा पूर्वोक्तस्योपक्रमस्य स्वस्थानपरस्थानभेदेन भेदं दर्शयितुकामः स्वस्थानमुल्लङ्घ्य परस्थानाप्तौ कारणमाह । अन्येऽपि 'व्यायामादि'त्यादिना दोषाणामन्यस्थानप्राप्तिं ब्रूत इत्याहुः ।

**व्यायामादूष्मणस्तैक्ष्ण्यादहिताचरणादपि ।**
**कोष्ठाच्छाखास्थिमर्माणि द्रुतत्वान्मारुतस्य च ॥ १७ ॥**
**दोषा यान्ति**

**व्यायामादित्यादि ।** व्यायामादिभिश्चतुर्भिर्हेतुभिः दोषा वातादयः कोष्ठादुदराच्छाखास्थिमर्माणि यान्ति कोष्ठं मुक्त्वा शाखास्थिमर्माणि यान्ति । शाखा रक्तादयस्त्वक् च । अस्थिमर्म अस्थिसन्धिसंज्ञाः । तत्र व्यायामेन श्रमजननव्यापारेण क्षोभितो वायुर्व्यायामकृतैर्देहक्षोभश्रमोष्णादिभिः शिथिलं दोषं व्यायामचलितात् कोष्ठात् स्वस्थानाच्च्यावयित्वा पर्याकुलं शाखादिषु क्षिपति । तथोष्मणस्तैक्ष्ण्यात् परित्यक्तनिबिडभावाद् दोषा विलीना इवोष्मणावृतैः स्रोतोभिः शाखादीनि यान्ति । अरुणदत्तोऽपि—*अग्न्यादितापादिसम्बन्धिन उष्मणस्तैक्ष्ण्यात् तीक्ष्णेन ह्यूष्मणा विलायिता दोषास्तेनैव चोष्मणा विवृतेषु स्रोतोमुखेषु सत्सु शाखादीनि यान्तीत्याह । इन्द्राकारस्तु — ऊष्मणो जाठराग्नेस्तैक्ष्ण्यादूर्ध्वगतित्वादित्याह । तथा अहिताचरणाद् दोषाणां कोष्ठाख्यस्थानभ्रंशकारणस्वरूपापथ्यसेवनात् शाखादीनि यान्ति । अपथ्येन हि सेवितेन दोषाः स्वप्रमाणादतिरिच्यमानाः कोष्ठमापूर्य वार्षिका इव जलौघा निम्नोन्नतानीव शाखादीनि प्रतिपद्यन्ते । अपिः समुच्चये । तथा मारुतस्य कारणान्तरेण स्वभावेनैव द्रुतत्वात् शीघ्रवाहित्वात् कोष्ठाच्छाखास्थिमर्माणि वातादयो यान्ति ॥

---

* 'अग्न्यातपादिसम्बन्धिन' इत्यरुणदत्तमुद्रितपाठः ।

अथ शाखादौ स्थितानां यदा कोष्ठानयनप्रयोजनं तदा कथमागच्छन्तीत्याह— अथवा शाखादिभ्यः कथं दोषाः काष्ठ यान्तीत्याह ।

**तथा तेभ्यः स्रोतोमुखविशोधनात् ।**
**वृद्धयाभिष्यन्दनात्पाकात् कोष्ठं वायोश्च निग्रहात् ॥ १८ ॥**

**तथेत्यादि** । तथा तद्वदेव तेभ्यः शाखास्थिमर्मभ्यः कोष्ठं दोषा यान्तीति सम्बन्धः । स्रोतसां मुखानि तेषां विशोधनाद् विवरणात् दोषाणां चलनेन स्रोतोमुखानां विवरणात् दोषाः कोष्ठं यान्ति । तथा वृद्ध्या वर्धनेन शाखास्थिमर्मसु दोषसञ्चयेन वृद्धा दोषाः स्वानि स्रोतांस्यापूर्य कोष्ठं यान्ति अभिष्यन्दनात् । पित्तश्लेष्मणोर्द्रवत्वाद् । अभिष्यन्दनं नामापां कर्म(तन्ना)ग्नितापादितीक्ष्णोष्णादिसंश्लेषादेव, अपि तु क्षीरदध्याद्यभिष्यन्दिभोजनादपि । अथवा वृद्ध्या यदभिष्यन्दनं स्रावस्तेन कोष्ठं यान्ति । तथा पाकान्निरामात् शाखादिस्था दोषाः पाचनादिभिः पक्वाः परित्यक्तसन्धानाः क्वचिदनासज्जन्तः कोष्ठं यान्ति । तथा वायोश्च निग्रहाद् वायुना जठरं प्रति प्रेरितत्वात् । चशब्दान्न केवलं पूर्वेभ्यो हेतुभ्यः, यावद्वायुप्रेरणाच्चेत्यर्थः । अथवा प्रेरकस्य वायोर्निग्रहाद्वाधिक्यनाशनात् कोष्ठं यान्ति । प्रेर्यत्वं प्रेरकत्वं च वायोरङ्गीकृत्य दोषा इति बहुवचननिर्देशः । वायोश्च वाय्वन्तरप्रेरणं विद्यते ॥ १८ ॥

तत्रस्था दोषाः किं कुर्युरित्याह—

**तत्रस्थाश्च विलम्बेरन् भूयो हेतुप्रतीक्षिणः ।**
**ते कालादिबलं लब्ध्वा कुप्यन्त्यन्याश्रयेष्वपि ॥ १९ ॥**

**तत्रस्था इत्यादि** । तत्रस्थाः शाखास्थिमर्मगताः कोष्ठगताश्च दोषा विलम्बेरन् , व्याधिमकृत्वा तिष्ठन्ति न तु रोगं कुर्वन्ति । यस्मात् ते भूयोहेतुप्रतीक्षणः । 'निमित्तकारणहेतुषु सर्वासां प्रायोदर्शनाद्धेतौ प्रथमा । भूयो हेतुप्रतीक्षित्वादित्यर्थः । वृद्धोऽपि हि दोषः कोष्ठे शाखादौ वा मार्गान्तरे गतो हीनशक्तित्वान्न रोगोत्पादनसमर्थो भवति, पुनर्निदानं सहायमपेक्षते ॥

यद्येवं किं कदाचिदप्यन्यस्थानगता दोषा हीनशक्तित्वान्न रोगान् कुर्युरित्याह— ते दोषाः कालदेशापथ्यादेः समानगुणाद् बलं कालदेशाहारादीनां वा बलं सामर्थ्यमात्मसहकारित्वेन लब्ध्वा कुप्यन्ति विकारमुत्पादयन्तीत्यर्थः । कुत्र स्थाने, अन्याश्रयेष्वपि । कोष्ठाश्रयाः शाखास्थिमर्मस्वपि

शाखास्थिमर्मगताः कोष्ठेऽपीत्यर्थः । न केवलं स्वस्थान एव कुप्यन्तीति सूचनार्थोऽपि शब्दः । हाटकस्त्वाह— तत्रस्थाः कोष्ठस्थाः शाखादिस्थाश्च विलम्बेरन् न तु रोगं कुर्वन्ति, भूयो हेतुप्रतीक्षिणः कोष्ठे शाखादौ वा मार्गान्तरे गता रोगोत्पादनसमर्था न भवन्ति हीनशक्तित्वेन भूयो हेतु-प्रतीक्षित्वात् । येऽधिकशक्तयो न ते सदृशकालादिमपेक्षन्ते, अपि तु स्वयमेव रोगं कुर्वन्ति । ये हेतुप्रतीक्षिणो विलम्बितास्ते कालादितो बलं लब्ध्वा कुप्यन्ति । अन्याश्रयेष्वपि दोषान्तरस्थानेष्वपीत्यपिशब्दात् स्वाश्रयेषु । तथाहि तत्र वायुः कदाचित् स्वे यथोक्ते स्थाने कुप्यति कदाचित् पित्तस्य, कदाचित् श्लेष्मणः । एवं पित्तश्लेष्मणोरपि वाच्यम् । अस्मद्गुरवस्तु— तत्रस्था दोषाः कुप्यन्ति । ये पुनः हेतुप्रतीक्षिणः सन्तः विलम्बेरन्, ते भूयः कालादिबलं कालार्थकर्मभ्यो बलं लब्ध्वा कुप्यन्तीत्याहुः अत्र शेषं पूर्ववद् व्याख्येयम् ॥ १९ ॥

स्वस्थानस्थानां चिकित्सा स्पष्टैव । परस्थानगतानां दोषाणां बलापेक्षया चिकित्सामाह—

तत्रान्यस्थानसंस्थेषु तदीयामबलेषु तु ।
कुर्याच्चिकित्सां स्वामेव बलेनान्याभिभाविषु ॥ २० ॥

तत्रेत्यादि । तत्र तेष्वन्यस्थानस्थस्वस्थानस्थेषु मध्ये अन्यस्थान-संस्थेषु अन्यस्य स्थानमन्यस्थानं तत्र सन्तिष्ठन्ते इत्यन्यस्थानसंस्थाः दोषान्तरस्थानस्थिताः आगन्तव इत्यर्थः । तेषु दोषेष्वबलेषु तदीयां स्थानि-दोषसंबन्धिनीं चिकित्सां कुर्यात्, न स्वकीयाम् । तदित्यनेनान्यशब्दोप-लक्षितः स्थानी परामृश्यते । तुरवधारणे । अबलेष्वेव, न बलवत्सु । बलवत्सु हि स्वामेव चिकित्सामाह—

स्वामेवेत्यादि । आगन्तुषु स्वशक्त्या अन्याभिभाविषु अन्यं स्थानिदोषमभिभवितुं शीलं येषां तेऽन्याभिभाविनः स्थानिदोषं परिभूय तत्र ये सन्तिष्ठन्त इत्यर्थः । तेषु स्वामेव निजामेवागन्तुसम्बन्धिनीं चिकित्सां कुर्यात् स्थान्यागन्तुदोषयोर्यो बलवान् तस्य चिकित्सा कार्ये-त्यर्थः ॥ २० ॥

पक्षान्त(रे: ? र)मपि कुत्रचित् (कश्चि ? त्कश्चि)द् विद्यते इत्याह—

**आगन्तुं शमयेद्दोषं स्थानिनं प्रतिकृत्य वा ।**

**आगन्तुमित्यादि** । स्थानिनं दोषं प्रतिकृत्य यथासौ स्थानिदोष आगन्तुचिकित्सानिर्वर्तनान्न विकारं कुर्यात् तथा तस्य प्रतीकारं कृत्वा पूर्वं स्वैरेवोपक्रमैः बलिनमप्यागन्तुं दोषं शमयेच्चिकित्सेत् । न केवलमन्यस्थानसंस्थेष्वबलेषु स्थानिदोषचिकित्सां कुर्यात् यावदागन्तुदोषचिकित्सामपि कुर्यादित्यर्थः । अथासौ स्थानिदोष आगन्तुदोषेण बलवत्त्वादभिभूयेत ततोऽस्य विकारकरणं प्रत्यसमर्थत्वात् तत्प्रतीकारमकृत्वैवागन्तुं शमयेदिति वाशब्दार्थः । पाठ्यकारस्त्वाह — आगन्तुमित्यादि । दुर्बलं प्रबलमित्याद्यनिरूप्य स्थानिनः प्रतीकारं कृत्वा पश्चादागन्तुदोषं शमयेद् वा । वाशब्दोऽवधारणे इति । अथवा तत्रेत्यादिना स्थान्यागन्तुदोषयोर्यो बलवान् तस्य चिकित्सा कार्येत्युक्ता समबलयोः स्थान्यागन्तुकयोः किं कार्यमित्याह — आगन्तुमित्यादि । स्थानिनं दोषं प्रतिकृत्यागन्तुं दोषं शमयेत् । आगन्तुं प्रतिकृत्य स्थानिनं शमयेद् वा इति वाशब्दार्थः द्वयोः समबलत्वान्न नियम इत्यर्थः । अन्यस्थानसंस्थेष्विति बहुवचननिर्देशः पर्यायेण दोषाणां स्थितत्वात् । अन्यथा द्वयोरेकस्य वा अन्यस्थानस्थितत्वं सम्भवति न त्रयाणाम् । इति दोषाणां प्राकृतं वैकृतं च स्वरूपमुक्तम् ॥

तिर्यग्गतेषु च दोषेषु चिकित्सां दर्शयति अथवा चिकित्साप्रसङ्गात् तिर्यग्गतेषु दोषेषु चिकित्सामाह—

**प्रायस्तिर्यग्गता दोषाः क्लेशयन्त्यातुरांश्चिरम् ॥ २१ ॥**
**कुर्यान्न तेषु त्वरया देहाग्निबलवित्क्रियाम् ।**

**प्राय इत्यादि** । तिर्यग्गता दोषाः प्रायो बाहुल्येनातुरांश्चिरं चिरकालेन क्लेशयन्ति पीडयन्ति तेषु तिर्यग्गतेषु दोषेषु त्वरया शीघ्रमेव क्रियां वमनादिं न कुर्याद् वैद्य इति शेषः । कीदृशो वैद्यः देहाग्निबलवित् देहाग्निबलाभिज्ञः ॥

कथं तेषामुपक्रम इत्याह —

**शमयेत्तान् प्रयोगेण सुखं वा कोष्ठमानयेत् ॥ २२ ॥**

**शमयेदित्यादि** । तांस्तिर्यग्गतान् दोषान् भृशमनुद्रिक्तान् प्रयोगेण शास्त्रविहितेन संशमनीयेनौषधेन शमयेत् । सुखं वेति । यथा देहपीडा न

भवति तथोद्रिक्तान् क्रमेण कोष्ठमानयेत् वृद्ध्याभिष्यन्दनादित्यादिना । अस्मद्गुरवस्तु (तः ? तान्) तिर्यग्गतान् दोषान् शमनौषधैः शमयेत् । अथवा तान् दोषान् प्रयोगेण स्नेहस्वेदादिना यथासुखं कोष्ठमानयेदित्याहुः ॥ २२ ॥

**ज्ञात्वा कोष्ठपपन्नांश्च यत्रासन्नं विनिर्हरेत् ।**

ज्ञात्वेत्यादि । तिर्यग्गतान् दोषान् कोष्ठं प्राप्तानवगम्य यथासन्नम् आसत्त्यनुसारेण विनिर्हरेच्च शोधयेत् यो यस्यासन्नमार्गः गुदं मुखं घ्राणं वा तेनैव यथासन्नं वमनादिना विनिर्हरेत् । कोष्ठस्योर्ध्वभागस्थितं वमनेनाधोभागस्थितं विरेकेण निष्कासयेदित्यर्थः । अधश्चेद् वस्तिना ऊर्ध्वं चेद् वमनेनेति पाठ्यकारः ॥

सम्प्रति दो(षको? षो)पक्रमप्रसङ्गेन दोषाणां सामानां लक्षणं प्रतीकारश्चोच्यते अथवा शोधनप्रसङ्गेन सामानामपि दोषाणां शोधनं प्राप्तं प्रतिषेद्धुकामः सामलक्षणमाह—

**स्रोतोरोधबलभ्रंशगौरवानिलमूढताः ॥ २३ ॥**
**आलस्यापक्तिनिष्ठीवमलसंगारुचिक्लमाः ।**
**लिंगं मलानां सामानां निरामाणां विपर्ययः ॥ २४ ॥**

स्रोत इत्यादि । स्रोतसां रोधः स्रोतोरोधः बलभ्रंशो बलस्य हानिः अनिलस्य वायोर्मूढता सम्यगसञ्चारः आलस्यं तन्द्रा । अपक्तिराहारस्यापाकः । अपक्तिराहारस्य मलानां दोषाणां चेति हाटकः । निष्ठीवो मुखस्रावः मलस्य पुरीषादेः सङ्गः इत्येतत् सामानां मलानां लिङ्गं लक्षणं निरामाणां विपर्ययोऽस्माद् वैपरीत्यं सामलक्षणाभावः ॥ २४ ॥

ननु यत्सम्बन्धाद् दोषाणां सामत्वे तस्यामस्य किं स्वरूपमित्याह —

**ऊष्मणोऽल्पबलत्वेन धातुमान्द्यमपाचितम् ।**
**दुष्टमामाशयगतं रसमामं प्रचक्षते ॥ २५ ॥**

ऊष्मण इत्यादि । ऊष्मणो जाठराग्नेः अल्पबलत्वेन दौर्बल्येनाद्यं प्रथमं धातुं रसाख्यं रसधातुत्वेन परिणमन्तमाहाररसमित्यर्थः । अपाचितमामं प्रचक्षते वदन्त्याचार्या इति शेषः। किम्भूतं रसमामाशयगतम्। तथा दुष्टं दोषदूषितं वाताद्यनुशायितम् । अपाचितमाद्यं धातुमिति सिद्धे रसमिति कथमिति चेत् पक्वमन्नं द्विधा भवति किट्टं सारं च । तत्र सारः पुनः सप्तभिरग्निभिः

पच्यते तत्र पृथग्भूतमाहाररसं रसाग्निना अपक्वं धातुत्वमप्राप्तं व्यानेनामाशयानीतं रसाग्निवैषम्याद् वा खवैगुण्याद् वा सर्वत्राप्रसृतं तत्रैव स्थितं दुष्टमाममिति ज्ञेयं इति सूचनार्थम्। अथवा रसग्रहणं पवननिरासार्थम्। अन्यथाऽद्यो धातुर्वाताख्योऽप्याशङ्क्येत। वातादीनामपि हि धारणाद् धातुसंज्ञास्त्येव ॥ २५ ॥

आमोत्पत्तौ मतान्तरं दर्शयति —

**अन्ये दोषेभ्य एवातिदुष्टेभ्योन्योन्यमूर्च्छनात्।**
**कोद्रवेभ्यो विषस्येव वदन्त्यामस्य सम्भवम् ॥ २६ ॥**

अन्य इति। अन्ये आचार्याः दोषेभ्य एव वा(ता)दिभ्योऽतिदुष्टेभ्योऽन्योन्यमूर्छनात् परस्परमिश्रीभावात् आमस्य सम्भवं वदन्ति दोषाणां परस्परमूर्छनात् फेनवदामसम्भवः। केभ्यः कस्येव। यथा कोद्रवेभ्यो देशकालाद्यपेक्षया विषस्य सम्भवं वदन्ति। विषशब्दोऽत्र मदवचनः अन्योन्यमूर्छनादिति देशकालादीनां मूर्च्छनविशेषाद् यथा कोद्रवेषु विषं सम्भवति। तद्वद् दोषेभ्य आमस्य सम्भवः। यथा कोद्रवा विषं सम्पद्यन्ते एवं दोषा अप्यतिदुष्टाः स्वेनैव भागेनामं सम्पद्यन्ते इत्यर्थः ॥ २६ ॥

आमेन संपृक्तानामन्वाख्यां दर्शयति —

**आमेन तेन संपृक्ता दोषा दूष्याश्च दूषिताः।**
**सामा इत्युपदिश्यन्ते ये च रोगास्तदुद्भवाः ॥ २७ ॥**

आमेनेत्यादि। तेन पूर्वोक्तलक्षणेनामेन संपृक्ताः संयुक्ता दोषा वातादयो दूष्याश्च रसादयः कीदृशा दूषितास्तैरेव सामैदोषैः सहामेन सामा इत्युपदिश्यन्ते तत्र तत्र प्रदेशे तन्त्रे भण्यन्ते — ये च रोगा ज्वरादयः तदुद्भवाः सामदोषसमुत्थास्ते चामेन संपृक्ताः सामा इत्युपदिश्यन्ते —

अजीर्ण इव शूलघ्नं सामे तीव्ररु(जे? जि)ज्वरे।

इति। हृद्याकारस्त्वाह — तेनामेन संपृक्ता दोषा वातादयो दूष्याश्च रसादयः सामा इत्युपदिश्यन्ते। नन्वेतत् सिद्धमामसहितं सामेति "सहस्य सः" इति सूत्रस्य विद्यमानत्वाद् इति चेद्। उच्यते। शब्दगत्या सिद्धमनूद्यान्यद् विधीयते। आमजनितदोषधातुजनितानां रोगाणां सामत्वमत्र विधीयते तच्च शब्देनाप्रसिद्धमित्यदोषः। ये च रोगा इति। तदुद्भवाः तच्छब्देन सामा दोषा धातवश्च गृहीताः तेभ्यो जाता रोगाश्च सामा एव इति ॥ २७ ॥

सामा अपि ये दोषा न निर्हार्यास्तान् दर्शयति । ग्रन्थकारोऽपि आमं न शोधनीयमिति पूर्वोक्तमेवोपसंहरतीत्याह —

**सर्वदेहप्रविसृतान् सामान् दोषान्न निर्हरेत् ।**
**लीनान् धातुष्वनुत्क्लिष्टान् फलादामाद्रसानिव ॥ २८ ॥**
**आश्रयस्य हि नाशाय ते स्युर्दुर्निर्हरत्वतः ।**

सर्वेत्यादि । सर्वदेहप्रविसृतान् सर्वस्मिन् शरीरे व्याप्तान् सामान् दोषान् वातादीन् धातुषु रसादिषु लीनान् श्लिष्टान् अनुत्क्लिष्टान् स्वस्थानादचलितान् न निर्हरेत्, वमनादिभिर्न शोधयेत् । एकदेशस्थितानां सामानां दोषाणां शोधनं ज्वरातिसारयोर्विधीयते 'ज्वरे सामे विशेषतः वमनमि'ति । 'मध्यदोषो विशोधयन्नि'ति(च ।) सर्वदेहव्याप्ताः समा दोषा न निर्हार्याः । कुतः । हि यस्मात् ते निर्ह्रियमाणा आश्रयस्य शरीराख्यस्य नाशाय स्युः । दुर्निर्हरत्वतो दुःखेन निर्हर्तुं शक्यत्वाद् । अत्र दृष्टान्तमाह — फलादामाद् रसानिव इति । यथा फलादाम्रादेरपक्वान्निर्ह्रियमाणो रसो दुर्निर्हरत्वादाश्रयस्य फलस्य विनाशाय भवति एवं दोषा अपीति ॥

अपि तर्हीदृशे दोषे किं कार्यमित्याह —

**पाचनैर्दीपनैः स्नेहैस्तान् स्वेदैश्च परिष्कृतान् ॥ २९ ॥**
**शोधयेच्छोधनैः काले यथासन्नं यथाबलम् ।**

पाचनैरित्यादि । दीपनैरिति पाचनानां स्नेहानां च विशेषणं मध्यदीपकत्वात् । तांस्तथाविधान् दोषान् दीपनैरग्निदीप्तिकृद्भिः पाचनैर्ज्वराद्युक्तैः दीपनैः स्नेहैश्च स्वेदैश्च परिष्कृतान् संस्कृतान् शोधनयोग्यतामापादितान् । पक्वानित्यर्थः । यथासन्नं यथाबलं च कृत्वा यथोक्ते काले शोधनैर्वमनादिभिः शोधयेत् । यथासन्नमिति यो यस्य दोषस्यासन्नो मार्गस्तेनैव तं शोधयेत् । यथाबलमातुरस्योत्तममध्यमाधमबलावेक्षया मृदुमध्यतीक्ष्णैः शोधनैः शोधयेदित्यर्थः ॥

यथासन्नमित्युक्तं (यस्य ? कस्य) को मार्ग आसन्न इति व्याकरोति —

**हन्त्याशु युक्तं वक्त्रेण द्रव्यमामाशयान्मलान् ॥ ३० ॥**
**घ्राणेन चोर्ध्वजत्रूत्थान् पक्वाधानाद्गुदेन च ।**

१. मध्यदोषो विशोधयन्निति मुद्रिताष्टाङ्गहृदयपाठः ।

हन्तीत्यादि । वक्त्रेण युक्तं पीतं द्रव्यं वमनौषधं तेनैवामाशयान्मलान् दोषानाशु हन्ति हरति । घ्राणेन युक्तं पीतमूर्ध्वजत्रूत्थान् मलान् घ्राणास्याभ्यामाशु हन्ति । चशब्दो वक्त्रसमुच्चयार्थ इत्यन्ये । गुदेन प्रयुक्तं द्रव्यं गुदेन पक्वाधानात् पक्वाशयात् मलानाशु हन्ति सकलशरीरगाकर्षणेऽपि विशेषार्थमाशुग्रहणम् ॥

इदानीं यादृशाः सामा न धारयितव्यास्तादृशान् दर्शयति —

**उत्क्लिष्टानध ऊर्ध्वं वा न चामान् वहतः स्वयम् ॥ ३१ ॥**
**धारयेदौषधैर्दोषान् विधृतास्ते हि रोगदाः ।**

उत्क्लिष्टानित्यादि । इह्याकारस्तु शोधनप्रसङ्गादामशोधनं न कार्यमित्याहेत्याह । अध ऊर्ध्वं वा अधोमार्गेण ऊर्ध्वमार्गेण वा उत्क्लिष्टानामान् दोषान् स्वयं वहतः यत्नं विनैव प्रवृत्तान् औषधैः स्तम्भनैर्नैव धारयेत् । कुतः । हि यस्मात् ते सामा दोषा विधृताः सन्तो रोगदाः । सङ्ग्रहे रोगानुत्पादनीयाध्यायनिर्दिष्टातिस्थौल्यादीन् रोगान् कुर्वन्तीत्यर्थः । अथवा रोगदा ज्वरादिरोगकारिणः ॥

तेषु यत्कार्यं तदाह —

**प्रवृत्तान् प्रागतो दोषानुपेक्षेत हिताशिनः ॥ ३२ ॥**
**विबद्धान् पाचनैस्तैस्तैः पाचयन्निर्हरेत वा ।**

प्रवृत्तानित्यादि । अतो विधारणेन रोगोत्पत्तिहेतुत्वाद्धेतोः स्वयं प्रवृत्तान् दोषान् प्रागग्रे प्रारम्भकाले उपेक्षेत । उपेक्षणमकरणं चिकित्सितस्य स्तम्भनं न योज्यं यावदामक्षयः स्वयं प्रवृत्तत्वान्नापि शोधनम् । आमक्षयादूर्ध्वं स्तम्भनं योज्यमिति प्राग्ग्रहणेन लभ्यते । हिताशनो हितभोजन इति विधिगर्भम् । प्रवृत्तदोषानुगुण्येन हितभोजनमेव तत्र कार्यमित्यर्थः (आमक्षयादूर्ध्वं स्तम्भयेदिति?) अथवा विबद्धान् सविबन्धं प्रवृत्तान् ईषदीषत् प्रवृत्तान् तैस्तैर्यथोक्तैः पाचनैः द्रव्यैर्मुस्तादिभिः पाचयन् पाकं नयन् निर्हरेत् । पाचयन्निति हेतौ शतृप्रत्ययः जातपाकान् दोषान् निर्हरेत् ॥

दोषनिर्हरणप्रसङ्गात् तद्योग्यं कालमाह —

**श्रावणे कार्तिके चैत्रे मासि साधारणे क्रमात् ॥ ३३ ॥**
**ग्रीष्मवर्षाहिमचितान् वाय्वादीनाशु निर्हरेत् ।**

श्रावण इत्यादि । क्रमाद् यथासंख्यं ग्रीष्मे चितं सञ्चितं वायुं श्रावणे वर्षादिमासे निर्हरेत् शोधयेत् वर्षाचितं पित्तं कार्तिके शरदन्त्यमासे निर्हरेत् हिमशब्देन हेमन्तशिशिरयोः परिग्रहः । हिमचितं कफं चैत्रे वसन्तादिमासे निर्हरेत् साधारणे हेतौ सप्तमी । यत एते त्रयो मासाः श्रावणादयः साधारणाः शीतोष्णसाधारणाः तस्मात् तेषु शोधनं निरपायमित्यर्थः । यद्यपि ग्रीष्मवर्षाहिमचयेषु दोषद्वयस्य चयनं तथापि प्रधानदोषशोधनेऽन्यस्यापि शुद्धिः 'तेषां प्रधानप्रशमे' इति न्यायात् ॥

अथ 'चय एव जयेद् दोषानि'ति वचनात् ग्रीष्मादिषु चिता वातादयस्तेष्वेव ग्रीष्मादिषु कस्मान्न शोध्यन्ते इत्याशङ्कयाह —

अत्युष्णवर्षशीता हि ग्रीष्मवर्षाहिमागमाः ॥ ३४ ॥
सन्धौ साधारणे तेषां दुष्टान् दोषान् विशोधयेत् ।

हि यस्माद् ग्रीष्मादयोऽत्युष्णादियुक्ताः ग्रीष्मोऽत्युष्णः अतिवर्षो वर्षाकालः अतिशीतो हिमागमः । तस्माच्छोधनं प्रति न ते कालाः । ततस्तेषु शोधनं न कर्तव्यम् । तथा हि— उपचारादेकदेशेऽपि प्रोष्ठपदे वर्षर्तुव्यपदेशः । अथवा केचित् प्रथमप्रवृष्टो वर्षाकालः प्रावृष्टो वर्षाकालः प्रावृडिति श्रावणं वर्षेति प्रोष्ठपदं विभजन्ति । एकमासिकमृतुं कृत्वा तन्मतानुसारेणैवमुक्तम् । ग्रीष्मे(शोधन ? निषेध) आदानग्लाने शरीरे औषधं दिवाकरकरतप्तत्वात् उष्णतीक्ष्णमतियोगाय संपद्यते । प्रावृषि मेघावृते गगने आदानदुर्बलस्य शरीरस्याग्निरवसन्नो भवति ओषधयस्तु मेघजलसप्लावितमूलत्वादल्पवीर्या अयोगायैव । शीते च शीतोपहतत्वाच्छरीरमतिवातविष्टब्धमतिस्तब्धगुरुदोषं भवति । औषधं च शीतेन मन्दवीर्यमयोगाय कल्पते । तस्माद् युक्तमुक्तम् ॥

ननु स्वस्थातुरयोः किं साधारणः शोधनकालो नेत्याह —

स्वस्थवृत्तमभिप्रेत्य व्याधौ व्याधिवशेन तु ॥ ३५ ॥

स्वस्थेत्यादि । स्वस्थानां वृत्तं स्वस्थवृत्तं स्वस्थावस्थामभिप्रेत्य।विकृत्यायं शोधनकाल उक्तः स्वस्थोद्देशेनायं शोधनकालो नियम्यते नातुरोद्देशेन। आतुरवृत्ते त्वनियम इत्या(दि?ह) व्याधावित्यादि व्याधौ त्वात्ययिके सति

शोधनसाध्ये व्याधिविशेषे व्याध्यनुरोधेन शोधनकालः । अकालेऽपि हेमन्तादावतिशीतोष्णादौ रोगापेक्षया प्राप्तां क्रियां शोधनादिकां योजयेत् ॥ ३५ ॥

कथं निषिद्धेष्वृतेषु शोधनं योजयेदित्याह—

**कृत्वा शीतोष्णवृष्टीनां प्रतीकारं यथायथम् ।**
**प्रयोजयेत् क्रियां प्राप्तां क्रियाकालं न हापयेत् ॥ ३६ ॥**

यथायथं यथाकालं व्याध्यनुसारेण शीतोष्णवृष्टीनां कृत्रिमैर्गुणैः प्रतीकारमृतुगुणप्रत्यनीकं कृत्वा ऋतुगुणप्रत्यनीकं भजतो व्याधितस्य संशोधनादिलक्षणां क्रियां प्रयोजयेत् । कृत्रिमगुणोपधानं च यथा हेमन्ते गर्भगृहादि । ग्रीष्मे धारागृहादि । क्रियाकालं न हापयेत् नातिक्रामयेत् नायं काल इति प्राप्तां क्रियां न त्यजेत् । आत्ययिकस्य व्याधेः प्राणहारित्वात् ॥ ३६ ॥

संप्रत्यौषधकालानाह । अथवा शोधनौषधकालं दर्शयित्वेदानीमौषधान्तरप्रयोगकालमाह—

**युञ्ज्यादनन्नमन्नादौ मध्येऽन्ते कवलान्तरे ।**
**ग्रासे ग्रासे मुहुः सान्नं सामुद्गं निशि चौषधम् ॥ ३७ ॥**

युञ्ज्यादित्यादि । दशैते औषधस्य कालाः । अनन्नम् एतदुच्यते प्रस्तनेऽन्ने जीर्णे याममात्रोद्गते रवावुपयुज्यौषधं तस्मिन् जीर्णे पुनरन्नं भुञ्जीत । एवमुपयुक्तमौषधमनन्नम् अन्नरहितं केवलं निरन्नोपयोगादतिवीर्यं भवति । अन्नादौ तदुच्यते यदुपयुज्यानन्तरमाहारोपयोगो विधीयते आहारस्य प्रारम्भ एवौषधमुपयुज्यानन्तरं भुञ्जीत । मध्य इति । उच्यते । प्रातराशस्य मध्ये अर्धं भोजनमुपयुज्यौषधमुपयुज्य पुनस्तत्कालमेवावशिष्टं भोजनं भुञ्जीत इति मध्येऽन्नम् । अन्ते भक्तस्य पर्यवसाने भोजनानन्तरमित्यर्थः । कवलान्तर इति कवलयोर्ग्रासयोरन्तरे मध्ये कवलं निगीर्य पुनर्भेषजं पुनः कवलं पुनर्भेषजमित्यादि न तु ग्रासमिश्रितं कृत्वेत्यर्थः । ग्रासे ग्रास इति प्रतिग्रासं ग्रासमिश्रितं कृत्वेत्यर्थः । मुहुर्मुहुरिति प्रतिक्षणं भुक्ते भुक्ते चोपयोगः किञ्चित्कालेऽतिक्रान्ते पुनः पुनः पुनरित्यर्थः । सान्नमिति । अन्नेन सकलेन मिश्रीकृत्य यदुपयुज्यते । अथवाहारेण सह पक्त्वा चूर्णादिकं व्यञ्जनादिषु विकीर्येति केचित् । सामुद्गमिति यदादावन्ते च भक्तस्योपयुज्यते तत् सामुद्ग(०००)तेन हि समुद्गपुटयुगकल्पाभे-

नौषधमुक्तेनाहारो मध्ये क्रियते आदावन्ते च भेषजं मध्ये पुनर्भोजनमित्यर्थः । निशि रात्रौ चौषधमुपयोज्यम् । एतु दशसु कालेष्वौषधं युञ्ज्यात् ॥ ३७ ॥

अधुना विषयविभागेनौषधकालनियमान् दर्शयति—

कफोद्रेके गतेऽनन्नं बलिनो रोगरोगिणोः ।
अन्नादौ विगुणेऽपाने समाने मध्य इष्यते ॥ ३८ ॥

व्यानेऽन्ते प्रातराशस्य सायमाशस्य तूत्तरे ।
ग्रासग्रासान्तयोः प्राणे प्रदुष्टे मातरिश्वनि ॥ ३९ ॥

मुहुर्मुहुर्विषच्छर्दिहिध्मातृट्श्वासकासिषु
योज्यं सभोज्यं भैषज्यं भोज्यैश्चित्रैररोचके ॥ ४० ॥

कफोद्रेक इत्यादि । कफोद्रेके गते श्लेष्मणि क्षान्ते अनन्नमौषधं योज्यम् । कयोरित्याह—बलिनो रोगरोगिणोः अनन्नमौषधं निरन्नोपयोगादतिवीर्यं बलवति रोगे बलवांश्च रोगी कफोद्रेकविमुक्तामाशयस्रोताः प्रातरुपयुञ्जीत न तु दुर्बलः । दुर्बल(स्तुःस्य तु) प्राग्भक्तादिकम् अन्नसंसर्गेण हितं नातिग्लानिकरं भवति । अपानाख्ये वायौ विगुणे कुपिते सति औषधमन्नादाविष्यते * । व्याने विगुणे प्रातराशस्य पूर्वाह्णभक्तस्यान्तेऽवसाने भेषजमिष्यते । उत्तरे व्यानापेक्षया उदानाख्ये मरुति विगुणे सायमाशस्यापराह्णभक्तस्यान्ते भेषजमिष्यते । प्राणाख्ये मातरिश्वनि वायौ प्रदुष्टे विकृते ग्रासग्रासान्तयोर्भेषजमिष्यते । ग्रासश्च ग्रासान्तश्च तयोः ग्रासशब्देन ग्राससंपृक्तमौषधं ग्रासे ग्रासे इत्युक्तं गृह्यते । ग्रासान्तरशब्देन कवलान्तर इत्युक्तं गृह्यते । मुहुर्मुहुर्भुक्ते यदभुक्ते वा भेषजं तत्तु विषादिषु प्रयोज्यम् । अरोचकेऽरुचौ सभोज्यं सान्नं भैषज्यं चित्रैरनेकविधैर्भोज्यैर्युक्तं योज्यम् ॥ ४० ॥

कम्पाक्षेपकहिध्मासु सामुद्गं लघुभोजिनाम्
ऊर्ध्वजत्रुविकारेषु स्वप्नकाले प्रशस्यते ॥ ४१ ॥

सामुद्गं नाम यदादावन्ते चाहारस्य भुज्यते तत् कम्पादिषु प्रशस्यत इति वक्ष्यमाणेन संबन्धः केषां लघ्वन्नाशिनाम् ॥

* 'समाने मध्य इष्यत' इत्यस्य व्याख्यांशो भ्रष्टः ।

ऊर्ध्वजत्रुविकारेषु स्वप्नकाले शयनवेलायामौषधं प्रशस्यते यन्निशीत्युक्तम् ॥

''कषायलेहचूर्णाद्यैः प्रयोगोऽयं प्रदर्शितः ।
रोगातुरबलापेक्षं देशकालानुरोधतः ॥
मात्राद्यपेक्षी युञ्जीत पथ्यं वैद्यो निशातधीः ॥

उक्तवांश्च—

रोगमादौ परीक्षेत ततोऽनन्तरमौषधम् ।
ततः कर्म भिषग् बुद्ध्वा ज्ञानपूर्वं समाचरेत् ॥

निवृत्तोऽपि पुनर्व्याधिरल्पेनायाति हेतुना ।
देहे मार्गीकृते दोषैः शष्पं सूक्ष्म इवानलः ॥

तस्मात् तमनुबध्नीयात् प्रयोगेणानपायिना ।
सिद्धानामपि योगानां पूर्वेषां दार्ढ्यमावहेत् ॥

सातत्यात् स्वान्यभावाद् वा पथ्यं द्वेष्यत्वमागतम् ।
कल्पनाविधिभिस्तैस्तैः प्रियत्वं गमयेत् पुनः ॥

मनसोऽर्थानुकूल्येन तुष्टिरूर्जा बलं रुचिः ।
सुखोपभोगता च स्याद् व्याधेश्चातः परिक्षयः ॥

लौल्याद् दोषक्षयाद् व्याधिवैषम्येण च यारुचिः ।
तासु पथ्योपचारज्ञः योगेनान्यं विकल्पयेत् ॥

सप्ताहेन गुणालाभे क्रियामन्यां प्रयोजयेत् ।
पूर्वस्यांशान्तवेगायां न क्रियासङ्करो हितः ॥

गुणेऽल्पेऽपि च तामेव विशेषोत्कर्षलब्धये ।
भेषजं नृपतेर्हृद्यमल्पमत्यात्ययं शुचिः ॥

शुद्धागमं बहुगुणं बहुकल्पप्रयोजितम् ।
अनन्यकार्योपहितस्तन्मन्त्रिगुरुसंमतः ॥

आस्वादितं परिचरैः स्वयं चानुप्रयोजयेत् ।
उचितो यस्य यो देशस्तज्जन्यौषधसंहितम् ॥

देशेऽन्यत्रापि वसतस्तत्तुल्यगुणजन्म वा ।
वीर्यवद्भावितं सम्यक् स्वरसैरसकृल्लघु ॥
रसगन्धादिसंपन्नं काले जीर्णे च मात्रया ।
एकाग्रमनसा युक्तं भैषज्यममृतायते ॥

इति हृदयबोधिकायां
त्रयोदशोऽध्यायः ।

## अथ चतुर्दशोऽध्याय आरभ्यते ।

पूर्वेऽध्याये सामान्येनोपक्रम उक्तः । अत्र तु तस्यैव उपक(्यं:म्य) विशेषेण द्वैविध्यप्रदर्शनार्थमध्यायारम्भः । पूर्वं दोषमुक्त्वा यथा दोषभेदः प्रोक्तः । तथात्रापि चिकित्सामुक्त्वा चिकित्साद्वैविध्यप्रदर्शनार्थमाह —

अथातो द्विविधोपक्रमणीयमध्यायं व्याख्यास्यामः
इति हस्माहुरात्रेयादयो महर्षयः

अथात इत्यादि । द्विविधं द्विप्रकारमुपक्रमणं द्विविधोपक्रमणं तस्मै हितस्तस्य वा हितो द्विविधोपक्रमणीयः । उपक्रमश्च समासतो द्विविधः तन्त्रान्तरपठितानां चतुर्णामुपक्रमाणामत्रैवान्तर्भावाद् ।

अत एव सहेतुकमुपदिशन्नाह—

उपक्रम्यस्य हि द्वित्वाद्द्विधैवोपक्रमो मतः ।

उपक्रम्यस्येत्यादि । यस्मादुपक्रम्यस्य चिकित्सितव्यस्य व्याधितस्य सन्तर्प्यापतर्प्यभेदेन द्वित्वाद्धेतोरुपक्रमोऽपि द्विविध एव मत इष्टः । एवशब्दोऽवधारणार्थः । परमतं क्षिपति—स्वेदनादीनामन्तर्भावाद् । द्विविध एवेति । पाठ्यकारस्त्वाह—उपक्रम्यो व्याधिः स्वतन्त्रपरतन्त्रादिभेदभिन्नोऽपि सन्तर्पणोत्थ अपतर्पणोत्थ इति द्विधैव । एवकारो युक्तिप्रदर्शनार्थः द्विधाभूतस्य व्याधेर्द्विधाभूत एव प्रतीकार इति । संख्याग्रहणेन परमतनिरासं करोति ! अन्ये स्नेहनरूक्षणादिभेदेन चिकित्सितमामनन्ति बहुधा । केचिच्चतुर्विधं वर्णयन्ति—'अयं पुनराचार्यो युक्त्या सकलमतमप्येकीकृत्य चिकित्साद्वैविध्यं

दृढीकरोतीति। इन्दुरप्याह—द्विविध एवोपक्रमः कुतः उपक्रम्यस्य व्याधितस्य सन्तर्प्यापतर्प्यभे(दं?द)द्वैविध्याद् गुर्वादिभिः सन्तर्पणैर्व्याधितस्य लघ्वादिभिरुपक्रमैरुपक्रमणात्। एवं लघ्वादिभिरपतर्पणैर्व्याधितस्य गुर्वादिभिरुपक्रमणादिति।

कथं द्विधेत्याह—

**एकः सन्तर्पणस्तत्र द्वितीयश्चापतर्पणः ॥ १ ॥**
**बृंहणं लंघनं चेति तत्पर्यायावुदाहृतौ ।**
**बृंहणं यत्बृहत्वाय लंघनं लाघवाय यत् ॥ २ ॥**
**देहस्य**

एक इत्यादि। तत्र तयोर्द्वयोरुपक्रमयोर्मध्ये एकः सन्तर्पणरूपोपक्रमो द्वितीयश्चापतर्पणरूप उपक्रमः। बृंहणो लङ्घनश्चेति यथाक्रमं तत्पर्यायौ तयोः सन्तर्पणापतर्पणयोः पर्यायावुदाहृतौ आगमविद्भिः। बृंहणं लङ्घनं चेति वा पाठः। बृंहणलङ्घनयोरन्वर्थतां वदन् सन्तर्पणापतर्पणयोः स्वरूपं वक्ति—बृंहणमित्यादि। बृंहणं तदुच्यते यद् देहस्य बृहत्त्वाय भवति। लङ्घनं तदुच्यते यद्देहस्य लाघवायातिलाघवोत्पादनाय भवति ॥

**भवतः प्रायो भौमापमितरच्च ते ।**

भवत इत्यादि। तच्च तच्च ते बृंहणलङ्घने भौमापमितरच्च भवतः भूमेरिदं भौमं अपामिदमापं भौमयुक्तमापं भौमापं बृंहणम्। इतरद् भौमापादन्यत् आग्नेयवायव्यनाभसं लङ्घनम्। प्रायोग्रहणात् किञ्चिद् भौमापं लङ्घनं यथा यवममूरमकुष्ठतण्डुलीयादि। तथा अग्निवाय्वाकाशात्मकस्य कटुकस्यापि शुण्ठीपिप्पल्यादेर्वृष्यत्वे सन्तर्पणकार्यदर्शनाद् बृंहणत्वम्। ते सन्तर्पणापतर्पणे इत्यरुणदत्तः। अथवा एवं योजना उपक्रम्यस्य हीत्यादि उपक्रम्या दोषाः उपक्रमार्हाणां दोषाणां त्रयाणां द्वित्वं द्विप्रकारत्वं यतस्तत उपक्रमो द्विविधः। उपक्रमः क्रियारम्भश्चिकित्सितमिति पर्यायाः। उपक्रमस्य द्वित्वादुपक्रम्यो द्विधा मत इत्यपि स्यात्। उपक्रमोपक्रम्ययोः समव्याप्तित्वात्। एवशब्दोऽवधारणपरः। स्वेदनादीनामन्तर्भावाद् द्विविध एवेति। उपक्रमोपक्रम्ययोर्द्वित्वकथनेन तत्स्वरूपपरिच्छित्तिः। ततश्चिकित्सामार्गस्य प्रकाशः स्यात्। तता दोषदूष्यभेषजदेशकालाद्यनुसारेण वैद्यस्य निस्सन्देहा बुद्धिरुपपद्यते। प्रयोगे तदेव द्वैविध्यमाह—एकः सन्तर्पण इति सन्तर्पणापतर्पणावुपक्रमौ। उपक्रमाद्वित्वानुवादेन उपक्रम्यद्वित्वविधाने एकः सन्तर्पणः योग्यार्थेऽच् प्रत्ययः

अतर्पणेऽपि तथा । एकः सन्तर्पणार्होऽन्योऽपतर्पणार्हः । बृंहण उपक्रमः । बृंहणीय उपक्रम्यः । तथा लङ्घन उपक्रमः लङ्घनीय उपक्रम्यः । तत्पर्यायौ तयोरुपक्रम्योपक्रमयोः पर्यायावुदाहृतौ कथितौ । बृंहणलङ्घनयोः बृंहणीयलंघनीययोश्च निर्वचनमाह—बृंहणं यद् बृहत्त्वाय देहस्य शरीरस्य लङ्घनं लाघवाय च । प्रायो भौमापं पार्थिवाप्यं द्रव्यादि बृंहणं दोषेषु पार्थिवाप्यः श्लेष्मा इत्यतद् भौमापादन्यद् आग्निवायुनभोजं कफादन्यद् दोषद्वयं च ते बृंहणलङ्घने बृंहणीयलङ्घनीये च इति व्याकारेण दर्शितेयं योजना ।

संप्रति बहूपक्रमवादि(नां?नं) प्रतीदमुच्यते ।

**स्नेहनं रूक्षणं कर्म स्वेदनं स्तम्भनं च यत् ॥ ३ ॥**
**भूतानां तदपि द्वैध्याद्द्वितयं नातिवर्त्तते ।**

स्नेहनमित्यादि । अरुणदत्तोऽपि स्नेहनादेश्चतुर्विधस्योपक्रमस्य सन्तर्पणापतर्पणयोरेवान्तर्भावं दर्शयन्नाहेत्याह । स्नेहनादि यच्चतुर्विधं कर्म उपक्रमः तदपि भूतानां द्वैध्यादग्नीषोमात्मकत्वाद् द्वितयं बृंहणलङ्घनाख्यं नातिवर्तते नातिक्रामति तदपि कर्मचतुष्टयमस्मिन् द्वितयेऽन्तर्भवति तेनैतदुक्तं भवति स्नेहनस्तम्भने सौम्यत्वाद् बृंहणवर्गे पततः रूक्षणस्वेदने चाग्नेयत्वात् लङ्घने इति । शोधनाङ्गस्य स्नेहस्य लङ्घनफलत्वाल्लङ्घनत्वं तत्कालं तु बृंहणत्वमेव । एवं स्वेदादीनामपि विचार्यम् । पाठ्यकारोऽपि द्वैध्यात् सौम्याग्नेयत्वादित्याह व्याकारस्तु भूतानां द्वैध्यात् द्विविधत्वाद् गुरुलघुभेदादित्याह । भूतानां सन्तर्पणापतर्पणरूपाणां द्वैध्याद् द्विप्रकारत्वादित्यरुणदत्तः ॥

**शोधनं शमनं चेति द्विधा तत्रापि लंघनम् ॥ ४ ॥**

शोधनमित्यादि । तत्र तयोर्बृंहणलङ्घनयोर्मध्ये बृंहणस्य भेदाभावाद् तदतिक्रम्य लङ्घनभेदमाह लङ्घनमपतर्पणं द्विधा द्विप्रकारं कथमित्याह—शोधनं शमनं चेति । चशब्दो द्वयस्य लङ्घनत्वं समुच्चिनोति । इतिशब्दः प्रकारान्तराणामन्तर्भावार्थः । अथवा इति हेत्वर्थे । यतः शोधनं शमनं चेति ततो द्विधेत्यर्थः । द्विधेति संख्या अवान्तरभेदान्तर्भावार्थः । तत्र सन्तर्पणापतर्पणयोरिति वान्वयः ॥ ४ ॥

तत्र शोधनस्य लक्षणं भेदांश्चाह—

**यदीरयेत् बहिर्दोषान् पञ्चधा शोधनं तु तत् ।**

यदित्यादि । यद्दोषान् वातादीनन्तः शरीरस्थितान् बहिरीरयेत् प्रेरयेत् क्षिपेत् तत् शोधनं तत्तु पञ्चधा पञ्चप्रकारम् ।

तदेव पञ्चप्रकारत्वं दर्शयति—

**निरूहो वमनं कायशिरोरेकोऽस्रविस्रुतिः ॥ ५ ॥**

निरूह इत्यादि । निरूहः कषायवस्तिः तथा वमनं तथा कायरेकः विरेकः तथा शिरोविरेकः अस्रविस्रुतिश्च रक्तस्राव इति पञ्चधा शोधनम् शरीरस्य शिरःप्रभृतेरधोमलनिर्हरणं यः स कायविरेकशब्देनोच्यते यस्तु केवलं शिरःसंज्ञकस्य घ्राणेनोर्ध्वं मलनिर्हरणं स शिरोविरेकः । अन्ये पञ्चधा पञ्चभिः प्रकारैर्वमनादिभिः यदौषधं वातादीन् बहिरीरयेत् तच्छोधनमित्यन्वयमाहुः ॥ ५ ॥

संप्रति शमनस्य लक्षणं भेदांश्चाह—

**न शोधयति यद्दोषान् समान्नोदीरयत्यपि ।**
**समीकरोति विषमान् शमनं तच्च सप्तधा ॥ ६ ॥**
**पाचनं दीपनं क्षुत्तृड्व्यायामातपमारुताः ।**

नेत्यादि । यदौषधं दोषान् वातादीन् न शोधयति नान्तःस्थितान् बहिर्निष्कासयति तथा समान् स्वप्रमाणस्थान् नोदीरयति नोत्क्लेशयति विषमांश्च स्वप्रमाणाद्धीनाधिकभावान् समीकरोति प्रमाणस्थान् विदधाति । इन्दुस्तु विषमानिति विषमशब्दः समान् नोदीरयत्यपि इति वाक्यसामर्थ्याद् वृद्धावेव वर्तते । विषमान् वृद्धानित्यर्थः इत्याह । तच्छमनमुच्यते । तच्च शमनं च पाचनादिभेदेन सप्तधा सप्तप्रकारम् । पाचयतीति पाचनं पचतोऽग्नेः पक्तुं शक्तिमधिकां यदुत्पादयति तद् द्रव्यं मुस्तादि क्रिया वा लङ्घनादिः पाचनमुच्यते । दीपनं घृतादि । तन्त्रान्तरे च दीपनपाचनयोर्लक्षणमुक्तं—

"यदग्निकृत् पचेन्नामं दीपनं तद् यथा घृतम् ।
पाचनं तद् विपर्यस्तं यथा वक्ष्यामि लङ्घनम् ॥

इति । क्षुत्तृट्शब्दाभ्यां क्षुत्तृड्धारणमिहोक्तं क्षुत्तृष्णानिग्रहैरिति वचनात् । अरुणदत्तोऽपि क्षुत्तृट्शब्दाभ्यां क्षुत्तृष्णानिग्रहाविह गृहीतावित्याह ॥

पाचनादीनां दोषशमनत्वमुक्तं तच्च वाते वातपित्ते चासात्म्यत्वान्न संभवतीत्याह—

**बृंहणं शमनं त्वेव वायोः पित्तानिलस्य च ॥ ७ ॥**

बृंहणमित्यादि। यद्यपि शमनं लङ्घनं तथापि वाते वातपित्तसंसर्गे च बृंहणमेव यथोक्तलक्षणं शमनमेवेति व्यवह्रियते। पित्तस्य तु केवलस्याप्सरूपत्वाल्लङ्घनमेव शमनं वातश्लेष्मणोस्तु वायोः शैत्याद् योगवाहित्वाच्च लङ्घनमेव कफेऽपि च सुबोधम्। तुशब्दादेवकाराच्च बृंहणमुद्दिश्य किञ्चिदाशङ्क्य परिहरति। कथं। लङ्घनवद् बृंहणमपि शोधनशमनरूपेण द्विविधं तत्र बृंहणशोधनं दुग्धादि द्रव्यं वातस्य पित्तयुक्तस्य च शमनं न तु लङ्घनशोधनं हरीतक्यादिद्रव्यवत् कोपनम्। कथं वाते पित्तसंसृष्टे च शोधनात्मकस्य क्षीरस्य प्रयोगः। उच्यते बृंहणत्वान्मृदुविरेचनत्वाच्च 'संशोधनं मृद्वि'ति वचनात् वातस्य पित्तसंसृष्टस्य च विरेचनकरस्य क्षीरस्योपयोगः। तस्माद् बृंहणशोधनं शमनमेव न कोपनमिति। अरुणदत्तोऽप्याह—तुशब्दो विशेषे। विशेषस्तु लङ्घनापेक्षया। शोधनं शमनं च द्विधा लङ्घनमुक्तम्। बृंहणमपि शोधनं भवति। यथा द्राक्षादि द्रव्यं शोधनस्वभावत्वात्। तेन तथाविधेन द्रव्येण केवलस्य वातस्य पित्तयुक्तस्य वा कोप आशङ्क्यते। यथा लङ्घनशोधनद्रव्येण हरीतक्यादिना। ततो बृंहणस्य विशेषणार्थस्तुशब्दः कृतः। बृंहणं तच्छोधनं तन्मरुतः केवलस्य पित्तसहितस्य तु वा शमनं न तु लङ्घनशोधनवत् कोप (न?)मेव करोति। एवकारोऽवधारणार्थः बृंहणं शोधनरूपमशोधनरूपं वा वातस्य पित्तयुक्तस्य वा शमनमेव न कोपनं जातुचिदित्यर्थः। लङ्घनं तूभयरूपमपि वातस्य वातपित्तस्य वा कोपनमेवेति ॥ ७ ॥

ननु क बृंहणं विधेयं क वा लङ्घनमित्याह—

**बृंहयेद् व्याधिभैषज्यमद्यस्त्रीशोककर्शितान्।**
**भाराध्वोरःक्षतक्षीणरूक्षदुर्बलवातलान् ॥ ८ ॥**

**गर्भिणी सूतिका बालवृद्धान् ग्रीष्मेऽपरानपि।**

बृंहयेदित्यादि। कर्शितशब्दस्य व्याध्यादिभिः प्रत्येकं संबन्धः व्याधिभिः कर्शितान् बृंहयेत्। एवं शेषेष्वपि योज्यम्। क्षीणशब्दस्य भारादिभिः संबन्धः भारक्षीणान् बृंहयेत्। एवं शेषेष्वपि। रूक्षादीन् बृंहयेत्। ग्रीष्मेऽपरानपि अन्यानप्यनुक्तानपि सर्वान् बृंहयेत् ग्रीष्मस्याग्नेयस्य रौक्ष्याधिक्यादादानकालत्वेन बलहानेः पित्तवातसञ्चयाच्च ग्रीष्मे सर्वानपि बृंहयेत्। अतितरां तु व्याधि(?ध्यादि)कर्शितान् ॥

कैर्बृंहयेदित्याह—

मांसक्षीरसितासर्पिर्मधुरस्निग्धवस्तिभिः ॥ ९ ॥

स्वप्नशय्यासुखाभ्यंगस्नाननिर्वृतिहर्षणैः ।

मांसादिभिर्बृंहयेत् मधुरैः स्निग्धैश्च वस्तिभिः न तु रूक्षतीक्ष्णैस्तेषामप-तर्पणस्वभावत्वात् । स्वप्नो निद्रा शय्यासुखं खट्वाजनितं शर्म निर्वृतिश्चि-त्तस्यानाकुलत्वं सुखातिशयः ॥

बृंहणीयानुक्त्वा लङ्घनीयानाह—

मेहामदोषातिस्निग्धज्वरोरुस्तंभकुष्ठिनः ॥ १० ॥

विसर्पविद्रधिप्लीहशिरःकण्ठाक्षिरोगिणः ।

स्थूलांश्च लंघयेन्नित्यं शिशिरे त्वपरानपि ॥ ११ ॥

मेहेत्यादि । मेहश्चामो दोषश्च येषां ते मेहामदोषाः अर्श आदिभ्यो ऽच् अथवा मेहादीनामिनिर्मत्वर्थीयः मेहिप्रभृतीन् लङ्घयेत् । नित्यमेव न तु कदाचित् । शिशिरे पुनरपरान् अन्यानपि बृंहणीयानपि लङ्घयेत् श्लेष्म-चयभयात् । अपरानिति व्याधितानां ग्रहणम् । अन्यथा स्वस्थानां शिशिरे हेमन्तविधेः सविशेषस्यादिष्टत्वात् । स्वस्थानां हि शिशिरे हेमन्तविधिर्निर्दिष्टो-पोक्त एव । शिशिरशब्दः शीतमात्रोपलक्षणार्थः तेन हेमन्तेऽपि लङ्घयेदित्यर्थो लभ्यते ॥ ११ ॥

पुरुषबलाद्यपेक्षया लङ्घनं विभजति—

तत्र संशोधनैः स्थौल्यबलपित्तकफाधिकान् ।

आमदोषज्वरच्छर्दिरतीसारहृदामयैः ॥ १२ ॥

विबन्धगौरवोद्गारहृल्लासादिभिरातुरान् ।

तत्रेत्यादि । पूर्वमुक्तं लङ्घनं द्विधा शोधनं शमनं चेति तत्र शोधन-लङ्घनविषयमाहेति हाटकः । लङ्घयेदिति वर्तते तत्र तेषु लङ्घनीयेषु मध्ये आमदोषादिभिर्व्याधिभिरातुरान् स्थूलत्वादिभिर्गुणैरधिकान् उत्कृष्टस्थौल्या-दिकान् सतः संशोधनैरौषधैर्लङ्घयेत् संशोधनाख्यैर्लङ्घनैर्लङ्घयेत् ॥ १२ ॥

शमनलङ्घनविषयमाह—

मध्यस्थौल्यादिकान् प्रायः पूर्वं दीपनपाचनैः ॥ १३ ॥

एभिरेवामयैरार्त्तान् हीनस्थौल्यबलादिकान् ।

क्षुत्तृष्णानिग्रहैर्दोषैस्त्वार्त्तान्मध्यबलैर्दृढान् ॥ १४ ॥

समीरणातपायासैः किमुताल्पबलैर्नरान् ।

मध्येत्यादि । तानेवामदोषाद्यातुरान् मध्यस्थौल्यादिकान् मध्यस्थौल्य-बलपित्तकफान् सतः प्रायः पूर्वं प्रथमं दीपनैः पाचनैश्च लङ्घनभेदैर्लङ्घनेन पश्चाद्यथार्हेण लङ्घनेन । प्राग्ग्रहणं देशकालदोषबलाद्यपेक्षया नियमस्यासार्व-विषयत्वप्रदर्शनार्थम् । तथा एभिरेवामदोषादिभिरामयैरार्तान् हीनस्थौल्यबला-दिकान् सतः क्षुत्तृष्णानिग्रहैः बुभुक्षापिपासावेगधारणाख्यैर्लङ्घनभेदैः उपवासैरित्यर्थः । तैर्लङ्घयेद् । अन्यथा वान्वयः । मध्यस्थौल्यादिकान् एभि-रेवामदोषादिभिरातुरान् दीपनपाचनैर्लङ्घयेत् हीनस्थौल्यादिकांस्तु सतः क्षुत्तृष्णानिग्रहैर्लङ्घयेदिति । व्याकारस्तु— एभिरेवेति मेहादिव्याधिभिरित्याह । दोषैर्वातपित्तकफैर्मध्यबलैरार्तान् तथा दृढान् शक्तान् बलवतः समीरणादिभि-र्लङ्घयेत् । आयासो व्यायामः । किमुत किं पुनरल्पबलैर्दोषैरार्तान् समी-रणादिभिर्लङ्घयेत् । सुतरां तु हीनबलैरार्तान् लङ्घयेदेवेत्यर्थः ॥

बृंहणलङ्घनयोर्विशेषमाह—

न बृंहयेत् लङ्घनीयान् बृंह्यांस्तु मृदु लङ्घयेत् ॥ १५ ॥
युक्त्या वा देशकालादिबलतस्तानुपाचरेत् ।

न बृंहयेदित्यादि । यतस्ते मेहादयः स्वल्पेनापि बृंहणेन परां वृद्धि-माप्नुवन्ति अतो लङ्घनीयान् लङ्घनार्हान् व्याधीन् न कदाचन बृंहयेत् ॥

ये तु व्याधयो बृंहणीयाः तान् मृदु स्वल्पं लङ्घयेद् बृंहणोपयोग्य-तापादनायाग्निसन्धुक्षणाय च । अथवा ताँल्लङ्घनीयान् बृंहणीयांश्च देशकाला-द्यपेक्ष्य युक्त्योपाचरेत् उपक्रामेत् । अ(र्थ ? थ)युक्त्या कालदेशाद्यपेक्षया लङ्घनी-यानपि बृंहयेत् । तथाच श्वोवम्यस्य मत्स्यादयः प्रयुज्यन्त एव । तथा देशाद्यपे-क्षया बृंहणीयानपि लङ्घयेत् इति । अरुणदत्तस्त्वाह लङ्घनीयान् लङ्घनार्हान् मेहाढ्यवातादिभिर्वृताः न बृंहयेत् । तर्हि बृंह्यस्य वातलादेर्यदामज्वरादिव्याधि-र्लङ्घनसाध्योऽपि जायते तदा किं लङ्घनं कार्यमुत बृंहणमित्यत्र संशय इत्याह— बृंह्यानित्यादि । ये पुनर्बृंह्यास्तान् बृंहणसाध्यामयार्तान् मृदु कृत्वा लङ्घयेत् मृदुना लङ्घनप्रकारेणापतर्पयेदित्यर्थः । युक्त्या वा प्रयोगेण सन्तर्पणापतर्पणव्यामिश्रलक्षणेन देशकालादीनां बलतोनुरोधेन तानुपाचरेदुप-क्रामेत् विनैव लङ्घनेनेत्यर्थः । आदिग्रहणेन सत्त्वसात्म्यादिपरिग्रहः इति ॥

ननु साधु बृंहितो लङ्घितश्च केन लक्षणेन ज्ञेय इत्याह—

**बृंहिते स्यात् बलं पुष्टिस्तत्साध्यामयसंक्षयः ॥ १६ ॥**

बृंहित इत्यादि । बृंहिते पुरुषे सति बलं पुष्टिश्च स्यात् भवेत् तथा तत्साध्यानां बृंहणसाध्यानामामयानां संक्षयो विनाशः स्यात् ॥ १६ ॥

सम्प्रति लङ्घितलक्षणमाह—

**विमलेन्द्रियता सर्गो मलानां लाघवं रुचिः ।**
**क्षुत्तृट् सहोदयः शुद्धहृदयोद्गारकण्ठताः ॥ १७ ॥**
**व्याधिमार्दवमुत्साहतन्द्रा नाशश्च लङ्घिते ।**
**अनपेक्षितमात्रादि सेविते कुरुतस्तुते ॥ १८ ॥**
**अतिस्थौल्यातिकार्श्यादीन् वक्ष्यन्ते ते च सौषधाः ।**

विमलेन्द्रियतेत्यादि लङ्घितलक्षणम् । स्यादित्यनुवर्तते । तच्च प्रत्येकमनुसम्बध्यते लङ्घिते पुरुषे सति विमलेन्द्रियतादयः स्युरिति सम्बन्धः । विमलेन्द्रियता करणपाटवम् । क्षुत्तृषोः सहैककालमुदयः । शुद्धहृदयेति हृदयं चोद्गारश्च कण्ठश्च हृदयोद्गारकण्ठं शुद्धं च तत् हृदयोद्गारकण्ठं च तस्य भावः शुद्धहृदयोद्गारकण्ठता शुद्धहृदयता शुद्धोद्गारता शुद्धकण्ठता च । मलानां मूत्रपुरीषादीनां सर्गो विसर्गः । व्याधिमार्दवं लङ्घनसाध्यस्य व्याधेर्मार्दवम् । असमासनिर्देशादेषां लक्षणानां यथासम्भवं लङ्घितलिङ्गत्वम् । अरुणदत्तोऽप्याह — विमलेन्द्रियतादीनां पदानामसमस्तानां निर्देशो दोषदेशाद्यनुरोधेन एकस्य द्वयोस्त्रिश्चतुराणां सर्वेषां च लङ्घितलक्षणत्वद्योतनार्थमन्यथैषामशेषाणामेव लक्षणानामुत्पत्तौ लङ्घितलक्षणत्वं भवेत् न त्वेकस्य द्वयोर्बहूनां चोत्पत्तौ लङ्घितलक्षणं स्यादिति ॥

अनपेक्षितेत्यादि । ते बृंहणलङ्घने अनपेक्षितमात्रादिसेविते यथाक्रममतिस्थौल्यादीनतिकार्श्यादींश्च कुरुतः । अनपेक्षिताश्च ते मात्रादयश्चानपेक्षितमात्रादयः तैः सेविते मात्राद्यनपेक्षया कृते इत्यर्थः । ते चातिस्थौल्यातिकार्श्यादयः सौषधास्तेषामौषधानि चास्मिन्नेवाध्याये परस्ताद् वक्ष्यन्ते ॥ १८ ॥

अथातिबृंहितलङ्घितयोः किं लक्षणमाह—

**रूपं तैरेव च ज्ञेयमतिबृंहितलङ्घिते ॥ १९ ॥**

रूपमित्यादि। अतिबृंहितश्चातिलङ्घितश्चेत्येकवद्भावः। अतिबृंहित-लङ्घिते अतिबृंहिते अतिलङ्घिते च तैरेव चातिस्थौल्यादिभिस्तथातिकार्श्यादिभिश्च करणभूतै रूपं बृंहणलङ्घनातियोगेलक्षणं वेद्यम्। चशब्दः समुच्चये॥ १९॥

तानेवातिस्थौल्यादीनाह—

**अतिस्थौल्यापचीमेहज्वरोदरभगन्दरान्।**
**काससन्यासकृच्छ्रामकुष्ठादीनतिदारुणान्॥ २०॥**

अतिस्थौल्येत्यादि। अतिबृंहणं कर्तृ अतिस्थौल्यादीन् कुरुते इत्य-नुपात्तेनापि प्रकृतत्वादत्र कर्तृपदेन क्रियापदेन च सम्बन्धः कार्यः। अथवा योग्यतयैवानुपात्तेनापि सम्बन्धो भवत्येव। सुखविलक्षस्यैवंस्थितत्वात्। तथैव भगवतो व्यासस्य —

"यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा।
यश्चैनं गन्धमाल्याभ्यां सर्वस्य कटुरेव सः॥"

अत्र हि छेदसेकालङ्करणक्रियाश्च निम्बादीनां द्विती(य)या अर्थ-सम्बन्धश्च॥ २०॥

अथैषामतिस्थौल्यादीनामुपक्रममाह—

**तत्र मेदोनिलश्लेष्मनाशनं सर्वमिष्यते।**

तत्रेत्यादि। तत्र तेष्वतिबृंहणजनितेष्वतिस्थौल्यादिषु मेदोनिलश्लेष्म-नाशनं सर्वमन्नपानौषधमिष्यते। मेदोहरं वातजित् श्लेष्मघ्नं च कार्यम्॥

किं तदित्याह—

**कुलत्थजूर्णश्यामाकयवमुद्गमधूदकम्॥ २१॥**
**मस्तुदण्डाहतारिष्टचिन्ताशोधनजागरम्।**
**मधुना त्रिफलां लिह्यात् गुडूचीमभयां घनम्॥ २२॥**
**रसाञ्जनस्य महतः पञ्चमूलस्य गुग्गुलोः।**
**शिलाह्वस्य प्रयोगश्च साग्निमन्थरसो हितः॥ २३॥**
**विडङ्गं नागरं क्षारः काललोहरजो मधु।**
**यवामलकचूर्णं च योगोऽतिस्थौल्यदोषजित्॥ २४॥**

कुलत्थेत्यादि। कुलत्थादिकम्। जूर्णस्तृणधान्यविशेषः। दण्डाहतं मथितं तक्रविशेषः। त्रिफलादीनामन्यतमं मधुना लिह्यात्। तथा रसाञ्जनादेश्च

प्रयोगोऽग्निमन्थरससहितोऽतिस्थूलायेति प्रकृतेन योज्यम् । विलङ्गादियोगो सर्व-समभागोऽतिस्थौल्यदोषजित् ॥ २४ ॥

व्योषकट्वीवराशिग्रुविलङ्गातिविषा स्थिराः ।
हिङ्गुसौवर्चलाजाजीयवानीधान्यचित्रकाः ॥ २५ ॥
निशे बृहत्यौ हपुषापाठामूलं च केबुकात् ।
एषां चूर्णं मधुघृतं तैलं च सदृशांशकम् ॥ २६ ॥
सक्तुभिः षोडशगुणैर्युक्तं पीतं निहन्ति तत् ।
अतिस्थौल्यादिकान् सर्वान् रोगानन्यांश्च तद्विधान् ॥ २७ ॥
हृद्रोगकामिलाश्वित्रश्वासकासगलग्रहान् ।
बुद्धिमेधास्मृतिकरं सन्नस्याग्नेश्च दीपनम् ॥ २८ ॥

व्योषेत्यादि । व्योषादीनि द्रव्याणि चतुर्विंशतिः परस्परसमभागानीत्येको भागः । तत्समो मधुनो द्वितीयो भागः । घृतस्य तृतीयः तैलस्य चतुर्थः । एषां सर्वेषां मिश्रीभूतानां षोडश गुणा यवसक्तवः । ततस्तदेतत पीतमतिस्थौल्यादिकान् पूर्वोक्तान् सर्वान् रोगान् निहन्ति । अन्यांश्च तद्विधान् बृंहणोत्थान् रोगान् निहन्ति । तथा हृद्रोगादीन् निहन्ति । तथा बुद्ध्यादिकरं सन्नस्य मन्दस्याग्नेर्दीपनं च । पाठ्यकारस्तु व्योषादौ मध्वादिकं समुदितस्य चूर्णस्य पृथक् सदृशांशं सक्तुरेकांशात् षोडशगुणः एवं परिपाटिरित्याह कट्वी दीर्घवृन्तः । केबुको वृश्चिकालीभेदः ॥ २८ ॥

साम्प्रतमतिलङ्घनोत्थान् रोगान् सौषधानाह —

अतिकार्श्यं भ्रमः कासस्तृष्णाधिक्यमरोचकः ।
स्नेहाग्निनिद्रादृक्श्रोत्रशुक्लौजः क्षुत्स्वरक्षयः ॥ २९ ॥
बस्तिहृन्मूर्धजङ्घोरुत्रिकपार्श्वरुजा ज्वरः ।
प्रलापोर्ध्वानिलः ग्लानिः छर्दिः पर्वास्थिभेदनम् ॥ ३० ॥
वर्चोमूत्रग्रहाद्याश्च जायन्तेति विलङ्घनात् ।

अतिकार्श्यमित्यादि । अतिकार्श्यादयोऽतिलङ्घनाज्जायन्ते । स्नेहादीनां क्षयशब्देन समासः । बस्त्यादीनां च रुजाशब्देन समन्वयः । (वर्चो) मूत्रग्रहाद्येत्यत्रशब्देन नानाविधानां वातरोगाणां ग्रहणम् ॥

कार्श्यमेव [redacted] स्थौल्यात्

कार्श्यमेवेत्यादिना सुचिकित्सितमुच्यते। अत्र चातिकार्श्यमेव वरमतिस्थौल्यादिति वेद्यं न कार्श्यमात्रं स्थौल्यमात्रं वा। यस्मादतिकृशातिस्थूलावेवोपक्रम्यौ। यद्यप्येवं कार्श्याख्यो महान् रोगः तथाप्यतिस्थौल्यात् कार्श्यमेव वरम्॥

कुत एवमित्याह —

न हि स्थूलस्य भेषजम्॥ ३१॥

बृंहणं लङ्घनं नालमतिमेदोऽग्निवातजित्।
मधुरस्निग्धसौहित्यैर्यत् सौख्येन च नश्यति॥ ३२॥
क्रशिमास्थविमाऽत्यन्तविपरीतनिषेवणैः।

न हीत्यादि। यस्मादतिस्थूलस्य भेषजं बृंहणं नालं न पर्याप्तं न समर्थं तथा लङ्घनं च नालं न समर्थम्। कीदृशं भेषजमतिमेदोऽग्निवातजित् अतिमेदोहरम् अत्यग्निशमनं अतिवातनाशनं च। तेनैतदुक्तं भवति। बृंहणेनाग्निवातशमनं भवति नतु मेदोजित् किन्तु मेदोऽतितरामुपचीयते। लङ्घनेन मेदःक्षपणं भवति किन्त्वग्निपवनावस्योपचीयेते तस्माद् यद् बृंहणं मांसक्षीरादि लङ्घनं कोद्रवश्यामाकादि तत् पूर्वस्माद्धेतोः स्थूलस्य न भेषजम्। तस्मात् स्थूलकृशयोर्बृंहणसाध्यस्तुल्यो यो व्याधिः स्यात् तत्र स्थूलस्यैवोपक्रमंविरोधः। (अथ? यथा) स्थूलस्य लङ्घनसाध्यो विषूचिकादिः विरुद्धोपक्रमत्वाद् दुःखेन शाम्यति। तथा स्थूलस्य प्रधानोपक्रमस्तु स्वेदो निषिध्यते 'न स्वेदयेद् अतिस्थूल'मित्यादिना। अथैनं लङ्घयति ततः स्रोतस्सु मेदोरुद्धेषु वायुः कोष्ठे विशेषतश्चरन् प्रज्वलयत्यग्निं क्षुत्तृषौ कुरुतेऽधिकम्।

'स्थूलं कोटरवद् वृद्धौ दहतोऽग्न्यनिलौ च तौ।'

इति वचनात्। वातसखेनाग्निना वनस्येव महती व्यापदुत्पद्यते। अथ बृंहणोपक्रमः क्रियते तदा आमदोषो वर्धते। कृशस्य त्वविरोधोपक्रमत्वाद् विषूचिकादिः सुखसाध्यः। तस्मादतिस्थूलस्य दुश्चिकित्स्यत्वात् कार्श्यमेव वरम्। तथायमपरः कार्श्यस्य वरत्वे हेतुः — यद् यस्मान्मधुरादिभिः प्रियसुखैः क्रशिमा कृशत्वं नश्यति शाम्यति। सौहित्यं तृप्तिः। सौ(ख्यम? ख्येना)नाया(सः? सेन)। यश्च स्थविमा स्थूलत्वमत्यन्तविपरीतनिषेवणैर्नश्यति। अत्यन्तविपरीतानि च तानि निषेवणानि अत्यन्तविपरीत-

निषेवणानि तैस्तिक्तकटुककषायमायै रूक्षैरन्नपानौषधसेवनैरित्यर्थः । अत्यन्तविपरीतनिषेवणैः कटुतिक्तकषायरूक्षसेवया दुःखसेवया चेति हृद्याकारः । अत्यन्तविपरीतानां व्यायामचिन्तादीनां निषेवणैरितीन्दुः । तस्माद् कार्श्यमेव स्थौल्याद् वरम् । कर्शिमेति कृशशब्दात् पृथ्वादित्वादिमनिच् रऋतो हलादेः इति रेफादेशः । स्थविमेति दृढादेराकृतिगणत्वादिमनिजिति केचित् । तस्मिंश्च सति स्थूलदूर— इति यणादिपरस्य लोपः ऊकारस्य च गुणः । 'कृशः स्थूलादपूजित' इति शास्त्रं भेदच्छेदादिषु मांसलत्वप्रशंसापरम् इदं तु भेषजप्रयोगापेक्षमित्यविरोधः ।। १२ ।।

अथ कार्श्यचिकित्सामाह—

योजयेत् बृंहणं तत्र सर्वं पानान्न भेषजम् ।। ३३ ।।

योजयेदित्यादि । तत्र कृशे बृंहणं सर्वं पानान्नौषधं योज्यम् ।। ३३ ।।

अचिन्तया हर्षणेन ध्रुवं सन्तर्पणेन च ।
स्वप्नप्रसङ्गाच्च कृशो वराह इव पुष्यति ।। ३४ ।।

अचिन्तयेत्यादि । स कृशोऽचिन्तादिभिः कारणैः पुष्यति पुष्टिं प्राप्नोति । अचिन्तया चेतसः शोककार्याद्यनाकुलत्वेन तथा हर्षणेन चित्ततुष्ट्या तथा सन्तर्पणेनाहारविशेषादिना बृंहणेन तथा स्वप्नप्रसङ्गात् अतिनिद्रासेवनेन कृशः पुष्यति सर्वोपचितधातुः सम्पद्यते क इव वराह इवेति लोकप्रत्ययार्थम् । यथा वराहः सूकरः स्वप्नप्रसङ्गेन पुष्यति एवं कृशोऽपीति वराहदृष्टान्तेन स्वप्नस्य अन्यपुष्टिकरेभ्यः प्राधान्यं दर्शयति । तथा हि— वराहस्य स्वप्नमन्तरेण न पुष्टिकरस्तथाविध आहार उपलभ्यते । अरुणदत्तोप्याह— अन्येभ्यश्च पुष्टिहेतुभ्यः कृशविषये स्वप्न एव प्रधान इति दर्शयितुं वराहो दृष्टान्तत्वेनोपन्यस्तो ग्रन्थकृता तथा हि वराहस्य स्वप्नमन्तरेण न कश्चित् तथाविधोऽभ्यवहारादिरुपलभ्यते । यथासौ पुष्टोऽतिमेदुरो दृश्यत इति । अतिस्थूलातिकृशयोर्लक्षणमुक्तं चरके—

"मेदोमांसातिवृद्धत्वाच्चलस्फिगुद(राननः ? रस्तनः)
अयथोपचयोत्साहो नरोऽतिस्थूल उच्यते ।।

शुष्कस्फिगुदरग्रीवो धमनीजालसन्ततः ।
त्वगस्थिशेषोऽतिकृशः स्थूलपर्वा नरो मतः ।। इति ।।

नहि मांससमं किञ्चिदन्यत् देहबृहत्त्वकृत् ।
मांसादमांसं मांसेन सम्भृतत्वाद्विशेषतः ॥ ३५ ॥

न हीत्यादिना मांसं पोषणेषूत्तममित्याह— मांसेन सममपरं देह-बृहत्त्वकरं च न विद्यते । सर्वबृहत्त्वकरेभ्यो मांसमतिबृंहणमित्यर्थः । मांसम-(श्न ? द)न्तीति मांसादा व्याघ्रादयः तेषां मांसं मांसेन मृगादिमांसेन सम्भृतत्वात् वर्धितत्वाद्धेतोर्विशेषेण देहस्य बृहत्त्वकृदिति सम्बन्धः ॥ ३५ ॥

एवं विस्तरेण स्थूलकृशयोरुपक्रममुक्त्वा समासेनाह—

गुरुचातर्पणं स्थूले विपरीतं हितं कृशे ।
यवगोधूममुभयोस्तद्योग्याहितकल्पनम् ॥ ३६ ॥

गुरु चेत्यादि । यद् गुरु तथाऽतर्पणमसन्तर्पणमपतर्पणं तत् समासेन स्थूलाय हितं माक्षिकशालूकादि । एतद्धि रौक्ष्यान्मेदः क्षपयति गौरवाच्च शीघ्रं जरां न गच्छति । अत्यग्निवातशमनाय गुरुभेषजप्रयोगः अपतर्पणं मेद-श्लेष्मशान्त्यर्थं तेन विरुद्धोपक्रमत्वं च । यदतो विपरीतं लघु सन्तर्पणं च शालि-(पिष्ट ? षष्टि)कैणशशलावकपिञ्जलादिकं तदतिकृशाय हितम् । अतिकृशस्य अग्निरपि कृशो भवति । तस्य यदि गुर्वन्नपानौषधमुपयुज्यते ततोऽग्निसादो जायते । तस्माल्लघुबृंहणमुपयुज्यते । गुरु चेत्यत्र च शब्दाल्लघु च यदतर्पणं श्यामाककोरदूषादिकं तथान्यदपि यन्न गुरु न च लघु मेदोघ्नं जागरव्यायाम-चिन्तादिकं तच्च स्थूले हितमिति दर्शयति ॥

यवश्च गोधूमश्च यवगोधूममुभयोरपि कृशस्थूलयोर्हितं किंभूतं तद्योग्या, हितकल्पनं तयोः कृशस्थूलयोर्योग्या उचिता आहिता कृता कल्पना संयोग-संस्कारादिका यस्मिन् यवगोधूमे तदेवं कृशस्थूलयोर्योग्यत्वेन कृतकल्पनम् । एतदुक्तं भवति — स्थूलाय यवगोधूमं तदनुरूपयापतर्पणया कल्पनयाहितं तदेव यवगोधूमं तदनुरूपया सन्तर्पणया कल्पनयैव एवं कल्प्यमान एवैते द्रव्ये प्रभावादुभयोर्हिते नान्ये । कृशस्य चेत् पूपलिकादयः कार्याः स्थूलस्य यदि सक्त्वादयः इत्यर्थः । इद्याकारस्त्वाह— तद्योग्याहितकल्पनं स्थौल्य-कार्श्यनाशनभेषजसंयुक्तयोर्यवगोधूमयोः प्रयोगः शस्त इत्यर्थ इति । अथवा यवगोधूममुभयोः स्थूलकृशयोर्हितं तद्योग्याहितकल्पनं यवाः स्थूले हिताः गोधूमाः कृशे इत्यर्थः । हितयोगे चतुर्थी वक्तव्या इत्यस्य प्रायिकत्वात् स्थूले हितमित्यत्र न चतुर्थी । अन्येऽपि ह्येवं प्रयोगा दृश्यन्ते—

"विलेपी ग्राहिणी हृद्या तृष्णाघ्नी दीपनी हिता ।
व्रणाक्षिरोगसंशुद्धदुर्बलस्नेहपायिनाम् ॥"

इत्यादयः ॥ ३ ॥

ननु चातिसारज्वरगुल्मादीनां बहवो ग्राह्यादय उपक्रमाः शास्त्रे दृष्टास्तत् कथमुक्तं— "उपक्रम्यस्य हि द्वित्वात् द्विधैवोपक्रमो मतः" इ(त्या? त्यत)आह हृद्याकारोपि अध्यायादौ प्रतिज्ञातं द्वित्वमुपसंहरतीत्याह—

**दोषगत्यातिरिच्यन्ते ग्राहिभेद्यादिभेदतः ।**
**उपक्रमा न ते द्वित्वात् भिन्ना अपि गदा इव ॥ ३७॥**

दोषेत्यादि । परस्परभिन्नाः सन्तोऽप्युपक्रमाश्चिकित्साः विलक्षणया दोषगत्या संसर्गसन्निपाततिर्यगूर्ध्वादिलक्षणया हेतुभूतयातिरिच्यन्ते दोषाणां पृथग्रूपाणां संसर्गसन्निपाततरतमभेदेनानन्त्यं यातानां या गतिस्तथा तेषामेव स्थानवृद्धिलक्षणा या गतिः तिर्यगूर्ध्वाधोलक्षणा या गतिः तथा शाखाकोष्ठास्थिसन्धिलक्षणा या गतिस्तयातिरिच्यन्ते बहवो भवन्ति । कथमित्याह — ग्राहिभेद्यादिभेदतः ग्राही च भेदी च ग्राहिभेदिनौ तावादी येषां रोगानुरोधानामुपक्रमाणां ते ग्राहिभेद्यादयस्तेषां भेदो विशेषः । तस्मादतिरिच्यन्ते न तु यथोक्ताद् द्वित्वाद् अतिरिच्यन्ते द्वित्वं सन्तर्पणापतर्पणरूपं वर्जयित्वा तेषामुपक्रमाणां रूपान्तरं न सम्भवति । यथा गदा व्याधयो ज्वरादयो दोषगत्या वातादिदोषवशाद् भिन्ना अपि नानाविधा अपि द्वित्वाल्लङ्घ्यबृंह्यास्त्यादग्नीषोमात्मकत्वाच्च नातिरिच्यन्ते बृंहणलङ्घनसाध्यत्वं नातिवर्तन्ते तद्वदुपक्रमाः । तेनैतदुक्तं भवति -- बृंहणलंघन एव दोषगतिविशेषेण ग्राह्यादिविशेषं प्राप्नुत इति । अथवा ग्राहिभेदिपाचनस्वेदनादिभेदाद् भिन्ना अप्युपक्रमाः द्वित्वाद् पूर्वोक्तान्नातिरिच्यन्ते न भिद्यन्ते बहवो न जायन्ते । यथा गदा दोषगत्या वातादिवृद्ध्यनुवृत्त्या भिन्ना अपि द्वित्वान्नातिक्रामन्ति बृंहणसाध्या लङ्घनसाध्या वा भवन्तीति ॥ ३७ ॥

इति श्रीदासपण्डितविरचितायां हृदयबोधिकायां
चतुर्दशोऽध्यायः ।

द्विविधोपक्रमणीयाध्यायादनन्तरं शोधनादिगणसंग्रहणीयाध्यायारम्भः यतो दोषोपक्रामणीये द्विविधोपक्रमणीये च नानाविधा उपक्रमा अभिहितास्ते च मदनमधुकादिभेषजाश्रयाः । अतस्तानि शोधनाद्युपयोगीनि सर्वोपक्रमाधिकारीणि तेषां संग्रहार्थमयमध्याय आरभ्यते । पाठ्यकारोऽपि शोधनादीनेवाह प्रस्तुतत्वादित्याह —

**अथातः शोधनादिगणसंग्रहन्नामाध्यायं व्याख्यास्यामः इति ह स्माहुरात्रेयादयो महर्षयः**

**अथात** इत्यादि । शोधनं वमनादि । तत्कारणं द्रव्यं शोधनम् । अथवा कारणशोधन एव शोधनशब्दः शोधनः शोधनरूपः द्रव्यगण आदिर्येषां ते एवम् । आदिशब्देन वातहरादिगणपरिग्रहः । गणः समूहः । तेषां शोधनादिगणानां संग्रह एकत्र स्थापनं यस्मिन्नध्याये सुखग्रहणार्थं क्रियते स शोधनादिगणसङ्ग्रहः । तत्र शोधनगणस्य सर्वदोषविजयित्वेन प्राधान्यात् पूर्वमुपन्यासः ॥

शोधनं चतुर्विधं वमनविरेचनास्थापनाशिरोविरेचनद्रव्यभेदेन । तत्रापि वमनस्यौषधगणं पूर्वमाह—

**मदनमधुकलम्बा निम्बबिम्बीविशाला**
**त्रपुसकुटजमूर्वादेवदालीकृमिघ्नम् ।**
**विदुलदहनचित्रा कोशवत्यौ करञ्जः**
**कणलवणवचैलासर्षपाच्छर्दनानि ॥ १ ॥**

**मदनेत्यादि** । मदनं (മലങ്കാര) मधुकम् (ഇരട്ടിമധുരം) लम्बा=(പേച്ചുര) निम्बा=(വേപ്പ്) बिम्बी=(തൊണ്ടി) विशाला=(മെരുക്ക) त्रपुसं=(തവുക്ക) त्रपुसं तिक्तत्रपुसं वेद्यं तस्य वमने योग्यत्वात् । कुटजं=(കടകപ്പാല) मूर्वा पीलुपर्णी=(പെരുംകുരുമ്പ) देवदाली=(പെരുംപീരം) कृमिघ्नं=(വിഴാലരി) विदुलं=(കാനാത്തിൽഞ്ഞി) विदुलो जलवेतस इति हाटकादयः । दहनं=(കൊടുവേലി) चित्रा=(ആവണക്ക്) कोशवत्यौ=(പട്ടിൽപീരം ചെറിയതും വലിയതും) अरुणदत्तहाटकावपि कोशवत्यौ घण्टालिकैका धामार्गवो द्वितीया राजकोशातकीत्याहतुः । करञ्जः=(പുങ്ങ) कणा=पिप्पली लवणं=सैन्धवं वचा=(വയമ്പ്) एला=(ഏലത്തരി) सर्षपं=(ചെറുകടുക) एतानि मदनादीनि छर्दिकराणि । हाराकारस्तु मदनादीनि सर्षपान्तानि द्रव्याणि त्रयोविंशतिः छर्दनानीत्याह । तत्पक्षे कोशवत्य इति पाठः । कोशवत्यास्तिस्र इति । एतानि वमनकरत्वादग्निवायू-

त्कटानि । अत्र च मदनविशालात्रपुसकुटजविकङ्कैलासर्षपाणां फलानि प्रयोजनवन्ति मधुकविदुलचित्रकदन्तीवचानां तु मूलानि स्वर्णक्षीरीकाम्पिल्यकानां च त्वचो वेद्याः शेषाणां फलपत्रपुष्पाणीति ॥ १ ॥

कृतवमनस्य विरेचनाधिकारत्वाद् विरेचनकराणि द्रव्याण्याह —

निकुम्भकुम्भत्रिफला गवाक्षी
स्नुक्शङ्खिनीनीलिनि तिल्वकानि ।
शम्याककाम्पिल्लकहेमदुग्धा
दुग्धश्च मूत्रञ्च विरेचनानि ॥ २ ॥

निकुम्भेत्यादि । निकुम्भो नागदन्ती कुम्भः—(ത്രികോല്പക്കൊന്ന) त्रिफला वरा गवाक्षी (കാക്കക്കരവിൽ) विशाला द्वितीयेन्द्रवारुणी इति च स्नुक्=(കള്ളി) शङ्खिनी=(ശംഖുപുഷ്പം) शङ्खिनी यवतिक्ता उत्तरापथे प्रसिद्धा इति च । नीलिनी —(വട്ടപ്പൂന്താളി) तिल्वकं— (കൺപൊട്ടി) लोध्र इति च शम्याकः—(കൊന്ന) कर्णिकार इति च । कम्पिल्लकं—(കമ്പിപ്പാല) रजनक इति च । हेमदुग्धा (കംകുട്ടം മലയരിമഞ്ഞന) केचित् । दुग्धं क्षीरं मूत्रं प्रसिद्धं त्रयोदशैतानि भूम्यम्बूत्कटानि विरेचनानि विरेककराणि ॥ २ ॥

कृतशोधनस्ये बस्तिरिति तत्साधनान्युच्यन्ते—

मदनकुटजकुष्ठदेवदाली
मधुकवचादशमूलदारुरास्नाः ।
यवमिसिकृतवेधनं कुलत्थो
मधुलवणं त्रिवृतानिरूहणानि ॥ ३ ॥

मदनेत्यादि । कुटजं वत्सकं कुडजत्वगित्यन्ये । कुष्ठं —(കൊട്ടം) देवदारु —(ദേവതാരം) रास्ना—(അരത്ത) मिसि =(അതാവരി) शतपुष्पेति हाटकादयः । शणपुष्पेतीन्दुः । कृतवेधनं —(ഉളക്കാപ്പീരം) त्रिवृता —( ത്രികോല്പക്കൊന്ന) एतानि पञ्चविंशतिर्निरूहणानि निरूहसाधनानि ॥ ३ ॥

वेल्लापामार्गव्योषदार्वीसुराला
बीजं शैरीषं बार्हतं शैग्रवञ्च ।
सारो माधूकः सैन्धवं तार्क्ष्यशैलं
त्रुट्यौ पृथ्वीका शोधयन्त्युत्तमाङ्गम् ॥ ४ ॥

पञ्चकर्मान्तर्भावाद् देहमूलोत्तमाङ्गशुद्धिपरत्वाच्च नस्यसाधनान्युच्यन्ते । वेल्लादीनि षोडश शोधनानि । उत्तमाङ्गं मूर्धानम् । वेल्लं – (വിഴാലരി) अपामार्गः – (കടലാടി) व्योषं – (ചുക്ക് മുളക് തിപ്പലി) दार्वी – (മരമഞ്ഞൾ) सुराला – (അതിവിടയം) भेष्ठसर्जरस इति हाटकादयः । शिरीषाणामिदं शैरीषं बीजं – (നെന്മേനിയരി) बृहत्या इदं बार्हतं बीजं –(വഴുതിനക്കുരു) शिग्रूणामिदं शैग्रवं बीजं फलमिति संबन्धः – (മുരിങ്ങയരി) सारो माधूकः मधूकपुष्पसारः – (ഇരിപ്പാക്കാതൽ) तार्क्ष्यशैलं रसाञ्जनं शुष्कम् । त्रुट्यौ एलाद्वयं सूक्ष्मैला स्थूलैला च–(ചിറ്റേലവും പേരേലവും) पृथ्वीका –(അരണോകം) हिङ्गुपत्रिकेति हाटकादयः । एतान्यपि वाय्वभिप्रायाणि ॥ ४ ॥

शोधनानन्तरं शमनमिति तान्याह—

भद्रदार्वनतं कुष्ठं दशमूलं बलाद्वयम् ।
वायुं वीरतरादिश्च विदार्यादिश्च नाशयेत् ॥ ५ ॥

भद्रदार्वित्यादि भद्रदारु–(ദേവതാരം) द्रुकिल्मिमिति हाटकादयः । नत (തകരം) बलाद्वयं – (കുറുന്തോട്ടിയും വെൺകുറുന്തോട്ടിയും) बलातिबला चेति च । एतानि भद्रदार्वादीनि तथा वक्ष्यमाणो वीरतरादिर्वेल्लन्तरादिस्तथा विदार्यादिश्च वायुं नाशयेत् शमयति शमनं तु दोषविपरीतगुणमिति ॥ ५ ॥

दूर्वानन्ता निम्बवाशात्मगुप्ता
गुन्द्राऽभीरुः शीतपाकी प्रियङ्गुः ।
न्यग्रोधादिः पद्मकादिः स्थिरे द्वे
वन्यं पद्मं शारिवादिश्च पित्तम् ॥ ६ ॥

दूर्वेत्यादि । दूर्वा शाड्वला –(കറുക) अनन्ता –(കൊടിത്തൂവ) अथवा मूर्वानन्तेति केचित् पठन्ति । तदानीं मूर्वा –(പെരുങ്കുരുമ്പ) अनन्ता –(കറുക) वाशा –(ആടലോടകം) आत्मगुप्ता कपिकच्छुः–(നായ്ക്കുരണ) गुन्द्रा एरका –(കണ്ണ്പ) अभीरुः –(ശതാവരി) शीतपाकी –(പുല്ലാനി) श्वेतगुञ्जेति हृद्याकारः । काकनन्दिकाभेद इति हाटकः । प्रियङ्गुः –(ഞാഴൽ) एष दूर्वादिको गणः मूर्वादिको वा पित्तं

नाशयेत् । तथा वक्ष्यमाणो न्यग्रोधादिर्गणः पद्मकादिर्गणश्च । तथा स्थिरे द्वे सालपर्णीपृश्निपर्ण्यौ =(ഓരിലയും മൂവിലയും) पद्मं =(താമര) वन्यं=(കഴിമുത്തങ്ങാ) शारिबादिश्च पित्तं नाशयति ॥ ६ ॥

आरग्वधादिरर्कादिर्मुष्ककाद्योऽसनादिकः ।
सुरसादिः समुस्तादिर्वत्सकादिर्बलासजित् ॥ ७ ॥

आरग्वधादयः सप्तैते गणाः बलासं श्लेष्माणं जयन्ति ॥ ७ ॥

जीवन्ती काकोल्यौ द्वे मदे मुद्गमाषपर्ण्यौ च ।
ऋषभकजीवकमधुकश्चेति गणो जीवनीयाख्यः ॥ ८ ॥

जीवन्ती जीववर्धनी काकोल्यौ द्वे द्वे मेदे । जीवन्त्यादीनां भाषया प्रागुक्तानि नामानि । जीवन्त्यादिर्गण ओजोवृद्धिकरत्वात् जीवनीयसंज्ञः । ओजोवृद्धिकरः शीतवीर्यो वृष्यः पित्तहरश्च । उदाहरणमात्रं चेदं धीमताम् । स्वादुशीतस्निग्धानां जीवन्त्यादिषु साधारणगुणानालोच्य क्षीरक्षौद्रद्राक्षाक्षोल-विदारीकन्दादिषु जीवनीयत्वमवधारयितुं शक्यमिति ॥ ८ ॥

विदारिपञ्चाङ्गुलवृश्चिकाळी वृश्चीव देवाह्वयसूप्यपर्ण्यः ।
कण्डूकरी जीवनह्रस्वसंज्ञे द्वे पञ्चके गोपसुता त्रिपादी ॥ ९ ॥

विदार्यादिरयं हृद्यो बृंहणो वातपित्तहा ।
शोषगुल्माङ्गमर्दोर्ध्वश्वासकासहरो गणः ॥ १० ॥

विदारीत्यादि । विदारी वृष्यकन्दा पञ्चाङ्गुल एरण्डः =(കൊന്ന) इति च । वृश्चिकाली =(തേക്കട) उष्ट्रधूमक इति च । वृश्चीवं=(ചാരണ) क्षुद्रवर्षाभूरिति च । देवाह्वयं =(ദേവതാരം) सूप्यपर्ण्यौ मुद्गपर्णी माष-पर्णी च कण्डूकरी = (നായ്ക്കുരണ) अभीरुवीराजीवन्तीजीवकर्षभकैःस्मृतं जीवनाख्यमिति जीवनसंज्ञं पञ्चमूलम् । ह्रस्वं बृहत्यंशुमतीद्वयगोक्षुरकैः स्मृतमिति ह्रस्वसंज्ञं पञ्चमूलम् । गोपसुता = (നന്നാറി) त्रिपादि = (ചെറുപുള്ളടി) अयं विदार्यादिर्गणो हृद्यादिगुणः हृद्यः हृदयाय हितः ॥ १० ॥

शारिवोशीरकाश्मर्यमधूकशिशिरद्वयम् ।
यष्टीपरूषकं हन्ति दाहपित्तास्रतृड्ज्वरान् ॥ ११ ॥

शारिबा कृष्णवल्ली =(നന്നാറി) उशीरं वीरणं=(രാമച്ചം) काष्मर्यं सर्वतोभद्रं मधूको गुडपुष्पः शिशिरद्वयमेकं सितचन्दनं मलयजसंज्ञं द्वितीयं रक्तचन्दनम्, यष्टी क्लीतकसंज्ञा =(ഇരട്ടിമധുരം) परूषक वृक्षफलं शारिबादिरयं दाहादीन् हन्ति ॥ ११ ॥

पद्मकपुण्ड्रौ वृद्धितुकर्ध्यः शृङ्ग्यमृता दशजीवनसंज्ञाः।
स्तन्यकरा घ्नन्तीरणपित्तं प्रीणनजीवनबृंहणवृष्याः ॥ १२ ॥

पद्मकं हेमपद्मकं =(പതിമുകം) पुण्ड्रं प्रपुण्डरीकम्। वृद्धिः =(വെ രവിടങ്ങോൽ) ऋद्धिः = (ചെറുവിടങ്ങോൽ) वनकुलत्थभेदौ तौ वृद्धिरृद्धिश्च। तत्र वृद्धिःश्रावणी ऋद्धिर्महाश्रावणीति हाटकादयः। तुकातुकाक्षीरी शृङ्गी कर्कटशृङ्गी। अमृता च्छिन्नरुहा दश जीवनसंज्ञा जीवन्त्यादिगणोक्ता एते पद्मकादयः स्तन्यकराः स्तन्यहेतवः वातपित्तं घ्नन्ति प्रीणनत्वादियुक्ताः अयं पद्मकादिगणः ॥ १२ ॥

परूषकं वरा द्राक्षा कट्फलं कतकात्फलम्।
राजाह्वं दाडिमं शाकं तृण्मूत्रामयवातजित् ॥ १३ ॥

परूषको धन्वनच्छदः। वरा त्रिफला। द्राक्षा मधुफला कट्फलं=(കമിഴ്) कतकफलं =(തേററാമ്പറൽ) कतकफलं वारिप्रसादनमिति च। राजाह्वं कर्णिकारं वा राजादनं वा। शाकं =(തേക്ക്) परूषकादिरयं गणो तृडामयादिजित् ॥ १३ ॥

अञ्जनं फलिनी मांसी पद्मोत्पलरसाञ्जनम्।
सैलामधुकनागाह्वं विषान्तर्दाहपित्तनुत् ॥ १४ ॥

अञ्जनं द्विविधम् एकं स्रोतोऽञ्जनं यामुनसंज्ञम् अपरं सौवीरं नेत्रभूषणाख्यम्। फलिनी प्रियङ्गुः। मांसी कृष्णजटा। रसाञ्जनं तार्क्ष्यशैलः। नागाह्वं नागकेसरम्। एषोऽञ्जनादिर्गणो विषादिजित् ॥ १४ ॥

पटोलकटुरोहिणीचन्दनं मधुस्रवगुडूचिपाठान्वितम्।
निहन्ति कफपित्तकुष्ठज्वरान् विषं वमिमरोचकं कामिलाम् ॥ १५ ॥

पटोलेत्यादि। मधुस्रवः =മരാംഗി (പനർമുരങ്ങ) इति च। एतत् पटोलादिकं कफादीन् निहन्ति ॥ १५ ॥

गुडूची पद्मकारिष्टधानकारक्तचन्दनम्।
पित्तश्लेष्मज्वरच्छर्दिदाहतृष्णाघ्नमग्निजित् ॥ १६ ॥

गुलूचीत्यादि । गुलूच्यादिर्गणः पित्तादिघ्नः । गलूची अमृता । अरिष्टो निम्बः । धानका धान्याकः =(കൊത്തമ്പാലി) ॥ १६ ॥

आरग्वधेन्द्रयवपाटलिकाकतिक्ता
निम्बामृतामधुरसस्रुववृक्षपाठाः ।
भूनिम्बसैर्यकपटोलकरञ्जयुग्म-
सप्तच्छदाग्निसुषवीफलबाणघोण्टाः ॥ १७ ॥

आरग्वधादिर्जयति छर्दिकुष्ठविषज्वरान् ।
कफं कण्डूं प्रमेहञ्च दुष्टव्रणविशोधनः ॥ १८ ॥

आरग्वधेत्यादि । आरग्वधं=(കൊന്ന) इन्द्रयवं =(കടകപ്പാലയരി) पाटलिर्वसन्तदूती । काकतिक्ता शार्ङ्गेष्ठा =(കറിച്ചുലി) मधुरा मूर्वा । अथवा मधुरसं =(പനർമരിഞ്ഞ) स्रुववृक्षो विकङ्कतः । पलाशो वा । भूर्नि(ब? बः) (പുണ്ണ) നിലവേപ്പ് इति केचित् । सैर्यकः सहचरः=(കരിംകുറിഞ്ഞി) करञ्जयुग्मं പുങ്ങും ആവിലും) अथवा युग्मशब्दस्सैर्यकादिभिस्संबध्यते कृष्णा कृष्णात्मकं सहचरयुगळं, तिक्तातिक्तात्मकं पटोलयुगळं, नक्तमालचिरिविल्वात्मकं, करञ्जयुगलमिति । सप्तच्छदं =(ഏഴിലമ്പാല) अग्निः=(കൊടുവേലി) सुषवी =(പല്ലാന്നി) फलं मदनस्य । बाणं =(കൊഴിഞ്ഞിൽ) नीलसहचर इति च । घोण्टा =(കൊട്ടം) पूतीकविशेष इति हाटकः । बदरी इतीन्दुः । अयमारग्वधादिश्छर्द्यादीन् निहन्ति ॥

असनतिनिशभूर्जश्वेतवाहप्रकीर्याः
खदिरकदरभण्डी शिंशपामेषशृङ्ग्यः ।
त्रिहिमतलपलाशाजोङ्गकः शाकसालौ
धवकबुककलिङ्गच्छागकर्णाश्वकर्णाः ॥ १९ ॥

असनादिर्विजयते श्वित्रकुष्ठकफक्रिमीन् ।
पाण्डुरोगं प्रमेहञ्च मेदोदोषनिबर्हणः ॥ २० ॥

असनेत्यादि । असनं=(വേങ്ങ) तिनिशं =(തൊടുകാര) तिमिशिति केचित् । भूर्जं =(പൊരിമരം) बहुपुट इति च । श्वेतवाह अर्जुनः =(നീർമരുത്) प्रकीर्या =(ആവിൽ) अकारान्तो वा । खदिरं =കരി

ങ്ങാലി) कदरः—क्षुद्रखदिरः खदिराकृतिः श्वेतसारः =(പാരംപാ) अंह्री-=(നിലവാക) शिरीष इति च । शिंशपा=(ഇല(വിപ്പ?വിഠം)(मेषशृङ्गी =(ആട്ടുകൊട്ടപ്പാല) त्रिहिमं चन्दनत्रयं द्वयं पूर्वमुक्तं पीतचन्दनं च । अथवा मलयजं रक्तचन्दनं दारुहरिद्राभेदश्च । चन्दनरक्तचन्दनोशीरा इति वा । नतं =(തഗരം) त्रिहिमतलपलाशा इति वा पाठः तत्पक्षे तलस्तालः । पलाशः किंशुकः । जोङ्गकोऽगरुः =(അകിൽ) शाकं=(തേക്ക്) सालः=(പയിൻ) धवं =(ഞമ) क्रमुकं क्रमुकम् । कालिङ्गं=(കടകപ്പാലയരി) नागकर्णं =(കരുമരുത്) अश्वकर्णं =(വെൺമരുത്) अयमसनादि-श्छर्यादीन् विजयते शमयति । विजयत इति 'विपराभ्यां जेः' इति तङ् ॥ २० ॥

वरणसैर्यकयुग्मशतावरी दहनमोरटविल्वविषाणिकाः ।
द्विबृहतीद्विकरञ्जजयाद्वयं बहलपल्लवदर्भरुजाकराः ॥ २१ ॥
वरणादिः कफं मेदो मन्दाग्नित्वं नियच्छति ।
आढ्यवातं शिरःशूलं गुल्मं चान्तस्स विद्रधिम् ॥ २२ ॥

वरणं=(നീർമാതളം) सैर्यकयुग्मं =(ചെംകറിഞ്ഞിയും കരിംകറിഞ്ഞിയും) दहनं =(കൊടുവേലി) मोरटं मूर्वा । वीचीति पाठो । विषाणिका =(ആട്ടുകൊട്ടപ്പാല) द्विबृहत्यौ =(വഴുതിന(യിൻ?കഠം)രണ്ടും द्विकरञ्जं =(പുങ്ങുമാവിലം) जयाद्वयं =(മുഞ്ഞയും കടുക്കായും) तक्कारी हरीतकी चेति च । बहलपल्लवं =(പല?നർ)മുരുങ്ങ) शिग्रुरिति च । रुजाकरं =(ചേർക്കുരു) । കാർതോട്ടി इति केचित् । हिन्ताल इति च । अयं वरणादिर्गणः कफादीन् नाशयति । आढ्यवातं मेदसा रुद्धमार्गं वातं वातव्याधौ वक्ष्यमाणम् । अन्तर्गुल्ममन्तर्विद्रधिं च नाशयति । अन्तस्थविद्रधिमिति वा पाठः ॥ २२ ॥

ऊषकस्तुत्थकं हिङ्गुकासीसद्वयसैन्धवम् ।
सशिलाजतुकृच्छ्राश्मगुल्ममेदःकफापहम् ॥ २३ ॥

ऊषकेति । ऊषको बृ(बी?)कः कल्लर इति प्रसिद्धः=(ഉവർ) तुत्थकं कातरं किटिहापरसंज्ञम् । कासीसद्वयं (കാസീസം രണ്ടും) एकं पांसुधातुसंज्ञम् अपरं पुष्पकासीसाख्यं । शिलाजतु (കൽമതം)ऊषकादिरयं मूत्रकृच्छ्रादीन् हन्ति ॥ २३ ॥

वेल्लन्तरारणिकटूकवृषाश्मभेद-
गोकण्टकेत्कटसहाचरबाणकाशाः ।
वृक्षादनीनळकुशद्वयगुच्छगुन्द्रा
भल्लूकमोरटकुरूठकरम्भपार्थाः ॥ २४ ॥
वर्गो वीरतराद्योऽयं हन्ति वातकृतान् गदान् ।
अश्मरीशर्करामूत्रकृच्छ्राघातरुजाहरः ॥ २५ ॥

वेल्लन्तरो वीरतरो मुष्कक इति पर्यायाः (വിടത്തൽ) अराणिकं (മുഞ്ഞ)(നാമുള്ള) इति केचित् । टूकः कबुकः । पूग इति वा पाठः । तृणमिति वा । तृणं पूगतृणम् । वृषः वाशा । पूगतृणः पूग एवेति पाठे तृणस्थाने वृषस्य वा पाठः । अश्मभेद (കല്ലൂർവഞ്ചി) गोकण्टकः (ഞെരിഞ്ഞിൽ) इत्कट (ഇറങ്ങ്) सूक्ष्मपत्रा दीर्घलो(कहो ? हि) तयष्टिका काण्डविशेष इति च । गवेधुक इति च । सहाचरं (കരിംകുറിഞ്ഞി)बणं (കൊഴിഞ്ഞിൽ) काशम् । (ആറുവേർഭ) वृक्षादनी (കേഴോളി) नळं (വേഴം) कुशाद्वयं दर्भयुगलं स्थूलसूक्ष्मभेदाद् (ദർഭയും കശയും) "अस्त्री कुश"मित्यमरः । गुच्छं (ഭ പാടക്കുള്ള്) गुन्द्रा (കരിംപൊട്ടപ്പൽ) भल्लूकं (പലകപ്പയ്യാനി) कुरूटकं (വേലിപ്പരുത്തി) रम्भं (കദളി വാഴ) कुरूटः शितवारकः करम्भ उत्तमारणीत्यरुणदत्तः । कुरूटः उत्तमारणी । करम्भ उन्मत्तभेद इति हाटकः । पार्थः (നീർമരുത്) एष वीरतराद्यो गणो वातजान् रोगान् हन्ति तथाश्मर्यादिहरः ॥ २५ ॥

लोध्रशाबरकलोध्रपलाशझिंझिणीसरळकट्फलयुक्ताः ।
कुत्सिताम्बकदळीगतशोकाः सैलवालुपरिपेलवमोचाः ॥ २६ ॥
एष लोध्रादिको नाम मेदःकफहरो गणः ।
योनिदोषहरः स्तम्भी वर्ण्यो विषविनाशनः ॥ २७ ॥

लोध्रं (പാച്ചോററി) शाबरकलोध्रं (വെള്ളി) पलाशः शटी आकारान्तो वा । झिंझिणी (കിലികിലപ്പ) शङ्खिनी इति च । सरलं (ചരളം) युक्ता रास्ना । गिरिकर्णिका इत्यन्ये । कुत्सिताम्ब (കടമ്പ) कदली रम्भा । गतशोकोऽशोकः । एलवालु एलावालुकम् । परिपेलवं (കഴിമുത്തങ്ങാ) मोचम् (ഇലവിൻപശ) सल्लकी इति च । अयं लोध्रादिगणो मेदोहरः स्तम्भी दोषाणां शकृदादेश्च । वर्णाय हितश्च ॥ २६ ॥

अर्कालर्कौ नागदन्ती विशल्या
मार्ङ्गी रास्ना वृश्चिकाली प्रकीर्या।
प्रत्यक्पुष्पी पीततैलोदकीर्या
श्वेतायुग्मं तापसानाञ्च वृक्षः ॥ २८ ॥
अयमर्कादिको वर्गः कफमेदोविषापहः।
कृमिकुष्ठप्रशमनो विशेषाद्व्रणशोधनः ॥ २९ ॥

अर्केत्यादि। अर्कः (എരിക്ക്) सदापुष्पी इति च। अलर्कः (ഇരു വള) मन्दारः श्वेतपुष्पमिति च। विशल्या (മേത്തോന്നി) भार्ङ्गी (ചെറു തേക്ക്) रास्ना (അരത്ത) प्रकीर्या (പുങ്ക്) प्रत्यक्पुष्पि (കടലാടി) पीततैला (പേരത്തി) उदकीर्या (ആവിൽ) श्वेतायुग्मं (വലമ്പിരി വെൺവ ലമ്പിരി) श्वेता किणिही चेति व्याख्याकारः। एका किणिहीसंज्ञा अन्या महाश्वेतेत्यरुणदत्तः। तापसानां वृक्षः इङ्गुदः। पलाशो वा। एषोऽर्कादिवर्गो कफादिहरः अतिशयेन व्रणशोधनः ॥ २९ ॥

सुरसयुगफणिज्जं कालमालो विडङ्गं
खरबुसवृषकर्णीकट्फलं कासमर्दः।
क्षवकखरसिभार्ङ्गी कार्मुका काकमाची
कुलहलविषमुष्टी भूस्तृणो भूतकेशी ॥ ३० ॥
सुरसादिगणः श्लेष्ममेदः कृमिनिषूदनः।
प्रतिश्यायारुचिश्वासकासघ्नो व्रणशोधनः ॥ ३१ ॥

सुरसयुगं गौरकृष्णभेदेन। कालमालः (കരിങ്കുറുഞ്ഞി) विडङ्गं (വിഴാലരി) खरबुसो मरुवकः (കടലാടി) वृषकर्णी (എലിച്ചെവി) कट्फलं सोमवल्कः। क्षवकः क्षुद्विशोधनः। खरसी कपित्थपत्रा। भार्ङ्गी (ചെറുതേക്ക്) कार्मुका रक्तमञ्जरी अतिमुक्तक इत्यन्ये। कामुकं (കര ക്കൊന്തി) इति पाठे। कुलहलो भूकदम्बः (അടയ്ക്കാവാണിയൻ) विषमुष्टी (പറമ്പൈകനാറി) कर्कोटी इति च महानिम्ब इत्यन्ये। भूस्तृणं (പുൽത്തൈലം) भूतकेशी (പേമയിരി) मांसीत्यन्ये। सुरसादिरेष गणः श्लेष्मादीन् हन्ति प्रतिश्यायादिहरः व्रणशुद्धिकृत् ॥ ३१ ॥

मुष्ककस्नुग्वराद्वीपिपलाशधवशिंशपाः ।
गुल्ममेहाश्मरीपाण्डुमेदोर्शःकफशुक्रजित् ॥ ३२ ॥

मुष्ककं (മെഴിന്തിൽ) वरा त्रिफला । द्वीपीचित्रकः । मुष्ककादिरेष गुल्मादिजित् मुष्कादीनामेकवद्भावात् शिंशपमिति नपुंसकत्वम् ॥ ३२ ॥

वत्सकमूर्वाभार्ङ्गी कटुकामरिचं घुणप्रिया च गण्डीरम् ।
एलापाठाजाजी कट्वङ्गफलाजमोजासिद्धार्थवचाः ॥ ३३ ॥
जीरकहिङ्गुविडङ्गं पशुगन्धापञ्चकोलकं हन्ति ।
चलकफमेदःपीनसगुल्मज्वरशूलदुर्नाम्नः ॥ ३४ ॥

वत्सकं (കടകപ്പാല) कटुका (കടുകരോഹിണി) मारच (മുളക) घुर्णप्रिया (അതിവിടയം) गण्डीरं (വാതക്കൊടി) अजाजी (ജീരകം) कट्वङ्गफलम् अरलुफलम् । कट्वङ्गः (പൊതമരം) केचित्तु कट्वङ्गः स्योनाकः डुण्डुकः । फलं मदनस्येत्या(ह ? हुः) अजमोजो दीप्यकः । सिद्धार्थः श्वेतसर्षपः । जीरकं कृष्णजीरकम् । हिंगु (കായം) पशुगन्धा अजगन्धा (ആട്ടുനാറിവേള) वत्सकादयश्चलादीन् घ्नन्ति ॥ ३४ ॥

वचा जलददेवाह्वनागरातिविषाभयाः ।
हरिद्राद्वययष्ट्याह्वकलशीकुटजोद्भवाः ॥ ३५ ॥
वचाहरिद्रादिगणावामातीसारनाशनौ ।
मेदःकफाढ्यपवनस्तन्यदोषनिबर्हणौ ॥ ३६ ॥

वचा गोलोमी । अभया (കടുക്ക) अमृता वा । हरिद्राद्वयं (മഞ്ഞൾ മരമഞ്ഞൾ) यष्ट्याह्व (എരട്ടിമധുരം) कलशी (മൂവില) कुटजोद्भवं बीजम् । एतौ वचाहरिद्रादिगणौ आमातीसार पाचनौ ? नाशनौ) आमातीसारघ्नौ मेदःकफादिहरौ ॥ ३६ ॥

प्रियङ्गुपुष्पाञ्जनयुग्मपद्मा पद्माद्रजो योजनवल्ल्यनन्ता ।
मानद्रुमो मोचरसः समङ्गा पुन्नागशीतं मदनीयहेतुः ॥ ३७ ॥

प्रियंगुः श्यामा । पुष्पाञ्जनयुग्ममिति सौवीरं स्रोतोऽञ्जनं च । पुष्पाञ्जनमिति मुख्याञ्जनस्य नाम । अथवा प्रियंगुपुष्पं फलिनी अञ्जनयुग्मं च । पद्मा भार्ङ्गी पद्मचारणी । पद्मात् कमलाद् रजः केसरम् । योजनवल्ली

(ചെവ്വള്ളിക്കൊടി) मञ्जिष्ठा वा । अनन्ता यवाषकः । वामद्रुमः शाल्मलिः । मोचरसः शल्मलीनिर्यासः । सारद्रुम इति केषांचित्पाठः सारद्रुमश्च शाल्मली वीरतरुर्वा । समङ्गा (പാച്ചുണ്ട) पुन्नागं (പുന്ന) मदनीयहेतुः (താതിരി) ॥ ३७ ॥

अम्बष्ठामधुकनमस्करीनन्दीवृक्षपलाशकच्छुराः ।
लोद्ध्रं धातकिबिल्वपेशिके कट्वङ्गः कमलोद्भवं रजः ॥ ३८ ॥
गणौ प्रियङ्ग्वबष्ठादी पक्वातीसारनाशनौ ।
सन्धानीयौ हितौ पित्ते व्रणानामपि रोपणौ ॥ ३९ ॥

अम्बष्ठा पाठा । नमस्करी (പാച്ചുണ്ട) नन्दीवृक्षः (ഇരണ) कच्छुरा (നായ്ക്കുരണ) बिल्वस्य पेशिका बालफलं बिल्वमज्जा वा । कट्वङ्गः स्योनाकः । कमलोद्भवं रजः पद्मकेसरम् । एतौ प्रियङ्ग्वम्बष्ठादी गणौ पक्कातीसारनाशनौ व्रणसन्धानाय हितौ व्रणरोपणौ च ॥ ३९ ॥

मुस्तावचाग्निद्विनिशाद्वितिक्ता
भल्लातपाठा त्रिफला विषाख्याः ।
कुष्ठं त्रुटी हैमवती च योनि-
स्तन्यामयघ्नामलपाचनाश्च ॥ ४० ॥

द्वितिक्ता एका कटुरोहिणी अन्या अतिविषा काकतिक्ता वा किराततिक्तं वा शार्ङ्गेष्टा वा । विषाख्या शुक्लकन्दा शुकतरुर्वा । हैमवती (ചെവ്വള്ളിക്കൊടി) श्वेतवचा वा । एते योन्यामयघ्नाः बालानां स्तन्यदोषनाशनाः मलपाचनाश्च । अयं मुस्तादिर्गणः ॥ ४० ॥

न्यग्रोधपिप्पलसदाफललोध्रयुग्म-
जम्बूद्वयार्जुनकपीतनसोमवल्काः ।
वृक्षाम्लवञ्जुळप्रियाळपलाशनन्दी
कोळीकदम्बविरळा मधुकं मधूकम् ॥ ४१ ॥
न्यग्रोधादिर्गणो व्रण्यः सङ्ग्राही भग्नसाधनः ।
मेदःपित्तास्रतृड्दाहयोनिरोगनिबर्हणः ॥ ४२ ॥

न्यग्रोधं (പേരാൽ) पिप्पलं (അരയാൽ) अश्वत्थः । सदाफलं (അത്തി) जम्बूद्वयमेका राजजम्बूः स्थूलफला अन्या अल्पफला काक-

जम्बूः । अर्जुनं (നീർമരുതു്) कपीतनं (കല്ലാൽ) सोमवल्कम् (ഓമത്തൊൽ) श्वेतसारः खदिर इति च । प्लक्षः शृङ्गीप्लवकः । आम्रश्चूतः । वञ्जुलो वेतसः (വഞ്ഞി) पियालं (മുരൾ) नन्दी जयावृक्षः । कोली (कोळी?) बदरी । तोलीति पाठे सैव । विरला तिन्दुकी (ചെറുപനിച്ചി) मधुकं यष्टि । मधूकपुष्पम् अयं न्यग्रोधादिर्गणः व्रण्यः संग्रहणादि-गुणश्च ॥ ४२ ॥

एलायुग्मतुरुष्ककुष्ठफलिनीमांसीजलध्यामक-
स्पृक्का चोरकचोचपत्रतगरस्थौणेयजातीरसाः ।
शुक्तिर्व्याघ्रनखौ सुराह्वमगरुः श्रीवासकः कुङ्कुमं
चण्डा गुग्गुलुदेवधूपखपुराः पुन्नागनागाह्वयम् ॥ ४३ ॥
एलादिको वातकफौ विषश्च विनियच्छति ।
वर्णप्रसादनः कण्डूपिटका कोठनाशनः ॥ ४४ ॥

स्थूलसूक्ष्मभेदेनैलायुग्मम् । तुरुष्कं (കുന്തുരുക്കം) कृत्रिमो निर्यासविशेषः । कुष्ठं गदः । फलिनी गन्धप्रियङ्गुः (ഞാഴൽ) जलं (ഇരുവേലി) ध्यामकं (നാൻമുകപ്പുൽ) स्पृक्का (ചോനകപ്പുൽ) चोरकं (കച്ചൂരം) चोचम् (ഇലവംഗം) पत्रं (പച്ചില) तगरं (തകരം) स्थौणेयं (തുണിയാക്കം) जातीरसो बोलः निर्यासो वा । शुक्तिर्नखः (നാകണം) व्याघ्रनखं (പുലിച്ചുവടി) समुद्रज इति च शुक्तिः (नखः?) व्याघ्रनखोऽपि तादृश एवेति केचित् । सुराह्वं (തേവതാരം) अगरु (അകിൽ) श्रीवासकः श्रीवेष्टकः (തിരുവട്ടപയൻ) चण्डा (നറുംചണ്ഡ) देवधूपः (ചെഞ്ചലിയം) सर्जरसः । खपुरं (കുന്തുരുക്കം) नागाह्वयं (നാകപ്പൂവ്) अयमेलादिर्गणो वातादीन् हन्ति । कण्ड्वादिहृच्च ॥ ४४ ॥

श्यामा दन्ती द्रवन्ती क्रमुककुटरणी शङ्खिनी चर्मसाह्वा-
स्वर्णक्षीरीगवाक्षी शिखरिरजनिकच्छिन्नरोहा करञ्जाः ।
बस्तान्त्रीव्याधिघातो बहलबहुरसस्तीक्ष्णवृक्षात् फलानि
श्यामाद्यो हन्ति गुल्मं विषमरुचिकफौ हृद्रुजं मूत्रकृच्छ्रम् ॥४५॥

श्यामा (നാക്കൊൽപക്കൊന്ന) द्रवन्ती (യ? എലിയാൽ) समुद्रैरण्डनामा वा । क्रमुकम् (അടയ്ക്കാ) कुटरणा (? ണാ) (ത്രികൊല്ലക്കൊന്ന)

चर्मसाह्वा (പൊരിമരുതു ? പെരുമരത്) सातलेति च क्षुद्रब्राह्मीति च ब्राह्मीत्यन्ये । गवाक्षी गवादनी । शिखरिः अपामार्गः (കടലാടി) रजनिक (ആനമഞ്ഞൾ) रजनकः कम्पिल्लक इति हाटकादयः । छिन्नरोहा अमृता । वस्तान्त्री (മരക്കടത്തി ? മറുകടത്തി) वृषगन्धेति च । व्याधिघातः (കൊന്ന) बहलंबहुरसः (പനൻമുള്ള) इक्षुर्वा । तीक्ष्णवृ(क्ष ? क्षात्) फलानि तीक्ष्णवृक्षः (ഉകന്ന) तस्मात् फलानि तीक्ष्णवृक्षः पीलुर्वा । अयं श्यामादिर्गुल्मा(दी)न् हन्ति ॥ ४५ ॥

त्रयस्त्रिंशदिति प्रोक्ता वर्गास्तेषु त्वलाभतः ।
युञ्ज्यात्तद्विधमन्यच्च द्रव्यं जह्यादयौगिकम् ॥ ४६ ॥

त्रयस्त्रिंशदित्यादि—इति प्रकारे । त्रयस्त्रिंशदिति वर्गाः गणाः प्रोक्ताः । यद्यपि च तानि तान्येव द्रव्याणीति द्रव्यसङ्करः । तथापि एकस्यापि बहुकार्यनिर्वर्तनान्न विरोधः । सङ्क्षेपोपादानमेषां प्राधान्यख्यापनार्थम् । अन्येऽप्येवं प्रकाराः सङ्ग्रहादिषु पठिताः सन्ति गणाः । एते प्रधाना इत्यर्थः । सुखस्मरणार्थं च सङ्ख्यावचनम् । तेषु त्रयस्त्रिंशतिवर्गेषु अलाभतः अलाभे सति तद्विधं रसवीर्यविपाकैस्तुल्यमन्यदनुक्तमपि द्रव्यं युञ्ज्यात् । रसादिभिस्तद्विधद्रव्यान्तरं युञ्ज्यात् । न चैतावदत्रविधेयमित्याह— जह्यादयौगिकं न केवलमेषु वर्गेषु तद्द्रव्यालाभे यथालाभमन्यत् । तद्विधं द्रव्यं युञ्ज्यात् । यावदयौगिकं यच्च द्रव्यं तच्च त्यजेत् । एषु वर्गेषु दोषातुराद्यपेक्षया यद् द्रव्यमयौगिकं तत् त्यजेत् । तेषु तु लाभत इति वा पाठः । तेषु गणेषु लाभतः युञ्ज्यात् । न गणसामस्त्यं पालनीयमित्यर्थः । गणे प्रयुज्यमाने यस्य द्रव्यस्यालाभस्तस्य तद्विधस्य तत्र प्रयोगः प्रतिनिधिः कर्तव्य इत्यर्थः । यदत्रायौगिकं योगार्हं न भवति । तत् त्यजेत् । न गणसामस्त्यं पालनीयमिति तन्त्रान्तरे चोक्तं —

"समस्तं वर्गमर्धं वा यथालाभमथापि वा ।
प्रयुञ्जीत भिषक् प्राज्ञो यथोद्दिष्टेषु कर्मसु ॥"

इति । गणौषधस्याप्राप्तौ तद्विधं निक्षिप्य योज्यम् । चरके चोक्तं — अत्रानुक्तमपि यद् यौगिकं मन्ये तत्र तद् विदध्यात् उक्तमपि यदयौगिकं मन्ये तत्तदपकर्षेदिति । सारसमुच्चये चोक्तं —

"गणं समस्तमर्धं वा तदर्धं वा प्रयोजयेत् ।
योग्यौषधान्तरोपेतायोग्यौषधविवर्जितम् ॥"

---

१. बहलः (കരിമ്പ) बहुरसः (കരിമ്പ്) इति वाक्यप्रदीपिकायाम् ।

यथालाभप्रयोगेऽपि गणः स्यात् कार्यसाधनः ।

इति । यो गणः समस्तस्तत्साध्यामयनाशनस्तत्रैकस्य द्रव्यस्यालाभे द्वयोर्बहूनां वा तत्प्रकारमेकमपरं द्रव्यं द्वे बहूनि वा द्रव्याणि संयोज्य प्रयोज्यः । न समस्तद्रव्यापेक्षा कार्येत्यर्थः । पाठ्यकारस्त्वाह— तेषूक्तेषु द्रव्येष्वनुक्तमन्यदपि द्रव्यं पित्तशमने उक्ते पित्तशममन्यदपि द्रव्यं प्रयुञ्ज्यात् इति जवादयौगिकमिति यस्य कस्यचित् पुरुषस्य हिङ्गुजीरकादिना अनुपशमत्वं विद्यते चेत् तस्य परित्यागे कृते दोषो न स्यादिति । भेषजयोगफलं न शक्यते ज्ञातुमर्वाग्दृशाम् । मुनिज्ञानगोचरमेतत् । चरके चोक्तं —

"न नामज्ञानमात्रेण रूपज्ञानेन वा पुनः ।
ओषधीनां परां (वृत्तिं ? प्राप्तिं)कश्चिद् वेदितुमर्हति ॥

इति । पराप्राप्तिर्मुख्ययोगफलं ज्ञातुं न कश्चिदपि शक्नुयादित्यर्थः । परा प्राप्तिः प्रभाव इति । एतच्चोक्तम् । लोके चिन्त्यो न खलु मणिमन्त्रौषधीनां प्रभाव इति ॥

सर्वेषां प्रयोगप्रकारं दर्शयति—

एते वर्गा दोषदूष्याद्यपेक्ष्य
कल्कक्वाथस्नेहलेहादियुक्ताः ।
पाने नस्ये न्वासने वा बहिर्वा
लेपाभ्यङ्गैर्घ्नन्ति रोगान् सुकृच्छ्रान् ॥ ४७ ॥

एत इत्यादि । एते पूर्वोक्ता वर्गाः दोषदूष्यबलादीनपेक्ष्य विकल्प्य कल्कक्वाथादिभिर्युक्ताः प्रयोजिता वैद्येन युक्ता इत्यत्रान्तर्भाविणिजर्थो बोद्धव्यः । आदिशब्देन फाण्टशीतकषायादिपरिग्रहः पानाद्युपयोगे सति बहिर्वा लेपाभ्यङ्गैर्यथोक्तान् सुकृच्छ्रान् रोगान् घ्नन्ति लेपाभ्यङ्गैरिति बहुवचननिर्देशात लेपाभ्यङ्गस्नानादिभिश्च घ्नन्तीत्ययमर्थो योज्यः । .... .... .... करेषु द्रव्येषु केषाञ्चिदनेकपाठो दृश्यते तद्वर्गानुरूपाणि नामानि च कार्यभेदाद् यथैकस्य कर्तृकरणकार्यसम्प्रयोगात् बहूनि नामानि भवन्ति । कर्तृसम्प्रयुक्तो यावकादिः । करणसम्प्रयुक्तः पाचकादिः कार्यसम्प्रयुक्तो रथकारादिः एषां त्रयाणां कर्तृवाचित्वा विशेषेऽपि प्रथमस्य कर्तृमात्रसम्बन्धत्वात् मध्यमस्य करणा(भ ? भि) सम्बन्धः कर्तृतयाभिधायित्वाच्च चरमस्य कार्यविशेषाभिसम्बन्धककर्तृप्रतिपादकत्वाद् विशेष इति न्यासे ॥ ४७ ॥

इति श्रीदासपण्डितविरचितायां हृदयबोधिकायां
पञ्चदशोऽध्यायः ।

---

